आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ४२

पदपाठयुता

# (कृ)ष्णयजुर्वेदीयतैत्तिरीयसंहिता ।

श्रीमत्सायणाचार्यविरचितभाष्यसमेता ।

तत्र तृतीयकाण्डगतपञ्चमप्रपाठकमारभ्य चतुर्थकाण्डसमाप्ति-
पर्यन्तः षष्ठो भागः ( ६ ) )

एतत्पुस्तकम्

(वे)० रा० रा० "काशीनाथ शास्त्री आगाशे" इत्येतैः
संशोधितम् ।



तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८२५

खिस्ताब्दाः १९०३



मूल्यं सार्धरूपकाष्टकम् ( ८॥ ) ।

( दर्शपूर्णमासेष्ट्यङ्गभूतान्वारम्भणीयेष्टिविधिः )

( अथ तृतीयाष्टके पञ्चमः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय । तस्यां देवा अधि संवसन्त उत्तमे नाक इह मादयन्ताम् । यत्ते देवा अदधुर्भागधेयममावास्ये संवसन्तो महित्वा । सा नो यज्ञं पिपृहि विश्ववारे रयिं नो धेहि सुभगे सुवीरम् । निवेशनी संगमनी वसूनां विश्वा रूपाणि वसून्यावेशयन्ती । सहस्रपोषꣳ सुभगा रराणा सा न आ गन्वर्चसा ( १ ) संविदाना । अग्नीषोमौ प्रथमौ वीर्येण वसून्रुद्रानादित्यानिह जिन्वतम् । माध्यꣳ हि पौर्णमासं जुषेथां ब्रह्मणा वृद्धौ सुकृतेन सातावथाऽस्मभ्यꣳ सहवीराꣳ रयिं नि यच्छतम् । आदित्याश्चाङ्गिरसश्चाग्नीनाऽदधत ते दर्शपूर्णमासौ प्रैप्सन्तेषामङ्गिरसां निरुप्तꣳ हविरासीदथाऽऽदित्या एतौ होमावपश्यन्तावजुहवुस्ततो वै ते दर्शपूर्णमासौ ( २ ) पूर्व आऽलभन्त दर्शपूर्णमासावालभमान एतौ होमौ पुरस्ताज्जुहुया-

त्साक्षादेव दर्शपूर्णमासावा लभते ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासावा लभेत य एनयोरनुलोमं च प्रतिलोमं च विद्यादित्यमावास्यांया ऊर्ध्वं तदनुलोमं पौर्णमास्यै प्रतीचीनं तत्प्रतिलोमं यत्पौर्णमासीं पूर्वामालभेत प्रतिलोममेनावा लभेतामुमपक्षीयमाणमन्वपं (३) क्षीयेत सारस्वतौ होमौ पुरस्ताज्जुहुयादमावास्यां वै सरस्वत्यनुलोममेवैनावा लभतेऽमुमाप्यायमानमन्वा प्यायत आग्नावैष्णवमेकादशकपालं पुरस्तान्निर्वपेत्सरस्वत्यै चरुꣳ सरस्वते द्वादशकपालं यदाग्नेयो भवत्यग्निर्वै यज्ञमुखं यज्ञमुखमेवर्द्धिं पुरस्ताद्धत्ते यद्वैष्णवो भवति यज्ञो वै विष्णुर्यज्ञमेवाऽऽरभ्य प्र तनुते सरस्वत्यै चरुर्भवति सरस्वते द्वादशकपालोऽमावास्या वै सरस्वती पूर्णमासः सरस्वान्तावेव साक्षादा रभत ऋध्नोत्याभ्यां द्वादशकपालः सरस्वते भवति मिथुनत्वाय प्रजात्यै मिथुनौ गावौ दक्षिणा समृद्ध्यै ( ४ ) ॥

( वर्चसा वै ते दर्शपूर्णमासावपं तनुते सरस्वत्यै पञ्चविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( दर्शपूर्णमासेष्ट्यङ्गभूतान्वारम्भणीयेष्टिविधिः )

( अथ तृतीयाष्टके पञ्चमः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

पूर्णा । पश्चात् । उत । पूर्णा । पुरस्तात् । उदितिं । मध्यतः । पौर्णमासीतिं पौर्ण—मासी । जिगाय । तस्याम् । देवाः । अधीतिं । संवसन्त इतिं सं—वसन्तः । उत्तम इत्युत्—तमे । नाके । इह । मादयन्ताम् । यत् । ते । देवाः । अदंधुः । भागधेय-मितिं भाग—धेयंम् । अमावास्य इत्यमा—वास्ये । संवसन्त इतिं सं—वसन्तः । महित्वेतिं महि—त्वा । सा । नः । यज्ञम् । पिपृहि । विश्ववार इतिं विश्व—वारे । रयिम् । नः । धेहि । सुभग इतिं सु—भगे । सुवीरमितिं सु—वीरंम् । निवेशनीतिं नि—वेशनी । संगमनीतिं सं—गमंनी । वसूनाम् । विश्वां । रूपाणिं । वसूनि । आवेशयन्तीत्या—वेशयन्ती । सहस्रपोषमितिं सहस्र—पोषम् । सुभगेतिं सु—भगा । रराणा । सा । नः । एतिं । गन् । वर्चसा (१)। संविदानेतिं सं—विदाना । अग्नीषोमावित्यग्नी—सोमौ । प्रथमौ । वीर्येण । वसून् । रुद्रान् । आदित्यान् । इह । जिन्वतम् । माध्यम् । हि । पौर्णमासमितिं पौर्ण—मासम् । जुषेथाम् । ब्रह्मणा । वृद्धौ ।

सुकृतेनेति सु—कृतेन । सातौ । अथ । अस्मभ्यमित्यस्म—भ्यम् । सहवीरामिति सह—वीराम् । रयिम् । नीति । यच्छतम् । आदित्याः । च । अङ्गिरसः । च । अग्नीन् । एति । अदधत । ते । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । प्रेति । ऐप्सन् । तेषाम् । अङ्गिरसाम् । निरुप्तमिति निः—उप्तम् । हविः । आसीत् । अथ । आदित्याः । एतौ । होमौ । अपश्यन् । तौ । अजुहवुः । ततः । वै । ते । दर्शपूर्णमासाविति दर्श—पूर्णमासौ (२) । पूर्वे । एति । अलभन्त । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । आलभमान इत्या—लभमानः । एतौ । होमौ । पुरस्तात् । जुहुयात् । साक्षादिति स—अक्षात् । एव । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । एति । लभते । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । सः । तु । वै । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । एति । लभेत । यः । एनयोः । अनुलोममित्यनु—लोमम् । च । प्रतिलोममिति प्रति—लोमम् । च । विद्यात् । इति । अमावास्याया इत्यमा—वास्यायाः । ऊर्ध्वम् । तत् । अनुलोममित्यनु—लोमम् । पौर्णमास्या इति पौर्ण—मास्यै । प्रतीचीनम् । तत् । प्रतिलोममिति प्रति—

लोमम् । यत् । पौर्णमासीमिति पौर्ण—मासीम् । पूर्वाम् । आलभेतेत्या—लभेत । प्रतिलोममिति प्रति—लोमम् । एनौ । एति । लभेत । अमुम् । अपक्षीयमाणमित्यप—क्षीयमाणम् । अनु । अपेति ( ३ ) । क्षीयेत । सारस्वतौ । होमौ । पुरस्तात् । जुहुयात् । अमावास्येत्यमा—वास्या । वै । सरस्वती । अनुलोममित्यनु—लोमम् । एव । एनौ । एति । लभते । अमुम् । आप्यायमानमित्या—प्यायमानम् । अनु । एति । प्यायते । आग्नावैष्णवमित्याग्ना—वैष्णवम् । एकादशकपालमित्येकादश—कपालम् । पुरस्तात् । निरिति । वपेत् । सरस्वत्यै । चरुम् । सरस्वते । द्वादशकपालमिति द्वादश—कपालम् । यत् । आग्नेयः । भवति । अग्निः । वै । यज्ञमुखमिति यज्ञ—मुखम् । यज्ञमुखमिति यज्ञ—मुखम् । एव । ऋद्धिम् । पुरस्तात् । धत्ते । यत् । वैष्णवः । भवति । यज्ञः । वै । विष्णुः । यज्ञम् । एव । आरभ्येत्या—रभ्य । प्रेति । तनुते । सरस्वत्यै । चरुः । भवति । सरस्वते । द्वादशकपाल इति द्वादश—कपालः । अमावास्येत्यमा—वास्या । वै । सरस्वती । पूर्णमास इति पूर्ण—मासः । सरस्वान् ।

तौ । एव । साक्षादिति स—अक्षात् । एति । रभते । ऋध्नोति । आभ्याम् । द्वादशकपाल इति द्वादश—कपालः । सरस्वते । भवति । मिथुनत्वायेति मिथुन—त्वाय । प्रजात्या इति प्र—जात्यै । मिथुनौ । गावौ । दक्षिणा । समृद्ध्या इति सम्—ऋद्ध्यै (४)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ तृतीयाष्टके पञ्चमः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रपाठके चतुर्थे हि काम्या नैमित्तिकाः श्रुताः ।
प्रपाठके पञ्चमे तु सोमेष्ट्योः शेष उच्यते ॥ २ ॥

तत्र प्रथमानुवाके दर्शपूर्णमासेष्ट्यङ्गभूतान्वारम्भणीयेष्टिर्विधातव्या । कल्पः—" पूर्णा पश्चाद्यत्ते देवा अदधुरिति सारस्वतौ होमौ हुत्वाऽन्वारम्भणीयामिष्टिं निर्वपति " इति ।

पाठस्तु—

पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय । तस्यां देवा अधि संवसन्त उत्तमे नाक इह मादयन्ताम् । यत्ते देवा अदधुर्भागधेयममावास्ये संवसन्तो महित्वा । सा नो यज्ञं पिपृहि विश्ववारे रयिं नो धेहि सुभगे सुवीरम्। इति ।

( दर्शपूर्णमासेष्ट्यङ्गभूतान्वारम्भणीयेष्टिविधिः )

पूर्णा पौर्णमास्यभिमानिदेवता पश्चाद्यज्ञभूमेः पश्चिमायां दिश्युज्जिगायो-त्कर्षेण जयं प्राप्तवती । अपि च पूर्वस्यां दिशि तयोर्दिशोर्मध्यदेशेऽप्युज्जि-गाय । तस्यां पौर्णमास्यामधिष्ठायेह यज्ञे सम्यग्वसन्तः सर्वे देवा उत्तमे नाके भोगबहुले स्वर्गे मादयन्तामस्मान्हर्षयन्तु । हेऽमावास्ये यद्यस्मात्कारणात्ते महित्वा महिम्ना सम्यङ्निवसन्तो देवा भागधेयमदधुर्हविर्भागं प्राप्तवन्तस्तस्मा-त्कारणाद्धे विश्ववारे सर्वानिष्टनिवारिकेऽमावास्याभिमानिदेवते सा त्वं नोऽ-स्मदीयं यज्ञं पिपृहि पूर्णं कुरु । हे सुभगे सौभाग्ययुक्ते नोऽस्मभ्यं रयिं धनं सुवीरं शोभनपुत्रं च धेहि संपादय ॥

अथ तत्रैव विकल्पितावन्यौ मन्त्रावाह—

निवेशनी संगमनी वसूनां विश्वा रूपाणि
वसून्यावेशयन्ती । सहस्रपोषꣳ सुभगा ररा-
णा सा न आ गन्वर्चसा संविदाना । अग्नी-
षोमौ प्रथमौ वीर्येण वसून्रुद्रानादित्या-
निह जिन्वतम् । माध्यꣳ हि पौर्णमासं जुषेथां
ब्रह्मणा वृद्धौ सुकृतेन सातावथास्मभ्यꣳ
सहवीराꣳ रयिं नि यच्छतम् ।, इति ।

सा तादृशी देवता नोऽस्मान्प्रत्यागन्नागच्छतु । कीदृशी तदुच्यते, निवे-शनी समीचीनेषु गृहेषु नितरामस्मान्प्रवेशयन्ती । वसूनां संगमनी धनानां प्रापयित्री । रूप्यन्ते मणिमुक्तादिभिर्बहुभिः प्रकारैर्निरूप्यन्त इति रूपाणि बहू-नीत्यर्थः । तानि वसूनि धनानि विश्वा सर्वाण्यप्यावेशयन्ती, अस्मद्गृहेषु प्रवेश-यन्ती । सहस्रपोषं रराणा सहस्रलक्षादिधनपुष्टिं प्रयच्छन्ती । सुभगा सौभा-ग्ययुक्ता । वर्चसा संविदाना बलेन संयोजयन्ती । हेऽग्नीषोमौ युवां प्रथमौ देवानां मध्ये मुख्यावतो वीर्येणातो(ण) भवदीयसामर्थ्येनेह कर्मणि वस्वादी-ञ्जिन्वतं प्रीणयतम् । माध्यं पश्चात्पुरस्ताच्च पौर्णमासीदेवतया रक्षिते मध्यदेशे क्रियमाणमिदं पौर्णमासं पौर्णमासीसंबन्धि हविर्जुषेथाम् । कीदृशौ युवां, ब्रह्मणा वृद्धौ स्तुतिरूपेण मन्त्रेण संतुष्टौ सुकृतेन सातौ सम्यगनुष्ठितेनानेन कर्मणा फलस्य दातारौ हविःसेवनानन्तरमस्मभ्यं सहवीरां पुत्रसहितां रयिं नियच्छतं नितरां प्रयच्छतम् ॥

अथ होमं विधातुं प्रस्तौति—

आदित्याश्चाङ्गिरसश्चाग्नीनाऽदधत ते

दर्शपूर्णमासौ प्रेप्सन्तेषामङ्गिरसां निरु-
प्तꣳ हविरासीदथाऽऽदित्या एतौ होमा-
वपश्यन्तावजुहवुस्ततो वै ते दर्शपू-
र्णमासौ पूर्व आऽलभन्त , इति ।

आदित्या देवा अङ्गिरस ऋषयश्चाऽऽधानादूर्ध्वं यदा दर्शपूर्णमासौ प्राप्तु-मैच्छंस्तदा तेषामुभयेषां मध्ये येऽङ्गिरस ऋषयस्ते सारस्वतहोमावज्ञात्वा प्रथममेवान्वारम्भणीयेष्ट्यर्थं हविर्निर्वापं कृतवन्तः । अथ तदानीमादित्या देवा एतावन्वारम्भणीयेष्ट्यङ्गभूतौ सारस्वतहोमौ कर्तव्याविति निश्चित्य तावजुहवुः । ततोऽन्वारम्भणीयेष्टेः साङ्गत्वादङ्गिरोभ्यः पूर्वभाविन एव सन्तौ दर्शपूर्णमासावुपक्रान्तवन्तः ॥

इदानीं विधत्ते—

दर्शपूर्णमासावालभमान एतौ होमौ पुरस्ताज्जु-
हुयात्साक्षादेव दर्शपूर्णमासावा लभते, इति ।

दर्शपूर्णमासावारब्धुमिच्छन्पुरुष आरम्भणीयेष्टेरुपक्रमे पूर्णा पश्चादिति मन्त्राभ्यां जुहुयात् । तेन होमेन विलम्बमन्तरेणैव दर्शपूर्णमासावारब्धुं योग्यो भवति ॥

उक्तयोर्होमयोर्देवताविशेषं विधातुं प्रस्तौति—

ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासावा
लभेत य एनयोरनुलोमं च प्रतिलोमं च
विद्यादित्यमावास्याया ऊर्ध्वं तदनुलोमं
पौर्णमास्यै प्रतीचीनं तत्प्रतिलोमं यत्पौर्ण-
मासीं पूर्वामालभेत प्रतिलोममेनावा लभे-
तामुमपक्षीयमाणमन्वप क्षीयेत , इति ।

अत्रेदं चिन्त्यते—किं पौर्णमासी प्रथममालब्धव्या, आहोस्विदमावास्येति । तदर्थमन्यदप्येतच्चिन्तनीयम्—कालस्य स्वरूपं कीदृशमनुलोमं कीदृशं च प्रतिलोममिति । न चेयमप्रस्तुता चिन्ता । यो यजमान एतयोर्दर्शपूर्णमाससंबन्धिकालयोरनुलोमं प्रतिलोमं च स्वरूपं वेद स एव दर्शपूर्णमासारम्भे मुख्योऽधिकारी नान्य इति ब्रह्मवादिनः परस्परमाहुः । तत्र कश्चिद्बुद्धिमान-

नुलोमप्रतिलोमभागमेवं ब्रूते। अमावास्याया ऊर्ध्वं शुक्लप्रतिपदमारभ्यानुलोमं कालस्वरूपं दिने दिने चन्द्रस्य वर्धमानत्वात्। पौर्णमास्याः प्रतीचीनमुपरितनं कृष्णप्रतिपदमारभ्य कालस्य यत्स्वरूपं तत्प्रतिलोमं दिने दिने चन्द्रस्यापक्षीयमाणत्वात्। एवं सति यदि पौर्णमासीं पूर्वभाविनीं कृत्वा यागारम्भं कुर्यात्तदा प्रतिलोमस्वरूपेणैव तौ दर्शपूर्णमासावारब्धवान्भवति। तथा सति पौर्णमास्यामारब्धायां सत्यां समनन्तरमेव चन्द्रोऽपक्षीयते। तं चापक्षीयमाणमनु यजमानोऽप्यपक्षीयेत॥

अतः प्रातिलोम्यदोषपरिहारकृते देवताविशेषौ विधत्ते—

सारस्वतौ होमौ पुरस्ताज्जुहुयादमावास्या वै सरस्वत्यनुलोममेवैनावा लभतेऽमुमाप्यायमानमन्वा प्यायते, इति।

आरम्भणीयेष्टेः पुरस्ताद्यौ होमौ तौ सारस्वतौ। सरस्वती च सरस्वांश्च ययोर्होमयोस्तौ सारस्वतौ। एतदीयहोमेन प्रातिलोम्यदोषस्य परिहृतत्वादानुलोम्येनैव तौ दर्शपूर्णमासयागावारब्धवान्भवति। तथा वर्धमानचन्द्रमनु यजमानो वर्धते॥

प्राच्याङ्गरूपौ होमौ विधायाङ्गिरूपामन्वारम्भणीयेष्टिं त्रिहविष्कां विधत्ते—

आग्नावैष्णवमेकादशकपालं पुरस्तान्निर्वपेत्सरस्वत्यै चरुं सरस्वते द्वादशकपालम्, इति।

पूर्वत्रामावास्यायाः प्रथमारम्भे सत्यानुलोम्येन दोषाभावेऽपि तत्प्राथम्यमुपेक्ष्य प्रातिलोम्यदोषपरिहारप्रयत्नो विहितोऽतस्तदन्यथानुपपत्त्या पौर्णमास्येव प्रथममालब्धव्येति गम्यते। तादृशपौर्णमास्यारम्भात्पुरस्तादिदं हविस्त्रयं निर्वपेत्॥

तत्राऽऽग्नावैष्णवं प्रशंसति—

यदाग्नेयो भवत्यग्निर्वै यज्ञमुखं यज्ञमुखमेवर्द्धिं पुरस्ताद्धत्ते यद्वैष्णवो भवति यज्ञो वै विष्णुर्यज्ञमेवाऽऽरभ्य प्र तनुते, इति।

अग्निमन्तरेण यज्ञस्यानिष्पत्तेरग्निरेव यज्ञस्य मुखमत आग्नेयेन हविषा यज्ञ-

---

१ ख. 'मानं च'।

मुखमेवोद्दिश्य प्रथमतः समृद्धिं संपादयति । यज्ञस्य सर्वाङ्गव्यापित्वाद्विष्णुत्वमतो वैष्णवेन हविषा यज्ञमेवोपक्रम्य प्रकर्षेण विस्तृतवान्भवति ॥

उत्तरं हविर्द्वयं प्रशंसति—

सरस्वत्यै चरुर्भवति सरस्वते द्वादशकपालोऽमावास्या वै सरस्वती पूर्णमासः सरस्वान्तावेव साक्षादा रभत ऋध्नोत्याभ्याम् , इति ।

स्त्रीलिङ्गनिर्देशादमावास्यायाः सरस्वतीत्वम् । तथा पुंलिङ्गशब्दनिर्देशात्पूर्णमासः सरस्वान् । तथा सत्यनेन देवताद्वयेन तदात्मकौ दर्शपूर्णमासौ यागावेव व्यवधानमन्तरेणोपक्रान्तवान्भवति । किं चाऽऽभ्यां देवताभ्यां यजमानः समृद्धिं प्राप्नोति ॥

तृतीये हविषि सारस्वतीं परित्यज्य सरस्वत्स्वीकारं प्रशंसति—

द्वादशकपालः सरस्वते भवति मिथुनत्वाय प्रजात्यै, इति ।

द्वितीयहविषः स्त्रीदेवताकत्वादितरस्य पुंदेवताकत्वं यजमानस्य मिथुनत्वाय संपद्यते । तच्च प्रजोत्पत्त्यर्थं भवति ॥

तत्र दक्षिणां विधत्ते—

मिथुनौ गावौ दक्षिणा समृद्ध्यै ॥, इति ॥

अत्र विनियोगसंग्रहः—

पूर्णेत्यारम्भणीयेष्टौ द्वौ सारस्वतहोमयोः ।
मन्त्रौ विकल्पितावन्याविति चत्वार ईरिताः ॥ १ ॥

अथ मीमांसा ।

नवमाध्यायस्य प्रथमे पादे चिन्तितम्—

" अन्वाधानाङ्गमारम्भो यद्वा पुरुषसंस्कृतिः ।
फलवत्त्वादादिमोऽन्त्यः पुंयोगान्न पृथक्फलम् " इति ॥

दर्शपूर्णमासयोरन्वाधानस्य प्रथमपदार्थत्वेनाऽऽरम्भरूपत्वात् । आरम्भप्रयुक्तेयमिष्टिरन्वाधानस्याङ्गम् । तथा सति यागफलेनैव फलवती स्यात् । कर्तुः संस्कारपक्षे तु पृथक्फलं कल्प्येत । तस्मात्प्रतिप्रयोगमन्वाधानाद्दृत्तौ तदङ्गभूतेयमिष्टिरिति प्राप्ते ब्रूमः—आरम्भो नाम पुरुषस्य प्रथमप्रवृत्तिर्नत्वाधानपदार्थः । अतो नाग्न्यन्वाधानाङ्गं किंत्वारप्स्यमानो निर्वपेदिति पुरुषयोगात्तत्संस्कारोऽयम् । न च फलकल्पनाप्रसङ्गः कृतारम्भस्य पुरुषस्य प्रयोगपरि-

गृहीतत्वेन पृथक्फलाकाङ्क्षाया अभावात्। नन्वेवमपि तत्तत्प्रयोगमारप्स्यमानस्य संस्कारायाऽऽवृत्तिः स्यान्नैवम्। प्रयोगमारप्स्यमान इत्यश्रुतत्वात्। दर्शपूर्णमासावारप्स्यमान इति श्रूयते। तयोश्चैक एवाऽऽरम्भः। तस्मान्नास्त्यावृत्तिः।

तत्रैवान्यच्चिन्तितम्—

प्रतिप्रयोग आ(मा)रम्भयजिरस्ति न वाऽस्त्यसौ।
अङ्गत्वेन न तत्सर्वधर्म आधानवद्भवेत्॥

"आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः" इति विहितेयमारम्भणीयेष्टिर्दर्शपूर्ण(*मासयोर्यावज्जीवमावर्त्यमानयोः प्रतिप्रयोगमावर्तनीया। कुतः, प्रयाजादिवदङ्गत्वादिति चेत्। नैतद्युक्तम्। कुतः, सर्वप्रयोगसाधारणत्वात्। यावज्जीवं मया दर्शपूर्ण)मासौ कर्तव्यावित्यध्यवसाय आरम्भः। स चैक एव। तेन चाऽऽरम्भेण प्रयुक्तेयमिष्टिः। तस्मान्नाऽऽवर्तनीया। यथाऽऽधानं सर्वक्रतुसाधारणत्वात्सकृदेव कर्तव्यं तद्वत्। आधानस्य सकृदनुष्ठानमेकादशस्य तृतीयपादे वक्ष्यते।

दशमाध्यायस्य प्रथमपादे चिन्तितम्—

तस्यां साऽस्ति न वाऽङ्गत्वेऽप्यस्याः पृथगुपक्रमात्।
अस्ति मैवं वचोऽशक्तेर्विधाने चातिदेशने॥

येयमारम्भणीया साऽपीष्टित्वाद्दर्शपूर्णमासप्रकृतिः। अतस्तस्यामपि दर्शपूर्णमासयोरिवाऽऽरप्स्यमानपुरुषसंस्काराय साऽनुष्ठेया न वेति संशयः। चोदकप्राप्तत्वादनुष्ठेया। ननु सोमाङ्गदीक्षणीयादिवदस्या दर्शपूर्णमासाङ्गत्वेनाऽऽरम्भद्वारं लुप्यते। न वैषम्यात्। ऋत्विग्वरणादिना सोममारभ्यानुतिष्ठतः पुरुषस्यानुष्ठानमध्ये दीक्षणीया प्रवर्तते। दर्शपूर्णमासारम्भस्त्वन्वारम्भणीयायामनुष्ठितायां पश्चात्संपद्यते। ततो दर्शपूर्णमासोपक्रमादन्य आरम्भणीयोपक्रम इति द्वारसद्भावादारम्भणीयामारप्स्यमानस्य (नः स्व)संस्कारार्थमन्यामारम्भणीयां कुर्यात्। अनवस्था तु लोकसिद्धबीजाङ्कुरादिदृष्टान्तेन समाधेयेत्येवं प्राप्ते ब्रूमः—आरम्भणीयायामारम्भणीयान्तरं न कर्तव्यम्। कुतः। अङ्गान्तरवदतिदेष्टुमशक्यत्वात्। तथा हि, प्रकृतौ समिधो यजतीत्यादिवाक्यैः प्रयाजाद्यङ्गानां स्वरूपमतिदिश्यते। प्रकरणेन चाङ्गाङ्गिभावो बोध्यते। ततः सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यादिकायां विकृतौ निर्वापानुमितं चोदकवाक्यमेवं प्रवर्तते। इष्टिवच्चरौ प्रयाजाद्यङ्गान्यनुष्ठेयानि। एवं सत्यारम्भणीया-

---

* धनुश्चिह्नान्तर्गतं न्यायमालास्थम्।

यामिदं वक्तव्यं किमाग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमान इत्येतद्वाक्यं समिदादिवदङ्गभूतामारम्भणीयां विदधातु । किंवा यथा सौर्यादिवाक्यमङ्गातिदेशमनुमापयति तथा दर्शपूर्णमासाङ्गभूतायामारम्भणीयायामन्यस्या आरम्भणीयाया अतिदेशमनुमापयतु । उतोभयं करोत्विति । नाऽऽद्योऽङ्गविधावुपक्षीणत्वेनातिदेशानुमाने शक्त्यभावात् । न द्वितीयोऽविहितत्वेनातिदेष्टुमयोग्यस्याङ्गस्यातिदेशे शक्त्यभावात् । न तृतीयो वाक्यभेदापत्तेः । नन्वनेन न्यायेन सौर्यवाक्येऽपि वाक्यभेदः प्रसज्येतैकस्यैव वाक्यस्य यागविध्यङ्गातिदेशयोः प्रवृत्तत्वात् । मैवम् । वाक्यद्वयसद्भावात् । प्रत्यक्षं वाक्यं यागविधायकमनुमितं वाक्यमङ्गातिदेशकम् । तर्ह्यत्रापि तादृशं वाक्यद्वयं भवत्विति चेद्बाढम् । अत एवाऽऽरम्भणीयायां प्रयाजाद्यङ्गान्यनुष्ठीयन्ते तद्वदारम्भणीयान्तररूपमप्यङ्गमनुष्ठीयतामिति चेन्न । दर्शपूर्णमासप्रकरणे प्रयाजाद्यङ्गविधायकसमिदादिवाक्यवदारम्भणीयान्तररूपाङ्गविधायिनः कस्यचिद्वाक्यस्याभावात् । नहि प्रकृतावविद्यमानमङ्गं विकृतावतिदेशमर्हति । तस्मात्संप्रतिपन्नस्यैवाऽऽरम्भणीयाविधायिनो वाक्यस्याङ्गस्वरूपविधानाय समिदादिवाक्यस्थानीयत्वमतिदेशाय सौर्यवाक्यस्थानीयत्वं चेत्याकारद्वयं वर्णनीयम् । तथा सत्यावृत्तिलक्षणो वाक्यभेदः केन वार्येत । तस्मादारम्भणीयायामारप्स्यमानपुरुषसंस्कारायाऽऽरम्भणीया न कर्तव्या ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ तृतीयाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः । )

---

ऋषयो वा इन्द्रं प्रत्यक्षं नापश्यन्तं वसिष्ठः प्रत्यक्षमपश्यत्सोऽब्रवीद्ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्तेऽथ मेतरेभ्य ऋषिभ्यो मा प्र वोच इति तस्मा एतान्त्स्तोमभागानब्रवीत्ततो वसिष्ठपुरोहिताः प्रजाः प्रा-

जायन्त तस्माद्वासिष्ठो ब्रह्मा कार्यः प्रैव जायते रश्मिरसि क्षयाय त्वा क्षयं जिन्वेति ( १ ) आह देवा वै क्षयो देवेभ्य एव यज्ञं प्राऽऽह प्रेतिरसि धर्माय त्वा धर्मं जिन्वेत्याह मनुष्या वै धर्मो मनुष्येभ्य एव यज्ञं प्राऽऽहान्वितिरसि दिवे त्वा दिवं जिन्वेत्याहैभ्य एव लोकेभ्यो यज्ञं प्राऽऽह विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्वेत्याह वृष्टिमेवाव ( २ ) रुन्धे प्रवाऽस्यनुवाऽसीत्याह मिथुनत्वायोशिगसि वसुभ्यस्त्वा वसूञ्जिन्वेत्याहाष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्या एतावन्तो वै देवास्तेभ्य एव यज्ञं प्राऽऽहौजोऽसि पितृभ्यस्त्वा पितॄञ्जिन्वेत्याह देवानेव पितॄननु सं तनोति तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व ( ३ ) इत्याह पितॄनेव प्रजा अनु सं तनोति पृतनाषाडसि पशुभ्यस्त्वा पशूञ्जिन्वेत्याह प्रजा एव पशूननु सं तनोति रेवदस्योषधीभ्यस्त्वौषधीर्जिन्वेत्याहौषधीष्वेव पशून्प्रति ष्ठापयत्यभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्वेत्याहाभिजित्या अधिपतिरसि प्राणाय त्वा प्राणम् ( ४ ) जिन्वे-

त्यांह प्रजास्वेव प्राणान्दंधाति त्रिवृदंसि प्रवृद-
सीत्यांह मिथुनत्वायं संरोहोंऽसि नीरोहोंऽ-
सीत्यांह प्रजात्यै वसुकोंऽसि वेषंश्रिरसि वस्यं-
ष्टिरसीत्यांह प्रतिंष्ठित्यै ( ५ ) ॥

( जिन्वेत्यवं प्रजा जिन्व प्राणं त्रिंशच्चं । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके
पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ तृतीयाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः । )

---

ऋषंयः । वै । इन्द्रंम् । प्रत्यक्षमितिं प्रति—
अक्षंम् । न । अपश्यन् । तम् । वसिंष्ठः । प्रत्यक्षमितिं
प्रति—अक्षंम् । अपश्यत् । सः । अब्रवीत् । ब्राह्मं-
णम् । ते । वक्ष्यामि । यथां । त्वत्पुंरोहिता इति
त्वत्—पुरोंहिताः । प्रजा इतिं प्र—जाः । प्रजनि-
ष्यन्त इतिं प्र—जनिष्यन्तें । अथं । मा । इतं-
रेभ्यः । ऋषिंभ्य इत्यृषिं—भ्यः । मा । प्रेतिं ।
वोचः । इतिं । तस्मैं । एतान् । स्तोमंभागानिति
स्तोमं—भागान् । अब्रवीत् । ततंः । वसिंष्ठपुरोहिता
इति वसिंष्ठ—पुरोंहिताः । प्रजा इतिं प्र—जाः ।
प्रेतिं । अजायन्त । तस्मांत् । वासिष्ठः । ब्रह्मा ।
कार्यंः । प्रेतिं । एव । जायते । रश्मिः । असि ।

क्षयाय । त्वा । क्षयम् । जिन्व । इति ( १ ) । आह । देवाः । वै । क्षयः । देवेभ्यः । एव । यज्ञम् । प्रेति । आह । प्रेतिरिति प्र—इतिः । असि । धर्माय । त्वा । धर्मम् । जिन्व । इति । आह । मनुष्याः । वै । धर्मः । मनुष्येभ्यः । एव । यज्ञम् । प्रेति । आह । अन्वितिरित्यनु—इतिः । असि । दिवे । त्वा । दिवम् । जिन्व । इति । आह । एभ्यः । एव । लोकेभ्यः । यज्ञम् । प्रेति । आह । विष्टम्भ इति वि—स्तम्भः । असि । वृष्ट्यै । त्वा । वृष्टिम् । जिन्व । इति । आह । वृष्टिम् । एव । अवेति (२) । रुन्धे । प्रवेति प्र—वा । असि । अनुवेत्यनु—वा । असि । इति । आह । मिथुनत्वायेति मिथुन—त्वाय । उशिक् । असि । वसुभ्य इति वसु—भ्यः । त्वा । वसून् । जिन्व । इति । आह । अष्टौ । वसवः । एकादश । रुद्राः । द्वादश । आदित्याः । एतावन्तः । वै । देवाः । तेभ्यः । एव । यज्ञम् । प्रेति । आह । ओजः । असि । पितृभ्य इति पितृ—भ्यः । त्वा । पितॄन् । जिन्व । इति । आह । देवान् । एव । पितॄन् । अनु । समिति । तनोति । तन्तुः । असि । प्रजाभ्य इति प्र—जाभ्यः । त्वा ।

प्रजा इति प्र—जाः । जिन्व ( ३ ) । इति । आह । पितॄन् । एव । प्रजा इति प्र—जाः । अनु । सम् । इति । तनोति । पृतनाषाट् । असि । पशुभ्य इति पशु—भ्यः । त्वा । पशून् । जिन्व । इति । आह । प्रजा इति प्र—जाः । एव । पशून् । अनु । सम् । इति । तनोति । रेवत् । असि । ओषधीभ्य इत्योषधि—भ्यः । त्वा । ओषधीः । जिन्व । इति । आह । ओषधीषु । एव । पशून् । प्रतीति । स्थापयति । अभिजिदित्यभि—जित् । असि । युक्तग्रावेति युक्त—ग्रावा । इन्द्राय । त्वा । इन्द्रम् । जिन्व । इति । आह । अभिजित्या इत्यभि—जित्यै । अधिपतिरित्यधि—पतिः । असि । प्राणायेति प्र—अनाय । त्वा । प्राणमिति प्र—अनम् ( ४ ) । जिन्व । इति । आह । प्रजास्विति प्र—जासु । एव । प्राणानिति प्र—अनान् । दधाति । त्रिवृदिति त्रि—वृत् । असि । प्रवृदिति प्र—वृत् । असि । इति । आह । मिथुनत्वायेति मिथुन—त्वाय । सꣳरोह इति सं—रोहः । असि । नीरोह इति निः—रोहः । असि । इति । आह । प्रजात्या इति प्र—जात्यै । वसुकः । असि । वेषश्रिरिति वेष—श्रिः । असि ।

वस्यष्टिः । असि । इति । आह । प्रतिष्ठित्या इति प्रति—स्थित्यै ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ तृतीयकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः । )

---

इष्टिरन्वारम्भणीया समन्त्रा प्रथमे श्रुता ॥
अथ द्वितीयानुवाके सौमिकब्रह्मत्वविधिरुच्यते ।

यदुक्तं सूत्रकारेण—“ वासिष्ठो ब्रह्मा ज्योतिष्टोमे यो वा कश्चित्स्तोमभागान्विद्यात् ” इति, तदेतद्विधातुं प्रस्तौति—

ऋषयो वा इन्द्रं प्रत्यक्षं नापश्यन्तं वसिष्ठः प्रत्यक्षमपश्यत्सोऽब्रवीद्ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्तेऽथ मेतरेभ्य ऋषिभ्यो मा प्र वोच इति तस्मा एतान्त्स्तोमभागानब्रवीत्ततो वसिष्ठपुरोहिताः प्रजाः प्राजायन्त , इति ।

वसिष्ठप्रमुखाः सर्वेऽप्यृषयः कदाचिदिन्द्रमुखान्मन्त्रविशेषानवगन्तुपागतास्तदानीमिन्द्रोऽनधिकारिभ्यो मन्त्रा न वक्तव्या इत्यभिप्रेत्यान्तर्हितोऽभूत् । अन्तर्धानं प्राप्यावस्थितं तमिन्द्रमृषयश्चक्षुषा नापश्यन् । तदानीं यागसामर्थ्ययुतो वसिष्ठो दिव्येन चक्षुषा तमिन्द्रमपश्यत् । स इन्द्रस्तं वसिष्ठं प्रत्येवमब्रवीत् । सौमिकब्रह्मत्वोपयोगिमन्त्रजातं यस्मिन्प्रतिपाद्यते तादृशं ब्राह्मणमहं तुभ्यं वक्ष्यामि । त्वमेव पुरोहितो मन्त्रोपदेष्टा यासां प्रजानां तास्त्वत्पुरोहितास्तथाविधाः प्रजा यथोत्पत्स्यन्ते तथाविधमेतद्वक्ष्यमाणस्य ब्राह्मणस्य सामर्थ्यात् । तादृशं ब्राह्मणं श्रुत्वाऽथानन्तरं त्वं मामितरेभ्यो मन्त्रानधिकारिभ्य ऋषिभ्यो मा प्रवोच इत्युक्त्वा तस्मै वसिष्ठायैतान्रश्मिरसीत्यादिकान्स्तोमभागनामकामन्त्रानब्रवीत् । स्तोमा बहिष्पवमानादीनि स्तोत्राणि तान्स्तोमान्भजन्त इति स्तोमभागाः । एतान्हि मन्त्रानुचार्य ब्रह्मा स्तोत्राण्यभ्यनुजानाति तस्मादेते

स्तोमभागा इत्युच्यन्ते। तत इन्द्रप्रसादात्सर्वाः प्रजा वसिष्ठपुरोहिता उत्पन्नाः। वसिष्ठं गुरुत्वेन पुरस्कृत्य वर्तन्त इत्यर्थः ॥

इदानीं विधत्ते—

तस्माद्वासिष्ठो ब्रह्मा कार्यः प्रैव जायते , इति।

यस्माद्वसिष्ठस्य ब्रह्मत्वोपयुक्तं सर्वमिन्द्र उक्तवांस्तस्मात्सोमयागं चिकीर्षुणा पुरुषेण यो वसिष्ठगोत्रोत्पन्नस्तदीयविद्यासंप्रदायेन स्तोमभागाभिज्ञो वा भवति स एव ब्रह्मा कार्यः । तथा सत्ययं यजमानस्तथाविधाः प्रजा जनयति । ते च स्तोमभागमन्त्राश्चतुर्थकाण्डस्य चतुर्थप्रपाठकादौ समाम्नाताः। ते चैकत्रिंशत्संख्याकाः । तेष्वेकैको मन्त्र एकैकं स्तोत्रमभ्यनुज्ञातुं ब्रह्मणा प्रयोक्तव्यः । अत एव सूत्रकार आह—“ रश्मिरसि क्षयाय त्वा क्षयं जिन्वों स्तुतेति प्रसौति सर्वस्तोत्राणामेष कल्प उत्तरमुत्तरं स्तोमभागानां दधाति द्वादशाग्निष्टोमे पञ्चदशोक्थ्ये षोडश षोडशिनि सप्तदश वाजपेय एकोनत्रिंशतमतिरात्रे त्रयस्त्रिंशतमप्तोर्यामे ” इति। तत्रैकत्रिंशं स्तोमभागं त्रिरावृत्य(वर्त्य) त्रयस्त्रिंशत्संख्याऽप्तोर्यामे पूरणीया ॥

तत्र प्रथमं स्तोमभागमनूद्य व्याचष्टे—

रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्याह देवा वै क्षयो देवेभ्य एव यज्ञं प्राऽऽह , इति।

पञ्चमकाण्डोक्तब्राह्मणे रश्मिरित्येवाऽऽदित्यमसृजत प्रेतिरिति धर्ममित्यादिना मन्त्राणामादित्यधर्मादिसृष्टिहेतुत्वाभिधानादादित्यादिपरतया मन्त्रा व्याख्येयाः । हे आदित्य त्वं रश्मिरसि रश्मियुक्तोऽसि । देवा यस्मिन्संघे क्षियन्ति निवसन्ति सोऽयं संघः क्षयस्तस्मै क्षयाय देवसंघाय तत्प्रीत्यर्थं हे आदित्य त्वां स्मरामि । अतः क्षयं देवसंघं जिन्व प्रीणय । अस्मिन्मन्त्रे क्षयशब्दस्य देवा एवार्थः। अतो देवेभ्य एवैनं यज्ञं होता प्रोक्तवान्भवति ॥

द्वितीयस्तोमभागे धर्मानुष्ठातृत्वान्मनुष्या धर्मशब्देन विवक्षिता इत्येतद्दर्शयति—

प्रेतिरसि धर्माय त्वा धर्मं जिन्वेत्याह मनुष्या वै धर्मो मनुष्येभ्य एव यज्ञं प्राऽऽह , इति।

हे धर्माभिमानिदेव त्वं प्रेतिरसि प्रकृष्टेतिर्गतिः प्राण्युपकाररूपा यस्यासौ प्रेतिः। अतो धर्मानुष्ठातृपुरुषार्थं त्वां स्मरामि । तं धर्मानुष्ठातृपुरुषं प्रीणय। अनेन मन्त्रेण धर्मोपलक्षितमनुष्यार्थमिमं मन्त्रमुक्तवान्भवति ॥

तृतीयचतुर्थपञ्चमस्तोमभागानां तात्पर्यं दर्शयति—

अन्वितिरसि दिवे त्वा दिवं जिन्वेत्या-
हैभ्य एव लोकेभ्यो यज्ञं प्राऽऽह, इति ।

हे द्युलोकाभिमानिदेव त्वमन्वितिरसि देवानामनुकूलेतिर्गतिर्यस्यासाव-न्वितिः । तादृशं त्वां द्युलोकार्थं स्मरामि । तं च द्युलोकं प्रीणय । यद्यप्य-न्तरिक्षभूलोकप्रतिपादकौ चतुर्थपञ्चमौ स्तोमभागावत्र नानूदितौ तथाऽपि तृती-यस्य तदुपलक्षकत्वमभिप्रेत्यैभ्य एव लोकेभ्य इति समुदायतात्पर्यं दर्शितम् ॥

षष्ठस्तोमभागं वृष्टिप्राप्तिहेतुत्वेन प्रशंसति—

विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं
जिन्वेत्याह वृष्टिमेवाव रुन्धे, इति ।

हे वृष्ट्यभिमानिदेव त्वं विष्टम्भोऽसि विशेषेणोदकस्य धारकोऽसि ॥

सप्तमाष्टमस्तोमभागयोः प्रतीकद्वयमनूद्याह्नो रात्रेश्च प्रतिपादकत्वेन मिथुन-त्वसंपत्तिं दर्शयति—

प्रवाऽस्यनुवाऽसीत्याह मिथुनत्वाय, इति ।

हेऽहरभिमानिदेव त्वं प्रवाऽसि । जगत्प्रवासकत्वरूपेण प्रकर्षेण वाति गच्छति प्रवर्तत इति प्रवा । हे रात्र्यभिमानिदेव त्वमनुवाऽसि । निद्रादिव्यवहारस्या-नुकूलत्वेन वाति गच्छति वर्तत इत्यनुवा । तयोर्द्वैत्वेन[1] मिथुनत्वप्राप्तिसाधनत्वम् ॥

नवमदशमैकादशस्तोमभागानां संग्रहेण तात्पर्यं दर्शयति—

उशिगसि वसुभ्यस्त्वा वसूञ्जिन्वेत्याहाष्टौ
वसव एकादश रुद्रा द्वादशाऽऽदित्या एता-
वन्तो वै देवास्तेभ्य एव यज्ञं प्राऽऽह, इति ।

हे वसुगणपालक त्वमुशिगसि । उशिक्कामयमानः । रुद्रादित्यप्रतिपादकयो-रपि स्तोमभागयोर्वसुविषयस्तोमभागेनैवोपलक्षितत्वात्संगृह्य तात्पर्याभिधानम् ॥

देवप्रतिपादकेभ्यस्त्रिभ्यः स्तोमभागेभ्य ऊर्ध्वं पितृप्रतिपादकस्य द्वादशस्य स्तोमभागस्याभिधानाद्देवानां पितॄणां च नैरन्तर्यं संपादितं भवतीत्येतद्दर्शयति—

ओजोऽसि पितृभ्यस्त्वा पितॄञ्जिन्वेत्याह
देवानेव पितॄननु सं तनोति, इति ।

---

1 ख. °योर्द्वित्वेन ।

हे पितृपालक देव त्वमोजोऽसि बलरूपोऽसि ॥

पितृप्रतिपादकस्तोमभागादूर्ध्वं प्रजाप्रतिपादकस्य त्रयोदशस्य स्तोमभागस्याभिधानात्पितॄणां च प्रजानां च नैरन्तर्यं सिध्यतीत्येतद्दर्शयति—

तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्वेत्याह
पितॄनेव प्रजा अनु सं तनोति , इति ।

हे प्रजाभिमानिदेव त्वं तन्तुरसि पुत्रपौत्रादिविस्तारहेतुरसि ॥

पशुप्रतिपादकेन चतुर्दशेन स्तोमभागेन प्रजानां च पशूनां च नैरन्तर्यं सिध्यतीत्येतद्दर्शयति—

पृतनाषाडसि पशुभ्यस्त्वा पशूञ्जिन्वेत्याह
प्रजा एव पशूननु सं तनोति , इति ।

हे पशुपालक देव त्वं पृतनाषाडसि । पृतनां परकीयसेनामस्मत्पशूनामपहर्त्रीं सहते विनाशयतीति पृतनाषाट् ॥

ओषधिप्रतिपादकेन पञ्चदशेन स्तोमभागेन पशुस्तोमभागानन्तरभाविनां पशूनामोषधीषु प्रतिष्ठापनं भवतीत्येतद्दर्शयति—

रेवदस्योषधीभ्यस्त्वौषधीर्जिन्वेत्याहौ-
षधीष्वेव पशून्प्रति ष्ठापयति , इति ।

हे ओषधिपालक देव त्वं रेवदसि धनवानसि ॥

पञ्चमकाण्डे रश्मिरित्येवाऽऽदित्यमसृजतेत्यारभ्य रेवदित्योषधीरित्यन्तेषु पञ्चदशेषु ( शसु ) मन्त्रेष्वसृजतेति ब्राह्मणेन व्याख्यातत्वात्तदभिमानिदेवपरत्वेन मन्त्राणामादिवाक्यान्यस्माभिर्व्याख्यातानि । अथ षोडशस्तोमभागस्याऽऽदिवाक्यं वज्रपरत्वेन तत्रैव व्याख्यातमतोऽत्रापि वज्रसाध्याभिजयार्थत्वं दर्शयति—

अभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं
जिन्वेत्याहाभिजित्यै , इति ।

हे वज्र त्वमभिजिद्युक्तग्रावाऽसि । अभितो जयतीत्यभिजित् । युक्ताः संयुक्ता ग्रावाणो यस्यासौ युक्तग्रावा । यथा पाषाणा दृढा एवमस्यापि दृढत्वात्पाषाणगुणेन दार्ढ्येन संयोग एव ग्रावसंयोग इत्युच्यते ॥

सप्तदशेन स्तोमभागेन प्राणानां स्थापनं दर्शयति—

अधिपतिरसि प्राणाय त्वा प्राणं जिन्वे-
त्याह प्रजास्वेव प्राणान्दधाति, इति।

हे प्राणाभिमानिदेव त्वमधिपतिरसि प्राणानामाधिक्येन पालयिताऽसि। अपानचक्षुःश्रोत्रप्रतिपादकानामष्टादशैकोनविंशविंशानां त्रयाणां स्तोमभागानां प्राणप्रतिपादकस्तोमभागेनैवोपलक्षितत्वमभिप्रेत्य संग्रहेण तात्पर्यं दर्शयितुं प्राणानितिबहुवचनं निर्दिष्टम्॥

एकविंशद्वाविंशत्रयोविंशचतुर्विंशानां स्तोमभागानां चतुर्णां मिथुनत्वसंपादकत्वं दर्शयति—

त्रिवृदसि प्रवृदसीत्याह मिथुनत्वाय, इति।

हे मिथुनीभाव त्वं त्रिगुणोऽसि प्रवर्तकश्चासि। पुमान्योषित्संयोगश्चेत्येवं त्रैगुण्यम्। संयोगानन्तरभावी मन्थनव्यापारः प्रवृत्तिः। एताभ्यां त्रैगुण्यप्रवृत्तिप्रतिपादकाभ्यां मन्थनसमाप्तिविश्लेषरूपमिथुनीभावावयवद्वयप्रतिपादकावुत्तरावपि स्तोमभागावुपलक्ष्येते। संवृन्मन्थनव्यापारसमाप्तिः। विवृद्दंपत्योर्विश्लेषः। अनेन स्तोमभागचतुष्टयेन मिथुनत्वं साकल्येन संपादितम्॥

पञ्चविंशषड्विंशसप्तविंशाष्टाविंशानां स्तोमभागानां चतुर्णां प्रजोत्पादनपरत्वं दर्शयति—

सꣳरोहोऽसि नीरोहोऽसीत्याह प्रजात्यै, इति।

हे प्रजननव्यापार त्वं संरोहोऽसि नीरोहश्चासि। शुक्रशोणितसंश्लेषेण गर्भाभिव्यक्तिः संरोहः। निःशेषाणामवयवानामभिव्यक्तिर्नीरोहः। एताभ्यामुभाभ्यां स्तोमभागाभ्यां प्ररोहानुरोहप्रतिपादकावन्यावपि स्तोमभागावुपलक्ष्येते। प्रथमस्यापत्यस्योत्पत्तिः प्ररोहः। पश्चाद्भाविनामपत्यानामुत्पत्तिरनुरोहः। एतेन स्तोमभागचतुष्टयेन प्रजोत्पत्तिः संपद्यते॥

एकोनत्रिंशत्त्रिंशैकत्रिंशस्तोमभागैस्त्रिभिरुत्पन्नानां प्रजानां प्रतिष्ठां दर्शयति—

वसुकोऽसि वेषश्रिरसि वस्य-
ष्टिरसीत्याह प्रतिष्ठित्यै, इति।

हे उत्पन्नप्रजाभिमानिदेव त्वं वसुको वासयिताऽसि। वेषायानुकूला

श्रीर्यस्य सः । व्याप्तिसमर्थश्चासि वसेर्निवासस्याष्टिर्व्याप्तिर्यस्यासौ वस्यष्टिः । अनेन स्तोमभागत्रयेण प्रजानां प्रतिष्ठा संपद्यते ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ तृतीयाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः । )

---

अग्निनां देवेन पृतंना जयामि गायत्रेण छन्दंसा त्रिवृता स्तोमेंन रथंतरेण साम्नां वषट्कारेण वज्रेंण पूर्वजान्भ्रातृंव्यानधंरान्पादयाम्यवैनान्बाधे प्रत्येंनान्नुदेऽस्मिन्क्षयेऽस्मिन्भूमिलोके योंऽस्मान्द्वेष्टि यं चं वयं द्विष्मो विष्णोः क्रमेणात्येंनान्क्रामामीन्द्रेंण देवेन पृतंना जयामि त्रैष्टुंभेन छन्दंसा पञ्चदशेन स्तोमेंन बृहता साम्नां वषट्कारेण वज्रेंण ( १ ) सहजान्विश्वेंभिर्देवेभिः पृतंना जयामि जागंतेन छन्दंसा सप्तदशेन स्तोमेंन वामदेव्येन साम्नां वषट्कारेण वज्रेंणापरजानिन्द्रेंण सयुजों वयꣳ सांसह्याम पृतन्यतः । घ्नन्तों वृत्राण्यंप्रति । यत्ते अग्ने तेजस्तेनाहं तेंजस्वी भूंयासं यत्ते अग्ने वर्चस्तेनाहं वंर्चस्वी भूंयासं यत्ते अग्ने हरस्तेनाहꣳ हंरस्वी भूंयासम् ( २ ) ।

(विष्ण्वतिक्रमोक्तिः)

(बृहता साम्ना वषट्कारेण वज्रेण षट्चत्वारिꣳशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः॥ ३॥

---

(अथ तृतीयाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः।)

---

अग्निना। देवेन। पृतनाः। जयामि। गायत्रेण। छन्दसा। त्रिवृतेति त्रि—वृता। स्तोमेन। रथंतरेणेति रथं—तरेण। साम्ना। वषट्कारेणेति वषट्—कारेण। वज्रेण। पूर्वजानिति पूर्व—जान्। भ्रातृव्यान्। अधरान्। पादयामि। अवेति। एनान्। बाधे। प्रतीति। एनान्। नुदे। अस्मिन्। क्षये। अस्मिन्। भूमिलोक इति भूमि—लोके। यः। अस्मान्। द्वेष्टि। यम्। च। वयम्। द्विष्मः। विष्णोः। क्रमेण। अतीति। एनान्। क्रामामि। इन्द्रेण। देवेन। पृतनाः। जयामि। त्रैष्टुभेन। छन्दसा। पञ्चदशेनेति पञ्च—दशेन। स्तोमेन। बृहता। साम्ना। वषट्कारेणेति वषट्—कारेण। वज्रेण (१)। सहजानिति सह—जान्। विश्वेभिः। देवेभिः। पृतनाः। जयामि। जागतेन। छन्दसा। सप्तदशेनेति सप्त—दशेन। स्तोमेन। वामदेव्येनेति वाम—देव्येन। साम्ना। वषट्कारेणेति वषट्—कारेण। वज्रेण।

अपरजानित्यपर—जान् । इन्द्रेण । सयुज इति स—युजः । वयम् । सासह्याम । पृतन्यतः । घ्नन्तः । वृत्राणि । अप्रति । यत् । ते । अग्ने । तेजः । तेन । अहम् । तेजस्वी । भूयासम् । यत् । ते । अग्ने । वर्चः । तेन । अहम् । वर्चस्वी । भूयासम् । यत् । ते । अग्ने । हरः । तेन । अहम् । हरस्वी । भूयासम् (२) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ तृतीयकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः । )

---

यद्ब्रह्मत्वं स्तोमभागैर्द्वितीये तदुदीरितम् ॥

अथ तृतीयानुवाके विष्णवतिक्रमा उच्यन्ते । कल्पः—"अग्निना देवेन पृतना जयामीति विष्णवतिक्रमान्" इति ॥

प्रथममन्त्रपाठस्तु—

अग्निना देवेन पृतना जयामि गायत्रेण छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्ना वषट्कारेण वज्रेण पूर्वजान्भ्रातृव्यानधरान्पादयाम्यवैनान्बाधे प्रत्येनान्नुदेऽस्मिन्क्षयेऽस्मिन्भूमिलोके योऽस्मान्द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान्क्रामामि, इति।

देवश्छन्दःस्तोमः साम वज्रश्चेत्येतानि परकीयां पृतनामभिभवितुं साधनानि । पृतना जित्वा भ्रातृव्यानधरान्पादयामि । त्रिविधा हि भ्रातृव्या

पूर्वजाः सहजा अपरजाश्चेति । पितृपितामहादिष्वप्यनुवर्तमानाः पूर्वजाः । सपत्नमातृजाः सहजाः । इदानीमेव स्वकार्यघातिनोऽपरजाः । तेषु त्रिविधेषु मध्ये ये पूर्वजास्तान्शत्रूनमत्तो नीचा यथा भवन्ति तथा संपादयामि । संपाद्य चैतानवबाधे येनावमता यथा भवन्ति तेन तथा शृङ्खलादिना बाधं करोमि । कृत्वा चैनान्प्रतिनुदे प्रत्येकं विनाशयामि । किंचास्मिन्क्षये मदीये निवासगृहे । अथवा किमनेन संकोचेनास्मिन्भूमिलोके सर्वस्मिन्यो भ्रातृव्योऽस्मानुदासीनानपि द्वेष्टि । यं च भ्रातृव्यमुदासीनमपि वयं द्विष्मः । एतान्सर्वान्विद्वेषिणो विष्णुरूपस्य यजमानस्य मम क्रमेण पादविन्यासेनातिक्रामामि लङ्घयामि ॥

द्वितीयमन्त्रपाठस्तु—

इन्द्रेण देवेन पृतना जयामि त्रैष्टुभेन
छन्दसा पञ्चदशेन स्तोमेन बृहता
साम्ना वषट्कारेण वज्रेण सहजान्, इति ।

अत्र भ्रातृव्यानधरान्पादयामीत्यादिकमनुषज्य पूर्ववद्व्याख्येयम् ॥

तृतीयमन्त्रपाठस्तु—

विश्वेभिर्देवेभिः पृतना जयामि जागतेन
छन्दसा सप्तदशेन स्तोमेन वामदेव्येन
साम्ना वषट्कारेण वज्रेणापरजान्, इति ।

अत्रापि भ्रातृव्यानधरानित्यादिकमनुषज्य व्याख्येयम् । त्रिवृदादिस्तोमानां रथंतरादिसाम्नां च स्वरूपं समिधमातिष्ठेत्यनुवाके दर्शितम् ।

कल्पः—“ इन्द्रेण सयुजो वयमित्याहवनीयमुपतिष्ठते ” इति ॥

पाठस्तु—

इन्द्रेण सयुजो वयꣳसासह्याम पृतन्यतः ।
घ्नन्तो वृत्राण्यप्रति । यत्ते अग्ने तेज-
स्तेनाहं तेजस्वी भूयासं यत्ते अग्ने वर्च-
स्तेनाहं वर्चस्वी भूयासं यत्ते अग्ने
हरस्तेनाहꣳ हरस्वी भूयासम्, इति ॥

---

१ क. घ. ङ. च. °व्यान्पा° ।

पृतनामस्मद्विरोधिनीं सेनामात्मन इच्छन्तीति पृतन्यतस्ताञ्शत्रूनवयं सासह्यामातिशयेन सोढुं शक्ताः स्मः । कीदृशा वयम् । इन्द्रेणं सयुजः परमैश्वर्ययोगादाहवनीय इन्द्रस्तेन सह युज्यन्ते युक्ता भवन्तीति सयुजः । वृत्राणि शत्रूनप्रत्यस्मान्प्रति प्रतिकूलत्वं यथा नास्ति तथा घ्नन्तो वधं कुर्वन्तः । हेऽग्ने ते त्वदीयं यत्तेजः कान्तिरूपं तेनाहमपि कान्तिमान्भूयासम् । वर्चो बलम् । हरो रश्मिरूपं तेजः ॥

अत्र विनियोगसंग्रहः—

यजमानोऽग्निनेन्द्रेण विश्वेभिर्विष्ण्वतिक्रमान् ।
क्रामत्युत्तरयोर्भ्रातृव्यानित्याद्यनुषज्यते ॥
इन्द्रे पूर्वाग्न्युपस्थानं मन्त्राश्चत्वार ईरिताः ।
एते मन्त्रा उरुं हि राजेत्यनुवाकात्पूर्वं द्रष्टव्याः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ तृतीयाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः । )

---

ये देवा यज्ञहनो यज्ञमुषः पृथिव्यामध्यासते । अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । आऽगन्म मित्रावरुणा वरेण्या रात्रीणां भागो युवयोर्यो अस्ति । नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः । ये देवा यज्ञहनो यज्ञमुषोऽन्तरिक्षेऽध्यासते । वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । यास्ते रात्रीः सवितः ( १ ) देवयानीरन्तरा द्यावापृथिवी वियन्ति । गृहैश्च

( अतिमोक्षमन्त्राः )

सर्वः प्रजया न्वग्ने सुवो रुहाणास्तरता रजांसि । ये देवा यज्ञहनो यज्ञमुषो दिव्यध्यासते । सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । येनेन्द्राय समभरः पयांस्युत्तमेन हविषा जातवेदः । तेनाग्ने त्वमुत वर्धयेमꣳ सजातानाꣳ श्रैष्ठ्य आ धेह्येनम् । यज्ञहनो वै देवा यज्ञमुषः ( २ ) सन्ति त एषु लोकेष्वासत आददाना विमथ्नाना यो ददाति यो यजते तस्य । ये देवा यज्ञहनः पृथिव्यामध्यासते ये अन्तरिक्षे ये दिवीत्याहेमानेव लोकाꣳस्तीर्त्वा सगृहः सपशुः सुवर्गं लोकमेत्यप वै सोमेनेजानाद्देवताश्च यज्ञश्च क्रामन्त्याग्नेयं पञ्चकपालमुदवसानीयं निर्वपेदग्निः सर्वा देवताः ( ३ ) पाङ्क्तो यज्ञो देवताश्चैव यज्ञं चाव रुन्धे गायत्रो वा अग्निर्गायत्रछन्दास्तं छन्दसा व्यर्धयति यत्पञ्चकपालं करोत्यष्टाकपालः कार्योऽष्टाक्षरा गायत्री गायत्रोऽग्निर्गायत्रछन्दाः स्वेनैवैनं छन्दसा समर्धयति पङ्क्त्यौ याज्यानुवाक्ये भवतः पाङ्क्तो यज्ञस्तेनैव यज्ञान्नैति ( ४ ) ॥

( सवितर्देवा यज्ञमुषः सर्वा देवतास्त्रिचत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ तृतीयाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः । )

---

ये । देवाः । यज्ञहन इति यज्ञ—हनः । यज्ञमुष इति यज्ञ—मुषः । पृथिव्याम् । अधीति । आसते । अग्निः । मा । तेभ्यः । रक्षतु । गच्छेम । सुकृत इति सु—कृतः । वयम् । एति । अगन्म । मित्रावरुणेति मित्रा—वरुणा । वरेण्या । रात्रीणाम् । भागः । युवयोः । यः । अस्ति । नाकम् । गृह्णानाः । सुकृतस्येति सु—कृतस्य । लोके । तृतीये । पृष्ठे । अधीति । रोचने । दिवः । ये । देवाः । यज्ञहन इति यज्ञ—हनः । यज्ञमुष इति यज्ञ—मुषः । अन्तरिक्षे । अधीति । आसते । वायुः । मा । तेभ्यः । रक्षतु । गच्छेम । सुकृत इति सु—कृतः । वयम् । याः । ते । रात्रीः । सवितः ( १ ) । देवयानीरिति देव—यानीः । अन्तरा । द्यावापृथिवी इति द्यावा—पृथिवी । वियन्तीति वि—यन्ति । गृहैः । च । सर्वैः । प्रजयेति प्र—जया । नु । अग्रे । सुवः । रुहाणाः ।

तरत । रजांसि । ये । देवाः । यज्ञहन इति यज्ञ—हनः । यज्ञमुष इति यज्ञ—मुषः । दिवि । अधीति । आसते । सूर्यः । मा । तेभ्यः । रक्षतु । गच्छेम । सुकृत इति सु—कृतः । वयम् । येन । इन्द्राय । समभर इति सम्—अभरः । पयांसि । उत्तमेनेत्युत्—तमेन । हविषा । जातवेद इति जात—वेदः । तेन । अग्ने । त्वम् । उत । वर्धय । इमम् । सजातानामिति स—जातानाम् । श्रैष्ठ्ये । एति । धेहि । एनम् । यज्ञहन इति यज्ञ—हनः । वै । देवाः । यज्ञमुष इति यज्ञ—मुषः ( २ ) । सन्ति । ते । एषु । लोकेषु । आसते । आददाना इत्या—ददानाः । विमथ्नाना इति वि—मथ्नानाः । यः । ददाति । यः । यजते । तस्य । ये । देवाः । यज्ञहन इति यज्ञ—हनः । पृथिव्याम् । अधीति । आसते । ये । अन्तरिक्षे । ये । दिवि । इति । आह । इमान् । एव । लोकान् । तीर्त्वा । सगृह इति स—गृहः । सपशुरिति स—पशुः । सुवर्गमिति सुवः—गम् । लोकम् । एति । अपेति । वै । सोमेन । ईजानात् । देवताः । च । यज्ञः । च । क्रामन्ति । आग्नेयम् । पञ्चकपालमिति पञ्च—कपालम् । उदवसानीयमित्युत्—

अवसानीयम् । निरिति । वपेत् । अग्निः । सर्वाः । देवताः (३) । पाङ्क्तः । यज्ञः । देवताः । च । एव । यज्ञम् । च । अवेति । रुन्धे । गायत्रः । वै । अग्निः । गायत्रछन्दा इति गायत्र—छन्दाः । तम् । छन्दसा । वीति । अर्धयति । यत् । पञ्चकपालमिति पञ्च—कपालम् । करोति । अष्टाकपाल इत्यष्टा—कपालः । कार्यः । अष्टाक्षरेत्यष्टा—अक्षरा । गायत्री । गायत्रः । अग्निः । गायत्रछन्दा इति गायत्र—छन्दाः । स्वेन । एव । एनम् । छन्दसा । समिति । अर्धयति । पङ्क्त्यौ । याज्यानुवाक्ये इति याज्या—अनुवाक्ये । भवतः । पाङ्क्तः । यज्ञः । तेन । एव । यज्ञात् । न । एति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ तृतीयकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः । )

---

विष्णवतिक्रमणे मन्त्रास्तृतीये समुदीरिताः ।

अथ चतुर्थेऽतिमोक्षमन्त्रा उच्यन्ते ॥

कल्पः—" वेदमुपस्थ[1] आधायान्तर्वेद्यासीनोऽतिमोक्षाञ्जपति " इति । अतिमोक्षशब्देन ये देवा यज्ञहन इत्यादयो मन्त्रा विवक्षिताः । सूत्रकारेणान्यत्र ये देवा यज्ञहन इत्यतिमोक्षा इत्युक्तत्वात् ॥

---

१ ख. घ. ङ. च. 'पस्थाया' ।

( अतिमोक्षमन्त्राः )

पाठस्तु—

ये देवा यज्ञहनो यज्ञमुषः पृथिव्या-
मध्यासते । अग्निर्मा तेभ्यो रक्षतु
गच्छेम सुकृतो वयम् । , इति ।

अत्र यज्ञमुष इति पदं पृथक्कृत्य मन्त्रभेदः कर्तव्यः । तत्र प्रथममन्त्रे पृथिव्यामध्यासत इत्याद्यन्तभागोऽनुषञ्जनीयः । द्वितीयमन्त्रे तु ये देवा इत्ययं पूर्वभागोऽनुषञ्जनीयः । देवानां मध्ये म्लेच्छजातयः केचिद्देवा यज्ञभागार्हाः सन्तो द्रष्टुमसहमानाः केचिद्यज्ञं विनाशयन्ति । अपरे तु यज्ञसाधनान्यपहृत्यान्यत्र गच्छन्ति । तत्र यज्ञविघातिनो ये देवाः पृथिव्यां यं कंचिद्देशमधिष्ठायावतिष्ठन्ते तेभ्यो यज्ञविघातिभ्योऽग्निर्मा रक्षतु । वयं सुकृतः सुष्ठु यज्ञं निष्पादितवन्तो गच्छेम यज्ञफलं प्राप्नुयाम । एवं यज्ञमुषां मन्त्रोऽपि व्याख्येयः ।

तृतीयमन्त्रपाठस्तु—

आऽगन्म मित्रावरुणा वरेण्या रात्रीणां भागो
युवयोर्यो अस्ति । नाकं गृह्णानाः सुकृतस्य
लोके तृतीये पृष्ठे अधि रोचने दिवः । इति ।

हे वरेण्या मित्रावरुणा श्रेष्ठौ मित्रावरुणौ यज्ञसंबन्धिनीनां रात्रीणां मध्ये वर्तमानायामस्यां रात्रौ युवयोः संबन्धी वशानूबन्ध्यारूपो यो भागोऽस्ति तेन वयं नाकं स्वर्गसुखं गृह्णाना आगन्म सर्वतः प्राप्ताः स्मः । कुत्रैतत्स्वर्गसुखग्रहणमिति तदुच्यते—सुकृतस्यास्य यज्ञस्य संबन्धिनि तृतीये लोके । कीदृशे, अधिरोचनेऽधिकं भासमाने । भासमानोऽपि लोकः कुत्रेति तदुच्यते—दिवः पृष्ठे स्वर्गस्योपरि । पृथिव्यन्तरिक्षापेक्षया तृतीयत्वम् । पाताललोकोऽपि तादृशो भवतीति व्यवच्छेदाय दिवः पृष्ठ इत्युक्तम् । रौरवादिनरकव्यावृत्तये सुकृतस्येत्युक्तम् । नरको हि दुष्कृतस्य न सुकृतस्य ॥

अथ पूर्ववदनुषङ्गभेदभिन्नौ चतुर्थपञ्चममन्त्रावाह—

ये देवा यज्ञहनो यज्ञमुषोऽन्तरि-
क्षेऽध्यासते । वायुर्मा तेभ्यो रक्षतु
गच्छेम सुकृतो वयम् । , इति ।

पूर्ववद्व्याख्येयम् ॥

षष्ठमन्त्रमाह—

यास्ते रात्रीः सवितर्देवयानीरन्तरा द्यावा-
पृथिवी वियन्ति । गृहैश्च सर्वैः प्रजया
न्वग्रे सुवो रुहाणास्तरता रजाꣳसि ।, इति ।

हे सवितर्द्यावापृथिवी अन्तरा द्यावापृथिव्योर्मध्ये ते तव संबन्धिन्यो या रात्रीर्यज्ञानुष्ठानयोग्या रात्रयो वियन्ति विशेषेण गच्छन्ति प्रवर्तन्ते । यद्यप्येकैव रात्रिः सुत्याकर्मार्हा तथाऽपि दीक्षोपसत्सहिता बहवो रात्रयो भवन्ति । तासां च सवितृप्रेरितत्वात्तत्संबन्धः । कीदृश्यो रात्रयः । देवयानीर्देवान्यान्तीति देवयान्यो दैविककर्मयुक्ता इत्यर्थः । तासु रात्रिषु कर्मानुतिष्ठन्तः सर्वैर्गृहैश्च प्रजयाऽनु गृहवर्तिभिर्भृत्यैः पुत्रादिना च सार्धं सुवो रुहाणाः स्वर्गं प्राप्नुवन्तो यजमाना यूयं रजांसि रञ्जनीयानि सुखानि तरत प्राप्नुत ॥

पूर्ववदनुषङ्गभेदभिन्नौ सप्तमाष्टममन्त्रावाह—

ये देवा यज्ञहनो यज्ञमुषो दिव्य-
ध्यासते । सूर्यो मा तेभ्यो
रक्षतु गच्छेम सुकृतो वयम् ।, इति ।

पूर्ववद्व्याख्येयम् ।

अथ नवमं मन्त्रमाह—

येनेन्द्राय समभरः पयाꣳस्युत्तमेन हविषा
जातवेदः । तेनाग्ने त्वमुत वर्धयेमꣳ
सजातानाꣳ श्रैष्ठ्य आ धेह्येनम् ।, इति ।

हे जातवेदो येनोत्तमेन हविषोत्तमहविःस्वरूपेण पयांसि क्षीररसस्वादून्सोमरसानिन्द्राय समभरः संभृतवानसि तेन हविषा हेऽग्ने त्वमिमं यजमानं वर्धय । उतापि चैनं यजमानं सजातानां श्रैष्ठ्ये स्वाम्य आधेहि ।

अथैतान्प्रशंसति—

यज्ञहनो वै देवा यज्ञमुषः सन्ति त एषु

---

१ क. घ. ङ. च. 'निन्द्रियाय ।

( अतिमोक्षमन्त्राः )

लोकेष्वासत आददाना विमथ्नाना
यो ददाति यो यजते तस्य।, इति।

कपटरूपधारिणः केचन देवा यज्ञभागरहिता यज्ञशालादाहाद्युपद्रवेण यज्ञघातिनो भवन्ति। अपरे च ग्रहचमससोमरसापहारेण यज्ञमुषो भवन्ति। एवमुभयविधा ये सन्ति ते त्रिष्वप्येतेषु लोकेष्ववतिष्ठन्ते। किं कुर्वन्तः, यो यजमानो दक्षिणां ददाति तदीयं दक्षिणाद्रव्यं गवादिकमपहरन्ती(न्त इ) त्यर्थः। यो यजमानो यजते तदीयं ग्रहचमसादिकं विमथ्नाना भङ्गपरित्यागादितो विलोडयन्तः॥

तस्योपद्रवस्य सर्वस्यैतैर्मन्त्रैः परिहारं दर्शयति—

ये देवा यज्ञहनः पृथिव्यामध्यासते ये
अन्तरिक्षे ये दिवीत्याहेमानेव लोकाꣳ-
स्तीर्त्वा सगृहः सपशुः सुवर्गं लोकमेति, इति।

अत्र यज्ञमुष इत्यत्र पृथङ्मन्त्रत्वं दर्शयितुं तत्पदं परित्यज्यानुषङ्गेण सह यज्ञहन इत्येतावदेवोदाहृतम्। एतैर्मन्त्रैरुपद्रवसहितानिमाँल्लोकानुत्तीर्य सगृहः कलत्रपुत्रादिसहितः सपशुर्गवाश्वादिपशुसहितः स्वर्गं प्राप्नोति। त एते मन्त्रा उरुꣳ हि राजेत्येतस्मादनुवाकात्पूर्वं द्रष्टव्याः।

अथोदवसानीयं विधत्ते—

अप वै सोमेनेजानाद्देवताश्च यज्ञश्च
क्रामन्त्याग्नेयं पञ्चकपालमुदवसानीयं
निर्वपेदग्निः सर्वा देवताः पाङ्क्तो यज्ञो
देवताश्चैव यज्ञं चाव रुन्धे, इति।

यः सोमेनेष्टवानभवत्, एतस्माद्देवताश्च यज्ञश्चापक्रामन्ति। अनेन यजमानेन प्रयोजनाभावं मन्वाना एनं परित्यजन्ति। अतस्तदपक्रमणं वारयितुमग्निदेवतया युक्तं पञ्चकपालं तादृशपुरोडाशेन साध्यमुदवसानीयाख्यं कर्म कुर्यात्। अयमग्निः सर्वदेवतात्मको यज्ञश्च पाङ्क्तः पञ्चसंख्योपेतः। "ते देवा बिभ्यतोऽग्निं प्राविशन्" "धानाः करम्भः परिवापः पुरोडाशः पयस्या तेन पङ्क्तिराप्यते" इत्यादिश्रुतिद्वयात्। अत आग्नेयत्वेन सर्वा देवता अवरुन्धे पञ्चकपालेन यज्ञमप्यवरुन्धे।

अथ पञ्चकपालं दूषयित्वाऽष्टाकपालं विधत्ते—

गायत्रो वा अग्निर्गायत्रछन्दास्तं छन्दसा व्यर्धयति यत्पञ्चकपालं करोत्यष्टाकपालः कार्योऽष्टाक्षरा गायत्री गायत्रोऽग्निर्गायत्रछन्दाः स्वेनैवैनं छन्दसा समर्धयति, इति ।

अग्नेर्गायत्र्याश्च प्रजापतिमुखजन्यत्वेन गायत्रोऽग्निः । पञ्चकपाले सति तमग्निं स्वकीयेन च्छन्दसा वियोजयति । अष्टाकपाले तु सति गायत्र्या अष्टाक्षरत्वादग्निं स्वकीयेन च्छन्दसा समृद्धं करोति ।

अत्राग्ने तमद्याश्वमित्येते अक्षरपङ्क्त्यौ विधत्ते—

पङ्क्त्यौ याज्यानुवाक्ये भवतः पाङ्क्तो यज्ञस्तेनैव यज्ञान्नैति, इति ॥

अत्र तु गायत्रत्वसिद्धयेऽष्टाकपालः स्वीकृतस्तथाऽपि पाङ्क्तमन्त्रपाठेन धानादिद्वारा पाङ्क्तयज्ञादप्ययं यजमानो नापगच्छति ॥

अत्र विनियोगसंग्रहः—

ये देवा इत्यतीमोक्षान्मन्त्रानेताञ्जपेन्नव ।
यज्ञहन्यज्ञमुट्चेति भेदान्मन्त्रभिदेष्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ तृतीयाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः । )

---

सूर्यो मा देवो देवेभ्यः पातु वायुरन्तरिक्षाद्यजमानोऽग्निर्मा पातु चक्षुषः । सक्ष शूष सवितर्विश्वचर्षण एतेभिः सोम नामभिर्विधेम ते तेभिः सोम नामभिर्विधेम ते । अहं परस्तादहमवस्तादहं ज्योतिषा वि तमो ववार ।

(आदित्यग्रहमन्त्रोक्तिः)

यदन्तरिक्षं तदु मे पिताऽभूदहꣳ सूर्यमुभयतो ददर्शाहं भूयासमुत्तमः समानानाम् (१) आ समुद्रादाऽन्तरिक्षात्प्रजापतिरुदधिं च्यावयातीन्द्रः प्र स्नौतु मरुतो वर्षयन्तून्नम्भय पृथिवीं भिन्धीदं दिव्यं नभः। उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम्। पशवो वा एते यदादित्य एष रुद्रो यदग्निरोषधीः प्रास्याग्नावादित्यं जुहोति रुद्रादेव पशूनन्तर्दधात्यथो ओषधीष्वेव पशून् (२) प्रति ष्ठापयति कविर्यज्ञस्य वि तनोति पन्थां नाकस्य पृष्ठे अधि रोचने दिवः। येन हव्यं वहसि यासि दूत इतः प्रचेता अमुतः सनीयान्। यास्ते विश्वाः समिधः सन्त्यग्ने याः पृथिव्यां बर्हिषि सूर्ये याः। तास्ते गच्छन्त्वाहुतिं घृतस्य देवायते यजमानाय शर्म। आशासानः सुवीर्यꣳ रायस्पोषꣳ स्वश्वियम्। बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय तिष्ठ (३)॥

(समानानामोषधीष्वेव पशून्मह्यं यजमानायैकं च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

( अथ तृतीयाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः । )

सूर्यः । मा । देवः । देवेभ्यः । पातु । वायुः । अन्तरिक्षात् । यजमानः । अग्निः । मा । पातु । चक्षुषः । सक्ष । शूष । सवितः । विश्वचर्षण इति विश्व—चर्षणे । एतेभिः । सोम । नामभिरिति नाम-भिः । विधेम । ते । तेभिः । सोम । नामभिरिति नाम—भिः । विधेम । ते । अहम् । परस्तात् । अहम् । अवस्तात् । अहम् । ज्योतिषा । वीति । तमः । ववार । यत् । अन्तरिक्षम् । तत् । उ । मे । पिता । अभूत् । अहम् । सूर्यम् । उभयतः । ददर्श । अहम् । भूयासम् । उत्तम इत्युत्—तमः । समाना-नाम् ( १ ) । एति । समुद्रात् । एति । अन्तरिक्षात् । प्रजापतिरिति प्रजा—पतिः । उदधिमित्युद—धिम् । च्यावयाति । इन्द्रः । प्रेति । स्नौतु । मरुतः । वर्षयन्तु । उदिति । नम्भय । पृथिवीम् । भिन्धि । इदम् । दिव्यम् । नभः । उद्नः । दिव्यस्य । नः । देहि । ईशानः । वीति । सृज । दृतिम् । पशवः । वै । एते । यत् । आदित्यः । एषः । रुद्रः । यत् । अग्निः । ओषधीः । प्रास्येति प्र—अस्य । अग्नौ । आदित्यम् । जुहोति । रुद्रात् । एव । पशून् ।

(आदित्यग्रहमन्त्रोक्तिः)

अन्तः। दधाति। अथो इति। ओषधीषु। एव। पशून् (२)। प्रतीति। स्थापयति। कविः। यज्ञस्य। वीति। तनोति। पन्थाम्। नाकस्य। पृष्ठे। अधीति। रोचने। दिवः। येन। हव्यम्। वहसि। यासि। दूतः। इतः। प्रचेता इति प्र-चेताः। अमुतः। सनीयान्। याः। ते। विश्वाः। समिध इति सम्-इधः। सन्ति। अग्ने। याः। पृथिव्याम्। बर्हिषि। सूर्ये। याः। ताः। ते। गच्छन्तु। आहुतिमित्या-हुतिम्। घृतस्य। देवायत इति देव-यते। यजमानाय। शर्म। आशासान इत्या-शासानः। सुवीर्यमिति सु-वीर्यम्। रायः। पोषम्। स्वश्वियमिति सु-अश्वियम्। बृहस्पतिना। राया। स्वगाकृत इति स्वगा-कृतः। मह्यम्। यजमानाय। तिष्ठ। (३)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

(अथ तृतीयकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः।)

---

अतीमोक्षजपे मन्त्राश्चतुर्थे समुदीरिताः।

अथ पञ्चमेऽनुवाक आदित्यग्रहमन्त्रा उच्यन्ते॥

कल्पः—"सूर्यो मा देव इति दर्भैर्हस्तेनापिधायोत्तिष्ठति" इति।

---

१ क. दर्भे हस्ते।

पाठस्तु—

सूर्यो मा देवो देवेभ्यः पातु वायुरन्तरिक्षाद्यज-
मानोऽग्निर्मा पातु चक्षुषः । सक्ष शूष सवि-
तर्विश्वचर्षण एतेभिः सोम नामभिर्विधेम ते
तेभिः सोम नामभिर्विधेम ते ।, इति ।

अयमादित्यग्रहः सूर्यवाय्वग्न्यात्मकोऽतः सूर्यरूपोऽयं देवो यज्ञविघातिभ्यो मां पातु । तथा वायुरूपोऽयं विघ्नकारिदेवयुक्तादन्तरिक्षान्मां पातु । तथा यजमानो यागहेतुरयमग्निश्चक्षुषो विरोधिदेवदृष्टेः सकाशान्मां पातु । हे सोम सक्षादीनि चत्वारि यानि तव नामानि एतैर्नामभिस्ते तव विधेम परिचर्यां करवाम । यानि च पूर्वोक्तानि सूर्यवाय्वग्निनामानि तेभिस्तैश्च नामभिस्तव परिचर्यां करवाम । हे सक्ष पात्रसङ्ग, [हे]शूप लवन, हे सवितः प्रेरक हे विश्वचर्षणे सर्वमनुष्यानुग्राहक । एतैः संबोधनरूपैर्नामभिर्विधेमेत्यन्वयः ॥

कल्पः—" अहं परस्तादित्यादित्यं यजमानोऽन्वारभत आहोमात् " इति ।

पाठस्तु—

अहं परस्तादहमवस्तादहं ज्योतिषा वि तमो
ववार । यदन्तरिक्षं तदु मे पिताऽभूदहꣳ सूर्य
मुभयतो ददर्शाहं भूयासमुत्तमः समानानाम्, इति ।

अहं यजमानः परस्तात्परभागे ग्रहमन्वारभ इति शेषः । अहमवस्तादवरभागेऽपि ग्रहमन्वारभे । अहमस्याऽऽदित्यग्रहस्य ज्योतिषा विशेषेण तमो ववार वारितवानस्मि । उपरिभागाधोभागयोर्मध्यवर्ति यदन्तरिक्षं तदु तदपि मे पिता पितृवत्पालकमभूत् । अहं सूर्यमादित्यग्रहमुभयत ऊर्ध्वाधोभागयो क्षिणोत्तरभागयोर्वा ददर्श दृष्टवानस्मि । अतोऽहं समानानां यजमानानां म उत्तमो भूयासम् ॥

कल्पः—" आसमुद्रादिति दर्भैराच्यावयति " इति ।

पाठस्तु—

आ समुद्रादाऽन्तरिक्षात्प्रजापतिरुदधिं च्याव-
यातीन्द्रः प्र स्नौतु मरुतो वर्षयन्तु, इति ।

प्रजापतिरिमं ग्रहं चतुर्दिक्ष्वा समुद्रात्समुद्रपर्यन्तं दर्भैराच्यावयतीति । वोर्ध्वभागेऽप्याऽन्तरिक्षादन्तरिक्षपर्यन्तमुदधिं समुद्रसमानमादित्यग्रहं च्य

( आदित्यग्रहमन्त्रोक्तिः )

यति । इन्द्रो गवामूथ इव ग्रहं प्रस्नौतु प्रस्नुतं करोतु । मरुतो वर्षयन्तु मेघा इव संततधाराः कुर्वन्तु ॥

कल्पः—" उन्नम्भय पृथिवीमिति वृष्टिकामस्य जुहुयात् " इति ।

पाठस्तु—

उन्नम्भय पृथिवीं भिन्धीदं दिव्यं नभः । उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम्।, इति ।

हे आदित्य पृथिवीमुन्नम्भयोत्कर्षेण क्लिन्नां कुरु । इदं दिव्यं नभो भिन्धि द्युलोकस्थाकाशवर्तिमेघमिव ग्रहं भिन्धि भिन्नं कुरु । दिव्यस्य दिवि भवस्योद्न उदकस्य समृद्धिं नोऽस्मभ्यं देहि । ईशानः समर्थस्त्वं दृतिं विसृज जलविधारकं दृतिसमानं मेघं विमुञ्च ॥

अथ विधत्ते—

पशवो वा एते यदादित्य एष रुद्रो यदग्निरोषधीः प्रास्याग्नावादित्यं जुहोति रुद्रादेव पशूनन्तर्दधात्यथो ओषधीष्वेव पशून्प्रति ष्ठापयति , इति ।

आदित्यग्रह इति यदेते पशवो वै तस्य पशुप्राप्तिहेतुत्वात् । अग्निरिति यदेष क्रूरो देवस्तस्मात्क्रौर्यपरिहारायाग्नावोषधीः प्रक्षिप्य पश्चादादित्यग्रहं जुहोति । तथा सति रुद्ररूपाग्निसकाशादादित्यग्रहरूपान्पशूनन्तर्हितानेव करोति । किं चौषधीष्वेवाऽऽदित्यग्रहरूपान्पशून्प्रतिष्ठितान्करोति ॥

कल्पः—" कविर्यज्ञस्य वि तनोति पन्थामिति ग्रहं हुत्वा " इति ।

पाठस्तु—

कविर्यज्ञस्य वि तनोति पन्थां नाकस्य पृष्ठे अधि रोचने दिवः । येन हव्यं वहसि यासि दूत इतः प्रचेता अमुतः सनीयान् । , इति ।

यज्ञस्य कविर्विद्वानयमादित्यग्रहो नाकस्य पन्थां वितनोति स्वर्गस्य मार्गं वितनोति विस्तृतं करोति । कुत्रेति तदुच्यते—अधिरोचन आधिक्येन भासमाने दिवः पृष्ठे द्युलोकस्योपरि । हेऽग्ने येन पथा हव्यं वहसि देवानां दूतस्त्वमितो निर्गत्य येन पथा यासि तादृशं पन्थानं वितनोतीति पूर्वत्रान्वयः ।

कीदृशो दूतः, प्रकर्षेण चेतते कर्मानुष्ठातारं जानातीति प्रचेताः । अमुतोऽमुष्मिन्स्वर्गे सनीयानतिशयेन फलस्य दाता ॥

कल्पः—" यास्ते विश्वाः समिधः सन्त्यग्न इति दर्भानाहवनीये प्रास्य " इति ।

पाठस्तु—

यास्ते विश्वाः समिधः सन्त्यग्ने याः पृथिव्यां बर्हिषि सूर्ये याः । तास्ते गच्छन्त्वाहुतिं घृतस्य देवायते यजमानाय शर्म ।, इति ।

हेऽग्ने त्वदीयाः समिधः सम्यग्दीप्यमाना ज्वाला याः सन्ति ता एव विशेषाकारेणोच्यन्ते—पृथिव्यां भूलोके बर्हिषि यज्ञदेशे या दीप्तयः सन्ति सूर्ये च या दीप्तयः सन्ति ते त्वदीयास्ता दीप्तयो घृतस्याऽऽहुतिर्गच्छन्तु प्राप्नुवन्तु । देवानात्मन इच्छतीति देवायंस्तस्मै देवायते यजमानाय शर्म सुखं प्रयच्छन्तु । आदित्यग्रहविषयास्त एते मन्त्राः कदा चन स्तरीरसीत्यनुवाकादूर्ध्वं द्रष्टव्याः ॥

अथ कल्पे—" यूपं यजमान उपतिष्ठते नमः स्वरुभ्यः " इत्युपक्रम्यान्ते पठितम्—" आशासानः सुवीर्यमिति चोपस्थाय " इति ।

पाठस्तु—

आशासानः सुवीर्यꣳ रायस्पोषꣳ स्वश्वियम् । बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय तिष्ठ ।, इति ।

हे यूप त्वं यजमानाय मह्यं रायस्पोषमाशासानस्तिष्ठ । कीदृशं पोषं, सुवीर्यं शोभनेन भोगसामर्थ्येनोपेतं स्वश्वियं शोभनैरश्वैरुपेतम् । कीदृशो यूपः, बृहस्पतिना देवेन रायाद्यनेकधननिमित्तं स्वगाकृतो यजमानस्य स्वगतो यथा भवति तथा कृतः । सोऽयं मन्त्रः पशुप्रकरणगतात्समुद्रं गच्छेत्यनुवाकादूर्ध्वं द्रष्टव्यः ॥

अत्र विनियोगसंग्रहः ।

सूर्यो तृतीयसवन आदित्यग्रहहस्तकः ।
उत्तिष्ठेदहमित्यस्मात्स्वाम्यन्वारभते ग्रहम् ॥
आ समु च्यावयेद्दर्भैरुन्नं वृष्ट्यर्थिहोमकः ।

( पत्नीविषया मन्त्राः )

कविर्हरेद्ध्रहं यास्ते वह्नौ प्रास्यति दर्भकान् ॥
आशा यूपोपस्थितिः स्यात्सप्त मन्त्रा इहेरिताः।

श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके
पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ तृतीयाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

---

सं त्वा नह्यामि पयसा घृतेन सं त्वा नह्याम्यप ओषधीभिः। सं त्वा नह्यामि प्रजयाऽहमद्य सा दीक्षिता संनवो वाजमस्मे। प्रैतु ब्रह्मणस्पत्नी वेदिं वर्णेन सीदतु। अथाहमनुकामिनी स्वे लोके विशा इह। सुप्रजसस्त्वा वयः सुपत्नीरुप सेदिम। अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम्। इमं वि ष्यामि वरुणस्य पाशम् ( १ ) यमबध्नीत सविता सुकेतः। धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि। प्रेह्युदेह्यृतस्य वामीरन्वग्निस्तेऽग्रं नयत्वदितिर्मध्यं ददताः रुद्रावसृष्टाऽसि युवा नाम मा मा हिःसीर्वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः पन्नेजनीर्गृह्णामि यज्ञाय वः पन्नेजनीः सादयामि विश्वस्य ते विश्वावतो

( पत्नीविषया मन्त्राः

वृष्णियावतः ( २ ) तवाग्ने वामीरनु संदृशि विश्वा रेतांꣳसि धिषीयागन्देवान्यज्ञो नि देवीर्देवेभ्यो यज्ञमशिषन्नस्मिन्त्सुन्वति यजमान आशिषः स्वाहाकृताः समुद्रेष्ठा गन्धर्वमा तिष्ठतानु । वातस्य पत्मन्निड ईडिताः ( ३ ) ।

( पाशं वृष्णियावतस्त्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ तृतीयाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

---

समिति । त्वा । नह्यामि । पयसा । घृतेन । समिति । त्वा । नह्यामि । अपः । ओषधीभिरित्योषधि—भिः । समिति । त्वा । नह्यामि । प्रजयेति प्र—जया । अहम् । अद्य । सा । दीक्षिता । सनवः । वाजम् । अस्मे इति । प्रेति । एतु । ब्रह्मणः । पत्नी । वेदिम् । वर्णेन । सीदतु । अथ । अहम् । अनुकामिनीत्यनु—कामिनी । स्वे । लोके । विशे । इह । सुप्रजस इति सु—प्रजसः । त्वा । वयम् । सुपत्नीरि सु—पत्नीः । उपेति । सेदिम । अग्ने । सपत्नदम्भनमिति सपत्न—दम्भनम् । अदब्धासः । अदाभ्यम् । इमम् । वीति । स्यामि । वरुणस्य । पाशं ( १ ) । यम् । अबध्नीत । सविता । सुकेत इ

सु—केतः। धातुः। च। योनौ। सुकृतस्येति सु—कृतस्य। लोके। स्योनम्। मे। सह। पत्या। करोमि। प्रेति। इहि। उदेहीत्युत्—एहि। ऋतस्य। वामीः। अन्विति। अग्निः। ते। अग्रम्। नयतु। अदितिः। मध्यम्। ददताम्। रुद्रावसृष्टेति रुद्र—अवसृष्टा। असि। युवा। नाम। मा। मा। हिꣳसीः। वसुभ्य इति वसु—भ्यः। रुद्रेभ्यः। आदित्येभ्यः। विश्वेभ्यः। वः। देवेभ्यः। पन्नेजनीरिति पत्—नेजनीः। गृह्णामि। यज्ञाय। वः। पन्नेजनीरिति पत्—नेजनीः। सादयामि। विश्वस्य। ते। विश्वावत इति विश्व—वतः। वृष्णियावत इति वृष्णिय—वतः (२)। तव। अग्ने। वामीः। अन्विति। संदृशीति सं—दृशि। विश्वा। रेताꣳसि। धिषीय। अगन्। देवान्। यज्ञः। नीति। देवीः। देवेभ्यः। यज्ञम्। अशिषन्। अस्मिन्। सुन्वति। यजमाने। आशिष इत्या—शिषः। स्वाहाकृता इति स्वाहा—कृताः। समुद्रेष्ठा इति समुद्रे—स्थाः। गन्धर्वम्। एति। तिष्ठत। अनु। वातस्य। पत्मन्। इडः। ईडिताः (३)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः॥ ६॥

( अथ तृतीयकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

---

आदित्यग्रहमन्त्रा ये ते पञ्चम उदीरिताः ॥

अथ षष्ठेऽनुवाके पत्नीविषया मन्त्रा उच्यन्ते ।

कल्पः—" अत्र दर्शपूर्णमासवत्पत्नीᳪ संनह्यति सं त्वा नह्यामीति विकारः" इति ॥

पाठस्तु—

सं त्वा नह्यामि पयसा घृतेन सं त्वा नह्याम्यप ओषधीभिः । सं त्वा नह्यामि प्रजयाऽहमद्य सा दीक्षिता सनवो वाजमस्मे ।, इति ।

हे पत्नि त्वां पयसा घृतेन च निमित्तभूतेन संनह्यामि तदुभयसिद्ध्यर्थं सम्यग्योक्त्रेण बध्नामि । तथौषधीभिः सहिता अप उद्दिश्य तदुभयसिद्ध्यर्थं त्वां संनह्यामि । प्रजया निमित्तभूतयाऽहमध्वर्युरद्यास्मिन्कर्मणि त्वां संनह्यामि । अस्मे अस्मासु वाजमन्नं सनवः सनितुं दातुं सा पत्नी दीक्षिता भवतु ॥

कल्पः—" प्रैतु ब्रह्मणस्पत्नीति प्रतिप्रस्थाता पत्नीमुदानयति " इति ॥

पाठस्तु—

प्रैतु ब्रह्मणस्पत्नी वेदिं वर्णेन सीदतु ।, इति ।

ब्रह्मणो ब्राह्मणस्य यजमानस्य पत्नी प्रैतु पत्नीशालाया निर्गत्य प्रकर्षेण गच्छतु गत्वा प्राप्नोतु ॥

कल्पः—" अथाहमनुकामिनीति पत्नी शालामुखीयमुपोपविश्य " इति ॥

पाठस्तु—

अथाहमनुकामिनी स्वे लोके विशा इह ।, इति ।

अथाहमिह स्वे लोके स्थाने विशा उपविशामि । कीदृशी, अनुकामिनी यजमानस्याऽऽनुकूल्यं कामयमाना ।

कल्पः—" सुप्रजसस्त्वा वयमिति जपति " इति ॥

पाठस्तु—

सुप्रजसस्त्वा वयᳪ सुपत्नीरुप सेदिम । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् ।, इति ।

हेऽग्ने सुप्रजसः शोभनापत्याः सुपत्नीर्धर्मपत्न्यो वयमदब्धासः केनाप्यहिं

( पत्नीविषया मन्त्राः )

रस्कृताः सत्यस्त्वामुपांशदिम तत्र समीप उपविष्टाः स्मः। कीदृशं त्वां, सपत्नदम्भनं वैरिनाशकम्। अनाभ्रं केनाप्यतिरस्कार्यम्।

कल्पः—"विचृत इमं वि ष्यामीति पत्नी योक्त्रम्" इति॥

पाठस्तु—

इमं वि ष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः। धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि, इति।

सुकेतः शोभनज्ञानयुक्तः सविता प्रेरकोऽन्तर्यामी यं योक्त्ररूपं वरुणस्य पाशं पूर्वमबध्नीत तमिमं विष्यामि विमुञ्चामि। ततः सुकृतस्य फलभूत उत्तमे लोके धातुश्च परमेश्वरस्य योनौ स्थाने पत्या सह मे स्योनं सुखं करोमि।

कल्पः—"प्रेह्युदेहीति नेष्टा पत्नीमुदानयति" इति॥

पाठस्तु—

प्रेह्युदेह्यृतस्य वामीरन्वग्निस्तेऽग्रं नयत्वदितिर्मध्यं ददताꣳ रुद्रावसृष्टाऽसि युवा नाम मा मा हिꣳसीः, इति।

हे पत्नि प्रेहि शालामुखीयस्थानान्निर्गत्य पन्नेजनीरप आनेतुं प्रकर्षेण गच्छोदेहि विलम्बमकृत्वोत्थाय गच्छ। ऋतस्य वामीर्यज्ञस्य प्रेरकोऽयमग्निस्ते गमनमनुमन्यमानोऽग्रं नयतु पुरतः प्रेरयतु। अदितिर्भूमिश्च मध्यं ददताम्, उभयोः पार्श्वयोर्मध्येऽवस्थितं मार्गं प्रयच्छतु। त्वं च रुद्रावसृष्टाऽसि क्रूरेणोपद्रवकारिणा देवेन विमुक्ताऽसि। अतो युवा नामासि युवतिर्वा बाधकेभ्यः पृथग्भूता वाऽसि। इत्थमाकारयन्तं मां नेष्टारं मा हिंसीर्मा बाधस्व॥

कल्पः—"पन्नेजनीर्गृह्णाति प्रत्यङ्ङुतिष्ठन्ती वसुभ्यो रुद्रेभ्य आदित्येभ्य इति" इति॥

पाठस्तु—

वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः पन्नेजनीर्गृह्णामि यज्ञाय वः पन्नेजनीः, इति।

---

१ क. घ. ङ. च. करोतु।

हे आपो वो युष्मान्पन्नेजनीर्गृह्णामि । किमर्थं, वस्वादिदेवप्रीत्यर्थम् । किंच, यज्ञार्थमपि पन्नेजनीर्वो गृह्णामि ॥

## सादयामि

कल्पः—" पत्नी पन्नेजनीः सादयति प्रत्यङ्क्तिष्ठन्ती वसुभ्यो रुद्रेभ्य आदित्येभ्य इति " इति ॥

अत्र सादयामीत्येतावानाम्नातो मन्त्रः । तस्य च शेषत्वेन वसुभ्य इत्यादिकं गृह्णामीतिपदव्यतिरिक्तं सर्वमनुषज्य पूर्ववद्व्याख्येयम् ।

कल्पः—" विश्वस्य ते विश्वावत इति हिंकारमनूद्गात्रा पत्नीं संख्यापयति " इति ॥

हिंकारमुच्चार्यानन्तरमुद्गाता यथा पत्नीं पश्यति तथाऽध्वर्युरिमं मन्त्रमुच्चारयन्प्रदर्शयेदित्यर्थः ॥

पाठस्तु—

विश्वस्य ते विश्वावतो वृष्णियावतस्तवाग्ने
वामीरनु संदृशि विश्वा रेताꣳसि धिषीय, इति ।

हेऽग्ने विश्वस्य ते संदृशि विश्वात्मकस्य तव कटाक्षवीक्षणे सति तथा विश्वमस्यास्तीति विश्वावान् । वृष्णियं बलमस्यास्तीति वृष्णियावान् , तादृशस्य तव वीक्षणे सति वामीर्वननीयस्यानुष्ठानस्य प्रवर्तकोऽहं विश्वा रेतांसि[1] बहुपुत्रकारणानि सर्वाण्यपि वीर्याणि धिषीयानुक्रमेण पत्न्यां स्थापयेय ॥

कल्पः—" अगन्देवानिति च पत्न्येप उपप्रवर्तयति " इति ॥

पाठस्तु—

अगन्देवान्यज्ञो नि देवीर्देवेभ्यो यज्ञम-
शिषन्नस्मिन्त्सुन्वति यजमान आशिषः
स्वाहाकृताः समुद्रेष्ठा गन्धर्वमा तिष्ठता-
नु । वातस्य पत्मन्निड ईडिताः ।, इति ॥

अयं यज्ञो देवानगन्प्राप्नोत् । देवीर्द्योतमाना आपो देवेभ्योऽस्मदीयं यज्ञं नितरामशिषन्विस्पष्टमुक्तवत्यः । अस्मिन्यजमाने सुन्वति सोमाभिषवं कुर्वाणे स्वाहाकृताः स्वाहाकारेण संपादिताः समुद्रसमाने स्वर्गेऽवस्थिता आशिष

१ क. 'येयम् । क' । २ ख. 'त्यत्र उ' ।

( दर्शपूर्णमासाङ्गभूतानां स्रुचां वृक्षविशेषाणां विधानम् )

फलविशेषा ये संपद्यन्ते ते सर्वेऽप्यनुक्रमेण गन्धर्वे पत्न्या मम गन्धर्ववत्प्रियं यजमानमातिष्ठत प्राप्नुवन्तु। वातस्य यज्ञप्रवर्तकस्य वायोः। "वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते" इत्यन्यत्राऽऽम्नातम्। तस्य वायोः पत्मन्पतने प्रेरणे सतीडः फलसाधनभूताः स्तोत्रविशेषा ईडिता ऋत्विग्भिः प्रयुक्ताः। तस्मात्तत्फलं सर्वं यजमानः प्राप्नोत्विति तात्पर्यार्थः। अत्र सं त्वा नह्यामीत्ययं योक्त्रबन्धनमन्त्रो दीक्षाप्रकरण इन्द्रस्य योनिरसीत्येतस्मान्मन्त्रात्पूर्वं द्रष्टव्यः। तत्रैवाथाहं सुप्रजस इत्येतौ द्रष्टव्यौ। इमं वि ष्यामीति मन्त्रोऽवभृथानुवाके देवीराप एष व इत्येतस्मात्पूर्वं द्रष्टव्यः। प्रेह्युदेहीति मन्त्रो ह्रदे त्वेत्यनुवाके देवीरापो अपां नपादित्येतस्मात्पूर्वं द्रष्टव्यः। वसुभ्य इति ग्रहणसादनमन्त्रौ समुद्रस्य वोऽक्षित्या उन्नय इत्येतस्मादूर्ध्वं द्रष्टव्यौ ॥

अत्र विनियोगसंग्रहः—

सं त्वा पत्न्यां योक्त्रबन्धः प्रैतु शालामुखे नयेत्।
अथाहमुपविश्यैषा सुप्रजेति जपेदथ ॥
इमं काले योक्त्रमोकः प्रेहि पत्नीमुदानयेत्।
वसु पन्नेजनीः पत्नी गृहीत्वा तेन सादयेत् ॥
विश्वस्य पत्नीमुद्गात्रा संख्यापयति सा त्वगन्।
अपः प्रवर्तयन्नु(त्यू)रावत्र मन्त्रा दश स्मृताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ तृतीयाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः। )

---

वषट्कारो वै गायत्रियै शिरोऽच्छिनत्तस्यै रसः पराऽपतत्स पृथिवीं प्राविशत्स खादिरोऽभवद्यस्य खादिरः स्रुवो भवति छन्दसामेव रसेनाव द्यति सरसा अस्याऽऽहुतयो भवन्ति तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याऽ-

( दर्शपूर्णमासाङ्गभूतानां स्रुचां वृक्षविशेषाणां विधानम् )

हरत्तस्यं पर्णमच्छिद्यत तत्पर्णोऽभवत्तत्पर्णस्यं पर्णत्वं यस्यं पर्णमयी जुहूः ( १ ) भवंति सौम्या अस्याऽऽहुतयो भवन्ति जुषन्तेऽस्य देवा आहुतीर्देवा वै ब्रह्मन्नवदन्त तत्पर्ण उपांशृणोत्सुश्रवा वै नाम यस्यं पर्णमयी जुहूर्भवंति न पापꣳ श्लोकꣳ शृणोति ब्रह्म वै पर्णो विण्मरुतोऽन्नं विण्मारुतोऽश्वत्थो यस्यं पर्णमयी जुहूर्भवत्याश्वंत्थ्युपभृद्ब्रह्मणैवान्नमवं रुन्धेऽथो ब्रह्मं ( २ ) एव विश्यध्यूंहति राष्ट्रं वै पर्णो विडश्वत्थो यत्पंर्णमयी जुहूर्भवत्याश्वंत्थ्युपभृद्राष्ट्रमेव विश्यध्यूंहति प्रजापंतिर्वा अंजुहोत्सा यत्राऽऽहुंतिः प्रत्यतिंष्ठत्ततो विकंङ्कत उदंतिष्ठत्ततः प्रजा अंसृजत यस्य वैकंङ्कती ध्रुवा भवंति प्रत्येवास्याऽऽहुंतयस्तिष्ठन्त्यथो प्रैव जांयत एतद्वै स्रुचाꣳ रूपं यस्यैवꣳ रूपाः स्रुचो भवंन्ति सर्वांण्येवैनꣳ रूपाणिं पशूनामुपंतिष्ठन्ते नास्यापंरूपमात्मञ्जांयते ( ३ ) ॥

( जुहूरथो ब्रह्म स्रुचाꣳ सप्तदंश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( दर्शपूर्णमासाङ्गभूतानां स्रुचां वृक्षविशेषाणां विधानम् )

अथ तृतीयाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः ।

---

वषट्कार इति वषट्—कारः । वै । गायत्रियै । शिरः । अच्छिनत् । तस्यै । रसः । परेति । अपतत् । सः । पृथिवीम् । प्रेति । अविशत् । सः । खदिरः । अभवत् । यस्य । खादिरः । स्रुवः । भवति । छन्दसाम् । एव । रसेन । अवेति । द्यति । सरसा इति स—रसाः । अस्य । आहुतय इत्या—हुतयः । भवन्ति । तृतीयस्याम् । इतः । दिवि । सोमः । आसीत् । तम् । गायत्री । एति । अहरत् । तस्य । पर्णम् । अच्छिद्यत । तत् । पर्णः । अभवत् । तत् । पर्णस्य । पर्णत्वमिति पर्ण—त्वम् । यस्य । पर्णमयीति पर्ण—मयी । जुहूः ( १ ) । भवति । सौम्याः । अस्य । आहुतय इत्या—हुतयः । भवन्ति । जुषन्ते । अस्य । देवाः । आहुतीरित्या—हुतीः । देवाः । वै । ब्रह्मन् । अवदन्त । तत् । पर्णः । उपेति । अशृणोत् । सुश्रवा इति सु—श्रवाः । वै । नाम । यस्य । पर्णमयीति पर्ण—मयी । जुहूः । भवति । न । पापम् । श्लोकम् । शृणोति । ब्रह्म । वै । पर्णः । विट् । मरुतः । अन्नम् । विट् । मारुतः । अश्वत्थः । यस्य । पर्णमयीति पर्ण—मयी । जुहूः ।

भवति । आश्वत्थी । उपभृदित्युप—भृत् । ब्रह्मणा । एव । अन्नम् । अवेति । रुन्धे । अथो इति । ब्रह्म (२) । एव । विशि । अधीति । ऊहति । राष्ट्रम् । वै । पर्णः । विट् । अश्वत्थः । यत् । पर्णमयीति पर्ण—मयी । जुहूः । भवति । आश्वत्थी । उपभृदित्युप—भृत् । राष्ट्रम् । एव । विशि । अधीति । ऊहति । प्रजापतिरिति प्रजा—पतिः । वै । अजुहोत् । सा । यत्र । आहुतिरित्या—हुतिः । प्रत्यतिष्ठदिति प्रति—अतिष्ठत् । ततः । विकङ्कत इति वि—कङ्कतः । उदिति । अतिष्ठत् । ततः । प्रजा इति प्र—जाः । असृजत । यस्य । वैकङ्कती । ध्रुवा । भवति । प्रतीति । एव । अस्य । आहुतय इत्या—हुतयः । तिष्ठन्ति । अथो इति । प्रेति । एव । जायते । एतत् । वै । स्रुचाम् । रूपम् । यस्य । एवꣳरूपा इत्येवं—रूपाः । स्रुचः । भवन्ति । सर्वाणि । एव । एनम् । रूपाणि । पशूनाम् । उपेति । तिष्ठन्ते । न । अस्य । अपरूपमित्यप—रूपम् । आत्मन् । जायते (३) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

(दर्शपूर्णमासाङ्गभूतानां स्रुचां वृक्षविशेषाणां विधानम्)

(अथ तृतीयकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः।)

---

षष्ठेऽनुवाके संप्रोक्ता योक्त्रबन्धादिमन्त्रकाः।

अथ सप्तमेऽनुवाके दर्शपूर्णमासाङ्गभूतानां स्रुचां वृक्षविशेषा विधीयन्ते ॥

तत्र स्रुववृक्षं विधत्ते—

वषट्कारो वै गायत्रियै शिरोऽच्छिनत्तस्यै रसः पराऽपतत्स पृथिवीं प्राविशत्स खदिरोऽभवद्यस्य खादिरः स्रुवो भवति छन्दसामेव रसेनाव द्यति सरसा अस्याऽऽहुतयो भवन्ति, इति।

वषट्काराभिमानी देवः केनापि विरोधेन गायत्रियाः शिरश्चिच्छेद, तदा तस्या गायत्र्याश्छिन्नप्रदेशाज्जलं भूमौ पतित्वा खदिरो वृक्षोऽभवत्। अतः स्रुवः खादिरः कर्तव्यः। तथा सति स्रुवेण यद्यदवद्यति तत्सर्वं छन्दोरसेनावत्तं भवति। ततोऽस्य यजमानस्याऽऽहुतयः सरसा भवन्ति ॥

अथ जुह्वा वृक्षविशेषं विधत्ते—

तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याऽहरत्तस्य पर्णमच्छिद्यत तत्पर्णोऽभवत्तत्पर्णस्य पर्णत्वं यस्य पर्णमयी जुहूर्भवति सौम्या अस्याऽऽहुतयो भवन्ति जुषन्तेऽस्य देवा आहुतीः, इति।

इतो भूलोकादारभ्य गण्यमानो यो द्युलोकस्तृतीयो भवति तत्र सोमः पूर्वमासीत्। तं च गायत्री समाहरत्। आहरणप्रकारः कद्रूश्चेत्यनुवाके प्रपञ्चितः। तस्याऽऽह्रियमाणस्य सोमस्यैकं पर्णं भूमौ पतित्वा पलाशवृक्षोऽभवत्। पर्णजन्यत्वात्तस्य वृक्षस्य पर्णनाम संपन्नम्। तादृशेन पर्णवृक्षेण जुहूं निष्पादयेत्। तथा सति जुह्वा हूयमाना आहुतयः सर्वाः सोमसंबन्धिन्यो भवन्ति। देवाश्च ता आहुतीः प्रीतिपुरःसराः सेवन्ते ॥

तं पर्णवृक्षं प्रकारान्तरेण प्रशंसति—

देवा वै ब्रह्मन्नवदन्त तत्पर्ण उपाशृणो-

स्सुश्रवा वै नाम यस्य पर्णमयी जुहू-
र्भवति न पापꣳ श्लोकꣳ शृणोति, इति।

यदा देवा ब्रह्मतत्त्वविषये परस्परं संवादं रहसि कृतवन्तस्तदानीं पर्णवृक्षा-
भिमानी देवस्तद्वृक्षच्छायायामुपविष्टानां देवानां वचनमशृणोत्। तस्मात्सुश्र-
इति तस्य नाम संपन्नम्। यस्मादयं वृक्षः सुश्रवास्तस्माज्जुह्वास्तन्मयत्वे स
यजमानः शोभनं स्तुतिरूपमेव वाक्यं सर्वदा शृणोति नतु कदाचिदपि प
श्लोकं निन्दावचनं शृणोति ॥

अथ जुह्वाः पर्णमयीत्वं दृष्टान्तार्थमनुवदन्नुपभृतोऽश्वत्थवृक्षं विधत्ते—

ब्रह्म वै पर्णो विण्मरुतोऽन्नं विण्मा-
रुतोऽश्वत्थो यस्य पर्णमयी जुहू-
र्भवत्याश्वत्थ्युपभृद्ब्रह्मणैवान्नमव रु-
न्धेऽथो ब्रह्मैव विश्यध्यूहति, इति।

देवैरुच्यमानस्य ब्रह्मणः श्रवणात्पर्णवृक्षोऽपि ब्रह्मैव। वैश्यजात्यभिमानि-
त्वेन मरुतां स्रष्टत्वान्मरुतोऽपि विड्रूपाः। कृष्यादिपरैर्वैश्यैः संपादितत्वा-
न्नमपि मरुद्रूपम्। "मरुतां वा एतदोजो यदश्वत्थः" इति श्रवणादश्वत्थ-
मारुतत्वम्। एवं स्थिते सति यो यजमानो जुहूं पर्णमयीं करोति स एवं
भृतमाश्वत्थस्य कुर्यात्। उभयस्मिन्कृते सति जुहूरूपेण ब्रह्मणैवाश्वत्थ-
मिनां मरुतां विड्रूपान्नमवरुद्धं भवति। किंच, ब्राह्मणजातिमेव वैश्यजाता-
कत्वेन स्थापयति ॥

तदुभयमपि प्रकारान्तरेण प्रशंसति—

राष्ट्रं वै पर्णो विडश्वत्थो यत्पर्णमयी जुहूर्भ-
वत्याश्वत्थ्युपभृद्राष्ट्रमेव विश्यध्यूहति, इति।

पर्णवृक्षस्वामिब्राह्मणजातिनिवासस्थानत्वाद्राष्ट्रत्वं पर्णरूपत्वम्। मरुद्-
द्वाराऽश्वत्थस्य विड्रूपत्वम्। अतः पूर्वोक्तरीत्या जुहूपभृतोर्वृक्षद्वयनिष्पा[दि]-
तत्वोर्ब्रह्मरूपं राष्ट्रमश्वत्थरूपायां विश्यधिकत्वेन स्थापितं भवति ॥

अथ ध्रुवाया विकङ्कतवृक्षं विधत्ते—

प्रजापतिर्वा अजुहोत्सा यत्राऽऽहुतिः

---

१ ख. घ. च. 'श्वत्थं कु'।

( दधिग्रहमन्त्रोक्तिः )

प्रत्यतिष्ठत्ततो विकङ्कत उदतिष्ठत्ततः प्रजा असृजत यस्य वैकङ्कती ध्रुवा भवति प्रत्ये-वास्याऽऽहुतयस्तिष्ठन्त्यथो प्रैव जायते, इति।

प्रजापतिना पूर्वहुताऽऽहुतिर्यत्र स्थिता तस्माद्देशाद्विकङ्कतवृक्ष उदपद्यत। तस्माद्विकङ्कताद्यज्ञसाधनभूतात्प्रजा असृजत। तस्माद्ध्रुवां वैकङ्कतीं कुर्यात्। तथा सत्यस्य यजमानस्याऽऽहुतयः प्रतिष्ठिता भवन्ति। किं चायं प्रजा उत्पादयति॥

स्रुग्वृक्षविधिमुपसंहरति—

एतद्वै स्रुचाꣳ रूपं यस्यैवꣳरूपाः स्रुचो भवन्ति सर्वाण्येवैनꣳ रूपाणि पशूनामुप तिष्ठन्ते नास्यापरूपमात्मञ्जायते॥, इति॥

खादिरत्वं पर्णमयीत्वमाश्वत्थत्वं वैकङ्कतत्वं चेति यदेतदेव क्रमेण स्रुचां [ स्रुव ] जुहूपभृद्ध्रुवाणां मुख्यं स्वरूपम्। तथा सति यस्य यजमानस्य स्रुच एवंरूपा भवन्ति, एनं यजमानं गवाश्वादिरूपाणि सर्वाण्यपि प्राप्नुवन्ति। किंचास्य यजमानस्याऽऽत्मन्स्त्रोदरे किंचिदप्यपत्यमपरूपं विरुद्धस्वरूपोपेतं न जायते, किंतु सर्वमप्यपत्यं सुस्वरूपमेव जायते॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

( अथ तृतीयाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः। )

---

उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधे रातं देवेभ्योऽग्निजिह्वेभ्यस्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो वातापिभ्यः पर्जन्यात्म-

भ्यो दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वाऽपेन्द्र द्विषतो मनोऽप जिज्यासतो जह्यप यो नोऽरातीयति तं जहि प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा सते त्वाऽसते त्वाऽद्भ्यस्त्वौषधीभ्यो विश्वेभ्यस्त्वा भूतेभ्यो यतः प्रजा अक्खिद्रा अजायन्त तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि ( १ ) ॥

( ओषधीभ्यश्चतुर्दश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ तृतीयाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः । )

---

उपयामगृहीत इत्युपयाम—गृहीतः । असि । प्रजापतय इति प्रजा—पतये । त्वा । ज्योतिष्मते । ज्योतिष्मन्तम् । गृह्णामि । दक्षाय । दक्षवृध इति दक्ष—वृधे । रातम् । देवेभ्यः । अग्निजिह्वेभ्य इत्यग्नि—जिह्वेभ्यः । त्वा । ऋतायुभ्य इत्यृतायु—भ्यः । इन्द्रज्येष्ठेभ्य इतीन्द्र—ज्येष्ठेभ्यः । वरुणराजभ्य इति वरुण—राज—भ्यः । वातापिभ्य इति वातापि—भ्यः । पर्जन्यात्मभ्य इति पर्जन्यात्म—भ्यः । दिवे । त्वा

अन्तरिक्षाय। त्वा। पृथिव्यै। त्वा। अपेति। इन्द्र। द्विषतः। मनः। अपेति। जिज्यासतः। जहि। अपेति। यः। नः। अरातीयति। तम्। जहि। प्राणायेति प्र—अनाय। त्वा। अपानायेत्यप—अनाय। त्वा। व्यानायेति वि—अनाय। त्वा। सते। त्वा। असते। त्वा। अद्भ्य इत्यत्—भ्यः। त्वा। ओषधिभ्य इत्योषधि—भ्यः। विश्वेभ्यः। त्वा। भूतेभ्यः। यतः। प्रजा इति प्र-जाः। अक्विद्राः। अजायन्त। तस्मै। त्वा। प्रजापतय इति प्रजा—पतये। विभूदाव्न इति विभु—दाव्ने। ज्योतिष्मते। ज्योतिष्मन्तम्। जुहोमि (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः॥ ८॥

---

(अथ तृतीयकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः।)

---

इष्ट्यङ्गानां स्रुचां वृक्षाः सप्तमे समुदीरिताः।
अथाष्टमे दधिग्रहमन्त्रा उच्यन्ते।

कल्पः—"उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामीति दधि गृहीत्वा" इति।

पाठस्तु—

उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधे रातं देवेभ्योऽग्निजिह्वेभ्यस्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो

वरुणराजभ्यो वातापिभ्यः पर्जन्यात्मभ्यो दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा, इति।

हे दधिग्रह, उपयामेन पार्थिवपात्रेण गृहीतोऽसि। ज्योतिष्मते प्रजापत[ये] ज्योतिष्मन्तं त्वा गृह्णामि। दक्षान्कर्मकुशलान्वर्धयतीति दक्षवृध्, तस्मै दक्ष[-]वृधे दक्षाय दक्षनाम्ने रातं पूर्वं प्रजापतिना दत्तम्। किंच, देवेभ्यो रा[तं] दत्तम्। कीदृशेभ्योऽग्निजिह्वेभ्यः, अग्निरेव जिह्वा येषां तेऽग्निजिह्वाः। ऋ[तं] सत्यमात्मन इच्छन्तीत्यृतायवः। इन्द्रो ज्येष्ठो येभ्यस्त इन्द्रज्येष्ठाः। वरु[णो] राजा येषां ते वरुणराजानः। वातं वायुमाप्नुवन्तीति वातापिनो वाय्वाहार[ा] इत्यर्थः। पर्जन्य एवाऽऽत्मा येषां ते पर्जन्यात्मानो वृष्ट्यादिसहिष्णव इत्यर्थः। ईदृशेभ्यो देवेभ्यो रातं त्वां गृह्णामि। तथा दिवे द्युलोकप्राप्त्यर्थं त्वां गृह्णामि। एवमन्तरिक्षाय त्वा पृथिव्यै त्वेत्युभयं योज्यम्॥

कल्पः—"अपेन्द्र द्विषतो मन इति हरति" इति।

पाठस्तु—

अपेन्द्र द्विषतो मनोऽप जिज्यासतो जह्यप यो नोऽरातीयति तं जहि, इति।

त्रिविधो हि शत्रुर्द्विषञ्जिज्यासन्नरातीयंश्चेति। यजमानस्य विद्यमानं द्रव्या[-]दिकं यो विनाशयति स द्विषन्नित्युच्यते। यस्तु द्रव्यमपहर्तुं[1] शक्तोऽप[ि] वयोहानिं मरणमेवेच्छति स जिज्यासन्नित्युच्यते। रातिर्दानमरातिरद[ानं] तदात्मन इच्छति देयत्वेन प्राप्तं किमपि न ददातीत्यर्थः। तादृशोऽरातीय[न्नि-]त्युच्यते। हे इन्द्र त्वं द्विषतः शत्रोर्मनोऽपजहि। तथा जिज्यासतः शत्रो[र्म-]नोऽपजहि। तथा यो नोऽस्माकमरातिमिच्छति तमपजहि॥

कल्पः—"प्राणाय त्वाऽपानाय त्वेति जुहोति" इति।

पाठस्तु—

प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा सते त्वाऽसते त्वाऽद्भ्यस्त्वौषधीभ्यो विश्वेभ्यस्त्वा भूतेभ्यो यतः प्रजा अक्खिद्रा अजायन्त तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि॥, इति॥

---

१ ख. घ. च. °हर्तुमशक्तोऽस्य।

( दधिग्रहमन्त्रव्याख्यानम् )

हे दधिग्रह प्राणाय प्राणप्रीत्यै त्वां जुहोमि । एवमपानाय त्वेत्यादिषु योज्यम् । प्राण ऊर्ध्ववृत्तिः । अपानोऽवाग्वृत्तिः । व्यानो मध्यवृत्तिः । शास्त्रीयमार्गवर्ती पुरुषः संस्तद्विपरीतोऽसन् । आप ओषधयश्च प्रसिद्धाः । ओषधीभ्य इत्यत्रानाम्नातमपि त्वेतिपदमनुषञ्जनीयम् । विश्वानि भूतानि सर्वप्राणिनस्तेषां सर्वेषां प्रीत्यै त्वां जुहोमि । किंच, यतः प्रजापतेः सकाशात्प्रजाः सर्वा अखिद्राः खेदरहिता उत्पन्नाः स प्रजापतिर्विभुत्वमैश्वर्यं ददातीति विभूदावा । सर्वप्रकाशकत्वेन ज्योतिष्मन्तं त्वां जुहोमि ॥

अत्र विनियोगसंग्रहः—

उपया दधि गृह्णात्यपेन्द्रेति हरति ग्रहम् ।
प्राणायेति जुहोत्येवं त्रयो मन्त्रा इहेरिताः ॥ १ ॥

एते च मन्त्रा यमग्ने पृत्सु मर्त्यमित्येतस्मान्मन्त्रादूर्ध्वं द्रष्टव्याः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठकेऽ-
ष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ तृतीयाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः । )

---

यां वा अध्वर्युश्च यजमानश्च देवतामन्त-
रितस्तस्या आ वृश्च्येते प्राजापत्यं दधिग्रहं
गृह्णीयात्प्रजापतिः सर्वा देवता देवताभ्य एव
नि ह्नुवाते ज्येष्ठो वा एष ग्रहाणां यस्यैष
गृह्यते ज्यैष्ठ्यमेव गच्छति सर्वासां वा एतद्दे-
वतानाꣳ रूपं यदेष ग्रहो यस्यैष गृह्यते सर्वा-
ण्येवैनꣳ रूपाणि पशूनामुप तिष्ठन्त उपयाम-
गृहीतः ( १ ) असि प्रजापतये त्वा ज्योति-
ष्मते ज्योतिष्मन्तं गृह्णामीत्याह ज्योतिरेवैनꣳ

समानानां करोत्यग्निजिह्वेभ्यस्त्वर्तायुभ्य इत्याहैतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णात्यपेन्द्र द्विषतो मन इत्याह भ्रातृव्यापनुत्त्यै प्राणाय त्वाऽपानाय त्वेत्याह प्राणानेव यजमाने दधाति तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि ( २ ) इत्याह प्रजापतिः सर्वा देवताः सर्वाभ्य एवैनं देवताभ्यो जुहोत्याज्यग्रहं गृह्णीयात्तेजस्कामस्य तेजो वा आज्यं तेजस्व्येव भवति सोमग्रहं गृह्णीयाद्ब्रह्मवर्चसकामस्य ब्रह्मवर्चसं वै सोमो ब्रह्मवर्चस्येव भवति दधिग्रहं गृह्णीयात्पशुकामस्योग्वै दध्यूक्पशव ऊर्जैवास्मा ऊर्जं पशूनव रुन्धे ( ३ ) ॥

( उपयामगृहीतो जुहोमि त्रिचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ तृतीयाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः । )

---

याम् । वै । अध्वर्युः । च । यजमानः । च देवताम् । अन्तरित इत्यन्तः—इतः । तस्यै । एति वृश्च्येते इति । प्राजापत्यमिति प्राजा—पत्यम् । दधि

( दधिग्रहमन्त्रव्याख्यानम् )

ग्रहमिति दधि—ग्रहम् । गृह्णीयात् । प्रजापतिरिति प्रजा—पतिः । सर्वाः । देवताः । देवताभ्यः । एव । नीति । हनुवात इति । ज्येष्ठः । वै । एषः । ग्रहाणाम् । यस्य । एषः । गृह्यते । ज्यैष्ठ्यम् । एव । गच्छति । सर्वासाम् । वै । एतत् । देवतानाम् । रूपम् । यत् । एषः । ग्रहः । यस्य । एषः । गृह्यते । सर्वाणि । एव । एनम् । रूपाणि । पशूनाम् । उपेति । तिष्ठन्ते । उपयामगृहीत इत्युपयाम—गृहीतः ( १ ) । असि । प्रजापतय इति प्रजा—पतये । त्वा । ज्योतिष्मते । ज्योतिष्मन्तम् । गृह्णामि । इति । आह । ज्योतिः । एव । एनम् । समानानाम् । करोति । अग्निजिह्वेभ्य इत्यग्नि—जिह्वेभ्यः । त्वा । ऋतायुभ्य इत्यृतायु—भ्यः । इति । आह । एतावतीः । वै । देवताः । ताभ्यः । एव । एनम् । सर्वाभ्यः । गृह्णाति । अपेति । इन्द्र । द्विषतः । मनः । इति । आह । भ्रातृव्यापनुत्त्या इति भ्रातृव्य—अपनुत्त्यै । प्राणायेति प्र—अनाय । त्वा । अपानायेत्यप—अनाय । त्वा । इति । आह । प्राणानिति प्र—अनान् । एव । यजमाने । दधाति । तस्मै । त्वा । प्रजापतय इति

प्रजा—पतये । विभूदाव्न इति विभु—दाव्ने । ज्योतिष्मते । ज्योतिष्मन्तम् । जुहोमि ( २ ) । इति । आह । प्रजापतिरिति प्रजा—पतिः । सर्वाः । देवताः । सर्वाभ्यः । एव । एनम् । देवताभ्यः । जुहोति । आज्यग्रहमित्याज्य—ग्रहम् । गृह्णीयात् । तेजस्कामस्येति तेजः—कामस्य । तेजः । वै । आज्यम् । तेजस्वी । एव । भवति । सोमग्रहमिति सोम—ग्रहम् । गृह्णीयात् । ब्रह्मवर्चसकामस्येति ब्रह्मवर्चस—कामस्य । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । वै । सोमः । ब्रह्मवर्चसीति ब्रह्म—वर्चसी । एव । भवति । दधिग्रहमिति दधि—ग्रहम् । गृह्णीयात् । पशुकामस्येति पशु—कामस्य । ऊर्क् । वै । दधि । ऊर्क् । पशवः । ऊर्जा । एव । अस्मै । ऊर्जम् । पशून् । अवेति । रुन्धे ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ तृतीयकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः । )

---

दधिग्रहस्य ये मन्त्रा अष्टमे ते प्रकीर्तिताः ।
अथ नवमेऽनुवाके ते मन्त्रा व्याख्यातव्याः ॥

तत्राऽऽदौ दधिग्रहं विधत्ते—

यां वा अध्वर्युश्च यजमानश्च देवताम-
न्तरितस्तस्या आ वृश्च्येते प्राजापत्यं
दधिग्रहं गृह्णीयात्प्रजापतिः सर्वा दे-
वता देवताभ्य एव नि ह्नुवाते, इति।

सोमयागे देवताबाहुल्यादध्वर्युयजमानौ प्रमादेन यस्या देवताया अन्तरायं कुर्वाते तस्या देवताया उभौ विच्छिन्नौ भवतस्तस्या देवताया अपराधिनावित्यर्थः। अतोऽपराधपरिहाराय प्रजापतिदेवताकं दधिग्रहं गृह्णीयात्। प्रजापतिश्च स्रष्टृत्वात्सर्वदेवतारूपः। अतस्तस्मै ग्रहं दत्त्वा सर्वदेवताभ्योऽन्तर्वन्ताविव्येवं निह्नवमपलापं कुरुतः। तेनापलापेन देवता द्वेषं मुञ्चति॥

अस्य ग्रहस्य सर्वग्रहेभ्यः प्राथम्यं विधत्ते—

ज्येष्ठो वा एष ग्रहाणां यस्यैष
गृह्यते ज्यैष्ठ्यमेव गच्छति, इति।

ग्रहाणां मध्ये ज्येष्ठः प्रथमभावी, तस्मात्प्रथमं गृह्णीयादित्यर्थः। यस्य यजमानस्यैष ग्रहः प्रथमं गृह्यते स यजमानो ज्यैष्ठ्यमेव गच्छति सर्वेषां यजमानानां मध्ये मुख्यत्वं प्राप्नोत्येव॥

तस्य ग्रहस्य प्रजापतिदेवताकत्वं प्रशंसति—

सर्वासां वा एतद्देवतानाꣳ रूपं यदेष
ग्रहो यस्यैष गृह्यते सर्वाण्येवैनꣳ
रूपाणि पशूनामुप तिष्ठन्ते, इति।

एष प्रजापतिदेवताको ग्रह इति यदेतत्सर्वासामेव देवतानां स्वरूपं, प्रजापतेः सर्वदेवतात्मकत्वात्। अतो यस्य यजमानस्यैष गृह्यत एनं यजमानं पशूनां सर्वाणि रूपाणि गवाश्वादीनि प्राप्नुवन्ति॥

अत्र ग्रहणमन्त्रस्य पूर्वभागे ज्योतिर्विशेषणं प्रशंसति—

उपयामगृहीतोऽसि प्रजापतये त्वा
ज्योतिष्मते ज्योतिष्मन्तं गृह्णामीत्याह
ज्योतिरेवैनꣳ समानानां करोति, इति।

एनं यजमानं समानां मध्ये ज्योतिरेव तेजोयुक्तमेव करोति॥

उत्तरभागे प्रजापत्यवयवभूतानां देवतानां प्रतिपादकान्यग्निजिह्वेभ्य इत्यादीनि नवसंख्याकानि चतुर्थ्यन्तपदानि, तेषां तात्पर्यं संगृह्य दर्शयति—

अग्निजिह्वेभ्यस्त्वर्तायुभ्य इत्याहैतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णाति, इति ॥

हरणमन्त्रगतस्यापजहीत्येतस्य तात्पर्यं दर्शयति—

अपेन्द्र द्विषतो मन इत्याह भ्रातृव्यापनुत्त्यै, इति ॥

होममन्त्रपूर्वभागे प्राणादिपदतात्पर्यं दर्शयति—

प्राणाय त्वाऽपानाय त्वेत्याह
प्राणानेव यजमाने दधाति, इति ॥

प्रजापतिपदतात्पर्यं दर्शयति—

तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमीत्याह प्रजापतिः सर्वा देवताः सर्वाभ्य एवैनं देवताभ्यो जुहोति, इति ।

एनं दधिग्रहम् ॥

अत्र काम्यान्गुणविशेषांस्त्रीन्विधत्ते—

आज्यग्रहं गृह्णीयात्तेजस्कामस्य तेजो वा आज्यं तेजस्व्येव भवति सोमग्रहं गृह्णीयाद्ब्रह्मवर्चसकामस्य ब्रह्मवर्चसं वै सोमो ब्रह्मवर्चस्येव भवति दधिग्रहं गृह्णीयात्पशुकामस्योर्ग्वै दध्यूर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनव रुन्धे॥, इति ॥

स्पष्टोऽर्थः ॥

अत्र मीमांसा ।

चतुर्थाध्यायस्य चतुर्थपादे चिन्तितम्—

नित्ये(त्य)नैमित्तिकत्वे वा नित्यतैव दधिग्रहे ।
देवान्तरायाज्ज्यैष्ठ्याच्च स्यादस्योभयरूपता ॥

१ ख. अथ । २ क. ख. घ. ङ. च. देवतान्त° । ३ क. ख. घ. ङ. °ष्ठ्यात्स्याद° °ष्ठ्याच्च स्या° ।

निमित्तत्वद्योतिनोऽत्र यदिशब्दादयो नहि।
अतोऽस्य न निमित्तत्वं केवला नित्यतोचिता॥

ज्योतिष्टोमे श्रूयते—" यां वै कांचिदध्वर्युर्यजमानश्च देवतामन्तरितस्तस्या आवृश्च्येते यत्प्राजापत्यं दधिग्रहं गृह्णाति शमयत्येवैनाम् " इति। सोऽयं दधिग्रहो नित्यो नैमित्तिकश्चेत्युभयात्मकः। कुतः। आकारद्वयसद्भावात्। देवतान्तरायेण तद्देवताक्षोभमुपन्यस्य ग्रहेण समाधानाभिधानादन्तरायो निमित्तं ग्रहो नैमित्तिक इति प्रतिभाति। तथा ज्येष्ठत्वमाम्नातम्—" ज्येष्ठो वा एष ग्रहाणाम् " इति। ज्येष्ठत्वं नाम प्रशस्तत्वं, तच्च नित्यत्वे सत्युपपद्यते। नैमित्तिकस्य पाक्षिकत्वादप्रशस्तत्वम्। तस्माद्धेतुद्वयबलादुभयात्मक इति चेन्मैवम्। देवतान्तरायस्यानिमित्तत्वात्। निमित्तत्वे यदिशब्द उपबध्येत, सप्तमी वा श्रूयेत, यच्छब्दो वाऽन्तरायकर्त्रोरध्वर्युयजमानयोः सामानाधिकरण्येन प्रयुज्येत। " यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान्गृह्णीयाद्भिन्ने जुहोति यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते " इत्यादिषु संप्रतिपन्ननिमित्तेषु तद्दर्शनात्। तस्मात्केवलनित्यत्वमेव दधिग्रहस्योचितम्। देवताक्षोभतत्समाधानोपन्यासो विधेयदधिग्रहस्तुतयेऽर्थवादः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः॥ ९॥

---

( अथ तृतीयाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः। )

---

त्वे क्रतुमपि॑ वृञ्जन्ति विश्वे॒ द्विर्यदे॒ते त्रिर्भव॒न्त्यूमाः॑। स्वादोः॒ स्वादी॑यः स्वा॒दुना॑ सृजा॒ सम॒तं ऊ॒ षु मधु॒ मधु॑ना॒ऽभि यो॑धि। उ॒प॒या॒मगृ॑हीतोऽसि प्र॒जाप॑तये त्वा॒ जुष्टं॑ गृह्णाम्ये॒ष ते॒ योनिः॑ प्र॒जाप॑तये त्वा। प्रा॒ण॒ग्र॒हान्गृ॑ह्णा॒त्येता॒वद्वा॒ अ॑स्ति॒ याव॑दे॒ते ग्र॒हाः॑ स्तोमा॒श्छन्दा॑ꣳसि पृ॒ष्ठानि॒ दिशो॒ याव॑दे॒वास्ति॒ तत् ( १ ) अव॑

रुन्धे ज्येष्ठा वा एतान्ब्राह्मणाः पुरा विदाम-क्रन्तस्मात्तेषाꣳ सर्वा दिशोऽभिजिता अभूव-न्यस्यैते गृह्यन्ते ज्यैष्ठ्यमेव गच्छत्यभि दिशो जयति पञ्च गृह्यन्ते पञ्च दिशः सर्वास्वेव दिक्ष्वृध्नुवन्ति नवनव गृह्यन्ते नव वै पुरुषे प्राणाः प्राणानेव यजमानेषु दधति प्रायणीये चोदयनीये च गृह्यन्ते प्राणा वै प्राणग्रहाः ( २ ) प्राणैरेव प्रयन्ति प्राणैरुद्यन्ति दशमेऽहन्गृह्यन्ते प्राणा वै प्राणग्रहाः प्राणेभ्यः खलु वा एतत्प्रजा यन्ति यद्वामदेव्यं योनेश्च्यवते दशमेऽहन्वामदेव्यं योनेश्च्यवते यद्दशमेऽहन्गृ-ह्यन्ते प्राणेभ्य एव तत्प्रजा न यन्ति ( ३ ) ॥

( तत्प्राणग्रहाः सप्तत्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ तृतीयाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः । )

---

स्वे इति । क्रतुम् । अपीति । वृञ्जन्ति । विश्वे ...
द्विः । यत् । एते । त्रिः । भवन्ति । ऊमाः । स्व...
दोः । स्वादीयः । स्वादुना । सृज । समिति । अ...
उ । स्विति । मधु । मधुना । अभीति । यो...

उपयामगृहीत इत्युपयाम—गृहीतः । असि । प्रजापतय इति प्रजा—पतये । त्वा । जुष्टम् । गृह्णामि । एषः । ते । योनिः । प्रजापतय इति प्रजा—पतये । त्वा । प्राणग्रहानिति प्राण—ग्रहान् । गृह्णाति । एतावत् । वै । अस्ति । यावत् । एते । ग्रहाः । स्तोमाः । छन्दांसि । पृष्ठानि । दिशः । यावत् । एव । अस्ति । तत् ( १ ) । अवेति । रुन्धे । ज्येष्ठाः । वै । एतान् । ब्राह्मणाः । पुरा । विदाम् । अक्रन् । तस्मात् । तेषाम् । सर्वाः । दिशः । अभिजिता इत्यभि—जिताः । अभूवन् । यस्य । एते । गृह्यन्ते । ज्यैष्ठ्यम् । एव । गच्छति । अभीति । दिशः । जयति । पञ्च । गृह्यन्ते । पञ्च । दिशः । सर्वासु । एव । दिक्षु । ऋध्नुवन्ति । नवनवेति नव—नव । गृह्यन्ते । नव । वै । पुरुषे । प्राणा इति प्र—अनाः । प्राणानिति प्र—अनान् । एव । यजमानेषु । दधाति । प्रायणीय इति प्र—अयनीये । च । उदयनीय इत्युत्—अयनीये । च । गृह्यन्ते । प्राणा इति प्र—अनाः । वै । प्राणग्रहा इति प्राण—ग्रहाः (२) । प्राणैरिति प्र—अनैः । एव । प्रयन्तीति प्र—यन्ति । प्राणैरिति प्र—अनैः । उदिति । यन्ति । दशमे । अह-

न् । गृह्यन्ते । प्राणा इति प्र—अनाः । वै । प्राणग्रहा इति प्राण—ग्रहाः । प्राणेभ्य इति प्र—अनेभ्यः । खलु । वै । एतत् । प्रजा इति प्र—जाः । यन्ति । यत् । वामदेव्यमिति वाम—देव्यम् । योनेः । च्यवते । दशमे । अहन् । वामदेव्यमिति वाम—देव्यम् । योनेः । च्यवते । यत् । दशमे । अहन् । गृह्यन्ते । प्राणेभ्य इति प्र—अनेभ्यः । एव । तत् । प्रजा इति प्र—जाः । न । यन्ति ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ तृतीयकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः । )

---

अनुवाके तु नवमे दधिग्रहविधिः श्रुतः ।
अथ दशमेऽनुवाके गवामयनेऽतिग्राह्याः प्राणग्रहाश्चोच्यन्ते ।

कल्पः—“ अतिग्राह्यायतने चत्वार्यतिग्राह्यपात्राणि प्रतिदिशं निदधाति भवन्ति मध्ये पञ्चमम् ” इत्युपक्रम्य पञ्चसु पात्रेषु तत्तन्मन्त्रैर्ग्रहणमभिधायेदमुक्तं “ तानन्यस्मिन्पात्र आनीय सर्वान्मध्यमे गृह्णाति त्वे क्रतुमपि वृञ्जन्ति विश्व इति ” इति ॥

पाठस्तु—

त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः । स्वादोः स्वादीयः स्वादुना सृजा समत ऊ षु मधु मधुनाऽभि योधि । उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिः प्रजापतये त्वा, इति ।

हेऽतिग्राह्य त्वे त्वयि क्रतुमपि वृञ्जन्ति सर्वमपि क्रतुमृत्विजः समापयन्ति। ग्रहान्तरेभ्योऽस्य को विशेष इति, तदुच्यते—यद्यस्मात्कारणाद्द्विस्त्रिर्द्विवारं त्रिवारं वेत्येवं पञ्चसु पात्रेषु गृहीता एते रसा विश्वे सर्वेऽप्यूमा रक्षका भवन्ति तस्मात्त्वयि क्रतोः समापनं युक्तम्। अतस्त्वमपि स्वादोरपि रसातिशयेन स्वादु यथा भवति तथा स्वादुना संसृज स्वादुत्वेन संसर्गं कुरु। अत ऊ षु अतोऽपि सुष्ठु यथा भवति तथा मधु मधुनाऽभियोधि मधुनो भागं मधुना भागान्तरेणाभियोधि। य एवं मधुरस उपयामेन पार्थिवपात्रेण गृहीतोऽसि प्रजापतये जुष्टं प्रियमितरपात्रेभ्य आनीतं त्वां मध्यमपात्रे गृह्णामि। सोऽयं ग्रहणमन्त्रः। एष खरप्रदेशस्ते योनिस्तव स्थानम्। अतः प्रजापत्यर्थं त्वामत्र सादयामि। अनेन मन्त्रेण गवामयनस्य संवत्सरसत्रस्योपान्त्येऽह्नि महाव्रताख्येऽतिग्राह्यं गृह्णीयात्॥

अथ चतुर्थकाण्डसमाम्नातैरयं पुरो भुव इत्यादिभिर्मन्त्रैः पृश्निग्रहवत्सोमोन्मानरूपान्ग्रहान्विधत्ते—

प्राणग्रहान्गृह्णात्येतावद्वा अस्ति याव-
देते ग्रहाः स्तोमाश्छन्दाꣳसि पृष्ठानि
दिशो यावदेवास्ति तदव रुन्धे, इति।

यथा यत्पृश्नयो गृह्यन्त इत्यत्र वायुरसि प्राणो नामेत्यादिभिर्मन्त्रैः सोमोन्मानविशेषा एव ग्रहा इत्युक्तमेवमत्राप्ययं पुरो भुव इत्यादिभिः प्राणमन्त्रैः सोमोन्मानविशेषाः प्राणग्रहा इत्युच्यन्ते। तान्गृह्णीयात्सोमोन्मानं कुर्यादित्यर्थः। एते ग्रहा इति यावत्। एतावदेवात्रापेक्षितमस्ति। स्तोमास्त्रिवृत्पञ्चदशादयः। छन्दांसि गायत्र्यादीनि। पृष्ठानि माध्यंदिनपवमानानन्तरभावीनि स्तोत्राणि। दिशः प्राच्याद्याः, इत्येतादृशं यावदेवापेक्षितमस्ति सर्वमेतैर्ग्रहैरवरुन्धे॥

प्रकारान्तरेण प्राणग्रहान्प्रशंसति—

ज्येष्ठा वा एतान्ब्राह्मणाः पुरा विदा-
मक्रन्तस्मात्तेषाꣳ सर्वा दिशोऽभिजिता
अभूवन्यस्यैते गृह्यन्ते ज्यैष्ठ्यमेव
गच्छत्यभि दिशो जयति, इति।

यस्मादेतान्ग्रहान्गृह्णन्तो ब्राह्मणा ज्येष्ठा दिशां जेतारश्चाभूवंस्तस्माद्यस्यैते

गृह्यन्ते स इतरेभ्यो ज्यैष्ठ्यं प्राशस्त्यमेव प्राप्नोति नानादिक्ष्ववस्थिताश्च षास्तस्य भवन्ति ॥

प्राणग्रहपर्यायाणां संख्यां विधत्ते—

पञ्च गृह्यन्ते पञ्च दिशः सर्वा-
स्वेव दिक्ष्वृध्नुवन्ति , इति ।

अयं पुरो भुव इत्यादिभिर्मन्त्रैः प्रथमः पर्यायः । अयं दक्षिणा विश्व त्यादिभिर्द्वितीयः । अयं पश्चाद्विश्वव्यचा इत्यादिभिस्तृतीयः । इद रात्सुवरित्यादिभिश्चतुर्थः । इयमुपरि मतिरित्यादिभिः पञ्चमः । प्राच्या ऊर्ध्वान्ताः पञ्च दिशः । तासु दिक्षु सर्वास्वनेन पञ्चविधग्रहणेन स प्राप्नुवन्ति ॥

एकैकस्मिन्पर्याये सोमांशुसंख्यां विधत्ते—

नवनव गृह्यन्ते नव वै पुरुषे प्राणाः
प्राणानेव यजमानेषु दधति , इति ।

शिरोवस्थितेषु सप्तसु च्छिद्रेष्वधोवस्थितयोश्च द्वयोश्छिद्रयोः सं प्राणा नवसंख्याकाः । नवांशुग्रहणेन तान्यजमानेषु स्थापयति(न्ति) ॥

अस्य ग्रहणस्य कालं विधत्ते—

प्रायणीये चोदयनीये च गृह्यन्ते प्राणा वै प्राण-
ग्रहाः प्राणैरेव प्रयन्ति प्राणैरुद्यन्ति , इति ।

संवत्सरसत्रस्य प्रथममहः प्रायणीयं, चरममहरुदयनीयं, तयोरुभ यात् । तथा सति तेषां ग्रहाणां प्राणरूपत्वात्प्राणैरेव संवत्सरमुपक्रम्य रेव समापितवन्तो भवन्ति ॥

कालान्तरं विधत्ते—

दशमेऽहन्गृह्यन्ते प्राणा वै प्राणग्रहाः प्राणेभ्यः
खलु वा एतत्प्रजा यन्ति यद्वामदेव्यं योनेश्च्य-
वते दशमेऽहन्वामदेव्यं योनेश्च्यवते यद्दशमेऽ-
हन्गृह्यन्ते प्राणेभ्य एव तत्प्रजा न यन्ति॥,इति ॥

संवत्सरसत्रस्य द्वादशाहविकृतित्वात्तदीयान्यहान्यत्र प्रयोक्त[1]

---

१ ख घ. च. °रं च वि°।

(पाशुकहौत्रोपयोगिमन्त्राभिधानम्)

यद्दशममहस्तस्मिन्प्राणग्रहान्गृह्णीयात्। वामदेव्याख्यस्य साम्नः कया नश्चित्र आ भुवदित्येषा योनिः। दशमेऽहनि तु तां योनिं परित्यज्यान्यस्यामृचि तत्साम गीयते। तथा सति वामदेव्यं स्वयोनेश्च्यवत इति यत्, एतेनापराधेन प्रजाः प्राणेभ्यो यन्त्यपगच्छन्ति। तत्र प्राणग्रहाणां प्राणरूपत्वाद्दशमेऽहनि तेषां ग्रहणेन प्रजाः प्राणेभ्यो नापगच्छन्ति॥

अत्र विनियोगसंग्रहः—

"त्वे गवामयने पात्रेऽतिग्राह्यग्रहणं भवेत्।
अयं पुरो भुवः प्राणग्रहाणां पञ्च मन्त्रकाः॥ १॥
सोमांशवो नव नव ग्राह्याः पर्यायपञ्चके।
कया नश्चित्र एतस्या योनेर्भ्रष्टं तु साम तत्।
अग्निं नर इति ह्यत्र गीयते दशमेऽहनि॥ २॥" इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके
दशमोऽनुवाकः॥ १०॥

---

(अथ तृतीयाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः।)

---

प्र दे॒वं दे॒व्या धि॒या भर॑ता जा॒तवे॑दसम्। ह॒व्या नो॑ वक्षदानु॒षक्। अ॒यमु॒ ष्य प्र दे॑व॒यु-र्होता॑ य॒ज्ञाय॑ नीयते। र॒थो न योर॒भीवृ॑तो घृणी॑वाञ्चेतति॒ त्मना॑। अ॒यम॒ग्निरु॑रुष्यत्य॒मृता॑-दि॒व जन्म॑नः। सह॑सश्चि॒त्सही॑यान्दे॒वो जी॒वा-त॑वे कृ॒तः। इडा॑यास्त्वा प॒दे व॒यं नाभा॑ पृथि॒-व्या अधि॑। जात॑वेदो॒ नि धी॑मह्य॒ग्ने ह॒व्याय॒ वोढ॑वे (१)। अ॒ग्ने॒ विश्वे॑भिः स्वनीक दे॒वै-

---

१ क. प्रहे।

रूर्णावन्तं प्रथमः सीद योनिम् । कुलायिनं घृतवन्तꣳ सवित्रे यज्ञं नय यजमानाय साधु । सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञꣳ सुकृतस्य योनौ । देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयो धाः । नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ असदत्सुदक्षः । अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रंभरः शुचिजिह्वो अग्निः । त्वं दूतस्त्वम् ( २ ) उ नः परस्पास्त्वं वस्य आ वृषभ प्रणेता । अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन्दीद्यद्बोधि गोपाः । अभि त्वा देव सवितरीशानं वार्याणाम् । सदाऽवन्भागमीमहे । मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः । त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः । तमु ( ३ ) त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरंदरम् । तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनंजयꣳ रणेरणे । उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाऽजनि । धनंजयो रणेरणे । आ यꣳ हस्ते न खादिनꣳ शिशुं जातं न बि-

( पाशुकहौत्रोपयोगिमन्त्राभिधानम् )

भंति । विशामग्निꣳ स्वध्वरम् । प्र देवं देववीतये भरता वसुवित्तमम् । आ स्वे योनौ निषींदतु । आ ( ४ ) जातं जातवेदसि प्रियꣳ शिंशीतातिंथिम् । स्योन आ गृहपंतिम् । अग्निनाऽग्निः समिध्यते कविर्गृहपंतिर्युवा । हव्यवाड्जुह्वास्यः । त्वꣳ ह्यंग्ने अग्निना विप्रो विप्रेण सन्त्सता । सखा सख्यां समिध्यसे । तं मंर्जयन्त सुक्रतुं पुरोयावांनमाजिषु । स्वेषु क्षयेषु वाजिनंम् । यज्ञेन यज्ञमंयजन्त देवास्तानि धर्माणि प्रथमान्यांसन् । ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः ( ५ ) ॥

( वोढवे दूतस्त्वं तमु सीदत्वा यत्र चत्वारिं च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

पूर्णर्षयोऽग्निना देवेन ये देवाः सूर्यः सं त्वा वषट्कारः स खंदिर उपयामगृहीतोऽसि यां वै त्वे क्रतुं प्र देवमेकादश ॥ ११ ॥

पूर्णा संहजाꣳस्तवाग्ने वामीः प्राणैरेव षट्त्रिꣳशत् ॥ ३६ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके पञ्चमः प्रपाठकः ॥ ५ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टकः ॥ ३ ॥

( अथ तृतीयाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः । )

---

प्रेति । देवम् । देव्या । धिया । भरत । जातवेदसमिति जात—वेदसम् । हव्या । नः । वक्षत् । आनुषक् । अयम् । उ । स्यः । प्रेति । देवयुरिति देव—युः । होता । यज्ञाय । नीयते । रथः । न । योः । अभीवृत इत्यभि—वृतः । घृणीवान् । चेतति । त्मना । अयम् । अग्निः । उरुष्यति । अमृतात् । इव । जन्मनः । सहसः । चित् । सहीयान् । देवः । जीवातवे । कृतः । इडायाः । त्वा । पदे । वयम् । नाभा । पृथिव्याः । अधि । जातवेद इति जात—वेदः । नीति । धीमहि । अग्ने । हव्याय । वोढवे । (१) । अग्ने । विश्वेभिः । स्वनीकेति सु—अनीक । देवैः । ऊर्णावन्तमित्यूर्णा—वन्तम् । प्रथमः । सीद । योनिम् । कुलायिनम् । घृतवन्तमिति घृत—वन्तम् । सवित्रे । यज्ञम् । नय । यजमानाय । साधु । सीद । होतः । स्वे । उ । लोके । चिकित्वान् । सादय । यज्ञम् । सुकृतस्येति सु—कृतस्य । योनौ । देवावीरिति देव—अवीः । देवान् । हविषा । यजासि । अग्ने । बृहत् । यजमाने । वयः । धाः । नीति । होता । होतृषदन इति होतृ—सदने । विदानः

त्वेषः। दीदिवान्। असदत्। सुदक्ष इति सु—दक्षः। अदब्धव्रतप्रमतिरित्यदब्धव्रत—प्र-मतिः। वसिष्ठः। सहस्रंभर इति सहस्रं—भरः। शुचिजिह्व इति शुचि—जिह्वः। अग्निः। त्वम्। दूतः। त्वम् (२)। उ। नः। परस्पा इति परः—पाः। त्वम्। वस्यः। एति। वृषभ। प्रणेतेति प्र—नेता। अग्ने। तोकस्य। नः। तने। तनूनाम्। अ-प्रयुच्छन्नित्यप्र—युच्छन्। दीद्यत्। बोधि। गोपा इति गो—पाः। अभीति। त्वा। देव। सवितः। ईशानम्। वार्याणाम्। सदा। अवन्। आगम्। ईमहे। मही। द्यौः। पृथिवी। च। नः। इमम्। यज्ञम्। मिमिक्षताम्। पिपृताम्। नः। भरीमभि-रिति भरीम—भिः। त्वाम्। अग्ने। पुष्करात्। अधीति। अथर्वा। निरिति। अमन्थत। मूर्ध्नः। विश्वस्य। वाघतः। तम्। उ (३)। त्वा। दध्यङ्। ऋषिः। पुत्रः। ईधे। अथर्वणः। वृत्रहणमिति वृत्र—हनम्। पुरंदरमिति पुरं—दरम्। तम्। उ। त्वा। पाथ्यः। वृषा। समिति। ईधे। दस्युहन्तम-मिति दस्यु—हन्तमम्। धनंजयमिति धनं—जयम्।

रणेरण इति रणे—रणे । उत । ब्रुवन्तु । जन्तवः । उदिति । अग्निः । वृत्रहेति वृत्र—हा । अजनि । धनंजय इति धनं—जयः । रणेरण इति रणे—रणे । एति । यम् । हस्ते । न । खादिनम् । शिशुम् । जातम् । न । बिभ्रति । विशाम् । अग्निम् । स्वध्वरमिति सु—अध्वरम् । प्रेति । देवम् । देववीतय इति देव—वीतये । भरत । वसुवित्तममिति वसुवित्—तमम् । एति । स्वे । योनौ । नीति । सीदतु । एति (४) । जातम् । जातवेदसीति जात—वेदसि । प्रियम् । शिशीत । अतिथिम् । स्योने । एति । गृहपतिमिति गृह—पतिम् । अग्निना । अग्निः । समिति । इध्यते । कविः । गृहपतिरिति गृह—पतिः । युवा । हव्यवाडिति हव्य—वाट् । जुह्वास्य इति जुहु—आस्यः । त्वम् । हि । अग्ने । अग्निना । विप्रः । विप्रेण । सन् । सता । सखा । सख्या । समिध्यस इति सम्—इध्यसे । तम् । मर्जयन्त । सुक्रतुमिति सु—क्रतुम् । पुरोयावानमिति पुरः—यावानम् । आजिषु । स्वेषु । क्षयेषु । वाजिनम् । यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि ।

आसन्न्। ते। ह। नाकम्। महिमानः। सचन्ते।
यत्र। पूर्वे। साध्याः। सन्ति। देवाः (५) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके
पञ्चमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

हरिः ॐ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके
पञ्चमः प्रपाठकः ॥ ५ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे
तृतीयाष्टकः ॥ ३ ॥

---

( अथ तृतीयकाण्डे पञ्चमप्रपाठक एकादशोऽनुवाकः । )

---

अतिग्राह्यप्राणनामग्रहा दशम ईरिताः ।

अथैकादशे पाशुकहौत्रोपयोगिमन्त्रा उच्यन्ते। तत्र ब्राह्मणग्रन्थे तृतीयकाण्डे षष्ठप्रपाठकेऽञ्जन्ति त्वामध्वरे देवयन्त इत्यत्र पाशुकहौत्रमन्त्राः प्रायेणोक्ताः। अवशिष्टास्तु मन्त्रा इहाभिधीयन्ते। तत्राष्टभिर्मन्त्रैरुत्तरवेदिं प्रत्यग्निं प्रणयेत्।

तेषु प्रथममन्त्रमाह—

प्र देवं देव्या धिया भरता जातवेदसम्। हव्या नो वक्षदानुषक्।, इति।

हे ऋत्विग्यजमाना जातवेदसमुत्पन्नस्य जगतो वेदितारं देवं देव्या प्रकाशरूपया विवेकयुक्तया धिया प्रकर्षेण भरत पोषयत। सोऽपि जातवेदा आनुपूर्व्येणानुषक्त आदरयुक्तो नोऽस्माकं हव्या वक्षद्धवींषि वहतु ॥

अथ द्वितीयमन्त्रमाह—

अयमु ष्य प्र देवयुर्होता यज्ञाय नीयते। रथो न योरभीवृतो घृणीवाञ्चेतति त्मना।, इति।

अयमेव स्यः सोऽग्निर्यज्ञार्थमुत्तरवेदिं प्रति प्रकर्षेण नीयते। कीदृशोऽग्नि देवानात्मन इच्छतीति देवयुः। होता होमस्य निष्पादकः। रथो न योः, र इव यवयिता पृथक्कर्ता, यथा रथः स्वस्मिन्नारूढं पुरुषं भूमिष्ठेभ्यः पृथक्कृ ग्रामे नयति तथाऽयमग्निः स्वस्मिन्हुतं हविरितरेभ्यो हविर्भ्यः पृथक्कृत्य देव नयति। अभीवृतो यजमानैराभिमुख्येन स्वीकृतः। घृणीवान्रश्मियुक्तः ताह्शोऽग्निस्त्मना चेतति स्वयमेव यजमानभक्तिं जानाति॥

तृतीयमन्त्रपाठस्तु—

अयमग्निरुरुष्यत्यमृतादिव जन्मनः। सहस-
श्चित्सहीयान्देवो जीवातवे कृतः।, इति।

अयं प्रणीयमानोऽग्निर्जन्मनो जन्ममात्रेणोरुष्यति प्रवृद्धो भवितुमिच्छति अमृतादिव, यथा पीतेनामृतेन मरणरहितः प्रवर्तते तद्वत्। किंचायं दे जीवातवे जीवनौषधाय सहसश्चित्सहीयान्कृतो बलवतोऽप्यतिप्रबलः कृतः यदाऽयमग्निः प्रबलो भवति तदा स्वयमपि विनाशरहितो जीवति यजमान मपि यज्ञनिष्पादनेन जीवयतीत्यर्थः॥

चतुर्थमन्त्रपाठस्तु—

इडायास्त्वा पदे वयं नाभा पृथिव्या अधि।
जातवेदो नि धीमह्यग्ने हव्याय वोढवे।, इति।

हे जातवेदोऽग्ने हव्याय वोढवे हवींषि वोढुं त्वां वयं[नि] धीमहि नि स्थापयामः। कुत्रेति तदुच्यते—पृथिव्या अध्युपरि नाभा नाभिसदृश[1] वनीयायतने। तच्चाऽऽयतनमिडापदसदृशं, यथा गोरूपाया इडायाः पदं घृ युक्तं तथेदं घृताहुतियुक्तं, तादृशे स्थाने स्थापयामः॥

पञ्चममन्त्रपाठस्तु—

अग्ने विश्वेभिः स्वनीक देवैरूर्णावन्तं प्रथमः
सीद योनिम्। कुलायिनं घृतवन्तꣳ सवित्रे
यज्ञं नय यजमानाय साधु।, इति।

विश्वेभिर्देवैः स्वनीक सर्वेऽपि देवा अस्य सेनारूपास्तादृश हेऽग्ने प्र देवानां मध्ये मुख्यस्त्वं योनिं सीद स्थानं प्राप्नुहि। कीदृशं योनिम्। ऊ वन्तं, यथा कम्बलास्तरणोपेतो देशो मृदुस्तथाऽयं सेव्यस्तादृशं, कुला

1 क. घ. ङ. च. नाभौ।

(पाशुकहौत्रोपयोगिमन्त्राभिधानम्)

यथा पक्षिणां नीडः सम्यङ्निर्मित एवमयमपि तादृशं, घृतवन्तं घृताहुत्याधारभूतम्। यद्वाऽऽहवनीयाख्यं कुलायोपेतं घृताहुतियुक्तं यज्ञं सवित्रेऽनुष्ठात्रे यजमानाय साधु नय सम्यक्समाप्तिं गमय॥

षष्ठमन्त्रमाह—

सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञꣳ सुकृतस्य योनौ। देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयो धाः।, इति।

हे होतर्होमनिष्पादक चिकित्वानभिज्ञस्त्वं स्वकीयस्थान उत्तरवेदिरूपे सीदोपविश, यज्ञं चेमं सुकृतस्य योनौ पुण्यकर्मणो योग्यस्थाने सादय स्थापय। देवान्वेति कामयत इति देवावीर्देवप्रिय इत्यर्थः। तादृशस्त्वं देवान्हविषा यजासि पूजयसि। हेऽग्ने यजमाने बृहद्वयो धा दीर्घमायुः स्थापय॥

सप्तममन्त्रमाह—

नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ असदत्सुदक्षः। अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रंभरः शुचिजिह्वो अग्निः।, इति।

होतृषदने होमनिष्पादकस्य योग्यस्थान उत्तरवेदिरूपेऽयमग्निर्नितरामसदत्सम्यगुपविष्टवान्। कीदृशोऽग्निः। होता देवानामाह्वाता। विदानः स्थानाभिज्ञः। त्वेषो दीप्तिमान्। दीदिवान्देवेभ्यो हविषो दाता। सुदक्षोऽत्यन्तकुशलः। अदब्धव्रतप्रमतिरहिंसिते कर्मणि प्रकृष्टा मतिर्यस्य स तथाविधः। वसिष्ठोऽतिशयेन वासयिता। सहस्रसंख्याकानि हवींषि भरति पोषयतीति सहस्रंभरः। शुचिः शुद्धा होमयोग्या जिह्वा ज्वाला यस्यासौ शुचिजिह्वः॥

अष्टममन्त्रमाह—

त्वं दूतस्त्वमु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता। अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन्दीद्यद्बोधि गोपाः।, इति।

हेऽग्ने त्वं देवानां दूतोऽसि। अग्निर्देवानां दूत आसीदिति श्रुत्यन्तरात्। नः परस्पास्त्वमेवास्माकमतिशयेन पालकः। त्वं वस्यस्त्वमेवास्मिन्कनिवासयोग्यः। हे वृषभ देवश्रेष्ठ, आ प्रणेता त्वमेवाऽऽगत्य यागस्य

प्रवर्तकः, तो(नस्तो)कस्यास्मदपत्यस्य तनूनां तने शरीराणां विस्तारेऽप्र
च्छन्प्रमादमकुर्वन्दीद्यत्तमोनिवारणेन दीपयन्। अथवा देवेभ्यो हविर्दा
गोपाः पालकः सन्बोधि बुध्यस्वाप्रमत्तो भवेत्यर्थः। एतेऽष्टौ मन्त्रा उत्तरवे
प्रत्यग्निप्रणयनकाले होत्रा पठनीयाः॥

अथाग्निमन्थने पञ्च मन्त्राः पठनीयाः। तत्र प्रथमं मन्त्रमाह—

अभि त्वा देव सवितरीशानं वार्या-
णाम्। सदाऽवन्भागमीमहे।, इति।

हे सवितर्देव प्रेरक परमेश्वर वार्याणां निवारणीयानां विघ्नानामीशा
विनिवारणे समर्थं त्वामभि प्राप्तुमिति शेषः। सदाऽवन्सर्वदा हे रक्षक भा
भजनीयमग्निमीमहे त्वत्प्रसादात्प्राप्नुमः॥

अथ द्वितीयो मन्त्रः—

मही द्यौः पृथिवी च न इमं यज्ञं मिमि-
क्षताम्। पिपृतां नो भरीमभिः।, इति।

महती द्यौः पृथिवी चेत्येते उभे नोऽस्मदीयमिमं यज्ञं मिमिक्षतामाज्य
मादिभिर्द्रवद्रव्यैः सेक्तुमिच्छां कुरुताम्। भरीमभिर्भरणैर्नोऽस्मानि
पूरयताम्॥

अथ तृतीयः—

त्वामग्ने पुष्करादध्यथर्वा निरमन्थत।
मूर्ध्नो विश्वस्य वाघतः।, इति।

हेऽग्नेऽथर्वाख्य ऋषिः पुष्करादधि पद्मपत्रस्योपरि त्वां निरमन्थत नि
षेण मथितवान्। अत एव पञ्चमकाण्डे ब्राह्मणमाम्नातम्—"पुष्करपर्णे
मुपाश्रितमविन्दत्" इति। कीदृशात्पुष्करात्। मूर्ध्न उत्तमाङ्गवत्प्रशस्ता
विश्वस्य वाघतः सर्वस्य जगतो वाहकात्। इदं हि पुष्करपर्णमग्निमन्थन
निष्पादनादिद्वारा सर्वं जगन्निर्वहति॥

अथ चतुर्थः—

तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथ-
र्वणः। वृत्रहणं पुरंदरम्।, इति।

हेऽग्नेऽथर्वणः पुत्रो दध्यङ्नामक ऋषिस्तमु त्वेधे तमु त्वां प्रज्वलित

---

१ ख. घ. ङ. च. °न्निवह°।

कीदृशं त्वां, वृत्रहणं वैरिविनाशनं पुरंदरं रुद्ररूपेणासुरसंबन्धिनां त्रयाणां पुराणां विदारयितारम् ॥

अथ पञ्चमः—

तमु त्वा पाथ्यो वृषा समीधे दस्युह-
न्तमम्। धनंजयꣳ रणेरणे।, इति।

हेऽग्ने पाथ्यनामकः कश्चिदृषिस्तमु त्वा समीधे तमेव त्वां सम्यक्प्रज्वलितवान्। कीदृशः पाथ्यः, वृषा श्रेष्ठः। कीदृशं त्वां, दस्युहन्तमं तस्कराणामतिशयेन हन्तारम्। रणेरणे धनंजयं तेषु तेषु सङ्ग्रामेषु धनस्य जेतारम् ॥

अथ वह्नौ जात ऋग्द्वयं होता पठेत्। तत्रेयं प्रथमा—

उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाऽ-
जनि। धनंजयो रणेरणे।, इति।

उत जन्तवः सर्वेऽपि प्राणिनः परस्परमेवं ब्रुवन्तु। किमिति, अग्निरुदजनीति। कीदृशोऽग्निः। वृत्रहा शत्रुघाती, रणेरणे धनंजयश्च ॥

अथ द्वितीया—

आ यꣳ हस्ते न खादिनꣳ शिशुं जातं न
बिभ्रति। विशामग्निꣳ स्वध्वरम्।, इति।

खादिनं हविषां भक्षकम्। यमग्निं हस्ते न पाणाविव कस्मिंश्चित्पात्र आबिभ्रति आ निधानादृत्विजो धारयन्ति। कमिव। जातं शिशुं न सद्यः समुत्पन्नं शिशुमिव। कीदृशमग्निं, विशां स्वध्वरं प्रजानां सम्यगहिंसकम्। तमग्निं पुरतः पश्याम इति शेषः ॥

अस्याग्नेः पूर्वाग्निना सह मेलने प्र देवमित्याद्याः षडृचो होता पठेत्। तत्र प्रथमामाह—

प्र देवं देववीतये भरता वसुवित्तमम्।
आ स्वे योनौ नि षीदतु।, इति।

देववीतये देवानां हविःस्वादनाय देवं दीप्तिमन्तमग्निं भरत हे ऋत्विजः प्रकर्षेण पोषयत। कीदृशं देवं, वसुवित्तममतिशयेन हविर्लक्षणधनाभिज्ञम्। स च देव आगत्य स्वे योनौ पूर्वाग्निरूपे स्वकीये स्थाने निषीदतु नितरामुपसमीपे प्रविष्टो भवतु ॥

द्वितीयामाह—

आ जातं जातवेदसि प्रियꣳ शिशीतातिथिम् । स्योन आ गृहपतिम् ।, इति ।

हे ऋत्विज इदानीं जातं प्रियमतिथिरूपमेनमग्निं पूर्वमेव स्थिते जातवेदसि शिशीत शयानं कुरुत । कीदृशे जातवेदसि । स्योने सुखरूपे । कीदृशं जात आ गृहपतिं सर्वतो गृहस्य पालकम् ॥

तृतीयामाह—

अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यः ।, इति ।

पूर्वसिद्धेनाग्निना सहेदानीमानीतोऽग्निः समिध्यते सम्यक्प्रज्वाल्यते । कीदृशोऽग्निः, कविर्विद्वान् । गृहपतिर्गृहस्य पालयिता । युवा नित्यतरुणः । हव्यं वहतीति हव्यवाट् । जुहूरेवाऽऽस्यं मुखं यस्यासौ जुह्वास्यः ॥

चतुर्थीमाह—

त्वꣳ ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यसे ।, इति ।

हे नूतनाग्ने त्वं पूर्वेणाग्निना सह सम्यक्प्रज्वाल्यसे । कीदृशस्त्वम् । विप्रो ब्राह्मणजात्यभिमानी सन्विनाशराहित्येन सर्वदाऽवस्थितः सखा सखिवदि रस्मिन्नग्नौ प्रीतियुक्तः । कीदृशेनाग्निना, विप्रेण सता सख्या च ॥

पञ्चमीमाह—

तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु । स्वेषु क्षयेषु वाजिनम् ।, इति ।

हे ऋत्विजस्तमिमं मथितमग्निं मर्जयन्त शोधयत । कीदृशं, सुक्रतुं सु क्रतुनिष्पादकम् । आजिषु सङ्ग्रामेषु पुरोयावानं पुरतो गन्तारम् । स्वेषु क्षये यजमानसंबन्धिषु स्वकीयगृहेषु वाजिनमन्नसंपादकम् ॥

षष्ठीमाह—

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः ॥, इति ॥

(पाशुकहौत्रोपयोगिमन्त्राभिधानम्)

देवा देवत्वं प्रेप्सवो यजमाना यज्ञेन यज्ञसाधनेन नूतनेनाग्निना सह यज्ञं यज्ञसाधनं पुरातनमग्निमयजन्त पूजितवन्तः। तानि मिलितानि अग्निद्वय-साध्यानि[धर्माणि] कर्माणि सुकृतानि प्रथमान्यासन्मुख्यान्यभवन्। ते [ह] महिमानस्ते खलु महान्तो यजमाना नाकं सचन्ते स्वर्गं समवयन्ति। यत्र स्वर्गे पूर्वे यजमानाः साध्याः साध्यफलोपेता देवाः सन्ति ये(दे)वा भूत्वा वर्तन्ते, तं नाकं सेव(सच)न्त इति पूर्वत्रान्वयः॥

अत्र विनियोगसंग्रहः—

अथ पाशुकहौत्रस्य शेष औत्तरवेदिके।
अग्निप्रणयने ह्यष्टौ प्र देवमिति मन्त्रकाः॥ १॥
अथाग्निमन्थने पञ्च जाते वह्नावुत द्वयम्।
प्र देऽग्न्योर्मेलने षट्स्युर्मन्त्रा अत्रैकविंशतिः॥ २॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठक एकादशोऽनुवाकः॥ ११॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ १॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे पञ्चमः प्रपाठकः॥ ५॥

---

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराज-परमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपाल-केन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृ-तीयः काण्डः समाप्तः॥ ३॥

---

मूलक्रमेण तृतीयाष्टके—प्र० ९ अ० ९९
भाष्यक्रमेण तृतीयकाण्डे—प्र० ५ अ० ५५
मूलक्रमेणाऽऽदितः समष्ट्यङ्काः—का० ३ प्र० १९ अ० २७६
भाष्यक्रमेणाऽऽदितः समष्ट्यङ्काः—का० ३ प्र० १५ अ० २७१

## अथ सभाष्यसपदपाठकृष्णयजुर्वेदीयतैत्तिरीयसंहितायां
# चतुर्थं काण्डम् ।

( तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः । )

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
तृतीयकाण्डे सोमस्य शेषः प्रायेण वर्णितः ।
चतुर्थे त्वग्निचित्यङ्गमन्त्राणां पाठ ईर्यते ॥ २ ॥
अवान्तरविशेषास्तु[1] विनियोगे[2] प्रदर्शिताः ।
चतुर्थकाण्डमग्न्याख्यं सप्तभिः पाठकैर्युतम् ॥ ३ ॥
उखासंभरणे मन्त्राः प्रथमे पाठके श्रुताः ।
एकादशानुवाकाः स्युस्तदर्थाः[3] स्युः क्रमादमी ॥ ४ ॥
अभ्र्यादानं मृदाक्रान्तिः खननं हरणं तथा ।
उखानिर्माणसंस्कारौ सामिधेन्यस्तथाऽऽप्रियः ॥
अग्न्युत्पादो धारणं च याज्या इत्यनुवाकगाः ॥ ५ ॥ इति[4] ॥

( इति भाष्यकारोपोद्घातः । )

( अथ कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थोऽष्टकः । )

( तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः । )

हरिः ॐ ।

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः । अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याऽभरत् । युक्त्वाय मनसा देवान्त्सुवर्यतो धिया दिवम् । बृहज्ज्योतिः करिष्यतः सविता प्र

---

१ ख. च. °शेषस्तु । २ ख. च. °गेषु दर्शितः । च° । ३ ख. च. °दर्थास्तु क° । ४ घ. ङ. । अत्रा° ।

सुवाति तान् । युक्तेन मनसा वयं देवस्य सवितुः सवे । सुवर्गेयाय शक्त्यै । युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इत् (१) मही देवस्य सवितुः परिष्टुतिः । युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोका यन्ति पथ्येव सूराः । शृण्वन्ति विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः । यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमर्चतः । यः पार्थिवानि विममे स एतशो रजाꣳसि देवः सविता महित्वना । देव सवितः प्र सुव यज्ञं प्रसुव (२) यज्ञपतिं भगाय दिव्यो गन्धर्वः । केतपूः केतं नः पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः । इमं नो देव सवितर्यज्ञं प्र सुव देवायुवꣳ सखिविदꣳ सत्राजितं धनजितꣳ सुवर्जितम् । ऋचा स्तोमꣳ समर्धय गायत्रेण रथंतरम् । बृहद्गायत्रवर्तनि । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण छन्दसाऽऽददेऽङ्गिरस्वदभ्रिरसि नारिः (३) असि पृ-

थिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदा भर त्रैष्टुभेन त्वा छन्दसाऽऽ ददेऽङ्गिरस्वद्बभ्रिरसि नारिरसि त्वया वयꣳ सधस्थ आऽग्निꣳ शकेम खनितुं पुरीष्यं जागतेन त्वा छन्दसाऽऽ ददेऽङ्गिरस्वद्धस्त आधाय सविता बिभ्रदभ्रिꣳ हिरण्ययीम् । तया ज्योतिरजस्रमिदग्निं खात्वी न आ भराऽऽनुष्टुभेन त्वा छन्दसाऽऽ ददेऽङ्गिरस्वत् (४) ॥

(इयज्ञं प्र सुव नारिरानुष्टुभेन त्वा छन्दसा त्रीणि च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

(अथ कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थोऽष्टकः ।)

---

(तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः ।)

---

हरिः ॐ ।

युञ्जानः । प्रथमम् । मनः । तत्वाय । सविता । धियः । अग्निम् । ज्योतिः । निचाय्येति नि—चाय्य । पृथिव्याः । अधि । एति । अभरत् । युक्त्वाय । मनसा । देवान् । सुवः । यतः । धिया । दिवम् ।

बृहत् । ज्योतिः । करिष्यतः । सविता । प्रेति । सुवाति । तान् । युक्तेन । मनसा । वयम् । देवस्य । सवितुः । सवे । सुवर्गेयायेति सुवः—गेयाय । शक्त्यै । युञ्जते । मनः । उत । युञ्जते । धियः । विप्राः । विप्रस्य । बृहतः । विपश्चितः । वीति । होत्राः । दधे । वयुनाविदिति वयुन—वित् । एकः । इत् ( १ ) । मही । देवस्य । सवितुः । परिष्टुतिरिति परि—स्तुतिः । युजे । वाम् । ब्रह्म । पूर्व्यम् । नमोभिरिति नमः—भिः । वीति । श्लोकाः । यन्ति । पथ्या । इव । सूराः । शृण्वन्ति । विश्वे । अमृतस्य । पुत्राः । एति । ये । धामानि । दिव्यानि । तस्थुः । यस्य । प्रयाणमिति प्र—यानम् । अन्विति । अन्ये । इत् । ययुः । देवाः । देवस्य । महिमानम् । अर्चतः । यः । पार्थिवानि । विमम इति वि—ममे । सः । एतशः । रजांसि । देवः । सविता । महित्वनेति महि—त्वना । देव । सवितः । प्रेति । सुव । यज्ञम् । प्रेति । सुव ( २ ) । यज्ञपतिमिति यज्ञ—पतिम् । भगाय । दिव्यः । गन्धर्वः । केतपूरिति केत—पूः । केतम् । नः । पुनातु । वाचः । पतिः । वाचम् । अद्य । स्वदाति । नः । इमम् ।

नः। देव। सवितः। यज्ञम्। प्रेति। सुव। देवायुवमिति देव—युवम्। सखिविदमिति सखि—विदम्। सत्राजितमिति सत्र—जितम्। धनजितमिति धन—जितम्। सुवर्जितमिति सुवः—जितम्। ऋचा। स्तोमम्। समिति। अर्धय। गायत्रेण। रथंतरमिति रथं—तरम्। बृहत्। गायत्रवर्तनीति गायत्र—वर्तनि। देवस्य। त्वा। सवितुः। प्रसव इति प्र—सवे। अश्विनोः। बाहुभ्यामिति बाहु—भ्याम्। पूष्णः। हस्ताभ्याम्। गायत्रेण। छन्दसा। एति। ददे। अङ्गिरस्वत्। अभ्रिः। असि। नारिः (३)। असि। पृथिव्याः। सधस्थादिति सध—स्थात्। अग्निम्। पुरीष्यम्। अङ्गिरस्वत्। एति। भर। त्रैष्टुभेन। त्वा। छन्दसा। एति। ददे। अङ्गिरस्वत्। बभ्रिः। असि। नारिः। असि। त्वया। वयम्। सधस्थ इति सध—स्थे। एति। अग्निम्। शकेम। खनितुम्। पुरीष्यम्। जागतेन। त्वा। छन्दसा। एति। ददे। अङ्गिरस्वत्। हस्ते। आधायेत्या—धाय। सविता। बिभ्रत्। अभ्रिम्। हिरण्ययीम्। तया। ज्योतिः। अजस्रम्। इत्। अग्निम्। खात्वी। नः।

एतिं । भर । आनुंष्टुभेनेत्यानुं—स्तुभेन । त्वा । छन्दंसा ।
एतिं । दुदे । अङ्गिरस्वत् ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके
प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

तत्राभ्यादानप्रतिपादके प्रथमानुवाके प्रथमं तावद्धोममन्त्रा उच्यन्ते ।
कल्पः—“जुह्वामष्टगृहीतं गृहीत्वा युञ्जानः प्रथमं मन इति यजुरष्टमा
ऋग्भिरेकामाहुतिं जुहोति” इति ।

तत्र प्रथमामृचमाह—

युञ्जानः प्रथमं मनस्तत्वाय सविता
धियः । अग्निं ज्योतिर्निचाय्य
पृथिव्या अध्याऽभरत् । , इति ।

सविता प्रेरकः परमेश्वरः प्रथममग्निचयनविषये मनो युञ्जानः समादधानः
धिय इष्टकादिविषयाणि ज्ञानानि तत्वाय तनित्वा विस्तार्याग्निं ज्योतिर्नि
चाय्य चीयमानमग्निं सफलानां कर्मणां प्रकाशनसाधनभूतं निश्चित्य पृथि
अध्याभरद्भूमेरुपर्यानीतवान् । अनन्तरं तमग्निमुखालक्षणपृथिव्यां स्थाप
खानिर्माणादाविमं होमं करोमीति भावः ॥

अथ द्वितीयामाह—

युक्त्वाय मनसा देवान्त्सुवर्यतो धिया
दिवम् । बृहज्ज्योतिः करिष्यतः
सविता प्र सुवाति तान् । , इति ।

सविता तानिन्द्रियविशेषान्प्रकर्षेण सुवाति प्रेरयाति । किं कृत्वा, दे
डापरत्वेन चपलानिन्द्रियविशेषान्मनसा युक्त्वाय विषयेभ्यो नियम्य ।
शानिन्द्रियविशेषान्, सुवर्यतः स्वर्गं गच्छतः स्वर्गप्राप्त्यर्थमुद्यतानि
बृहज्ज्योतिः प्रौढं चीयमानमग्निं धिया दिवं करिष्यतस्तत्तदिष्टकादि
प्रज्ञया द्योतमानं कर्तुमुद्यतान् ॥

---

१ घ. ङ. 'कावि' । २ ख. च. 'रदा हतवान्भूमे' । ३ ख. च. 'न्' । तदनन्तरम्
च. 'क्षणं पृ' । ५ ख. च. 'रोतीति' ।

(अग्न्यादानाभिधानम्)

अथ तृतीयामाह—

युक्तेन मनसा वयं देवस्य सवितुः
सवे। सुवर्गेयाय शक्त्यै।, इति।

यस्मात्पूर्वोक्तरीत्या सवितेन्द्रियाणि प्रेरयति तस्माद्वयं सवितुर्देवस्य प्रेरणे सति युक्तेन विषयेभ्यो नियमितेन मनसा सुवर्गेयाय स्वर्गलोके गीयमानस्याग्नेः संपादनाय शक्त्यै शक्ता भूयास्मेति शेषः ॥

अथ चतुर्थीमाह—

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य
बृहतो विपश्चितः। वि होत्रा दधे वयुना-
विदेक इन्मही देवस्य सवितुः परिष्टुतिः।,इति।

विप्रस्य ब्राह्मणस्य यजमानस्य संबन्धिनो विप्रा ऋत्विजो मनो युञ्जते प्रथमं स्वकीयं मनो विषयेभ्यो निवर्त्य समाहितं कुर्वन्ति। उतापि च धिय इष्टकादिविषयज्ञानानि युञ्जते संपादयन्ति। कीदृशस्य विप्रस्य, बृहतः प्रभूताग्निचयनोद्योगेनाभिवृद्धस्य विपश्चितो विदुषः प्रयोगाभिज्ञस्य। कीदृशा विप्राः। होत्रा होमशीलाः कर्मण्यालस्यरहिता इत्यर्थः। एक इदेक एव सविता विदधे सर्वमिदं निर्मितवान्। कीदृशः सविता। वयुनावित्, ऋत्विग्यजमानाभिप्रायाभिज्ञः। कथमेक एव सर्वमिदं कृतवानिति न विस्मेतव्यम्। यतः सवितुर्देवस्य परिष्टुतिर्मही परितः सर्वेषु वेदेषु श्रूयमाणा स्तुतिर्महती ॥

अथ पञ्चमीमाह—

युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोका यन्ति
पथ्येव सूराः। शृण्वन्ति विश्वे अमृतस्य पुत्रा
आ ये धामानि दिव्यानि तस्थुः।, इति।

यजमानः पत्नी चेत्येतौ हे दंपती वां युवयोरर्थे पूर्व्यं पुरातनैर्महर्षिभिरनुष्ठितं ब्रह्म परिवृढमग्निचयनाख्यं कर्म नमोभिर्नमस्कारपूर्वकैरिष्टकोपधानादिभिर्युजे संपादयामि। तस्मिन्संपादिते सति श्लोका यजमानस्य कीर्तयो वियन्ति भूमौ विविधं प्रसरन्ति। तत्र दृष्टान्तः—पथ्या सूरा इव गीर्वाणमा-

१ ख. च. °पयाणि ज्ञा°। २ ख. घ. ङ. च. देवेषु। ३ क. घ. ङ. °रिढं। ४ क. घ. ङ. पथ्याः।

र्गेऽन्तरिक्षे सूर्यरश्मयो यथा प्रसरन्ति तद्वत् । किंच । अमृतस्य प्रजापतेः पुत्रा ये देवा दिव्यानि धामान्यातस्थुः प्राप्तवन्तस्तेऽपि विश्वे सर्वे शृण्वन्ति यजमानस्य कीर्तिमिति शेषः ॥

अथ षष्ठीमाह—

यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमर्चतः । यः पार्थिवानि विममे स एतशो रजाꣳसि देवः सविता महित्वना ।, इति ।

यस्य सवितुः प्रयाणं प्रवृत्तिमन्ये सर्वे देवा अनुययुरिदवश्यमनुगच्छन्त्येव । किं कुर्वन्तः । अस्य देवस्य महिमानमर्चतोऽर्चयन्तः । किं च, यः सविता पार्थिवानि रजांसि विममे पृथिवीगतान्परमाणून्विशेषेण गणयित्वा निश्चितवान्स सविता देवो महित्वना महत्त्वेनैतशो व्याप्तवानेति सर्वत्र गच्छतीत्येतशः ।

अथ सप्तमीमाह—

देव सवितः प्र सुव यज्ञं प्र सुव यज्ञपतिं भगाय दिव्यो गन्धर्वः । केतपूः केतं नः पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः ।, इति ।

हे सवितर्देव यज्ञं प्रसुव प्रकर्षेण प्रेरय, यज्ञपतिं यजमानं च प्रसुव । किमर्थम् । भगाय सौभाग्याय । दिव्यो दिवि स्वर्गे भवः कश्चिद्गन्धर्वः केतपूः केतं परकीयचित्ते वर्तमानं ज्ञानं पुनाति शोधयतीति केतपूः । स च नोऽस्माकं केतं चित्तवर्तिज्ञानं पुनातु भ्रान्तिपरिहारेण शोधयतु । वाचस्पतिरद्यास्मिन्कर्मणि नोऽस्मदीयां वाचं स्वदाति स्वदयतु ॥

इत्थमृचः सप्तोक्त्वाऽष्टमं यजुराह—

इमं नो देव सवितर्यज्ञं प्र सुव देवायुवꣳ सखिविदꣳ सत्राजितं धनजितꣳ सुवर्जितम् ।, इति ।

हे सवितर्देव नोऽस्मदीयमिमं यज्ञं प्रसुव । कीदृशं, देवैर्यौति मिश्रीभवतीति देवायुस्तं देवायुवं, सखायं स्वनिष्पादकं यजमानं वेत्तीति सखिवित्तम् । सत्राणि द्वादशाहादीनि जयति वशी करोतीति सत्राजित्तम् ।

१ ख. च. 'न्ये दे' ।

हि चीयमानमग्निमपेक्षन्ते। धनं जयति फलरूपेण संपादयतीति धनजित्त्वं, सुवः स्वर्गं जयति फलरूपेण संपादयतीति सुवर्जित्त्वम् ॥

अग्निचयनार्थानां चतुर्थकाण्डगतानां मन्त्राणां पञ्चमकाण्डे क्रमेणैव ब्राह्मणमाम्नातम्। तत्राऽऽदौ युञ्जान इत्यादिभिर्मन्त्रैर्होमं विधत्ते—

" सावित्राणि जुहोति प्रसूत्यै " [ सं० का० ५ प्र० १ अ० १ ] इति। सविता येषु मन्त्रेषु प्रतीयते तानि सावित्राणि, तैर्होमे सति यजमानं सविता कर्मणि प्रसौति ॥

द्रव्यं विधत्ते—

" चतुर्गृहीतेन जुहोति चतुष्पादः पशवः पशूनेवाव रुन्धे " [ सं० का० ५ प्र० १ अ० १ ] इति ॥

चतुःसंख्यां पुनः प्रशंसति—

" चतस्रो दिशो दिक्ष्वेव प्रतितिष्ठति " [ सं० का० ५ प्र० १ अ० १ ] इति ॥

पुनरपि प्रकारान्तरेण प्रशंसति—

" छन्दाꣳसि देवेभ्योऽपाक्रामन्न वोऽभागानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुर्गृहीतमधारयन्पुरोनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुर्गृहीतं जुहोति छन्दाꣳस्येव तत्प्रीणाति तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्ति " [ सं० का० ५ प्र० १ अ० १ ] इति।

नानाविधच्छन्दोयुक्तपुरोनुवाक्याद्यभिमानिनो देवा हविर्भाग्भ्यो देवेभ्योऽपरक्ताः सन्तोऽन्यत्रागच्छन्। किं ब्रुवन्तो गता इति, तदुच्यते—हे देवा भागरहितानि वयं छन्दांसि वो युष्मदीयानि हवींषि न वक्ष्यामो हविर्वहनं न करिष्याम इति ब्रुवन्तः। तदानीं देवा विचार्य होमकाले यच्चतुर्ग्रहणं तच्छन्दसां प्रीतिकरं भवत्विति तेषां भागमकल्पयन्। तत्र प्रथमग्रहणं पुरोनुवाक्याख्याया गायत्रीदेवतायास्तुष्टिकरं, द्वितीयग्रहणं याज्याख्यायास्त्रिष्टुब्देवतायास्तुष्टिकरं, तृतीयग्रहणं देवताख्याया जगतीदेवतायास्तुष्टिकरं, चतुर्थग्रहणं वषट्काराख्याया अनुष्टुब्देवतायास्तुष्टिकरम्। अतश्चतुर्गृहीतेन होमे सति च्छन्दोदेवताः प्रीणयति। ताश्च प्रीताः सत्यो हव्यं वहन्ति। सूत्रकारेण तु शाखान्तरमाश्रित्याष्टगृहीतत्वमुक्तम् ॥

अत्रेदं चिन्तनीयं—किमेकैकं मन्त्रमुच्चार्य जुहुयात्, आहोस्वित्सर्वाणि [1]मन्त्राण्यु(?) चार्येति। तत्र हेयोपादेयावुभौ पक्षौ क्रमेण दर्शयति—

१ ख. च. 'तमित्युक्त'।

"यं कामयेत पापीयान्त्स्यादित्येकैकं तस्य जुहुयादाहुतीभिरेवैनम
गृह्णाति पापीयान्भवति यं कामयेत वसीयान्त्स्यादिति सर्वाणि तस्यानु
जुहुयादाहुत्यैवैनमभि क्रमयति वसीयान्भवत्यथो यज्ञस्यैवैषाऽभिक्रान्तिः
[ सं० का० ५ प्र० १ अ० १ ] इति।

पापीयानतिशयेन पापो दरिद्र इत्यर्थः। एकैकं मन्त्रमुच्चार्य होमे म
संश्लेषाभावात्परस्परमपरक्ताभिराहुतीभिरेनं यजमानमपगृह्णाति धना
करोति। ततो दरिद्रो भवति। वसीयान्वसुमत्तरः। सर्वाण्युच्चार्य होमे
मन्त्राणां परस्परसंश्लेषादेकयैवाऽऽहुत्या यजमानमभिक्रमयति अभि
करोति। ततो धनिको भवति। अपि च येयमभिक्रमणहेतुरेकाऽऽहुतिर
यज्ञस्यैवाग्निचयनरूपस्यैवाभिक्रान्तिः स्वाधीनो यज्ञो भवति ॥

मन्त्रगतामष्टसंख्यां प्रशंसति—

"एति वा एष यज्ञमुखादृद्ध्या योऽग्नेर्देवताया एत्यष्टावेतानि सावित्रा
भवन्त्यष्टाक्षरा गायत्री गायत्रोऽग्निस्तेनैव यज्ञमुखादृद्ध्या अग्नेर्देवतायै नैति
[ सं० का० ५ प्र० १ अ० १ ] इति।

यो यजमानोऽग्निरूपाया देवताया एत्यपगच्छति एष यजमानो य
पक्रमादारभ्य यज्ञफलरूपाया ऋद्ध्या एत्यपगच्छति। अग्निर्वै यज्ञमुख
श्रुत्यन्तरादग्नेरपगम एव यज्ञमुखादपगमः। कस्तर्ह्यग्नेः सकाशादपगमस्य परि
इति, तदुच्यते—प्रारम्भे सावित्राणां मन्त्राणामष्टत्वे सत्यष्टाक्षरा गा
संपद्यते। अग्निश्च गायत्रः, उभयोर्मुखजन्यत्वात्। ततो गायत्रीसंपत्तिरे
ग्निसंपत्तिरिति यज्ञमुखादग्निरूपादनपेतः सन्समृद्धेरपि नापैति ॥

अष्टमन्त्रोपेतामेकामाहुतिं प्रशंसति—

"अष्टौ सावित्राणि भवन्त्याहुतिर्नवमी त्रिवृतमेव यज्ञमुखे वि द
यति" [ सं० का० ५ प्र० १ अ० १ ] इति।

त्रिवृत्स्तोमे तृचो नवसंख्याका अतोऽत्राष्टमन्त्रविशिष्टाहुतिगतया न
ख्यया त्रिवृत्स्तोममेव यज्ञमुखे वियातयति विशेषेण प्रसारितवान्भवति ॥

अत्रेदमपरं चिन्तनीयम्। किमृग्रूपान्षण्मन्त्रानुच्चार्येमं नो देव सवित
यजुः सप्तमं कृत्वा पश्चाद्देव सवितरित्यृचमन्तिमां कुर्यात्। किं वै
सप्तमीं कृत्वा तद्यजुरन्तिमं कुर्यादिति। तत्र हेयोपादेयपक्षौ क्रमेण दर्शय

"यदि कामयेत छन्दाꣳसि यज्ञयशसेनार्पयेयमित्यृचमन्तमां कुर्या
न्दाꣳस्येव यज्ञयशसेनार्पयति यदि कामयेत यजमानं यज्ञयशसेनार्पयेय

१ क. घ. ङ. 'पस्याऽऽका'। २ ख. च. 'वान्तिमं।

यजुरन्तमं कुर्याद्यजमानमेव यज्ञयशसेनार्पयति" [सं० का० ५ प्र० १ अ० १] इति।

यज्ञयशसं यज्ञफलमर्पयेयं संयोजयेयम्। छन्दोबद्धाया ऋचस्त्वन्तिमत्वे यज्ञफलं छन्दःसु गच्छेत्। यजुषस्तु च्छन्दोरहितत्वेन यज्ञफलं छन्दोगामि न भवति, किंतु यजमानगाम्येव भवति। तस्माद्यजुरेवान्तमं कुर्यादित्यर्थः॥

कल्पः—"ऋचा स्तोमꣳ समर्धयेत्यपरं चतुर्गृहीतं गृहीत्वा" इति। जुहोतीत्यनुवर्तते।

पाठस्तु—

ऋचा स्तोमꣳ समर्धय गायत्रेण रथंतरम्। बृहद्गायत्रवर्तनि।, इति।

हेऽग्ने स्तोत्रहेतुसामाधारभूतयर्चा स्तोमं स्तोत्रमृगावृत्तिरूपं संघातं वा समर्धय समृद्धं कुरु। गायत्रेण साम्ना सह रथंतरं साम समर्धय। गायत्रसामैव वर्तनी मार्गो यस्य बृहत्साम्नस्तद्गायत्रवर्तनि, गायत्रसामसहितं बृहत्साम समर्धय॥

अस्मिन्मन्त्रे समर्धयेति पदस्य तात्पर्यं दर्शयति—

"ऋचा स्तोमꣳ समर्धयेत्याह समृद्ध्यै" [सं० का० ५ प्र० १ अ० १] इति॥

कल्पः—"देवस्य त्वा सवितुः प्रसव इति चतुर्भिरभ्रिमादत्ते वैणवीं कल्माषीं सुषिरामसुषिरां वोभयतःक्ष्णूमन्यतरतःक्ष्णूं वा प्रादेशमात्रीमरत्निमात्रीं व्याममात्रीमपरिमितां वा" इति।

पाठस्तु—

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण छन्दसाऽऽ ददेऽङ्गिरस्वदभ्रिरसि नारिरसि पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदा भर त्रैष्टुभेन त्वा छन्दसाऽऽ ददेऽङ्गिरस्वद्भ्रिरसि नारिरसि त्वया वयꣳ सधस्थ आऽग्निꣳ शकेम खनितुं पुरीष्यं जागतेन

---

१ ख. च. °वान्तिमं। २ ख. च. °त्रसा°।

त्वा छन्दसाऽऽ ददेऽङ्गिरस्वद्धस्त आधाय स-
विता बिभ्रदभ्रिꣳ हिरण्ययीम्। तया ज्योति-
रजस्रमिदग्निं खात्वी न आ भराऽऽनुष्टुभेन
त्वा छन्दसाऽऽ ददेऽङ्गिरस्वत् ॥ , इति ॥

अत्रोखां निर्मातुं मृत्खननीया । खननहेतुः काष्ठविशेषोऽभ्रिः। हेऽभ्रे सवितुर्देवस्य प्रेरणे सत्यश्विनोः संबन्धिभ्यां मणिबन्धपर्यन्ताभ्यां बाहुभ्यां पूष्णः संबन्धिभ्यां साङ्गुलिभ्यां हस्ताभ्यां साधनभूताभ्यां सहायभूतेन गायत्रेण च्छन्दसा युक्तः संस्त्वामाददे स्त्री करोमि। तत्र दृष्टान्तः—अङ्गिरस्वदङ्गिरस ऋषयः पूर्वं यथा स्वीकृतवन्तस्तद्वत्। त्वं चाभ्रिरसि खननहेतुः काष्ठविशेषोऽसि। तथा नारिरसि न विद्यतेऽरिर्यस्यास्तत्र सेयं नारिः खननकाले पाषाणादिना तव नास्ति कुण्ठीभाव इत्यर्थः। अङ्गिरस्वच्छब्देन प्रथमयजुः समाप्तत्वादभ्रिरसीत्यादिकं द्वितीयं यजुः। शत्रुरहिते हेऽभ्रे पृथिव्याः सधस्थादुत्सङ्गात्पुरीष्यमग्निमाभर। पुरीषशब्देन पांसुरूपा शुष्का मृदुच्यते, तदर्हतीति पुरीष्योऽग्निः। मृदमादायोखां कृत्वा तस्यामग्निरवस्थाप्यते। अतो मृदग्न्योरभेदोपचारेण मृदाहरणमेवाग्न्याहरणमिति विवक्षितत्वात्पुरीष्यमग्निमाहरेत्युच्यते। अयं चोपचारोऽग्निचयनप्रकरणे सर्वत्रानुवर्तिष्यते।

अत एव पञ्चमकाण्डान्ते चोद्यपरिहारौ भविष्यतः—

“ब्रह्मवादिनो वदन्ति यन्मृदा चाद्भिश्चाग्निश्चीयतेऽथ कस्मादग्निरुच्यत इति यच्छन्दोभिश्चिनोत्यग्नयो वै छन्दाꣳसि तस्मादग्निरुच्यते” [ सं० का० ५ प्र० ७ अ० ९ ] इति।

अतः पांसुरूपमग्निमाहर्तुं त्रैष्टुभेन च्छन्दसा सहकारिणा युक्तस्त्वामाददे अङ्गिरस्वदिति दृष्टान्तः पूर्ववत्। मृदाहरणेऽभ्र्यादाने च दृष्टान्तत्वाय द्विरङ्गिरस्वदित्युक्तम्। अथ तृतीयं यजुरुच्यते। हेऽभ्रे त्वं बभ्रिर्भरणकुशला मृत्संपादनकुशलाऽसि। नारिरसीति पूर्ववत्। त्वया युक्ता वयं सधस्थे पृथिव्या उत्सङ्ग आ समन्तादग्निं पुरीष्यं खनितुं शकेम शक्ता भवेम। अतो जागतेन च्छन्दसा सहकारिणा युक्तस्त्वामाददे। अङ्गिरस्वदिति दृष्टान्तः पूर्ववत्। अथ चतुर्थं यजुरुच्यते। सविता प्रेरकः परमेश्वरः पुरा हिरण्ययीं सुवर्णनिर्मितामभ्रिं हस्ते स्थापयित्वा बिभ्रत्पोषितवान्। अतस्तया हिरण्मय्या युक्ता त्वमजस्रमित्सर्वदैव ज्योतिः प्रकाशमानमग्निं खात्वी, अग्नित्वेनोप-

१ ख. च. 'क्षित्वा पुरी'। २ ख. 'रण्यय्याऽभ्र्या। ३ ख. च. युक्तस्त्वम्'।

(अभ्र्यादानाभिधानम्)

रितां मृदं खनित्वा नोऽस्मदर्थमाभराऽऽनय । आनुष्टुभेन च्छन्दसा सहकारिणा युक्तोऽहं त्वामाददे । अङ्गिरस्वदिति दृष्टान्तः पूर्ववत् ॥

एतैर्मन्त्रैरभ्र्यादानं विधत्ते—

" चतुर्भिरभ्रिमा दत्ते चत्वारि छन्दाꣳसि छन्दोभिरेव " [ सं० का० ५ प्र० १ अ० १ ] इति ।

गायत्री त्रिष्टुब्जगत्यनुष्टुबिति च्छन्दसां चतुष्टयम् । मन्त्रेषु तेषां सहकारित्वेनाभिधानाच्छन्दोभिरेवाभ्रेरादानं कृतवान्भवति ॥

मन्त्रे प्रसवशब्दस्याभिप्रायं दर्शयति—

" देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै " [ सं० का० ५ प्र० १ अ० १ ] इति ॥

वंशनिर्मिताया अभ्रेरन्तःसुषिरत्वं विधत्ते—

" अग्निर्देवेभ्यो निलायत स वेणुं प्राविशत्स एतामूतिमनु समचरद्वेणोः सुषिरꣳ सुषिराऽभ्रिर्भवति सयोनित्वाय " [ सं० का० ५ प्र० १ अ० १ ] इति ।

पुरा कदाचित्केनापि निमित्तेनापरक्तोऽग्निर्देवेभ्यो निरगच्छन्निर्गत्य देवानां दर्शनं वारयितुं वेणुं प्राविशत् । वेणोर्मध्ये सुषिरं स्थानं यदस्त्येषैव मूषिकस्य भूबिलवदूतिस्तामेतामूतिं वेणुमध्यगतच्छिद्ररूपामनुक्रमेण सम्यगचरत् । अतोऽग्नेः सुषिरवेणुप्रियत्वादभ्रिः सुषिरा कार्या । तच्च सुषिरत्वं सयोनित्वाय संपद्यते । योनिरग्नेः स्थानं तत्सहितत्वं सयोनित्वम् ॥

अथाभ्रेः कृष्णबिन्दुलाञ्छितत्वं विधत्ते—

" स यत्रयत्रावसत्तत्कृष्णमभवत्कल्माषी भवति रूपसमृद्ध्यै " [ सं० का० ५ प्र० १ अ० १ ] इति ।

वेणुमध्ये संचरन्नग्निर्यस्मिन्यस्मिन्स्थाने[1] वासमकरोत्तत्स्थानं दाहेन कृष्णमभवत् । अतोऽग्निनिवासद्योतनायाभ्रिः कल्माषी कृष्णबिन्दुलाञ्छिता कर्तव्या । तथा सत्यभ्रिरूपस्य चित्रत्वात्समृद्धिर्दृश्यते । यजमानस्य च रूपसमृद्धिर्भवति ॥

अभ्रेरुभयोरन्तयोस्तीक्ष्णत्वं विधत्ते—

" उभयतःक्ष्णूर्भवतीतश्चामुतश्चार्कस्यावरुद्ध्यै "[ सं० का० ५ प्र० १ अ० १ ] इति ।

क्ष्णु तेजन इत्यस्माद्धातोरुत्पन्नः क्ष्णुशब्दस्तीक्ष्णत्वमाचष्टे । उभयोरग्रमूल-

---

१ क. घ. ङ. 'ने बिलम्' ।

योस्तीक्ष्णाभ्रिरुभयतः॑क्ष्णूस्तादृशी कार्या । तदेतदुभयतस्तीक्ष्णत्वमितश्चा
तश्च लोकद्वयेऽप्यर्कस्यावरुद्ध्यै पूजायाः संपत्त्यै भवति ॥

अभ्रेर्दैर्घ्यपरिमाणं विधत्ते—

" व्याममात्री भवत्येतावद्वै पुरुषे वीर्यं वीर्यसंमिता " [ सं० का० ५ प्र०
१ अ० १ ] इति ।

चतुर्भिररत्निभिस्तुल्यो व्यामः । एतावती कार्या । उत्थिते पुरुषे वीर्यं
तावदेव । अत इयं वीर्यसंमिता भवति ॥

पक्षान्तरं विधत्ते—

" अपरिमिता भवत्यपरिमितस्यावरुद्ध्यै " [ सं० का० ५ प्र० १ अ०
१ ] इति ।

नियतपरिमाणरहितत्वमपरिमितत्वम् । तच्चापरिमितस्य बहुलस्यान्नादेः
संपत्त्यै भवति ॥

तादृश्या अभ्रेर्वेणुकार्यत्वं विधत्ते—

" यो वनस्पतीनां फलग्रहिः स एषां वीर्यावान्फलग्रहिर्वेणुर्वैणवी भवति
वीर्यस्यावरुद्ध्यै " [ सं० का० ५ प्र० १ अ० १ ] इति ।

फलानि बहूनि गृह्णातीति फलग्रहिः । वनस्पतीनां मध्ये यः फलग्रहिरस्ति
एषां फलग्रहीणामपि मध्ये स वेणुरतिशयेन फलग्रहिः । व्रीह्याद्यग्रवद्वेणुः
समाप्तिसंवत्सरे गोधूमसदृशैर्बहुभिर्बीजैरुपेतत्वात् । त्वचि सारोपेतत्वेन वीर्य-
वांश्च । तस्मादियमभ्रिर्वैणवी कार्या । तच्च वैणवत्वं वीर्यसंपत्त्यै भवति ॥

अत्र विनियोगसंग्रहः—

युञ्जाष्टकेनैकहोम ऋचा स्तोमं पुनर्हुतिः ।
देवेत्यभ्रिं चतुष्केणाऽऽदत्ते मन्त्रास्त्रयोदश ॥ १ ॥

अथ मीमांसा ।

द्वादशाध्यायस्य तृतीयपादे चिन्तितम्—

चतुर्भिराभ्रिमित्यत्र विकल्पो वा समुच्चयः ।
विकल्पः पूर्ववन्मैवं समूहे करणत्वतः ॥

अग्नौ श्रूयते—" चतुर्भिरभ्रिमादत्ते " इति । अत्र पूर्वोक्तविभागमन्त्रवत्प्र-
तिमन्त्रं पृथक्करणत्वं नास्ति, चतुःसंख्यया समूहे करणत्वप्रतीतेः । तस्मान्मन्त्राणां
कर्मसंनिपातस्य बाधेनैव समुच्चयः स्यात् । न च पूर्वस्यैकैकमन्त्रस्यान्ते संनि-

१ क. घ. ङ. °तःक्ष्णुस्ता° । २ क. घ. ङ. °स्यैक° ।

(मृदाक्रान्त्यभिधानम्)

पतिन[1](नै) [व समुच्चयः] स्यादिति शङ्कनीयम्। वाचनिकसंख्यया न्यायसिद्धस्य तस्य बाधितत्वात्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः॥ १॥

---

(अथ चतुर्थाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः।)

---

इमामगृभ्णन्रशनामृतस्य पूर्व आयुंषि विदथेषु कव्या। तया देवाः सुतमा बभूवुर्ऋतस्य सामन्त्सरमारपन्ती। प्रतूर्तं वाजिन्ना द्रव वरिष्ठामनु संवतम्। दिवि ते जन्म परममन्तरिक्षे नाभिः पृथिव्यामधि योनिः। युञ्जाथाः रासभं युवमस्मिन्यामे वृषण्वसू। अग्निं भरन्तमस्मयुम्। योगेयोगे तवस्तरं वाजेवाजे हवामहे। सखाय इन्द्रमूतये। प्रतूर्वन् (१) एह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यान्मयोभूरेहि। उर्वन्तरिक्षमन्विहि स्वस्तिगव्यूतिरभयानि कृण्वन्। पूष्णा सयुजा सह। पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदच्छेह्यग्निं पुरीष्यमङ्गिरस्वदच्छेमोऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामोऽग्निं पुरीष्यमङ्गिरस्वद्भरामः। अन्व-

---

१ क. घ. ङ. पातो न।

ग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः। अनु सूर्यस्य (२) पुरुत्रा च रश्मीननु द्यावापृथिवी आ ततान । आगत्य वाज्यध्वनः सर्वा मृधो वि धूनुते। अग्निꣳ सधस्थे महति चक्षुषा नि चिकीषते। आक्रम्य वाजिन्पृथिवीमग्निमिच्छ रुचा त्वम्। भूम्या वृत्वाय नो ब्रूहि यतः खनाम तं वयम्। द्यौस्ते पृष्ठं पृथिवी सधस्थमात्माऽन्तरिक्षꣳ समुद्रस्ते योनिः। विख्याय चक्षुषा त्वमभि तिष्ठ (३) पृतन्यतः। उत्क्राम महते सौभगायास्मादास्थानाद्द्रविणोदा वाजिन्। वयꣳ स्याम सुमतौ पृथिव्या अग्निं खनिष्यन्त उपस्थे अस्याः। उदक्रमीद्द्रविणोदा वाज्यर्वाऽकः स लोकꣳ सुकृतं पृथिव्याः। ततः खनेम सुप्रतीकमग्निꣳ सुवो रुहाणा अधि नाक उत्तमे। अपो देवीरुप सृज मधुमतीरयक्ष्माय प्रजाभ्यः। तासाꣳ स्थानादुज्जिहतामोषधयः सुपिप्पलाः। जिघर्मि (४) अग्निं मनसा घृतेन प्रतिक्ष्यन्तं भुवनानि विश्वा। पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नꣳ रभसं विदानम्। आ

त्वां जिघर्मि वचसा घृतेनारक्षसा मनसा तज्जुषस्व। मर्यश्रीः स्पृहयद्वर्णो अग्निर्नाभिमृशे तनुवा जर्हृषाणः। परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे। परि त्वाऽग्ने पुरं वयं विप्रं सहस्य धीमहि। धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावतः। त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि। त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः (५)॥

(प्रतूर्वन्त्सूर्यस्य तिष्ठ जिघर्मि भेत्तारं विंशतिश्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

(अथ चतुर्थाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः।)

---

इमाम्। अगृभ्णन्। रशनाम्। ऋतस्य। पूर्वे। आयुषि। विदथेषु। कव्या। तया। देवाः। सुतम्। एति। बभूवुः। ऋतस्य। सामन्। सरम्। आरपन्तीत्या—रपन्ती। प्रतूर्तमिति प्र—तूर्तम्। वाजिन्। एति। द्रव। वरिष्ठाम्। अन्विति। संवतमिति सं—वतम्। दिवि। ते। जन्म। परमम्। अन्तरिक्षे। नाभिः। पृथिव्याम्। अधीति। योनिः। युञ्जाथाम्।

रासंभम् । युवम् । अस्मिन् । यामें । वृषणवसू इति वृषण्—वसू । अग्निम् । भरन्तम् । अस्मयुमित्यस्म—युम् । योगेयोग इति योगे—योगे । तवस्तरमिति तवः—तरम् । वाजेवाज इति वाजे—वाजे । हवामहे । सखायः । इन्द्रम् । ऊतयें । प्रतूर्वन्निति प्र—तूर्वन् (१)। एतिं । इहि । अवक्रामन्नित्यव—क्रामन् । अशस्तीः । रुद्रस्य । गाणपत्यादिति गाण—पत्यात् । मयोभूरिति मयः—भूः । एतिं । इहि । उरु । अन्तरिक्षम् । अन्विति । इहि । स्वस्तिगव्यूतिरिति स्वस्ति—गव्यूतिः । अभयानि । कृण्वन् । पूष्णा । सयुजेति स—युजा । सह । पृथिव्याः । सधस्थादिति सध—स्थात् । अग्निम् । पुरीष्यम् । अङ्गिरस्वत् । अच्छ । इहि । अग्निम् । पुरीष्यम् । अङ्गिरस्वत् । अच्छ । इमः । अग्निम् । पुरीष्यम् । अङ्गिरस्वत् । भरिष्यामः । अग्निम् । पुरीष्यम् । अङ्गिरस्वत् । भरामः । अन्विति । अग्निः । उषसाम् । अग्रम् । अख्यत् । अन्विति । अहानि । प्रथमः । जातवेदा इति जात—वेदाः । अन्विति । सूर्यस्य (२)। पुरुत्रेति पुरु—त्रा । च । रश्मीन् । अन्विति । द्यावापृथिवी इति द्यावा—पृथिवी । एतिं । ततान । आगत्येत्या—गत्य । वाजी ।

अध्वंनः । सर्वाः । मृधः । वीतिं । धूनुते । अग्निम् । सधस्थ इतिं सध—स्थे । महति । चक्षुषा । नीतिं । चिकीषते । आक्रम्येत्यां—क्रम्यं । वाजिन् । पृथिवीम् । अग्निम् । इच्छ । रुचा । त्वम् । भूम्याः । वृत्वायं । नः । ब्रूहि । यतः । खनाम । तम् । वयम् । द्यौः । ते । पृष्ठम् । पृथिवी । सधस्थमितिं सध—स्थम् । आत्मा । अन्तरिक्षम् । समुद्रः । ते । योनिः । विख्यायेतिं वि—ख्यायं । चक्षुषा । त्वम् । अभीतिं । तिष्ठ ( ३ ) । पृतन्यतः । उदितिं । क्राम । महते । सौभंगाय । अस्मात् । आस्थानादित्यां—स्थानात् । द्रविणोदा इतिं द्रविणः—दाः । वाजिन् । वयम् । स्याम । सुमताविति सु—मतौ । पृथिव्याः । अग्निम् । खनिष्यन्तः । उपस्थ इत्युप—स्थे । अस्याः । उदितिं । अक्रमीत् । द्रविणोदा इतिं द्रविणः—दाः । वाजी । अर्वा । अर्कः । सः । लोकम् । सुकृतमिति सु—कृतम् । पृथिव्याः । ततः । खनेम । सुप्रतीकमितिं सु—प्रतीकम् । अग्निम् । सुवः । रुहाणाः । अधीतिं । नाके । उत्तम इत्युत्—तमे । अपः । देवीः । उपेतिं । सृज । मधुमतीरिति

मधु॑—म॒ती॒ः । अ॒य॒क्ष्मायं । प्र॒जाभ्य॒ इति॑ प्र—जा-भ्यः॑ । तासा॑म् । स्थाना॑त् । उत् । इ॒ति॒ । जि॒ह॒ता॒म् । ओष॑धयः । सु॒पि॒प्प॒ला इति॑ सु—पि॒प्प॒लाः । जिघ॑र्मि (४) । अ॒ग्निम् । मन॑सा । घृ॒तेन॑ । प्र॒ति॒क्ष्य॒न्तमिति॑ प्रति—क्ष्य॒न्तम् । भुव॑नानि । विश्वा॑ । पृ॒थुम् । ति॒र॒श्चा । वय॑सा । बृ॒हन्त॑म् । व्यचि॑ष्ठम् । अन्न॑म् । र॒भ॒सम् । विदा॑नम् । एति॑ । त्वा॒ । जि॒घ॒र्मि॒ । वच॑सा । घृ॒तेन॑ । अ॒र॒क्ष॒सा । मन॑सा । तत् । जु॒ष॒स्व॒ । मर्य॑श्री॒रिति॒ मर्य॑—श्रीः । स्पृ॒ह॒यद्व॑र्ण॒ इति॑ स्पृ॒ह॒यत्—व॒र्णः॒ । अ॒ग्निः । न । अ॒भि॒मृश॒ इत्य॑भि—मृशे॑ । त॒नुवा॑ । जर्हृ॑षाणः । परीति॑ । वाज॑प॒ति॒रि॒ति वाज॑—प॒तिः॒ । क॒विः । अ॒ग्निः । ह॒व्यानि॑ । अ॒क्र॒मी॒त् । दध॑त् । रत्ना॑नि । दा॒शुषे॑ । परीति॑ । त्वा॒ । अ॒ग्ने॒ । पुर॑म् । व॒यम् । विप्र॑म् । स॒ह॒स्य॒ । धी॒म॒हि॒ । धृ॒षद्व॑र्णमिति॑ धृ॒षत्—व॒र्ण॒म् । दि॒वेदि॑व॒ इति॑ दि॒वे—दि॒वे॒ । भे॒त्तार॑म् । भ॒ङ्गु॒राव॑त॒ इति॑ भ॒ङ्गु॒रा—व॒तः॒ । त्वम् । अ॒ग्ने॒ । द्यु॒भि॒रि॒ति द्यु—भिः॒ । त्वम् । आ॒शु॒शु॒क्षणि॑ः । त्वम् । अ॒द्भ्य इत्य॑त्—भ्यः । त्वम् । अश्म॑नः । परि॑ । त्वम् । वने॑भ्यः । त्वम् । ओष॑धीभ्य॒ इत्योष॑-

धि-भ्यः । त्वम् । नृणाम् । नृपत इति नृ-पते । जायसे । शुचिः (५) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ चतुर्थकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ।)

---

प्रथमेऽनुवाकेऽभ्र्यादानमुक्तम् । अथ द्वितीये मृदाक्रान्तिरुच्यते । कल्पः—"इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीꣳ रशनामादाय" इति । पाठस्तु—

इमामगृभ्णन्रशनामृतस्य पूर्व आयुषि विदथेषु कव्या । तया देवाः सुतमा बभूवुर्ऋतस्य सामन्त्सरमारपन्ती, इति ।

कवयो विद्वांस ऋत्विजस्तानर्हन्तीति कव्या यज्ञाः । कव्या विदथेषु कव्येषु यज्ञेषु ज्योतिष्टोमादिषु ऋतस्याऽऽयुषि आयुरागमनमश्वस्याऽऽगमने निमित्तभूते सति । ऋतशब्दो यज्ञवाची सन्नत्र तत्साधनमश्वमुपलक्षयति । पूर्वे महर्षय इमां रशनामगृभ्णन्स्वीकृतवन्तः । अयमर्थः—रशनया बद्धमश्वमानीय मृत्खननस्थाने तमश्वमाक्रमय्य तया मृदा निष्पन्नायामुखायामग्निमुत्पाद्येष्टकाचिते देशे ज्योतिष्टोमादय ऋत्विग्भिरनुष्ठेयाः । एतत्सर्वं मनसि निधाय पूर्वे महर्षयाऽश्वागमनं निमित्तीकृत्य रशनां स्वीकृतवन्त इति । षोऽन्तकर्मणीत्यस्माद्धातोरुत्पन्नत्वात्सामन्शब्दोऽवसानवाची । ऋतस्य सामन्यज्ञस्य परिसमाप्तये सरं सरणमृत्विग्यजमानानां प्रवृत्तिमारपन्ती कथयन्ती प्रापयन्तीत्यर्थः । या रशना पूर्वोक्तरीत्या यज्ञसमाप्तिपर्यन्तं प्रवृत्तिकारिणी भवति तया रशनया पुरा देवाः सुतमाबभूवुः सोमयागं प्रापुः । तादृशीमिमां रशनां गृहीतवन्तः ॥

तमिमं मन्त्रं विनियुङ्क्ते—

"व्यृद्धं वा एतद्यज्ञस्य यदयजुष्केण क्रियत इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते यजुष्कृत्यै यज्ञस्य समृद्ध्यै" [सं०का०५प्र०१अ०२] इति । यदङ्गमयजुष्केण मन्त्ररहितेन व्यापारेण निष्पाद्यते यज्ञस्य संबन्धि तदेतत्समृद्धिहीनमेव । तस्मादिमामिति मन्त्रमुच्चार्य रशनामाददीत । अश्वोऽ-

भिधीयते बद्ध्वा धार्यते यया रशनया सेयमश्वाभिधानी। यद्यपीमामगृभ्णन्
त्यृगेवैषा तथाऽपि यजुर्वेदपठितत्वाद्यजुष्ट्वोपचारः। तस्मिन्मन्त्रे पठिते स
रशनादानं सयजुष्कत्वात्समृद्धं भवति॥

कल्पः—"प्रतूर्तं वाजिन्ना द्रवेत्यश्वमभिदधाति" इति।

पाठस्तु—

प्रतूर्तं वाजिन्ना द्रव वरिष्ठामनु संव-
तम्। दिवि ते जन्म परममन्तरिक्षे
नाभिः पृथिव्यामधि योनिः।, इति।

संवन्यते सम्यग्भज्यते मृद्ग्रहणार्थं सेव्यत इति खननयोग्या भूमिः संवत्
सा च प.षाणाद्यभावेनातिप्रशस्तत्वाद्वरिष्ठेत्युच्यते। हे वाजिन्नश्व वरि
संवतमनुलक्ष्य प्रतूर्तमाद्रवातिशीघ्रमागच्छ। ते तवाश्वस्य दिवि द्युलोके प
ममुत्कृष्टं जन्म रोहितादिदेवाश्वरूपेण द्युलोके जन्म प्रसिद्धम्। "रोहि
त्वाऽग्निर्देवतां गमयत्वित्याहैते वै देवाश्वाः" इति ह्यन्यत्राऽऽम्नातम्। त
तव नाभिरन्तरिक्षे वर्तते। नियुन्नामका हि वायोरश्वास्तदीयं रथं वहन्
न्तरिक्षे संचरन्ति, तद्रूपेणास्यान्तरिक्षवर्तित्वम्। नाभिशब्देन कृत्स्नशरी
पलक्ष्यते। तथा पृथिव्यामधि योनिर्भूमेरुपरि तव निवासस्थानं, तत्तु प्रत्
मेव दृश्यते। एवंमहिमा त्वं शीघ्रमागच्छेति पूर्वत्रान्वयः॥

एतं मन्त्रं विनियुङ्क्ते—

"प्रतूर्तं वाजिन्ना द्रवेत्यश्वमभि दधाति रूपमेवास्यैतन्महिमानं व्याचष्टे
[सं० का० ५ प्र० १ अ० २] इति।

वाजिन्नाद्रवेत्येवं शीघ्रमागमनमश्वस्य स्वरूपभूतमेव महिमानमेतन्मन्त्रवा
प्रकाशयति। अथवाऽस्य मन्त्रस्यैतद्रूपं वाक्यजातं द्युजन्मादिरूपं महिमा
व्याचष्टे। वस्तुतो द्युजन्माभावेऽपि प्रशंसार्थमेवमुच्यत इत्यर्थः॥

कल्पः—"तूष्णीं गर्दभरशनामादाय युञ्जाथाꣳ रासभं युवमिति
भम्" इति।

मन्त्रमन्तरेणैव गर्दभस्य रशनामादाय युञ्जाथामिति मन्त्रेण गर्दभमभिद
पाठस्तु—

युञ्जाथाꣳ रासभं युवमस्मिन्यामे वृष-
ण्वसू। अग्निं भरन्तमस्मयुम्।, इति।

---

१ ख. च. 'तु अभिल'। २ ख. च. 'ते। ययुनाम'। ३ ख. घ. ङ. च. 'मेवोच्य

( मृदाक्रान्त्यभिधानम् )

यजमानः पत्नी चेत्येतौ हे दंपती युवं रासभमस्मिन्यामे युञ्जाथाम्। यामो मृद्वहनरूपो नियमविशेषस्तस्मिन्निमित्तभूते सति युवामुभौ गर्दभं रशनया बध्नी-तम्। कीदृशौ युवां, वृषण्वसू यागनिष्पादनद्वारा फलाभिवर्षणनिमित्तभूतं वसु धनं ययोस्तौ वृषण्वसू। कीदृशं रासभम्। अग्निं भरन्तमग्निहेतुं मृदं वोढुं समर्थम्। अस्मयुमस्मानात्मन इच्छन्तमस्मद्धितैषिणमिति यावत्॥

एतं मन्त्रं विनियुङ्क्ते—

"युञ्जाथाꣳ रासभं युवमिति गर्दभमसत्येव गर्दभं प्रतिष्ठापयति तस्माद-श्वाद्गर्दभोऽसत्तरः" [ सं० का० ५ प्र० १ अ० २ ] इति।

गर्दभमित्यत्राभिदधातीति शेषोऽनुवर्तते। अस्मिन्याम इति मन्त्रेऽभिहितं मृद्वहनमसदित्युच्यते। भारवहनस्य निकृष्टव्यापारत्वात्। अत एतन्मन्त्रपाठे-नासत्येव निकृष्ट एव व्यापारे गर्दभं स्थापितवान्भवति। यस्मादत्र निकृष्ट-कार्ये स्थापितस्तस्माल्लोकेऽपि गर्दभोऽश्वान्निकृष्टतरः। रजकादय एव हि तमाद्रियन्ते न तु राजामात्यादयः॥

कल्पः—"योगेयोगे तवस्तरमिति तिसृभिरश्वप्रथमा अभिप्रव्रजन्ति यत्र मृदं खनिष्यन्तः स्युः" इति।

तत्र प्रथमामाह—

> योगेयोगे तवस्तरं वाजेवाजे हवा-
> महे। सखाय इन्द्रमूतये।, इति।

युज्यतेऽनुष्ठीयत इति योगः कर्म। योगेयोगे तत्तत्कर्मणि तवस्तरं बलवत्त-रमश्वमिन्द्रमिन्द्रियप्रदमूतये रक्षणाय वाजेवाजे तत्तदन्नप्राप्तिनिमित्तं सखायः परस्परसख्यं प्राप्ता ऋत्विग्यजमाना वयं हवामह आह्वयामः॥

अथ द्वितीयामाह—

> प्रतूर्वन्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणप-
> त्यान्मयोभूरेहि। उर्वन्तरिक्षमन्विहि स्वस्ति-
> गव्यूतिरभयानि कृण्वन्। , इति।

हेऽश्व त्वमेहि आगच्छ। किं कुर्वन्। प्रतूर्वन्, विरोधिनः शत्रून्हिंसन्नश-स्तीरवक्रामन्भ्रातृव्यैः क्रियमाणा अपकीर्तीर्निवारयन्। किं च, रुद्रस्य क्रूरदे-वस्य यद्गाणपत्यं पशुसमूहपतित्वं तस्माद्गाणपत्यादागत्य मयोभूरस्माकं सुखं भावयन्ने(न्नि)हि। उरु विस्तीर्णमन्तरिक्षमनु वीक्ष्येहि विश्रम्भेण गच्छ।

१ ख. च. 'मित्ते स'। २ क. घ. ङ. 'म्भेणाऽऽग'।

किं कुर्वन्। गव्यूतौ गोसमूहे स्वस्ति श्रेयो यथा भवति तथा वर्तमा
स्वस्तिगव्यूतिस्तादृशस्त्वमभयानि कृण्वन्व्याघ्रादिभ्यो भयपरिहारं कुर्वन्॥

अथ तृतीयामाह—

पूष्णा सयुजा सह। पृथिव्याः सध-
स्थादग्निं पुरीष्यमङ्गिरस्वदच्छेहि, इति।

सह युज्यते सहायभूतो वर्तत इति सयुक्। तादृशेन पूष्णा पो
केण देवेन सह हेऽश्व पृथिव्याः सधस्थात्पुरीष्यमग्निमच्छेहि प्राप्तुं गच्छ
खनितुं योग्या कृत्स्नाऽपि मृत्तिका सह तिष्ठति मिलित्वा वर्ततेऽ
सधस्थः प्रदेशविशेषः। तस्मात्प्रदेशादाप्तुमित्यन्वयः। अङ्गिरस्वदिति दृष्टान्त
पूर्ववत्॥

अत्र प्रथमायामृचि प्रथमभागे वीप्सायास्तात्पर्यं दर्शयति—

"योगेयोगे तवस्तरमित्याह योगेयोग एवैनं युङ्क्ते" [ सं० का० ५
१ अ० २ ] इति।

रथवहनं योद्धृवहनं वा यद्यदश्वस्य योग्यं कर्म तत्र सर्वत्रैनमश्वं यो
त्येव लौकिकः। तस्मादत्रापि योगेयोग इति वीप्सोच्यते॥

द्वितीयभागे वाजशब्दार्थं दर्शयति—

"वाजेवाजे हवामह इत्याहान्नं वै वाजोऽन्नमेवाव रुन्धे" [ सं० का०
प्र० १ अ० २ ] इति॥

तृतीयभाग इन्द्रशब्दतात्पर्यं दर्शयति—

"सखाय इन्द्रमूतय इत्याहेन्द्रियमेवाव रुन्धे" [ सं० का० ५ प्र०
अ० २ ] इति॥

अनेन मन्त्रेण साध्यमश्वपुरःसरं गमनं विधत्ते—

"अग्निर्देवेभ्यो निलायत तं प्रजापतिरन्वविन्दत्प्राजापत्योऽश्वोऽश्वेन
भरत्यनुवित्त्यै" [ सं० का० ५ प्र० १ अ० २ ] इति।

केनाप्यपराधेन देवेभ्यो निर्गतमग्निं प्रजापतिरन्विष्य लब्धवान्। अ
प्रजापतिजन्यत्वात्प्राजापत्यः। तस्मादश्वेन सहाग्निहेतुं मृदं संभरितुं गच्छे
तच्च गमनमग्नेरनुवेदनाय भवति॥

तत्राश्वस्य गर्दभात्पुरतो गमनं विधत्ते—

"पापवस्यसं वा एतत्क्रियते यच्छ्रेयसा च पापीयसा च समानं

---

१ ख. च. मिलिता। २ क. घ. ङ. अश्वस्य।

कुर्वन्ति पापीयान्ह्यश्वाद्गर्दभोऽश्वं पूर्वं नयन्ति पापवस्यसस्य व्यावृत्त्यै तस्मा-च्छ्रेयाꣳसं पापीयान्पश्चादन्वेति" [ सं० का० ५ प्र० १ अ० २ ] इति।

श्रेयसोत्तमेन च साधनेन पापीयसा निकृष्टेनापि साधनेन समानं तुल्य-मेकं कार्यं कुर्वन्तीति यत्तदेतत्पापवस्यसमेव क्रियते। पापमेव वसु धनं यस्य कर्मणस्तत्पापवसु, अतिशयेन पापवसु तत्पापवस्यसमत्यन्तं निकृष्टमित्यर्थः। गर्दभोऽश्वात्पापीयानिति प्रसिद्धम्। अत उभयोः समानं गमनं मा भूदि-त्यश्वं पूर्वं पुरतो नयेयुः। तथा सति पापवस्यसं निवारितं भवति। यस्मादेवं तस्माल्लोकेऽपि विद्याधनादिभिः श्रेयान्पुरुषः पुरतो गच्छति, निकृष्टः शिष्यो दरिद्रो वा पश्चादनुगच्छति॥

द्वितीयमन्त्रगतस्याशस्तीरवक्रामन्नित्यस्य तात्पर्यं दर्शयति—

"बहुर्वै भवतो भ्रातृव्यो भवतीव खलु वा एष योऽग्निं चिनुते वज्र्यश्वः प्रतूर्वन्नेह्यवक्रामन्नशस्तीरित्याह वज्रेणैव पाप्मानं भ्रातृव्यमव क्रामति" [ सं० का० ५ प्र० १ अ० २ ] इति।

भवतो भूतिमैश्वर्यं प्राप्नुवतः पुरुषस्य भ्रातृव्यो विघ्नकारी बहुर्भवत्येव श्रेयांसि बहुविघ्नानीति न्यायात्। अतोऽत्र योऽग्निं चिनुत एष भवतीव खलु श्रेयः प्राप्नोत्येव खलु। अतोऽनेन भ्रातृव्यपरिहारोऽन्वेषणीयः। अश्वश्च वज्र-युक्तेन्द्रसमानः। अतोऽश्वं संबोध्याशस्तीरवक्रामन्नित्युक्त्याऽश्वरूपेण वज्रेणैव विघ्नकारिणं पाप्मानं भ्रातृव्यं निराकरोति॥

तन्मन्त्रगतस्यैव गाणपत्यादित्यस्य तात्पर्यं दर्शयति—

"रुद्रस्य गाणपत्यादित्याह रौद्रा वै पशवो रुद्रादेव पशून्निर्याच्याऽऽत्मने कर्म कुरुते" [ सं० का० ५ प्र० १ अ० २ ] इति।

पशूनां रौद्रत्वं वरादवगम्यते। "सोऽब्रवीद्वरं वृणा अहमेव पशूनामधि-पतिरसानीति" इत्यत्र रुद्रस्य वर आम्नातः। तस्मादत्र रुद्रस्य गाणपत्या-न्मयोभूरेहीत्युक्त्वा पशुस्वामिनो रुद्रादेव तान्पशून्निःशेषेण याचित्वा तैः पशुभिः स्वार्थं कर्म करोति॥

तृतीयमन्त्रे सयुजेत्यस्य तात्पर्यं दर्शयति—

"पूष्णा सयुजा सहेत्याह पूषा वा अध्वनाꣳ संनेता समष्ट्यै" [ सं० का० ५ प्र० १ अ० २ ] इति।

पोषको देव एवोपद्रवपरिहारेण मार्गाणां सम्यङ्नेता भवति। अतस्तेन सह समष्ट्यै संगत्यै पूष्णा सयुजेत्युच्यते॥

---

१ ख. च. वरवलाद'।

तस्मिन्नेव मन्त्रे पुरीष्यमिति विशेषणस्याङ्गिरस्वदिति दृष्टान्तस्य च त
दर्शयति—

" पुरीषायतनो वा एष यदग्निरङ्गिरसो वा एतमग्रे देवतानाꣳ समभ
थिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदच्छेहीत्याह सायतनमेवैनं देवता
भरति " [ सं० का० ५ प्र० १ अ० २ ] इति ।

पुरीषस्य पांसोः पूर्वोक्तरीत्या परम्परयाऽग्न्यायतनत्वम् । अतः पुरी
ब्देनाग्निं सायतनमेव संपादयति । अङ्गिरसश्च पुरा तमेतमग्निं देवतानां
संपादितवन्तः । अतोऽङ्गिरस्वदित्युक्त्या देवताभिः सहितमेनं संपा
वान्भवति ॥

## अग्निं पुरीष्यमङ्गिरस्वदच्छेमः—

कल्पः—" अग्निं पुरीष्यमङ्गिरस्वदच्छेम इति येन द्वेष्येण संगच्छते त
मन्त्रयतेऽपश्यन्निर्दिशति " इति ।

मृत्खननं प्रति गच्छन्तः पुरुषा मार्गमध्ये यदि केनापि द्वेष्येण संगच्छे
तदानीमिमं मन्त्रं पठेत् । इमो गच्छाम इत्यर्थः । शेषं पूर्ववत् । यदि द्वे
पश्यति तदाऽपि तं मनसा निर्दिश्य पठेत् ॥

अनेन पाठेन द्वेष्यस्यान्नं विनाश्यत इत्येतद्दर्शयति—

" अग्निं पुरीष्यमङ्गिरस्वदच्छेम इत्याह येन संगच्छते वाजमेवास्य
[ सं० का० ५ प्र० १ अ० २ ] इति ।

## अग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामः—

कल्पः—" अग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम इति वल्मीकवपा या सूर्य
देतोस्तामुद्धृत्योपतिष्ठते " इति ।

वल्मीकस्य योऽवयव उन्नतत्वेनाभिवृद्धः सेयं वपा, तथाविधासु
मध्ये या वपा सूर्योदयस्याभिमुखा तस्या अग्रं किंचिदुद्धृत्य तां वपामनेन
णोपतिष्ठते । भरिष्यामः संपादयिष्यामः । शेषं पूर्ववत् ॥

अनेन मन्त्रेण वपोपस्थानं विधत्ते—

" प्रजापतये प्रतिप्रोच्याग्निः संभृत्य इत्याहुरियं वै प्रजापति
एतच्छ्रोत्रं यद्वल्मीकोऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम इति वल्मीक
तिष्ठते साक्षादेव प्रजापतये प्रतिप्रोच्याग्निꣳ सं भरति " [ सं० का०
१ अ० २ इति ।

---

१ ख. च. °त्खननं । २ ख. च. पठेरन् ।

( मृदाक्रान्त्यभिधानम् )

प्रजापतेः सकाशादनुज्ञां लब्ध्वाऽयमग्निः संपादनीय इत्येवमभिज्ञा आहुस्त-च्चोपपन्नं, प्रजापतिना पूर्वमग्नेर्लब्धत्वात्। तं प्रजापतिरन्वविन्ददिति पूर्वत्रोक्तम्। कथं तर्हि प्रजापतये वक्तव्यमिति चेत्तदुच्यते—प्रजापतिना सृष्टत्वादियं पृथिव्येव प्रजापतिः। तस्याश्च वल्मीकवपैव श्रोत्रम्। अत एवाऽऽधानब्राह्मणे समाम्नातम्—"श्रोत्रꣳ ह्येतत्पृथिव्याः। यद्वल्मीकः।" इति। तस्मात्तां वपामनेन मन्त्रेणोपतिष्ठते। तेनोपस्थानेन व्यवधानमन्तरेणैव प्रजापतये कथयित्वाऽग्निं संभरति ॥

## अग्निं पुरीष्यमङ्गिरस्वद्भरामः—

कल्पः—" अत्वरमाणाः प्रत्यायन्त्यग्निं पुरीष्यमङ्गिरस्वद्भराम इति येन द्वेष्येण संगच्छते तमभिमन्त्रयतेऽपश्यन्निर्दिशति " इति।

यद्वद्गमनकाले तद्वदागमनकालेऽपि। तत्र भरिष्याम इति पाठः। अत्र तु भराम इति विशेषः। यद्यप्यागमनस्य नायं कालः, तथाऽपि प्रसङ्गाद्बुद्धिस्थमन्त्रोऽयमाम्नातस्तं चोपरिष्टादुत्कर्षेत् ॥

गमनकालीनमन्त्रवदस्यापि तात्पर्यं दर्शयति—

" अग्निं पुरीष्यमङ्गिरस्वद्भराम इत्याह येन संगच्छते वाजमेवास्य वृङ्क्ते " [ सं० का० ५ प्र० १ अ० २ ] इति ॥

कल्पः—"अन्वग्निरुषसामग्रमख्यदिति वल्मीकवपायाः प्रक्रामति" इति। पाठस्तु—

अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः। अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आ ततान।, इति।

अयमग्निरुषसामुषःकालानामग्रमुपक्रममन्वख्यत्, अनुक्रमेण प्रकाशितवान्। अयं जातवेदाः प्रथमो मुख्यः सन्नहान्यप्यन्वख्यत्। किं च सूर्यस्य पुरुत्रा पुरून्बहूत्रश्मीननुक्रमेणाख्यत्। किंच द्यावापृथिवी उभे अप्यनुक्रमेणाऽऽततान सर्वतो व्याप्तवान् ॥

अनेन मन्त्रेणोषःकालादीनां क्रमेणाऽऽविर्भावः सिध्यतीत्येतद्दर्शयति—

" अन्वग्निरुषसामग्रमख्यदित्याहानुख्यात्यै " [ सं० का० ५ प्र० १ अ० २ ] इति।

---

१ ख. च. °र्वमेवोक्त°। २ ख. च. °त्रपद°। ३ ख. च. °न्यन्व°। ४ ख. च. °त्। सू°। ख. च. °थिव्यावुभे।

कल्पः—" आगत्य वाज्यध्वन आक्रम्य वाजिन्पृथिवीमिति द्वाभ्यां
नमश्वमाक्रमय्य " इति।

तत्र प्रथमायाः पाठस्तु—

आगत्य वाज्यध्वनः सर्वा मृधो
वि धूनुते। अग्निꣳसधस्थे मह-
ति चक्षुषा नि चिकीषते।, इति।

अयं वाज्यध्वनो मार्गादागत्य प्राप्य सर्वा मृधो मार्गश्रमादीं
र्वान्बाधकान्विधूनुते विविधं कम्पयति विनाशयतीत्यर्थः। यत्र
सहावतिष्ठन्ते तत्स्थानं सधस्थं, महति विस्तीर्णे सधस्थेऽयमश्वश्चक्षुषा
ग्निमग्निहेतुं मृदं निचिकीषते नितरां चेतुं संपादयितुमिच्छति॥

अथ द्वितीयामाह—

आक्रम्य वाजिन्पृथिवीमग्निमिच्छ रु-
चा त्वम्। भूम्या वृत्वाय नो ब्रूहि
यतः खनाम तं वयम्।, इति।

हे वाजिन्पृथिवीमाक्रम्य पादस्पर्शेन परीक्ष्य त्वं रुचा स्वकीयेन
मानसज्ञानेनेत्यर्थः। अग्निमिच्छाग्निहेतुं मृदं निश्चिनु। भूम्या वृत्वाय
सह वरणं कृत्वा पृथिवीं पृष्ट्वेत्यर्थः। नोऽस्माकं ब्रूहि अयं प्रदेशोऽ
योग्य इति कथय। यस्मात्प्रदेशात्तादृशी मृल्लभ्यते तं प्रदेशं वयं खनाम

अत्रैतयोर्द्वयोर्मन्त्रयोः पृथगुपयोगं दर्शयति—

" आगत्य वाज्यध्वन आक्रम्य वाजिन्पृथिवीमित्याहेच्छत्येवैनं
विन्दत्युत्तरया " [ सं० का० ५ प्र० १ अ० २ ] इति।

पूर्वस्यामृचि निचिकीषत इत्यभिधानादिच्छामात्रं तया संपद्यते।
स्यामृचि नो ब्रूहीत्युक्तत्वात्तया तं प्रदेशं लभते॥

विधत्ते—

" द्वाभ्यामा क्रमयति प्रतिष्ठित्या अनुरूपाभ्यां तस्मादनुरूपाः पश
जायन्ते " [ सं० का० ५ प्र० १ अ० २ ] इति।

मन्त्रयोर्द्वित्वं हि द्वाभ्यां प्रतिष्ठित्यै संपद्यते। तत्र पूर्वो मन्त्र
अनुरूपः। उत्तरमन्त्रो लाभस्यानुरूपः। तच्च पूर्वमुदाहृतम्। यस्मा

---

१ ख. घ. ङ. च. 'रखनन'। २ क. घ. ङ. 'र्गानाग'।

(मृदाक्रान्त्यभिधानम्)

याभ्यां मन्त्राभ्यामाक्रमयति तस्माद्यजमानस्याग्निहोत्राद्यनुष्ठानस्यानुरूपा एव गवाद्याः पशवः प्रजायन्ते ॥

कल्पः—"द्यौस्ते पृष्ठमित्यश्वस्य पृष्ठं संमार्ष्टि" इति।

पाठस्तु—

द्यौस्ते पृष्ठं पृथिवी सधस्थमात्माऽन्त-
रिक्षꣳ समुद्रस्ते योनिः। विख्याय चक्षुषा
त्वमभि तिष्ठ पृतन्यतः।, इति।

हेऽश्व द्युलोकस्तव पृष्ठं, पृथिवी सधस्थं तवाग्निना सहावस्थानप्रदेशः। अन्तरिक्षलोकस्तव मध्यशरीरवर्ती जीवात्मा। समुद्रस्तव जन्मकारणम्। 'अप्सुयोनिर्वा अश्वः' इति श्रुतेः। एवं स्तूयमानस्त्वं चक्षुषा विख्याय उखायोग्यां मृदं विलोक्य पृतन्यतः सङ्ग्रामं कर्तुमिच्छतः शत्रून्राक्षसादींस्तस्यां मृदि गूढरूपेणावस्थितानभितिष्ठ पादेनाऽऽक्रम्य विनाशय ॥

मन्त्रोक्तं[1] द्युलोकादिसंबन्धमुपपादयति—

"द्यौस्ते पृष्ठं पृथिवी सधस्थमित्याहैभ्यो वा एतं लोकेभ्यः प्रजापतिः समैरयद्रूपमेवास्यैतन्महिमानं व्याचष्टे" [सं० का० ५ प्र० १ अ० २] इति।

पुरा कदाचित्प्रजापतिरेतमश्वमेतेषु लोकेष्वन्विष्य समानीतवान्। तस्माद्विद्यमानमेव द्युलोकादिसंबन्धरूपं महिमानं मन्त्रो व्याचष्टे। अतो नास्माभिर्वक्तव्यं किंचिदस्ति ॥

मृदाक्रमणवेलायामश्वपादस्याधस्ताद्द्वेष्यविषयध्यानं विधत्ते—

"वज्री वा एष यदश्वो दद्भिरन्यतोदद्भ्यो भूयाँल्लोमभिरुभयादद्भ्यो यं द्विष्यात्तमधस्पदं ध्यायेद्वज्रेणैवैनꣳ स्तृणुते" [सं० का० ५ प्र० १ अ० २] इति।

वज्रसमानं[2] दन्तपङ्क्तिद्वयमस्यास्तीत्यश्वो वज्री, तस्मादन्यतोदद्भ्य एकदन्तपङ्क्तियुक्तेभ्यो[3] गवादिभ्योऽयमश्वो दद्भिर्भूयान्दन्तैरधिकः। उभयादद्भ्यो दन्तपङ्क्तिद्वययुक्तेभ्यश्च गर्दभादिभ्योऽयमश्वो लोमभिः केसरैः पुच्छगतैश्च भूयान्। अतस्तादृशस्याश्वस्याधस्पदं पादस्याधस्ताद्द्वेष्ये ध्याते सति अश्वखुररूपेण वज्रेणैवैनं द्वेष्यं हिनस्ति ॥

---

१ ख. च. 'न्त्रोक्तद्यु'। २ ख. च. 'मानद'। ३ क. घ. ङ. 'क्तेभ्योऽश्वग'। ४ ख. च. लैश्च।

कल्पः—"उत्क्रामोदक्रमीदिति द्वाभ्यां मृत्खनादुदश्वमश्वमुत्क्रमय्य" इति। मृद्यस्मिन्प्रदेशे खन्यते स प्रदेशो मृत्खनः। तस्मादश्वमुदङ्मुखत्वेन निर्गमयेत्।

तत्र प्रथमामृचमाह—

> उत्क्राम महते सौभगायास्मादास्थानाद्द्र-
> विणोदा वाजिन्। वयꣳ स्याम सुमतौ पृथि-
> व्या अग्निं खनिष्यन्त उपस्थे अस्याः।, इति।

हे वाजिन्द्रविणोदा धनप्रदस्त्वं यजमानस्य महते सौभगाय सौभाग्याभिवृद्ध्यर्थमस्मादास्थानात्खननप्रदेशादुत्क्रामोद्गतो भव। वयं पृथिव्याः सुमतावनुग्रहचित्ते स्याम तिष्ठेम। कीदृशा वयम्। अस्या उपस्थे पृथिव्या उपरि अग्निमग्निहेतुं मृदं खनिष्यन्तः खनितुमुद्युक्ताः॥

अथ द्वितीयामाह—

> उदक्रमीद्द्रविणोदा वाज्यर्वाऽकः स लोकꣳ
> सुकृतं पृथिव्याः। ततः खनेम सुप्रतीकम-
> ग्निꣳ सुवो रुहाणा अधि नाक उत्तमे।, इति।

द्रविणोदा यागद्वारेण धनप्रदो वाजी तथैवान्नप्रद इयर्तीत्यर्वा गमनकुशल इत्यर्थः। तादृशोऽयमश्वः स्थानादस्मादुदक्रमीत्। स उत्क्रान्तोऽश्वः सुकृतमाक्रमणेन विरुद्धात्त्राक्षसादीन्[1]पहत्य सुष्ठु कृतं पृथिव्याः संबन्धिनं लोकं खननप्रदेशमकः कृतवान्। ततः प्रदेशादग्निमग्नियोग्यां भूमिं मृदं खनेम। कीदृशमग्निं सुप्रतीकं सुमुखम्। ये खनितारो वयं ते कीदृशाः, सुवरधिरुहाणाः स्वर्गेऽधिरोहणकामाः। कीदृशे स्वर्गे, उत्तमे सुखयुक्ते नाके कं सुखमकं दुःखं तद्रहिते॥

तदिदं मन्त्रद्वयं विनियुङ्क्ते—

"उत्क्रामोदक्रमीदिति द्वाभ्यामुत्क्रमयति प्रतिष्ठित्या अनुरूपाभ्यां तस्मादनुरूपाः पशवः प्र जायन्ते" [ सं० का० ५ प्र० १ अ० ३ ] इति।

मन्त्रयोरादावुत्क्रमणाभिधानाऽनुष्ठेयार्थं प्रत्यनुरूपत्वम्॥

कल्पः—"अपो देवीरुप सृजेत्यश्वस्य पदेऽप उपसृज्य" इति।

पाठस्तु—

---

1 ख. व. 'पहत्य।

( मृदाक्रान्त्यभिधानम् )

अपो देवीरुप सृज मधुमतीरयक्ष्माय प्रजाभ्यः । तासाꣳ स्थानादुज्जिहतामोषधयः सुपिप्पलाः । , इति ।

देवीर्देवनशीला अप उपसृज । अस्मिन्खननप्रदेशेऽहमुपसृजामि । कीदृशीरपः । मधुमतीर्मधुराः । किमर्थम् । अयक्ष्माय प्रजाभ्यः प्रजानामारोग्याय । तासां प्रक्षिप्तानामपां स्थानादस्मात्प्रदेशात्सुपिप्पलाः शोभनफला ओषधय उज्जिहतामुत्पद्यन्ताम् ॥

अनेन मन्त्रेणोदकसेचनं विधत्ते—

" अप उप सृजति यत्र वा आप उपगच्छन्ति तदोषधयः प्रति तिष्ठन्त्योषधीः प्रतितिष्ठन्तीः पशवोऽनु प्रति तिष्ठन्ति पशून्यज्ञो यज्ञं यजमानो यजमानं प्रजास्तस्मादप उप सृजति प्रतिष्ठित्यै " [ सं० का० ५ प्र० १ अ० ३ ] इति ।

अपामोषधीनां पशूनां यज्ञस्य यजमानस्य प्रजानां चोत्तरोत्तरप्रतिष्ठा पूर्वपूर्वाधीनेति प्रसिद्धम् । तस्मात्सर्वप्रतिष्ठार्थमप उपसृजेत् ॥

कल्पः—" पदे हिरण्यं निधाय जिघर्म्यग्निमा त्वा जिघर्मीति मनस्वतीभ्यामेकामाहुतिं हिरण्ये हुत्वा " इति ।

तत्र प्रथमामृचमाह—

जिघर्म्यग्निं मनसा घृतेन प्रतिक्ष्यन्तं भुवनानि विश्वा । पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नꣳ रभसं विदानम् । , इति ।

अहमग्निं मनसा ध्यायन्घृतेन जिघर्मि क्षारयामि दीपयामि वा । कीदृशमग्निम् । विश्वा भुवनानि प्रतिक्ष्यन्तं सर्वेषु लोकेषु प्रत्येकं[2] निवसन्तम् । तिरश्चा पृथुं तिर्यक्प्रमाणेन विस्तृतं, वयसा बृहन्तं वयउपलक्षितेन कालेन प्रौढम् । पृथुमित्यनेन बहुदेशव्याप्तिः, वयसेत्यनेन च बहुकालव्याप्तिरुक्ता । किंच, यदन्नं व्यचिष्ठमतिशयेन विविधमञ्चनं गमनं पूजनं वा यस्य तद्व्यचिष्ठं भक्ष्यभोज्यादिरूपेण बहुविधं स्वादुत्वेन पूज्यं चेत्यर्थः । तादृशमन्नं रभसं शीघ्रमेव विदानं लभमानम् ॥

अथ द्वितीयामाह—

१ क. घ. ङ. 'ह्मप उप' । २ क. घ. ङ. 'लोकमेव नि' । ३ ख. च. 'र्यक्क्रमणे' ।

आ त्वा जिघर्मि वचसा घृतेनारक्षसा मन-
सा तज्जुषस्व । मर्यश्रीः स्पृहयद्वर्णो
अग्निर्नाभिमृशे तनुवा जर्हृषाणः । , इति ।

हेऽग्ने त्वामाजिघर्मि वचसा मन्त्रेणानेन घृतेन सर्वतः क्षारयामि । अरक्षसा मनसा क्रौर्यरहितेन चित्तेन तद्धृतं जुषस्व । अयमग्निर्मर्यश्रीर्मर्त्यैराश्रयणीयः, स्पृहयद्वर्णो यजमानैः स्पृहणीयरूपः, नाभिमृशेऽभिमर्शनं कर्तुं न शक्यः, तनुवा जर्हृषाणो घृतपानपुष्टेन शरीरेणात्यन्तं हृष्टः । ईदृशमग्निं त्वामाजिघर्मीति योजना ॥

आभ्यां मन्त्राभ्यां हिरण्ये होमं विधत्ते—

" यदध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः स्याद्रक्षाꣳसि यज्ञꣳ हन्युर्हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति " [ सं० का० ५ प्र० १ अ० ३ ] इति ।

अग्निरहितभूप्रदेशे होमेनाध्वर्युरन्धो भवति । होमाधिकरणस्याग्नेरदर्शनात् । एतदेव च्छिद्रमुपलभ्य रक्षांसि यज्ञं विनाशयेयुः । अत एतद्दोषपरिहाराय भूमौ हिरण्यं निधाय तस्मिञ्जुहुयात् । तथा सति हिरण्यस्याग्निसदृशत्वात्तत्प्रदेशोऽग्निमानेव भवतीति नोक्तदोषद्वयम् ॥

प्रथममन्त्रस्य प्रथमपादे मनःशब्दस्योपयोगं दर्शयति—

" जिघर्म्यग्निं मनसा घृतेनेत्याह मनसा हि पुरुषो यज्ञमभिगच्छति " [ सं० का० ५ प्र० १ अ० ३ ] इति ।

मनसा यज्ञाभिगमनं नाम यज्ञं करिष्य इत्येवंरूपः संकल्पः ॥

द्वितीयपादस्य तात्पर्यं दर्शयति—

" प्रतिक्ष्यन्तं भुवनानि विश्वेत्याह सर्वꣳ ह्येष प्रत्यङ्क्षेति " [ सं० का० ५ प्र० १ अ० ३ ] इति ।

एषोऽग्निः सर्वं यजमानमुद्दिश्य प्रत्यङ्ङभिमुखः क्षेति निवसति ॥

तृतीयपादे पृथुं बृहन्तमित्यनयोस्तात्पर्यं दर्शयति—

" पृथुं तिरश्चा वयसा बृहन्तमित्याहाल्पो ह्येष जातो महान्भवति " [ सं० का० ५ प्र० १ अ० ३ ] इति ।

एषोऽग्निर्जातमात्रेणाल्पः पश्चादाहुतिभिर्वर्धमानो देशव्याप्त्या कालव्याप्त्या च महान्भवति ॥

---

१ ख. च. °र्भर्त्यैरा° । २ ख. च. °मुखः क्षे° ।

(मृदाक्रान्त्यभिधानम्)

चतुर्थपादे व्यचिष्ठमिति पदेन सूचितं पूजार्थत्वलक्षणं स्वादुत्वं दर्शयति—

"व्यचिष्ठमन्नः रभसं विदानमित्याहान्नमेवास्मै स्वदयति" [सं० का० ५ प्र० १ अ० ३] इति॥

वेदनं प्रशंसति—

"सर्वमस्मै स्वदते य एवं वेद" [सं० का० ५ प्र० १ अ० ३] इति॥

द्वितीयमन्त्रस्य प्रथमपादे वचसेतिपदस्याभिप्रायं दर्शयति—

"आ त्वा जिघर्मि वचसा घृतेनेत्याह तस्माद्यत्पुरुषो मनसाऽभिगच्छति तद्वाचा वदति" [सं० का० ५ प्र० १ अ० ३] इति।

यस्मात्प्रथममन्त्रे मनसेत्युक्त्वा द्वितीयमन्त्रे वचसेत्युक्तं तस्माल्लोकेऽपि पुरुषो यत्कार्यं मनसा चिन्तयति तत्पश्चाद्वाचा वदति॥

द्वितीयपादे रक्षोनिषेधवाचिशब्दस्य तात्पर्यमाह—

"अरक्षसेत्याह रक्षसामपहत्यै" [सं० का० ५ प्र० १ अ० ३] इति॥

तृतीयपादे मनुष्यैराश्रयणीयत्वेन वर्णस्य स्पृहणीयत्वेन चाग्नौ पूज्यत्वं संपाद्यत इति दर्शयति—

"मर्यश्रीः स्पृहयद्वर्णो अग्निरित्याहापचितिमेवास्मिन्दधाति" [सं० का० ५ प्र० १ अ० ३] इति॥

वेदनं प्रशंसति—

"अपचितिमान्भवति य एवं वेद" [सं० का० ५ प्र० १ अ० ३] इति॥

मन्त्रयोरुभयोर्मनःशब्दोपेतत्वं प्रशंसति—

"मनसा त्वै तामाप्तुमर्हति यामध्वर्युरनग्नावाहुतिं जुहोति मनस्वतीभ्यां जुहोत्याहुत्योराप्त्यै" [सं० का० ५ प्र० १ अ० ३] इति।

अनग्नौ हूयमानाऽऽहुतिर्मनसैव प्राप्तुमर्हति। अग्नौ हुतेत्येवं मनसा संकल्पयितुं शक्यत्वात्। तस्मादाहुत्योः प्राप्तये मनःशब्दयुक्ताभ्यामृग्भ्यां जुहुयात्॥

मन्त्रद्वित्वं प्रशंसति—

"द्वाभ्यां प्रतिष्ठित्यै" [सं० का० ५ प्र० १ अ० ३] इति॥

कल्पः—"अपादाय हिरण्यं परि वाजपतिः कविरिति तिसृभिरभ्रिया मृत्खनं परिलिखति बाह्यां वर्षीयसीम्" इति।

तत्र प्रथमामाह—

---

१ ख. च. 'मर्हा। अ'। २ ख. च. 'नं प्रत्यृचं पे'।

परि वाजपतिः कविरग्निर्हव्यान्यक्र-
मीत् । दधद्रत्नानि दाशुषे ।, इति ।

अयमग्निर्हव्यानि परितोऽक्रमीत्स्वीकृतवान् । कीदृशोऽग्निः, वाजपतिः अन्नस्य पालयिता । किं कुर्वन्, दाशुषे हविर्दत्तवते यजमानाय रत्नानि दधत् रमणीयानि धनानि संपादयन् ॥

अथ द्वितीयामाह—

परि त्वाऽग्ने पुरं वयं विप्रꣳ सहस्य धीमहि ।
धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावतः ।, इति ।

सहसि बले भवः सहस्यः । "सहसस्पुत्रो अद्भुतः" इति श्रुत्यन्तरात् । तादृशबलवन्हेऽग्ने वयं त्वां परिधीमहि परितः स्वी कुर्मः । कीदृशं त्वां, पुरम् सकृदपेक्षितफलानां पूरयितारं, विप्रं ब्राह्मणजात्यभिमानिनं देवं, धृषद्वर्णं धृषन्वैरिणां धर्षयिता वर्णः स्वरूपविशेषो यस्यासौ धृषद्वर्णस्तं, दिवेदिवे प्रतिदिनं भङ्गुरावतो भेत्तारं भञ्जनीयं पापं भङ्गुरं तदस्यास्तीति भङ्गुरावान्विघातको राक्षसादिस्तस्य विनाशयितारम् ॥

अथ तृतीयामाह—

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्व-
मश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं
नृणां नृपते जायसे शुचिः ।, इति ।

हेऽग्ने त्वं द्युभिः स्वर्गैर्निमित्तभूतैस्तत्र तत्र यागशालासु जायसे । किंच त्वमाशुशुक्षणिरार्द्रां भूमिं शीघ्रमेव शोषयिता जायसे। त्वमद्भ्यो वर्षधाराभ्योऽग्निरूपेण जायसे । त्वमश्मनस्परि पाषाणस्योपरि पाषाणान्तरसंघट्टनेन जायसे । त्वं वनेभ्यो दावाग्निरूपेण जायसे । ओषधीभ्य ओषधिकार्येभ्यो भेषजेभ्यस्त्वं जायसे। यद्वा वंशद्वयसंघर्षणादिभ्यो जायसे। नृणां नृपते सर्वेषामपि मनुष्याणां पालक त्वं गृहेगृहे शुचिः शुद्धिहेतुः सञ्जायसे । 'पुनर्दाहेन मृन्मयम्' इत्यादिस्मृतेः ॥

एतैर्मन्त्रैः साध्यं परिलेखनं विधत्ते—

"यज्ञमुखेयज्ञमुखे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्त्येतर्हि खलु वा एतद्यज्ञमुखं यर्ह्येनदाहुतिरश्नुते परि लिखति रक्षसामपहत्यै" [सं० का० ५ प्र० १ अ० ३ ] इति ।

( मृदाक्रान्त्यभिधानम् )

यज्ञस्य मुखं प्रारम्भो यज्ञमुखं, यदा यदा यज्ञः प्रारभ्यते तदा तदा रक्षांस्यागत्य यज्ञं हन्तुमिच्छन्ति। एवं च सत्यत्राप्यश्वपदाङ्कितमेतत्स्थानमाहुतिर्यदा प्राप्नोति तदानीमेतदेवाश्वपदस्थानं यज्ञप्रारम्भरूपं भवति। अतोऽत्र प्राप्तानां रक्षसामपहत्यै परिलेखनं कुर्यात् ॥

तत्र मन्त्रत्रयं विनियुङ्क्ते—

"तिसृभिः परि लिखति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्माद्रक्षा१ँस्यप हन्ति" [ सं० का० ५ प्र० १ अ० ३ ] इति।

आहवनीयगार्हपत्यदक्षिणाग्निरूपेणाग्नेस्त्रिगुणत्वम्। सर्वस्मादप्येतस्मादग्ने रक्षसामपघातो मन्त्रत्रित्वेन संपद्यते ॥

परिवाजपतिरित्येतां विशेषाकारेण विधत्ते—

"गायत्रिया परि लिखति तेजो वै गायत्री तेजसैवैनं परि गृह्णाति" [ सं० का० ५ प्र० १ अ० ३ ] इति।

पादत्रयोपेतत्वादियं गायत्री। तस्याश्चाग्निना सह प्रजापतिमुखादुत्पन्नत्वात्तेजस्त्वम्। एनमग्निप्रदेशम् ॥

त्वमग्ने द्युभिरित्येतां विधत्ते—

"त्रिष्टुभा परिलिखतीन्द्रियं वै त्रिष्टुगिन्द्रियेणैवैनं परि गृह्णाति" [ सं० का० ५ प्र० १ अ० ३ ] इति ॥

परि त्वाऽग्न इत्येतां विधत्ते—

"अनुष्टुभा परि लिखत्यनुष्टुप्सर्वाणि छन्दा१ँसि परिभूः पर्याप्त्यै" [ सं० का० ५ प्र० १ अ० ३ ] इति।

वाग्रूपेयमनुष्टुप्सर्वाणि छन्दांसि परितो भवति व्याप्नोतीति परिभूः। अतः सेयं पर्याप्त्यै संपद्यते ॥

अस्या अनुष्टुभः पाठप्राप्तमन्त्रद्वयमध्यवर्तित्वं प्रशंसति—

"मध्यतोऽनुष्टुभा वाग्वा अनुष्टुप्तस्मान्मध्यतो वाचा वदामः" [ सं० का० ५ प्र० १ अ० ३ ] इति।

अनुष्टुभा परिलिखतीति शेषः। यस्माद्वाग्रूपाऽनुष्टुब्मध्यतः पठिता तस्माद्वयमपि मुखमध्यवर्तिजिह्वासाध्यया वाचा संभाषणं कुर्मः ॥

गायत्रीत्रिष्टुभोः पाठप्राप्तमाद्यन्तरूपत्वं प्रशंसति—

"गायत्रिया प्रथमया परि लिखत्यथानुष्टुभाऽथ त्रिष्टुभा तेजो वै गायत्री वागनुष्टुगिन्द्रियं त्रिष्टुप्तेजसा चैवेन्द्रियेण चोभयतो यज्ञं परि गृह्णाति" [ सं० का० ५ प्र० १ अ० ३ ] इति।

पूर्वं प्रशस्ताऽपि मध्यवर्तिन्यनुष्टुप्पुनरपि पार्श्वस्थाभ्यां सह प्रशस्यते । यज्ञनिष्पादकवाग्रूपत्वादनुष्टुभो यज्ञत्वम् । तस्मादुभयतो गायत्रीत्रिष्टुभोः पाठेन मध्यवर्तिनं यज्ञमेव तेजसा चैवेन्द्रियेण चोभयतः परिगृहीतवान्भवति ॥

अत्र विनियोगसंग्रहः—

इमां रज्जुं समादाय प्रतू तुरगबन्धनम् ।
युञ्जा गर्दभमाबध्य योगे यान्ति त्रिभिर्मृदम्[2] ॥ १ ॥
इमोन्तादग्निमित्यादेर्गमने द्वेष्यमन्त्रणम् ।
व्यामोन्तेन वपा जप्या रामोन्ताद्द्वेष्यमन्त्रणम् ॥ २ ॥
अन्वग्नि गच्छेदागत्य द्वाभ्यामाक्रमयेद्द्रुतम् ।
द्यौस्तेऽश्वपृष्ठं संमार्ष्टि ह्युत्क्रा द्वाभ्यां तदुत्क्रमः ॥ ३ ॥
अपः पदेऽपो निनयेज्जिघद्वाभ्यां जुहोति हि ।
परित्रिभिः परिलिखेदेकविंशतिरीरिताः ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके
द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ चतुर्थाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः । )

---

देवस्यं त्वा सवितुः प्रंसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्तांभ्यां पृथिव्याः सधस्थेऽग्निं पुंरीष्यंमङ्गिरस्वत्खंनामि । ज्योतिंष्मन्तं त्वाऽग्ने सुप्रतींकमजंस्रेण भानुना दीद्यांनम् । शिवं प्रजाभ्योऽहिंसन्तं पृथिव्याः सधस्थेऽग्निं पुंरीष्यंमङ्गिरस्वत्खंनामि । अपां पृष्ठमंसि सप्रथां उर्वग्निं भंरिष्यदपंरावपिष्ठम् । वर्धमानं मह आ च पुष्कंरं दिवो मात्रंया वरिणा

---

१ क. घ. ङ. °सा. चेन्द्रि° । २ ख. °मृदा । इ° । ३ ख. च. °दुद्रमः ।

प्रथस्व । शर्म च स्थः (१) वर्म च स्थो अच्छिद्रे बहुले उभे । व्यचस्वती सं वसाथां भर्तमग्निं पुरीष्यम् । सं वसाथाꣳ सुवर्विदा समीची उरसा त्मना । अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित् । पुरीष्योऽसि विश्व-भराः । अथर्वा त्वा प्रथमो निरमन्थदग्ने । त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः । तमु त्वा दध्यङ्ङृषिः पुत्र ईधे (२) अथर्वणः । वृत्रहणं पुरंदरम् । तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनंजयꣳ रणेरणे । सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञꣳ सुकृतस्य योनौ । देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयो धाः । नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ असदत्सु-दक्षः । अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रंभरः शुचिजिह्वो अग्निः । सꣳ सीदस्व महाꣳ असि शोचस्व (३) देववीतमः । वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् । जनिष्वा हि जेन्यो अग्रे अह्नाꣳ हितो हितेष्वरुषो वनेषु ।

दमेदमे सप्त रत्ना दधानोऽग्निर्होता नि षसादा यजीयान् (४)॥

(स्थ ईधे शोचस्व सप्तविंशतिश्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः॥ ३॥

---

(अथ चतुर्थाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः।)

---

देवस्य। त्वा। सवितुः। प्रसव इति प्र—सवे। अश्विनोः। बाहुभ्यामिति बाहु—भ्याम्। पूष्णः। हस्ताभ्याम्। पृथिव्याः। सधस्थ इति सध—स्थे। अग्निम्। पुरीष्यम्। अङ्गिरस्वत्। खनामि। ज्योतिष्मन्तम्। त्वा। अग्ने। सुप्रतीकमिति सु—प्रतीकम्। अजस्रेण। भानुना। दीद्यानम्। शिवम्। प्रजाभ्य इति प्र—जाभ्यः। अहिंसन्तम्। पृथिव्याः। सधस्थ इति सध—स्थे। अग्निम्। पुरीष्यम्। अङ्गिरस्वत्। खनामि। अपाम्। पृष्ठम्। असि। सप्रथा इति स—प्रथाः। उरु। अग्निम्। भरिष्यत्। अपरावपिष्ठमित्यपरा—वपिष्ठम्। वर्धमानम्। महः। एति। च। पुष्करम्। दिवः। मात्रया। वरिणा। प्रथस्व। शर्म। च। स्थः (१)। वर्म। च। स्थः। अच्छिद्रे इति। बहुले

(खननाभिधानम्)

इति । उभे इति । व्यचस्वती इति । समिति । वसाथाम् । भर्तम् । अग्निम् । पुरीष्यम् । समिति । वसाथाम् । सुवर्विदेति सुवः—विदा । समीची इति । उरसा । त्मना । अग्निम् । अन्तः । भरिष्यन्ती इति । ज्योतिष्मन्तम् । अजस्रम् । इत् । पुरीष्यः । असि । विश्वभरा इति विश्व—भराः । अथर्वा । त्वा । प्रथमः । निरिति । अमन्थत् । अग्ने । त्वाम् । अग्ने । पुष्करात् । अधीति । अथर्वा । निरिति । अमन्थत । मूर्ध्नः । विश्वस्य । वाघतः । तम् । उ । त्वा । दध्यङ् । ऋषिः । पुत्रः । ईधे (२) । अथर्वणः । वृत्रहणमिति वृत्र—हनम् । पुरंदरमिति पुरं—दरम् । तम् । उ । त्वा । पाथ्यः । वृषा । समिति । ईधे । दस्युहन्तममिति दस्यु—हन्तमम् । धनंजयमिति धनं—जयम् । रणेरण इति रणे—रणे । सीद । होतः । स्वे । उ । लोके । चिकित्वान् । सादय । यज्ञम् । सुकृतस्येति सु—कृतस्य । योनौ । देवावीरिति देव—अवीः । देवान् । हविषा । यजासि । अग्ने । बृहत् । यजमाने । वयः । धाः । नीति । होता । होतृषदन इति होतृ—सदने । विदानः । त्वेषः । दीदिवान् । असदत् । सुदक्ष इति सु—दक्षः । अदब्धव्रतप्रमति-

रित्यदंब्धव्रत—प्रमतिः । वसिष्ठः । सहस्रंभर इति सहस्रं—भरः । शुचिंजिह्व इति शुचिं—जिह्वः । अग्निः । सम् । इति । सीदस्व । महान् । असि । शोचंस्व ( ३ ) । देववीतम इति देव—वीतमः । वि । इति । धूमम् । अग्ने । अरुषम् । मियेध्य । सृज । प्रशस्तेति प्र—शस्त । दर्शतम् । जनिष्व । हि । जेन्यः । अग्रे । अह्नाम् । हितः । हितेषु । अरुषः । वनेषु । दमेदम इति दमे—दमे । सप्त । रत्ना । दधानः । अग्निः । होता । नि । इति । ससाद । यजीयान् ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ चतुर्थकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः । )

---

द्वितीये मृदाक्रमणमुक्तम् । अथ तृतीये खननमभिधीयते । कल्पः—" देवस्य त्वा सवितुः प्रसव इति द्वाभ्यां खनति " इति । प्रथममन्त्रपाठस्तु—

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्याः सधस्थेऽग्निं पुरीष्यमङ्गिरस्वत्खनामि, इति ।

स्पष्टोऽर्थः ॥

द्वितीयमन्त्रपाठस्तु—

ज्योतिष्मन्तं त्वाऽग्ने सुप्रतीकमजस्रेण भानुना दीद्यानम् । शिवं प्रजाभ्योऽहिꣳसन्तं पृथिव्याः

( खननाभिधानम् )

सधस्थेऽग्निं पुरीष्यमङ्गिरस्वत्खनामि । , इति ।

हेऽग्ने पृथिव्याः सधस्थ उपरिप्रदेशे पुरीष्यं पांसुयोग्यमग्निं त्वामङ्गिरस इवाहं खनामि। कीदृशं त्वां, ज्योतिष्मन्तं ज्वालायुक्तं, सुप्रतीकं सुमुखम्, अजस्रेण भानुना दीद्यानं निरन्तरं वर्तमानेन रश्मिना प्रकाशमानं प्रजाभ्यः प्रजोपकारार्थं शिवं शान्तमत एवाहिंसन्तं हिंसामकुर्वन्तम् ॥

एतन्मन्त्रद्वयसाध्यं खननं विधत्ते—

"देवस्य त्वा सवितुः प्रसव इति खनाति प्रसूत्या अथो धूममेवैतेन जनयति ज्योतिष्मन्तं त्वाऽग्ने सुप्रतीकमित्याह ज्योतिरेवैतेन जनयति" [ सं० का० ५ प्र० १ अ० ४ ] इति।

प्रथममन्त्रे सवितुः प्रसव इत्युच्चारणं प्रेरणाय संपद्यते। किं चैतेन मन्त्रेण धूममेवोत्पादयति नतु ज्वालां, तस्माद्द्वितीयमन्त्रादौ ज्योतिष्मन्तमित्येतेन शब्देन ज्योतिर्जनयत्येव ॥

तस्य मन्त्रस्य द्वितीयार्धे शिवशब्दतात्पर्यं दर्शयति—

"सोऽग्निर्जातः प्रजाः शुचाऽर्पयत्तं देवा अर्धर्चेनाशमयञ्छिवं प्रजाभ्योऽहिꣳसन्तमित्याह प्रजाभ्य एवैनꣳ शमयति" [ सं०का०५प्र०१अ०४ ]इति।

ज्वालासहित उत्पन्नमात्रेणैव प्रजाः सर्वाः संतापेनायोजयत्तं तादृशमग्निं शिवमित्याद्यर्धर्चेन देवाः शान्तमकुर्वन् । तस्मादस्यार्धर्चस्य पाठेन प्रजोपकारायैवैनं शान्तं करोति ॥

मन्त्रद्वित्वं प्रशंसति—

"द्वाभ्यां खनति प्रतिष्ठित्यै" [ सं० का० ५ प्र० १ अ० ४ ] इति ॥

कल्पः—"अपां पृष्ठमसीति पुष्करपर्णमाहृत्यैतयैव विवेष्ट्य" इति ।

मृदं प्रक्षेप्तुं पुटिकां कृत्वेत्यर्थः ।

पाठस्तु—

अपां पृष्ठमसि सप्रथा उर्वग्निं भरिष्यदपरावपिष्ठम् । वर्धमानं मह आ च पुष्करं दिवो मात्रया वरिणा प्रथस्व।, इति ।

हे पुष्करपर्ण त्वमपां पृष्ठमसि पृष्ठवदुपरिभागे वर्तमानमसि। कीदृशं त्वम्। प्रथाः सविस्तारमत एवोर्वग्निं भरिष्यदग्निसाधनमृदं बहुलं यथा भवति तथा रितुं समर्थम्। अपरावपिष्ठं परावपो विनाशः, अतिशयेन तद्रहितम्। वर्धनमप्संबन्धाद्दिने दिने वृद्धियुक्तं, महो निर्लेपत्वाद्युक्त्या पूजनीयं, पुष्कर-

मग्निनिष्पादनद्वारा पुष्टिकरं, तादृशं त्वं मात्रया परिमाणेन दिवो वरिणाऽऽकाशादप्याधिक्येनाऽऽसमन्तात्प्रथस्व विस्तृतं भव ॥

तमेतं मन्त्रं विनियुङ्क्ते—

"अपां पृष्ठमसीति पुष्करपर्णमा हरत्यपां वा एतत्पृष्ठं यत्पुष्करपर्णं रूपेणैवैनदा हरति" [ सं० का० ५ प्र० १ अ० ४ ] इति ।

अपामुपरिवर्तमानत्वस्य विद्यमानस्यैवार्थस्याभिधायित्वादनुरूपेणैव मन्त्रेण नत्पुष्करपर्णमाहरति ॥

कल्पः—" शर्म च स्थो वर्म च स्थ इति द्वाभ्यामुत्तरेण मृत्खनं कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तृणात्युपरिष्टात्पुष्करपर्णमुत्तानम् " इति ।

प्रथममन्त्रपाठस्तु—

शर्म च स्थो वर्म च स्थो अच्छिद्रे
बहुले उभे । व्यचस्वती सं
वसाथां भर्तमग्निं पुरीष्यम् । , इति ।

हे कृष्णाजिनपुष्करपर्णे उभे युवां शर्म च[2] स्थः सुखकारिणी अपि भवथः तथा वर्म च स्थः कवचवद्रक्षके अपि भवथः । कीदृशे, अच्छिद्रे छिद्ररहिते बहुले विस्तीर्णे व्यचस्वती आच्छादनप्रकारवती पुटिकादिसदृशे इत्यर्थः । तथाविधे युवां संवसाथां सम्यङ्मृदमाच्छादयतम् । ततः पुरीष्यमग्निं धारयतम् ॥

द्वितीयमन्त्रपाठस्तु—

सं वसाथाꣳ सुवर्विदा समीची
उरसा त्मना । अग्निमन्तर्भरिष्यन्ती
ज्योतिष्मन्तमजस्रमित् । , इति ।

हे कृष्णाजिनपुष्करपर्णे युवां त्मना स्वयमेव परनिरपेक्षे सती उरसा सदृशेन भवदीयस्वरूपेण संवसाथां सम्यगाच्छादयतम् । कीदृशे युवां, सुवर्विदा स्वर्गविदे स्वर्गलाभसाधने इत्यर्थः । समीची मृद्बन्धनायानुकूले अजस्रमिन्निरन्तरमेव ज्योतिष्मन्तमग्निमन्तः स्वोदरे भरिष्यन्ती धारयिष्यन्ती ।

अनेन मन्त्रद्वयेन साध्यं पुष्करपर्णस्य प्रसारणमुत्तरत्र विधातुमादौ पुष्करपर्णे मृदः संभरणं विधत्ते—

१ क. घ. तादृश । २ ख. च. च स्थोऽग्नेः सुं ।

( खननाभिधानम् )

" पुष्करपर्णेन सं भरति योनिर्वाऽग्नेः पुष्करपर्णꣳ सयोनिमेवाग्निꣳ सं भरति " [ सं० का० ५ प्र० १ अ० ४ ] इति ।

पुष्करपर्णस्याग्निस्थानत्वमारुणकेतुकचयने समाम्नातम्—" जानुदघ्नीमुत्तरवेदीं खात्वा । अपां पूरयित्वा गुल्फदघ्नम् । पुष्करपर्णैः पुष्करदण्डैः पुष्करैश्च सꣳस्तीर्य । तस्मिन्विहायसे । अग्निं प्रणीयोपसमाधाय । " इति । अतः पुष्करपर्णस्याग्नियोनित्वात्सयोनिमेवाग्निं संभृतवान्भवति ॥

पुष्करपर्णवत्तेनैव मन्त्रद्वयेन कृष्णाजिनस्याऽऽस्तरणं विधातुमादौ कृष्णाजिने मृदः स्थापनं विधत्ते—

" कृष्णाजिनेन सं भरति यज्ञो वै कृष्णाजिनं यज्ञेनैव यज्ञꣳ सं भरति " [ सं० का० ५ प्र० १ अ० ४ ] इति ।

कृष्णाजिनस्य यज्ञरूपत्वं दर्शपूर्णमासप्रकरणेऽवगम्यते—" यज्ञो देवेभ्यो निलायत । कृष्णो रूपं कृत्वा । यत्कृष्णाजिने हविरध्यवहन्ति । यज्ञादेव तद्यज्ञं प्रयुङ्क्ते " इति । तद्वदत्रापि कृष्णाजिनरूपेण यज्ञेनैवाग्निरूपं यज्ञं संभरति ॥

चर्मान्तरपरित्यागेन कृष्णाजिनस्वीकारे कारणं दर्शयति—

" यद्ग्राम्याणां पशूनां चर्मणा संभरेद्ग्राम्यान्पशूञ्छुचाऽर्पयेत्कृष्णाजिनेन सं भरत्यारण्यानेव पशूञ्छुचाऽर्पयति तस्मात्समावत्पशूनां प्रजायमानानामारण्याः पशवः कनीयाꣳसः शुचा ह्यृताः " [ सं० का० ५ प्र० १ अ० ४ ] इति ।

ग्राम्यपशूनां गवादीनां चर्मण्यग्निसंभरणे गवादयः संतापेन संयोजिता भवन्ति । कृष्णाजिनेन संभरणे त्वारण्या एव पशवः संतापेन योज्यन्ते । यस्मादेवं तस्माल्लोकेऽपि चतुष्पात्त्वाद्याकारसाम्येन प्रजायमानानां पशूनां मध्ये ग्राम्याः श्रेष्ठा आरण्या एव कनिष्ठाः । यस्मात्ते शुचर्ताः शुचं प्राप्तास्तस्मात्तेषां कनिष्ठत्वं युक्तम् । नहि ग्राम्यगवादय इव शालाप्रवेशनभक्ष्यप्रदानादिभिरारण्याः पोष्यन्ते । सेयं तेषां शोकप्राप्तिः ॥

तस्य कृष्णाजिनस्य लोम्नामुपरि संभरणं विधत्ते—

" लोमतः सं भरत्यतो ह्यस्य मेध्यम् " [ सं० का० ५ प्र० १ अ० ४ ] इति ।

यस्मादस्य कृष्णाजिनस्यात इदं लोमयुक्तं स्थानं मेध्यं तस्मात्तत्र संभरेत् ॥

---

१ ख. च. °स्थानीयत्व° । २ ख. च. °स्वाह्मणेऽ° । ३ ख. च. हेतुं । ४ क. घ. ङ. संपादने । ५ ख. च. °न्ते । अतस्तेषां ।

इदानीमुक्तसंभरणसिद्धये पूर्वोक्तमन्त्रद्वयसाध्यमुभयास्तरणं विधत्ते—

"कृष्णाजिनं च पुष्करपर्णं च सꣳस्तृणातीयं वै कृष्णाजिनमसौ पुष्करप[र्णं] आभ्यामेवैनमुभयतः परि गृह्णाति" [ सं० का० ५ प्र० १ अ० ४ ] इति।

कृष्णाजिनपुष्करपर्णयोरधरोत्तरभावेन लोकद्वयरूपत्वम् ॥

कल्पः—"पुरीष्योऽसि विश्वभरा इति मृत्खनमभिमन्त्र्य" इति।

पाठस्तु—

पुरीष्योऽसि विश्वभराः । अथर्वा
त्वा प्रथमो निरमन्थदग्ने ।, इति।

हे खननप्रदेश त्वं पुरीष्योऽसि पुरीषस्य बहुलस्य पांसोर्योग्योऽसि। अ[त] एव विश्वभरा असि। विश्वं कृत्स्नमुखारूपं बिभर्तीति विश्वभराः। हेऽग्ने [अ]थर्वाख्य ऋषिः प्रथम इतरेभ्यः पूर्वभावी संस्त्वां निरमन्थन्निःशेषेण म[थि]तवान् ॥

अत्राथर्वणः प्रथमनिर्मथनं नाम प्रथमदर्शनमित्यभिप्रायं दर्शयति—

"अग्निर्देवेभ्यो निलायत तमथर्वाऽन्वपश्यदथर्वा त्वा प्रथमो निरमन्[थ]... इत्याह य एवैनमन्वपश्यत्तेनैवैनꣳ सं भरति" [ सं० का० ५ प्र० [१] अ० ४ ] इति।

अन्वपश्यदन्विष्य दृष्टवान् ॥

कल्पः—"त्वामग्ने पुष्करादधीति कृष्णाजिने पुष्करपर्णे च सं[स्तीर्णे] चतसृभिस्तिसृभिर्वा गायत्रीभिर्ब्राह्मणस्य त्रिष्टुब्भी राजन्यस्य" इति।

यद्यप्यत्र त्वामग्न इत्यादिकास्तिस्र एव गायत्र्यः समाम्नातास्तथाऽपि च[तसृ]ष्वपक्षे पुरीष्योऽसि विश्वभरा इत्यनेन पूर्वोक्तेन मन्त्रेण सह संख्या पूर्ण[ा]। पुरीष्योऽसीत्ययं मन्त्रः पूर्वं व्याख्यातः ॥

द्वितीयमन्त्रपाठस्तु—

त्वामग्ने पुष्करादध्यथर्वा निरमन्थत ।
मूर्ध्नो विश्वस्य वाघतः ।, इति ।

हेऽग्नेऽथर्वाख्य ऋषिः पुष्करादधि पद्मपत्रस्योपरि त्वां निरमन्थत [निःशे]षेण मथितवान्। अत एव पञ्चमकाण्डे ब्राह्मणमाम्नातम्—"पुष्करप[र्णे]मुपश्रितमविन्दत्" इति। कीदृशात्पुष्करात्, मूर्ध्नं उत्तमाङ्गवत्प्रशस्ता[त्]

१ ख. च. अथ॑। २ ख. च. 'तुष्कप'।

(खननाभिधानम्)

वाघतः सर्वस्य जगतो वाहकात् । इदं हि पुष्करपर्णमग्निमन्थनयज्ञनिष्पादनाः-दिद्वारा सर्वं जगन्निर्वहति ॥

तृतीयमन्त्रपाठस्तु—

तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथ-
र्वणः । वृत्रहणं पुरंदरम् ।, इति ।

हेऽग्नेऽथर्वणः पुत्रो दध्यङ्नामक ऋषिस्तमु त्वेधे तमेव त्वां प्रज्वलितवान् । कीदृशं त्वां, वृत्रहणं वैरिनाशनं पुरंदरं रुद्ररूपेणासुरसंबन्धिनां त्रयाणां पुराणां विदारयितारम् ॥

चतुर्थमन्त्रपाठस्तु—

तमु त्वा पाथ्यो वृषा समीधे दस्यु-
हन्तमम् । धनंजयꣳ रणेरणे ।, इति ।

हेऽग्ने पाथ्यनामकः कश्चिदृषिस्तमु त्वा समीधे तमेव त्वां प्रज्वालितवान् । कीदृशः पाथ्यः । वृषा श्रेष्ठः । कीदृशं त्वाम् । दस्युहन्तमं तस्कराणामतिशयेन हन्तारं, रणेरणे धनंजयं तेषु तेषु सङ्ग्रामेषु धनस्य जेतारम् ॥

इत्थमिमा गायत्र्य उक्ताः । अथ त्रिष्टुभां चतसृणां मध्ये प्रथमामाह—

सीद होतः स्व उ लोके चिकित्वान्त्सादया
यज्ञꣳ सुकृतस्य योनौ । देवावीर्देवान्हविषा
यजास्यग्ने बृहद्यजमाने वयो धाः ।, इति ।

हे होतर्होमनिष्पादक चिकित्वानभिज्ञस्त्वं स्वकीय एव स्थान उत्तरवेदिरूपे सीदोपविश । यज्ञं चेमं सुकृतस्य योनौ पुण्यकर्मणो योग्यस्थाने सादय स्थापय । देवान्वेति कामयत इति देवावीर्देवप्रिय इत्यर्थः । तादृशस्त्वं देवान्हविषा यजासि पूजयसि । हेऽग्ने यजमाने बृहद्वयो दीर्घमायुर्धाः स्थापय ॥

अथ द्वितीयामाह—

नि होता होतृषदने विदानस्त्वेषो दीदि-
वाꣳ असदत्सुदक्षः । अदब्धव्रतप्रमतिर्व-
सिष्ठः सहस्रंभरः शुचिजिह्वो अग्निः ।, इति ।

होतृषदने होमनिष्पादकस्य योग्यस्थान उत्तरवेदिरूपेऽग्निर्नितरामसदत्स-

१ ख. च. °नानि° ।

म्यगुपविष्टवान् । कीदृशोऽग्निः । होता देवानामाह्वाता, विदानः स्थानाभिज्ञ
त्वेषो दीप्तिमान्, दीदिवान्देवेभ्यो हविषो दाता, सुदक्षोऽत्यन्तकुशलः
अदब्धव्रतप्रमतिरदब्धेऽविनाशिते व्रते कर्मणि प्रकृष्टा मतिर्यस्य स तथा
विधः । वसिष्ठोऽतिशयेन वासयिता । सहस्रसंख्याकानि हवींषि भर्ति
पोषयतीति सहस्रंभरः । शुचिः शुद्धा होमयोग्या जिह्वा ज्वाला यस्यासौ
शुचिजिह्वः ॥

अथ तृतीयामाह—

सꣳ सीदस्व महाꣳ असि शोचस्व
देववीतमः । वि धूममग्ने अरुषं
मियेध्य सृज प्रशस्त दर्शतम् ।, इति ।

हेऽग्ने त्वमस्मिन्पुष्करपर्णे संसीदस्व सम्यगुपविश । त्वमनेकक्रतुहेतुत्वान्म
हानसि, देवान्वेति गच्छतीति देववीरतिशयेन देववीर्देववीतमः । तादृशस्त्वं
शोचस्व दीप्यस्व । हे मियेध्य मेधार्ह प्रशस्तोत्कृष्टाग्नेऽरुषमरोषणमनुग्रं दर्श
द्रष्टुं शक्यं शान्तं धूमं विशेषेण सृज ॥

अथ चतुर्थीमाह—

जनिष्वा हि जेन्यो अग्रे अह्नाꣳ हितो हिते-
ष्वरुषो वनेषु । दमेदमे सप्त रत्ना दधा-
नोऽग्निर्होता नि षसादा यजीयान् ॥, इति ॥

हेऽग्ने त्वमह्नामग्रे प्रभातकाले जनिष्वोत्पद्यस्व । कीदृशस्त्वम् । जेन्यो ज
शीलः । हितेषु हितो हविर्भुजो ये देवास्तुभ्यं हितमाचरन्ति, ये च मनु
ऋत्विग्यजमानास्तुभ्यं हितमाचरन्ति, तेषु सर्वेषु हितेषु त्वमपि हितो भव
वनेष्वरुषो नानाविधफलवृक्षोपेतेषु वनेषु कोपरहितो दावाग्निरूपेण वनानि
दहती(सी)त्यर्थः । अयमग्निर्दमेदमे यजमानानां गृहे गृहे निषसादोपवि
कीदृशोऽग्निः । सप्त रत्ना दधानो रत्नसमानाञ्ज्वालाविशेषान्सप्तसंख्याका
रयमाणः । अत एव सप्तजिह्व इति सर्वत्र प्रसिद्धः ॥

आथर्वणिकाश्चाऽऽमनन्ति—

“ काली कराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी
लेलायमाना इति सप्त जिह्वाः ” इति ॥

(खननाभिधानम्)

स चाग्निर्होता देवानामाह्वाता यजीयानतिशयेन यष्टा ॥

उक्तासु गायत्रीषु त्वामग्न इत्येतस्यां पुष्करादधीत्यस्यांशस्य तात्पर्यं दर्शयति—

"त्वामग्ने पुष्करादधीत्याह पुष्करपर्णे ह्येनमुपश्रितमविन्दत्" [सं० का० ५ प्र० १ अ० ४] इति।

अथर्वा यदाऽग्निमन्विष्टवांस्तदानीं कस्मिंश्चित्पुष्करपर्णेऽवस्थितमेनमग्निं लब्धवान्। तस्मात्पुष्करादधीत्युक्तिर्युक्ता ॥

अनन्तरमन्त्रे परित्यज्यान्यमृषिं दधीच एव स्वीकारे कारणं दर्शयति—

"तमु त्वा दध्यङ्ङृषिरित्याह दध्यङ्वा आथर्वणस्तेजस्व्यासीत्तेज एवास्मिन्दधाति" [सं० का० ५ प्र० १ अ० ४] इति ॥

अन्यत्र मन्त्रान्तरे दधीचो महिमा प्रपञ्चितः—"दध्यङ्ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा" इत्यादौ। तस्माद्दधीचस्तेजस्वित्वम् ॥

उपरितनमन्त्रेण पाथ्यशब्देन दध्यङ्ङेव विवक्षितो नान्य इत्येतद्दर्शयति—

"तमु त्वा पाथ्यो वृषेत्याह पूर्वमेवोदितमुत्तरेणाभि गृणाति" [सं० का० ५ प्र० १ अ० ४] इति।

यः पूर्वमन्त्रोक्तो दध्यङ्स एवात्र सन्मार्गवर्तित्वात्पाथ्य इत्युच्यते। अतः पूर्वमन्त्रोदितमेवार्थमुत्तरेण मन्त्रेण प्रतिपादयति ॥

एतैर्मन्त्रैः साध्यमग्निसंभरणं विधत्ते—

"चतसृभिः सं भरति चत्वारि छन्दाᳲसि छन्दोभिरेव" [सं० का० ५ प्र० १ अ० ४] इति।

त्वामग्न इत्याद्यास्तिस्रस्ततः पूर्वा पुरीष्योऽसीत्येका, तदेवं चतस्रः। गायत्री त्रिष्टुब्जगत्यनुष्टुबिति[१] च्छन्दसां चतुष्टम्[२]। अतः संख्यासाम्याच्छन्दोभिरेवाग्निः संभृतो भवति। सीद होतरित्यादीनां त्रिष्टुभां चतुष्ट्वम्। अत्रापि चतसृभिः संभरतीति विधिर्योजनीयः ॥

गायत्रीणां त्रिष्टुभां चाधिकारिभेदेन व्यवस्थां विधत्ते—

"गायत्रीभिर्ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुग्भी राजन्यस्य त्रैष्टुभो हि राजन्यः" [सं० का० ५ प्र० १ अ० ४] इति।

मुखजत्वसाम्येन ब्राह्मणो गायत्रो बाहुजत्वसाम्येन राजन्यस्त्रैष्टुभः ॥

अथ काम्यं समुच्चयं विधत्ते—

---

१ ख. घ. ङ. च. °ष्टुबिति। २ घ. ङ. °तुष्टयेऽप्ययं च°।

"यं कामयेत वसीयान्त्स्यादित्युभयीभिस्तस्य सं भरेत्तेजश्चैवास्मा इन्द्रियं च समीची दधाति" [सं० का० ५ प्र० १ अ० ४] इति।

तत्र गायत्रीभिस्तेजःप्राप्तिस्त्रिष्टुब्भिरिन्द्रियप्राप्तिः ॥

समुचितमन्त्रगतामष्टत्वसंख्यां प्रशंसति—

"अष्टाभिः सं भरत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तः सं भरति" [सं० का० ५ प्र० १ अ० ४] इति ॥

चतस्रस्त्रिष्टुभः प्रत्येकं क्रमेण प्रशंसति—

"सीद होतरित्याह देवता एवास्मै सꣳ सादयति नि होतेति मनुष्यान्त्सꣳ सीदस्वेति वयाꣳसि जनिष्वा हि जेन्यो अग्रे अह्नामित्याह देवमनुष्यानेवास्मै सꣳसन्नान्प्र जनयति" [सं० का० ५ प्र० १ अ० ४] इति।

सीद होतरित्येतस्यां प्रथमायां त्रिष्टुभि देवावीरिति पदेन देवतानां संसादनं सूचितम्। यद्वा देवान्हविषा यजासीत्यनेन तत्सूचितम्। नि होतेत्यस्यां द्वितीयायां त्रिष्टुभि होतृषदन इति पदेन होत्रादीनां मनुष्याणां संसादनं सूचितम्। सꣳ सीदस्वेत्यस्यां तृतीयायां त्रिष्टुभि धूमं विसृजेत्येवमन्तरिक्षगामिना(णा) धूमेनान्तरिक्षचारिणां पक्षिणां सूचितत्वात्तेषां संसादनमुक्तम्। जनिष्वेत्यस्यां चतुर्थ्यां त्रिष्टुभि जनिष्वेत्युत्पादनस्य सूचितत्वात्पूर्वोक्तान्संसन्नान्देवान्मनुष्यांस्तदुपलक्षितानि वयांसि च प्रकर्षेण जनयति।

अत्र विनियोगसंग्रहः—

देव द्वाभ्यां खनेचापां पद्मपत्रं समाहरेत्।
शर्म द्वाभ्यां चर्मपत्रे स्तृणात्यथ पुरीष्यतः ॥ १ ॥
चतुष्टय्या संभरति विप्रस्य क्षत्रियस्य तु।
सीदेत्यादिचतुष्केण मन्त्रा द्वादश वर्णिताः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ चतुर्थकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः।

---

सं ते वायुर्मातरिश्वा दधातूत्तानायै हृदयं

---

१ ख. °ष्टुब्भिरि°। २ ख. च. °त्सं°। ३ ख. च. °कं प्र°। ४ ख. च. °न्देवमनु° ५ ख. च. °रीत्यतः। ६ ख. च. °ष्टयात्संभ°।

यद्विलिष्टम्। देवानां यश्चरति प्राणथेन तस्मै च देवि वषडस्तु तुभ्यम्। सुजातो ज्योतिषा सह शर्म वरूथमाऽसदः सुवः। वासो अग्ने विश्वरूपꣳ सं व्ययस्व विभावसो। उदु तिष्ठ स्वध्वरावा नो देव्या कृपा। दृशे च भासा बृहता सुशुक्वनिराऽग्ने याहि सुशस्तिभिः (१) ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता। ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे। स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु। चित्रः शिशुः परि तमाꣳस्यक्तः प्र मातृभ्यो अधि कनिक्रदद्गाः। स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन्। पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहनः। शिवो भव (२) प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः। मा द्यावापृथिवी अभि शूशुचो माऽन्तरिक्षं मा वनस्पतीन्। प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा। भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा। रासभो वां कनिक्रदत्सुयुक्तो वृषणा रथे। स वामग्निं पुरीष्यमाशुर्दूतो वहादितः। वृषाऽग्निं वृषणं भरन्नपां गर्भꣳ समुद्रियम्। अग्न आ

याहि ( ३ ) वीतयं ऋतꣳ सत्यम् । ओषधयः प्रति गृह्णीताग्निमेतꣳ शिवमायन्तमभ्यत्र युष्मान् । व्यस्यन्विश्वा अमतीररातीर्निषीदन्नो अप दुर्मतिꣳ हनत् । ओषधयः प्रति मोदध्वमेनं पुष्पावतीः सुपिप्पलाः । अयं वो गर्भ ऋत्वियः प्रत्नꣳ सधस्थमाऽसदत् ( ४ ) ॥

( सुशस्तिभिः शिवो भव याहि षट्त्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ चतुर्थाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः । )

---

समिति । ते । वायुः । मातरिश्वा । दधातु । उत्तानाया इत्युत्—तानायै । हृदयम् । यत् । विलिष्टमिति वि—लिष्टम् । देवानाम् । यः । चरति । प्राणथेनेति प्र—अनथेन । तस्मै । च । देवि । वषट् । अस्तु । तुभ्यम् । सुजात इति सु—जातः । ज्योतिषा । सह । शर्म । वरूथम् । एति । असदः । सुवः । वासः । अग्ने । विश्वरूपमिति विश्व—रूपम् । समिति । व्ययस्व । विभावसो इति विभा—वसो । उदिति । उ । तिष्ठ । स्वध्वरेति सु—अध्वर । अव । नः । देव्या । कृपा । दृशे । च । आसा । बृहता ।

सुशुक्वनिरिति सु—शुक्वनिः। एति। अग्ने। याहि।
सुशस्तिभिरिति सुशस्ति—भिः (१)। ऊर्ध्वः।
उ। स्विति। नः। ऊतये। तिष्ठ। देवः। न। सविता।
ऊर्ध्वः। वाजस्य। सनिता। यत्। अञ्जिभिरित्य-
ञ्जि—भिः। वाघद्भिरिति वाघत्—भिः। विह्वयामह
इति वि—ह्वयामहे। सः। जातः। गर्भः। असि।
रोदस्योः। अग्ने। चारुः। विभृत इति वि—भृतः।
ओषधीषु। चित्रः। शिशुः। परीति। तमांसि।
अक्तः। प्रेति। मातृभ्य इति मातृ—भ्यः। अधीति।
कनिक्रदत्। गाः। स्थिरः। भव। वीड्वङ्ग इति
वीडु—अङ्गः। आशुः। भव। वाजी। अर्वन्।
पृथुः। भव। सुषद इति सु—सदः। त्वम्। अग्नेः।
पुरीषवाहन इति पुरीष—वाहनः। शिवः। भव (२)।
प्रजाभ्य इति प्र—जाभ्यः। मानुषीभ्यः। त्वम्।
अङ्गिरः। मा। द्यावापृथिवी इति द्यावा—पृथिवी।
अभीति। शूशुचः। मा। अन्तरिक्षम्। मा। वन-
स्पतीन्। प्रेति। एतु। वाजी। कनिक्रदत्। नान-
दत्। रासभः। पत्वा। भरन्। अग्निम्। पुरीष्यम्।
मा। पादि। आयुषः। पुरा। रासभः। वाम्।
कनिक्रदत्। सुयुक्त इति सु—युक्तः। वृषणा। रथे।

सः । वाम् । अग्निम् । पुरीष्यम् । आशुः । दूतः । वहात् । इतः । वृषा । अग्निम् । वृषणम् । भरन् । अपाम् । गर्भम् । समुद्रियम् । अग्ने । एति । याहि (३) । वीतये । ऋतम् । सत्यम् । ओषधयः । प्रतीति । गृह्णीत । अग्निम् । एतम् । शिवम् । आयन्तमित्या—यन्तम् । अभीति । अत्र । युष्मान् । व्यस्यन्निति वि—अस्यन् । विश्वाः । अमतीः । अरातीः । निषीदन्निति नि—सीदन् । नः । अपेति । दुर्मतिमिति दुः—मतिम् । हनत् । ओषधयः । प्रतीति । मोदध्वम् । एनम् । पुष्पावतीरिति पुष्प—वतीः । सुपिप्पला इति सु—पिप्पलाः । अयम् । वः । गर्भः । ऋत्वियः । प्रत्नम् । सधस्थमिति सध—स्थम् । एति । असदत् (४) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ चतुर्थकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः । )

---

तृतीयानुवाके मृत्खननमुक्तम् । अथ चतुर्थे मृदाहरणमुच्यते । कल्पः—" सं ते वायुरिति मृत्खनेऽप आनीय " इति । पाठस्तु—

सं ते वायुर्मातरिश्वा दधातूत्तानायै हृदयं

यद्विलिष्टम् । देवानां यश्चरति प्राणथेन
तस्मै च देवि वषडस्तु तुभ्यम् । , इति ।

हे पृथिवि उत्तानाया ऊर्ध्वाभिमुखेनावस्थितायास्तव हृदयं हृदयसदृशं यत्खननस्थानं विलिष्टं विशेषेणाल्पीकृतं तत्खननस्थानं वायुः संदधातु तृणादिपूरणसहितेनानेन जलप्रक्षेपणेन वायुर्यथापूर्वं सम्यक्करोतु। कीदृशो वायुः। मातरिश्वा मातर्यन्तरिक्षे सर्वप्राणिनामियत्तापरिच्छेदकारिणि शेतेऽवतिष्ठत इति मातरिश्वा । यो वायुर्देवानां प्राणथेन प्राणभावेन चरति व्यवहरति । हे देवि पृथिवि तुभ्यं तस्मै वायवे च वषडस्तु । इदं तृणसहितं जलं हुतमस्तु ॥

अनेन मन्त्रेण सा॑ध्यमञ्जलिजलप्रक्षेपं विधत्ते—

“ क्रूरमिव वा अस्या एतत्करोति यत्खनत्यप उप सृजत्यापो वै शान्ताः शान्ताभिरेवास्यै शुचꣳ शमयति ” [ सं० का० ५ प्र० १ अ० ५ ] इति ।

भूप्रदेशं खनतीति यत्तदेतत्पृथिव्याः क्रूरमेव करोति हस्तादिच्छेदवद्व्यथाहेतुत्वात् । तत्क्रौर्यपरिहाराय मृत्खननप्रदेशेऽपोऽवनयेत् । आपश्च शीतलत्वेन शान्ताः । एतादृशीभिरेवास्याः पृथिव्याः खननजन्यं शोकं शमयति ॥

मन्त्रे देवतान्तरपरित्यागेन वायुकथने प्रयोजनमाह—

“ सं ते वायुर्मातरिश्वा दधात्वित्याह प्राणो वै वायुः प्राणेनैवास्यै प्राणꣳ सं दधाति ” [ सं० का० ५ प्र० १ अ० ५ ] इति ।

वायोर्देवप्राणत्वात्तेनैवास्याः पृथिव्याः प्राणसंधानं संपद्यते ॥

पुनरपि वायोरन्यत्प्रयोजनमाह—

“ सं ते वायुरित्याह तस्माद्वायुप्रच्युता दिवो वृष्टिरीर्ते ” [ सं० का० ५ प्र० १ अ० ५ ] इति ।

यस्मात्प्रयोजनान्तरमपि विवक्षितमिति वायुशब्दः प्रयुक्तस्तस्मादेव कारणाद्वृष्टिर्दिवः सकाशाद्वायुप्रच्युता सती प्रवर्तते ॥

मन्त्रस्य चतुर्थपादे वषट्शब्दान्तर्गतेन षट्शब्देन स्मारितामृतुसंख्यामुपजीव्य प्रशंसति—

“ तस्मै च देवि वषडस्तु तुभ्यमित्याह षड्वा ऋतव ऋतुष्वेव वृष्टिं दधाति तस्मात्सर्वानृतून्वर्षति ” [ सं० का० ५ प्र० १ अ० ५ इति ।

अत्राऽऽम्नातपाठानुसारेण षकारमभ्युपेत्य षड्वा ऋतव इति व्याख्यातम् ॥

अथ शाखान्तरपाठानुसारेण षकारं परित्यज्य व्याचष्टे—

---

१ ख. च. साध्यं जलं । २ घ. ङ. 'लिप्र' ।

" यद्वषट्कुर्याद्यातयामाऽस्य वषट्कारः स्याद्यन्न वषट्कुर्याद्रक्षाꣳसि यज्ञ इन्युर्वडित्याह परोक्षमेव वषट्करोति नास्य यातयामा वषट्कारो भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति " [ सं० का० ५ प्र० १ अ० ५ ] इति।

अत्रेदं चिन्तनीयम्। किमस्मिन्मन्त्रे वषट्शब्दः प्रयोक्तव्यो न वेति। नाऽऽद्यः। अत्रैव वषट्कारस्य प्रयोगे सति गतसारत्वेन वक्ष्यमाणे वायव्य-पश्वादौ वषट्कारासंभवप्रसङ्गात्। न द्वितीयः। वज्ररूपस्य वषट्कारस्याभावे रक्षोभिर्यज्ञविघातप्रसङ्गात्। एतद्दोषद्वयपरिहाराय षकारं परित्यज्य वडि-त्येव ब्रूयात्। तथा सति वषट्कारस्य संपूर्णस्यानुक्तत्वान्न गतसारत्वम्एक-देशस्योक्तत्वान्न यज्ञघातोऽपि। तदेवं ब्राह्मणेनैव पाठविकल्पस्य व्याख्या-त्वान्नित्यकाम्यप्रयोगविषयतया पाठद्वयं व्यवस्थापनीयम्॥

कल्पः—" समुद्यम्य कृष्णाजिनस्यान्तान्सुजातो ज्योतिषा सहेति क्षौमेण मौञ्जेनार्कमयेण वा दाम्नोपनह्यति " इति।

पाठस्तु—

सुजातो ज्योतिषा सह शर्म वरूथमाऽ-
सदः सुवः। वासो अग्ने विश्व-
रूपꣳ सं व्ययस्व विभावसो।, इति।

हेऽग्ने सुजातः सुष्ठूत्पन्नस्त्वं ज्योतिषा त्वदीयेन ज्योतिषा सह शर्म सु यथा भवति तथा सुवः स्वर्गसदृशं वरूथं कृष्णाजिननिर्मितं गृहमा प्राप्नुहि। हे विभावसो विभैव दीप्तिरेव वसु धनं यस्यासौ विभावसुस्ता हेऽग्ने विश्वरूपं बहुप्रकाररूपं वासः कृष्णाजिनरूपं वस्त्रं संव्ययस्व सम्यक्परि-रिधत्स्व॥

तमेतं मन्त्रं विनियुङ्क्ते—

" सुजातो ज्योतिषा सहेत्यनुष्टुभोप नह्यत्यनुष्टुप्सर्वाणि छन्दांसि छन्दाꣳसि खलु वा अग्नेः प्रिया तनूः प्रिययैवैनं तनुवा परि दधाति " [ सं० का० ५ प्र० अ० ५ इति।

श्रुत्यन्तरे वाग्वा अनुष्टुबित्युक्तत्वाद्वाग्द्वारा सर्वच्छन्दोरूपत्वम्। श्रुत्य-न्तर आधानप्रकरणे या ते अग्ने पशुषु पवमाना प्रिया तनूरित्यारभ्य गायत्रे या त्रैष्टुभे या जागत इति च्छन्दःसु प्रियशरीरावस्थानकथनेन च्छ

१ ख. च. 'ग्रहननप्र'। २ ख. घ. ङ. वषट्कारं। ३ ख. च. 'त्येवं ब्रू'। ४ ख. 'थनाच्छ'।

सामग्निप्रियशरीरत्वम् । अतः प्रिययैवानयाऽनुष्टुब्रूपया तनुवा परिधानं कृत-
वान्भवति ॥

एतद्वेदनं प्रशंसति—

" वेदुको वासो भवति य एवं वेद " [ सं० का० ५ प्र० १
अ० ५ ] इति ।

वेदुको लाभशीलो वासः प्रति भवति । एतद्वेदिता वस्त्रं प्राप्नोतीत्यर्थः ॥

कल्पः—" उदु तिष्ठ स्वध्वरोर्ध्व ऊ षु ण ऊतय इति सावित्रीभ्या-
मुत्तिष्ठति " इति ।

तयोः प्रथमामाह—

उदु तिष्ठ स्वध्वरावा नो देव्या कृपा ।
दृशे च भासा बृहता सुशुक्वनि-
राऽग्ने याहि सुशस्तिभिः । , इति ।

हे स्वध्वर सुष्ठु यागनिर्वाहकाग्न उदु तिष्ठोत्तिष्ठैवोत्थाय च नोऽस्मान्देव्या
कृपा देवनस्वभावया क्रीडापरया कृपयाऽत्र पालय । हेऽग्ने बृहता भासा
प्रौढेन तेजसा सुशुक्वनिः सुष्ठु शुचां रश्मीनां वनिता यः सोऽयं सुशुक्वनिः ।
तादृशः सन्सुशस्तिभिः शोभनकीर्तिभिः सह दृशे सर्वैः प्राणिभिर्द्रष्टुमायाहि ॥

अथ द्वितीयामाह—

ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो
न सविता । ऊर्ध्वो वाजस्य सनिता
यदञ्जिभिर्वाघद्भिर्विह्वयामहे । , इति ।

हेऽग्ने नोऽस्माकमूतये रक्षणायोर्ध्व ऊ षु तिष्ठोर्ध्व एव सन्नवस्थितो भव ।
क इव, देवो न सविता, यथा सविता देव ऊर्ध्व एव सन्नस्मान्रक्षति तद्वत् ।
यस्त्वमूर्ध्वः स त्वं वाजस्य सनिताऽन्नस्य दाता भव । यद्यस्मात्कारणादञ्जि-
भिर्मन्त्राभिव्यञ्जकैर्वाघद्भिर्हव्यवाहकैर्ऋत्विग्भिर्विह्वयामहे वयं त्वां विविधमाह्व-
यामस्तस्मादूर्ध्व एव तिष्ठेति सर्वत्रान्वयः ॥

एतन्मन्त्रद्वयं विनियुङ्क्ते—

" वारुणो वा अग्निरुपनद्ध उदु तिष्ठ स्वध्वरोर्ध्व ऊ षु ण ऊतय इति

---

१ ख. च. 'ञ्जिभिर्व्यञ्ज' ।

सावित्रीभ्यामुत्तिष्ठाति सवितृप्रसूत एवास्योर्ध्वां वरुणमेनिमुत्सृजति " [ सं० का० ५ प्र० १ अ० ५ ] इति ।

योऽयमग्निरत्र कृष्णाजिनेनोपनद्धः सोऽयं वारुण उपद्रवकारिणो वरुणस्याधीनः । अतस्तत्परिहाराय सवितृलिङ्गकाभ्यामेताभ्यामृग्भ्यां बद्धमग्निं गृहीत्वोत्तिष्ठेत् । द्वितीयमन्त्रे देवो न सवितेत्युक्तत्वादेते सावित्र्यौ, एताभ्यामुत्थाने सवित्रैवानुज्ञातोऽस्याग्नेर्वरुणमेनिं वरुणकृतां बाधां परिहरति ॥

मन्त्रद्वित्वं प्रशंसति––

" द्वाभ्यां प्रतिष्ठित्यै " [ सं० का० ५ प्र० १ अ० ५ ] इति ॥

कल्पः––" स जातो गर्भो असीति हरति " इति ।

पाठस्तु––

स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु । चित्रः शिशुः परि तमाꣳस्यक्तः प्र मातृभ्यो अधि कनिक्रदद्गाः । , इति ।

हेऽग्ने स त्वं द्यावापृथिव्योर्गर्भः सन्निदानीं जातोऽसि । कीदृशस्त्वं, चारुः पूजनीयः । ओषधीषु विभृतो भुज्यमानास्वोषधीषु जाठराग्निरूपः सन्विशेषेण पोषितः । चित्रो नानावर्णाभिर्ज्वालाभिर्विचित्ररूपः । इदानीमुत्पन्नत्वाच्छिशुः । तमांसि पर्यक्तः परिहर्तुमभिव्यक्तः । तादृशस्त्वं मातृभ्य ओषधीभ्योऽधिकनिक्रददधिकं क्रन्दन्प्रगाः प्रकर्षेण गच्छ । यथा लोके शिशुर्मातरमुद्दिश्य क्रन्दन्नादरेण स्वसदने गच्छति तद्वदित्यर्थः ॥

अस्य मन्त्रस्य प्रथमपादेऽभिहितं द्यावापृथिवीगर्भत्वं विशदयति—

" स जातो गर्भो असि रोदस्योरित्याहेमे वै रोदसी तयोरेष गर्भो यदग्निस्तस्मादेवमाह " [ सं० का० ५ प्र० १ अ० ५ ] इति ।

इमे द्यावापृथिव्यावेव रोदःशब्दाभिधेये, तयोर्मध्ये समुत्पन्नत्वात्तद्गर्भत्वम् । यस्मादेवं तस्मान्मन्त्रो युक्तमेवाऽऽह ॥

द्वितीयपादे विभृतश्चारुरिति पदयोर्निमित्तनैमित्तिकभावेनान्वयं दर्शयति—

" अग्ने चारुर्विभृत ओषधीष्वित्याह यदा ह्येतं विभरन्त्यथ चारुतरो भवति " [ सं० का० ५ प्र० १ अ० ५ ] इति ।

यस्मिन्काले जठरे प्रविष्टा ओषधय एतमुदराग्निं विशेषेण पोषयन्ति तदानीमयमग्निश्चारुतरः पटुतरो भवति ॥

---

१ ख. च. °पनिबद्धः । २. ख. छ. °ग्निं हस्ते गृ° ।

( मृदाहरणाभिधानम् )

चतुर्थपादे प्र मातृभ्य इत्येतस्य तात्पर्यं दर्शयति—

" प्र मातृभ्यो अधि कनिक्रदद्गा इत्याहौषधयो वा अस्य मातरस्ताभ्य एवैनं प्र च्यावयति " [ सं० का० ५ प्र० १ अ० ५ ] इति।

ओषधीनामुक्तरीत्या जठराग्निजनकत्वान्मातृत्वम् । अतो मात्रर्थमेवैनमग्निं प्रकर्षेण गमयति। अत एवोत्तरत्रौषधयः प्रतिगृह्णीतेति मन्त्रेणौषधीषु स्थापनं विधास्यति ॥

कल्पः—" स्थिरो भव वीड्वङ्ग इति गर्दभस्य पृष्ठ आदधाति " इति ।

पाठस्तु—

स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् ।
पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहनः । , इति।

अग्नेर्हेतुभूतं पुरीषं यो गर्दभो वहति *तादृश हे गर्दभ, इयर्ति गच्छतीत्यर्वा हेऽर्वन्गमनकुशल त्वं स्थिरश्चलनरहितो भव वीड्वङ्गो दृढकाय आशुर्वेगवान्वाज्यन्नहेतुश्च भव। तथा पृथुर्विस्तीर्णपृष्ठः सुषदोऽग्नेः सुखासनश्च भव॥

तमेतं मन्त्रं विनियुङ्क्ते—

" स्थिरो भव वीड्वङ्ग इति गर्दभ आ सादयति सं नह्यत्येवैनमेतया स्थेम्ने " [ सं० का० ५ प्र० १ अ० ५ ] इति।

गर्दभस्योपरि स्थैर्यार्थमेतयर्चैनमग्निं सम्यग्बद्धवान्भवति। अग्निरूपा मृद्यथा भूमौ न पतति तथा स्थापनीया ॥

गर्दभे स्थापनं प्रशंसति—

" गर्दभेन सं भरति तस्माद्गर्दभः पशूनां भारभारितमः " [ सं० का० ५ प्र० १ अ० ५ ] इति।

यस्मादत्र बलीवर्दादिकमनादृत्य गर्दभेनैव मृदं वाहयन्ति तस्माल्लोकेऽपि गवादीनां पशूनां मध्ये गर्दभ एव भारभारितमः । वोढव्यो द्रव्यविशेषो भारस्तं भरति धारयतीति भारभारी, अतिशयेन भारभारी भारभारितमः प्रौढं भारं वहतीत्यर्थः ॥

प्रकारान्तरेण तदेव प्रशंसति—

" गर्दभेन सं भरति तस्माद्गर्दभोऽप्यनालेशेऽत्यन्यान्पशून्मेद्यत्यन्न[१] ह्येनोर्क[१] संभरन्ति " [ सं० का० ५ प्र० १ अ० ५ ] इति।

---

* मन्त्रे पुरीषवाहन इति संबुद्ध्यर्थे प्रथमेत्यभिप्रायेणेदं व्याख्यानम्।

---

१ ख. च. 'र्दादीनना'।

यस्मादेनेन गर्दभेनार्कपन्नं संभरन्ति, यागद्वाराऽन्नहेतुत्वादियं मृदेवान्नम्
तेचार्चनीयत्वादर्कशब्दाभिधेयम् । यस्मादेनं वहति तस्माल्लोके गर्दभो भ
स्याल्पत्वेऽप्यन्यान्पशूनतिक्रम्य मेदस्वी भवति । अनाशब्दो वर्णविकारेणा
वाची, तस्य लेशोऽल्पत्वम् । जीर्णतुषतृणादिभक्षणेनैव गर्दभो जीवति न
बलीवर्दाश्वादीनामिव तत्तत्काले घृततैलादिपानं वा चणककुलित्थादिवा
भक्षणं वा तस्यास्ति, तथाऽपि मेदस्वित्वम् । एतदन्नसंभरणाल्लभ्यते ॥

पुनरपि प्रकारान्तरेण तदेव प्रशंसति—

" गर्दभेन सं भरति तस्माद्गर्दभो द्विरेताः सन्कनिष्ठं पशूनां प्र जायतेऽ
ग्निर्ह्यस्य योनिं निर्दहति " [ सं० का० ५ प्र० १ अ० ५ ] इति ।

यस्मादुपरि धार्यमाणो मृद्रूपोऽग्निरस्य गर्दभस्य प्रजोत्पादनसामर्थ्यं निर्द
करोति तस्माल्लोके गर्दभो द्विरेता अपि सन्पशूनां मध्ये कनिष्ठमपत्यमुत्
दयति । अश्वादिवद्बहुमूल्यानर्हत्वात्कनिष्ठत्वम् । गर्दभस्य स्वकीयं
एकमश्वतरस्य रेतो द्वितीयमिति द्विरेतस्त्वम् । एतच्च सप्तमकाण्डे स
म्नातम्—" तासां परिगृहीतानामश्वतरोऽत्यप्रवत तस्यानुहाय रेत आ
तद्गर्दभे न्यमार्ट्तस्माद्गर्दभो द्विरेताः " इति । यद्यपि कनिष्ठोत्पादनं दि
हेतुस्तथाऽप्यग्निभरणस्य लिङ्गत्वेन प्रशंसैव संपद्यते ॥

कल्पः—" शिवो भव प्रजाभ्य इत्याहितमभिमन्त्रयते " इति ।

पाठस्तु—

> शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वम-
> ङ्गिरः । मा द्यावापृथिवी अभि शूशुचो
> माऽन्तरिक्षं मा वनस्पतीन् । , इति ।

अङ्गिरोभिर्ऋषिभिः पूर्वं संपादितत्वादङ्गसौष्ठवाद्वाऽयमग्निरङ्गिराः । है
रोऽग्ने त्वं मानुषीभ्यः प्रजाभ्यः शिवः शान्तो भव । किंच, त्वं द्यावा
अभिलक्ष्य मा शूशुचः शोकं संतापं मा कार्षीः । तथाऽन्तरिक्षमभि मा शू
तथा वनस्पतीनभि मा शूशुचः ॥

प्रजानामर्थे शिवो भवेत्युक्तायाः शान्तेः प्रसङ्गं दर्शयति—

" प्रजासु वा एष एतर्ह्यारूढः स ईश्वरः प्रजाः शुचा प्रदहः शिवो

---

१ क. घ. ङ. च. 'स्मादने' । २ ख. 'रति । या' । ३ ख. च. तस्यार्च' । ४
'यत्वम् । ५ ख. च. 'दन्नाश्रं ।

( मृदाहरणाभिधानम् )

प्रजाभ्य इत्याह प्रजाभ्य एवैनꣳ शमयति" [ सं० का० ५ प्र० १ अ० ५ ] इति।

यदाऽयमग्निर्गर्दभमारोहत्येतर्हि एतस्मिन्काल एषोऽग्निः प्रजास्वेवाऽऽरूढो भवति। गर्दभस्य प्रजान्तःपातित्वान्मनुष्यवच्चेतनत्वेन प्रजापतेरुत्पन्नत्वात्तदन्तःपातित्वम्। ततः प्रजास्वारूढोऽग्निस्ताः प्रजाः संतापेन प्रदग्धुं समर्थः स्यात्। तस्माच्छिवो भवेति प्रार्थनेन प्रजार्थमेवैनमग्निं शान्तं करोति॥

तस्य मन्त्रस्य द्वितीयपादे मानुषीभ्य इति विशेषणं मनूत्पादितमृगगवादिकृत्स्नप्रजाविषयमित्येतद्दर्शयति—

"मानुषीभ्यस्त्वमङ्गिर इत्याह मानव्यो हि प्रजाः" [ सं० का० ५ प्र० १ अ० ५ ] इति॥

यथा प्रथमार्धे चेतनविषया शान्तिः प्रार्थिता तथोत्तरार्धेऽप्यचेतनविषया शान्तिः प्रार्थितेत्येतद्दर्शयति—

"मा द्यावापृथिवी अभि शूशुचो माऽन्तरिक्षं मा वनस्पतीनित्याहैभ्य एवैनं लोकेभ्यः शमयति" [ सं० का० ५ प्र० १ अ० ५ ] इति।

कल्पः—"प्रैतु वाजी कनिक्रददिति तिसृभिरत्वरमाणा अश्वप्रथमाः प्रत्यायन्ति" इति।

तत्र प्रथमामाह—

प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा। भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा।, इति।

अयं वाजी तुरगः कनिक्रदद्धर्षेण हेषाशब्दं कुर्वन्प्रैतु प्रथमं गच्छतु। अथ रासभो गर्दभो नानदद्धर्षेण शब्दं कुर्वन्पत्वा गमनशीलः पुरीष्यमग्निं दाहकं भरन्नपि स्वकीयादायुषः पुरा मा पाद्यपमृत्युना मृतो मा भूत्॥

अथ द्वितीयामाह—

रासभो वां कनिक्रदत्सुयुक्तो वृषणा रथे। स वामग्निं पुरीष्यमाशुर्दूतो वहादितः।, इति।

हे वृषणा सेचनसमर्थावश्वगर्दभौ वां युवयोर्मध्ये रासभो गर्दभोऽयं कनिक्रदद्धर्षेण भृशं क्रन्दन्रथे सुयुक्तो रथसदृशे मृद्भारे सुष्ठु प्रयुक्तः। वां युवयोर्मध्ये स तादृशो गर्दभो दूतो राजप्रेषितदूतवदाशुः शीघ्रगामी सन्नितोऽस्मात्स्थानात्पुरीष्यमग्निं वहाद्वहतु॥

१ ख. च. भवमन्त्रपाठेन। २ क. घ. ङ. °माणाः प्र°।

अथ तृतीयामाह—

वृषाऽग्निं वृषणं भरन्नपां गर्भꣳ समुद्रियम् ।
अग्न आ याहि वीतय ऋतꣳ सत्यम् । , इति ।

वृषा वर्षणे सेचने समर्थो गर्दभो वृषणं फलाभिवर्षणसमर्थमग्नि
न्वहन्गच्छत्विति शेषः । कीदृशमग्निम्, अपां गर्भं मेघस्थानां जलानां
विद्युद्रूपं, समुद्रियं समुद्रे वडवाग्निरूपेणोत्पन्नम् । तादृश हेऽग्ने वीतये प्रजन
द्यर्थमृतं सत्यं च प्रत्यायाहि । ऋतसत्यशब्दाभ्यां मन्त्रब्राह्मणानुसारेण द्या
पृथिव्यौ विवक्ष्येते । अवश्यंभाविनः कृष्यादिफलस्य हेतुत्वात्पृथिव्या ऋ
त्वम् । अवश्यंभाविनः कर्मफलस्य हेतुत्वात्स्वर्गस्य सत्यत्वम् ॥

अत्र प्रथममन्त्रस्य प्रथमपादे वाजिशब्देनाश्वो विवक्षित इत्येतद्दर्शयति—

" प्रैतु वाजी कनिक्रददित्याह वाजी ह्येषः " [ सं० का० ५ प्र०
अ० ५ ] इति ।

हिशब्देन लोकप्रसिद्धिर्दर्शिता ॥

द्वितीयपादे गर्दभशब्दपरित्यागेन रासभशब्दप्रयोग ऋषिव्यवहारानु
रीत्येतद्दर्शयति—

" नानदद्रासभः पत्वेत्याह रासभ इति ह्येतमृषयोऽवदन् " [ सं० का०
५ प्र० १ अ० ५ इति ॥

तृतीयपादार्थे प्रत्यक्षप्रसिद्धिं दर्शयति—

" भरन्नग्निं पुरीष्यमित्याहाग्निꣳ ह्येष भरति " [ सं० का० ५ प्र०
अ० ५ ] इति ॥

चतुर्थपादेऽग्निवहनप्रयुक्तापमृत्युपरिहारायाऽऽयुष्प्रार्थनं दर्शयति—

" मा पाद्यायुषः पुरेत्याहाऽऽयुरेवास्मिन्दधाति तस्माद्गर्दभः सर्वमायु
तस्माद्गर्दभे पुराऽऽयुषः प्रमीते बिभ्यति " [ सं० का० ५ प्र० १ अ०
५ ] इति ।

यस्मादनेन मन्त्रेणाऽऽयुः स्थापितं तस्मात्तृणादिदुराहारं भक्षयन्नपि
भोऽश्वादिवच्छूलादिना न म्रियते किंतु सर्वमायुरेति । यस्माच्च गर्द
सर्वायुःप्राप्तिः स्वाभाविकी तस्माल्लोके तिर्यग्विषयवैद्यशास्त्रे प्रसिद्धाद
पुरा कदाचिदकस्माद्गर्दभे मृते सत्युत्पातोऽयमिति प्रजा बिभ्यति ॥

---

१ ख. च. न गत्वाऽऽया' । २ ख. च. तत्र ।

(मृदाहरणाभिधानम्)

तृतीयमन्त्रस्य प्रथमपादे गर्दभस्यापत्योत्पादकत्वेन वृषत्वमग्नेश्च फलाभिवर्षकत्वेन वृषत्वं प्रसिद्धमित्येतद्दर्शयति—

"वृषाऽग्निं वृषणं भरान्नित्याह वृषा ह्येष वृषाऽग्निः" [सं० का० ५ प्र० १ अ० ५] इति॥

द्वितीयपादे वैद्युतरूपेण जलगर्भत्वमग्नेः प्रसिद्धमिति दर्शयति—

"अपां गर्भꣳ समुद्रियमित्याहापाꣳ ह्येष गर्भो यदग्निः" [सं० का० ५ प्र० १ अ० ५] इति॥

तृतीयपादे वीतय इतिशब्देन प्रजननाद्यर्थः साक्षाद्विवक्षितः, द्यावापृथिव्योर्वियोगस्त्वग्निकृतप्रजननार्थं इत्येतदभिप्रायं दर्शयति—

"अग्न आ याहि वीतय इति वा इमौ लोकौ व्यैतामग्न आ याहि वीतय इति यदाहानयोर्लोकयोर्वीत्यै" [सं० का० ५ प्र० १ अ० ५] इति।

पुरा द्यावापृथिव्याख्यौ लोकावेकीभावमापन्नौ सन्तौ यदा वियुक्तौ भवतस्तदानीमावयोर्मध्ये प्रजननाद्यर्थं हेऽग्ने समायाहीत्यनेनाभिप्रायेणाग्निकृतप्रजननादिव्यापारस्यावकाशं दातुं वियुक्तावभूताम्। तस्मादयं मन्त्रः प्रजननाद्यर्थमग्न्यागमनं वदंस्तदवकाशप्रदात्र्योर्द्यावापृथिव्योर्वियोगाय संपद्यते॥

अस्य मन्त्रस्य चरमभागे गन्तव्यत्वेन निर्दिष्टयोर्ऋतसत्ययोस्तात्पर्यं दर्शयति—

"प्रच्युतो वा एष आयतनादगतः प्रतिष्ठाꣳ स एतर्ह्यध्वर्युं च यजमानं च ध्यायत्यृतꣳ सत्यमित्याहेयं वा ऋतमसौ सत्यमनयोरेवैनं प्रति ष्ठापयति नाऽऽर्तिमार्छत्यध्वर्युर्न यजमानः" [सं० का० ५ प्र० १ अ० ५] इति।

एषोऽग्निः खननप्रदेशात्स्वकीयादायतनात्प्रच्युतोऽन्यत्रापि न क्वचित्प्रतिष्ठां गतः। सोऽग्निरेतस्मिन्काले कुपितोऽध्वर्युयजमानौ हन्तुं ध्यायति। अतोऽस्य प्रतिष्ठार्थं द्यावापृथिवीविवक्षया मन्त्र ऋतसत्यशब्दौ प्रयुङ्क्ते। तेनानयोर्लोकयोरग्नेः स्थापनादध्वर्युयजमानौ न विनश्यतः॥

कल्पः—"उत्तरेण विहारं परिश्रित ओषधयः प्रतिगृह्णीताग्निमेतमिति द्वाभ्यामोषधीषु पुष्पवतीषु फलवतीषूपावहरति" इति।

तत्र प्रथमामाह—

ओषधयः प्रति गृह्णीताग्निमेतꣳ शिवमायन्तमभ्यत्र युष्मान्। व्यस्यन्विश्वा अमतीररातीर्निषीदन्नो अप दुर्मतिꣳ हनत्। , इति।

हे ओषधयोऽत्रास्मिन्परिश्रिते देशे युष्मानभिमुखीकृत्याऽऽयन्तमागच्छन्तं शिवं शान्तमेतमग्निं प्रतिगृह्णीत स्वी कुरुत। अयं चाग्निर्युष्मासु निषीदन्नोऽस्माकं दुर्मतिमपहनत्प्रमादालस्यादियुक्तां बुद्धिमपहन्तु। किं कुर्वन्, विश्वा अरातीरमतीर्व्यस्यञ्शत्रुसमाना रोगजन्या बाधाः सर्वाः परिहरन्॥

अथ द्वितीयामाह—

ओषधयः प्रति मोदध्वमेनं पुष्पावतीः
सुपिप्पलाः। अयं वो गर्भ ऋत्वियः
प्रत्नꣳ सधस्थमाऽसदत्॥, इति॥

पुष्पावतीः प्रशस्तपुष्पोपेताः सुपिप्पलाः शोभनफलोपेता हे ओषधय एनमग्निं प्रति मोदध्वं हृष्टा भवत। अयमग्निर्वो युष्माकमृत्विय ऋतुकालीनो गर्भो भूत्वा प्रत्नं पुरातनं सधस्थं गर्भयोग्यं स्थानमासदत्प्राप्तवान्॥

अथ प्रथममन्त्रस्य प्रथमपाद ओषधिप्रतिग्रह[2]प्रार्थनायां कारणं दर्शयति—

"वरुणो वा एष यजमानमभ्यैति यदग्निरुपनद्ध ओषधयः प्रति गृह्णीताग्निमेतमित्याह शान्त्यै" [सं० का० ५ प्र० १ अ० ९] इति।

कृष्णाजिने बद्धो योऽग्निः स एष बन्धकेन वरुणपाशेन युक्तत्वाद्वरुणः सन्यजमानमभिलक्ष्य बाधितुमागच्छति। अतस्तच्छान्त्यर्थमोषधिप्रतिग्रहः॥

तृतीयपादेऽरातिशब्देन राक्षसाः सूचिता इति दर्शयति—

"व्यस्यन्विश्वा अमतीररातीरित्याह रक्षसामपहत्यै" [सं० का० ५ प्र० १ अ० ९] इति॥

चतुर्थपादे दुर्बुद्धिपरिहारोऽनुष्ठानप्रतिष्ठार्थ इति दर्शयति—

"निषीदन्नो अप दुर्मतिꣳ हनदित्याह प्रतिष्ठित्यै" [सं० का० ५ प्र० १ अ० ९] इति॥

द्वितीयमन्त्रस्य प्रथमपाद ओषधिप्रतिमोदप्रार्थनया जाठराग्निसमृद्धिरिति दर्शयति—

"ओषधयः प्रति मोदध्वमेनमित्याहौषधयो वा अग्नेर्भागधेयं ताभिरेवैनꣳ समर्धयति" [सं० का० ५ प्र० १ अ० ९] इति।

ओषधयोऽन्नरूपेण जाठराग्नेर्भागः पुरोडाशरूपेणाग्निदेवताया भागः। ओषधिस्थापनेनाग्निद्वयस्य समृद्धिः॥

---

१ ख. °जनिता वा°। २ ख. च. °हणप्रार्थनया सूचितां वरुणशान्तिं द°। ३ °षधीभिः प्र°।

(उखानिर्माणाभिधानम्)

द्वितीयपादे सुपिप्पलशब्दतात्पर्यं दर्शयति—

" पुष्पावतीः सुपिप्पला इत्याह तस्मादोषधयः फलं गृह्णन्ति " [ सं० का० ५ प्र० १ अ० ५ ] इति।

यस्मादत्र सुपिप्पला इत्युक्तं तस्माल्लोकेऽप्योषधयः स्वकाले संपूर्णं फलं गृह्णन्ति॥

द्वितीयार्धे सधस्थमाऽसददित्यस्य तात्पर्यं दर्शयति—

" अयं वो गर्भ ऋत्वियः प्रत्नꣳ सधस्थमासददित्याह याभ्य एवैनं प्रच्यावयति तास्वेवैनं प्रति ष्ठापयति " [ सं० का० ५ प्र० १ अ० ५ ] इति।

मृत्खननभूमौ पूर्वमुत्पन्नाभ्यो याभ्य ओषधीभ्यः प्रच्याव्यायमग्निरानीतस्तमग्निमुपावहरणप्रदेशे तास्वेवौषधिजातिषु स्थापितवान्भवति॥

ओषधयः प्रतिगृह्णीतेत्यादिकं मन्त्रद्वयं विनियुङ्क्ते—

" द्वाभ्यामुपावहरति प्रतिष्ठित्यै " [सं० का० ५ प्र० १ अ० ५ ] इति॥

अत्र विनियोगसंग्रहः—

" सं मृत्खनेऽपो निनयेत्सुजातो संभृतबन्धम्।
उदुद्वाभ्यां समुत्थाय सजातस्त्वाहरेन्मृदम्॥ १॥
स्थिरो गर्दभ आधाय शिव आहितमन्त्रणम्।
प्रैतुत्रिभिः शनैर्याति ह्योषद्वाभ्यामिमां मृदम्।
उपाहरेदोषधीषु मन्त्रा द्वादश वर्णिताः॥ २॥ " इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः॥ ४॥

---

(अथ चतुर्थकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः।)

---

वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः। सुशर्मणो बृहतः शर्मणि स्यामग्नेरहꣳ सुहवस्य प्रणीतौ। आपो

---

१ च. 'नभू'। २ ख. च. 'षधीषु'। ३ ख. ज. 'जातो हृत'।

हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः । मित्रः (१) सꣳसृज्य पृथिवीं भूमिं च ज्योतिषा सह । सुजातं जातवेदसमग्निं वैश्वानरं विभुम् । अयक्ष्माय त्वा सꣳ सृजामि प्रजाभ्यः । विश्वे त्वा देवा वैश्वानराः सꣳ सृजन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत् । रुद्राः संभृत्य पृथिवीं बृहज्ज्योतिः समीधिरे । तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते । सꣳसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम् । हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली करोतु (२) ताम् । सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा । सा तुभ्यमदिते मह ओखां दधातु हस्तयोः । उखां करोतु शक्त्या बाहुभ्यामदितिर्धिया । माता पुत्रं यथोपस्थे साऽग्निं बिभर्तु गर्भ आ । मखस्य शिरोऽसि यज्ञस्य पदे स्थः । वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाऽङ्गिरस्वत्पृथिव्यसि रुद्रास्त्वा कृण्वन्तु त्रैष्टु-

भेन छन्दंसाऽङ्गिरस्वदन्तरिक्षमसि ( ३ ) आदित्यास्त्वां कृण्वन्तु जागंतेन छन्दंसाऽङ्गिरस्वद्द्यौरंसि विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुंष्टुभेन छन्दंसाऽङ्गिरस्वद्दिशोंऽसि ध्रुवाऽसिं धारया मयिं प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजंमानायादिंत्यै रास्नाऽस्यदिंतिस्ते बिलं गृह्णातु पाङ्क्तेंन छन्दंसाऽङ्गिरस्वत् । कृत्वाय सा महीमुखां मृन्मयीं योनिंमग्नयें । तां पुत्रेभ्यः सं प्रायंच्छददिंतिः श्रपयानितिं ( ४ ॥

( मित्रः कंरोत्वन्तरिंक्षमसि प्र चत्वारिं च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ चतुर्थाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः । )

---

वीतिं । पाजंसा । पृथुनां । शोशुंचानः । बाधंस्व । द्विषः । रक्षसंः । अमींवाः । सुशर्मण इतिं सु—शर्मंणः । बृहतः । शर्मंणि । स्याम् । अग्नेः । अहम् । सुहवस्येतिं सु—हवंस्य । प्रणींताविति प्र—नीतौ । आपंः । हि । स्थ । मयोभुव इतिं मयः—भुवंः । ताः । नः । ऊर्जे । दधातन । महे । रणांय । चक्षंसे ।

यः । वः । शिवतम इति शिव—तमः । रसः । तस्य । भाजयत । इह । नः । उशतीः । इव । मातरः । तस्मै । अरम् । गमाम । वः । यस्य । क्षयाय । जिन्वथ । आपः । जनयथ । च । नः । मित्रः ( १ ) । सꣳसृज्येति सं—सृज्य । पृथिवीम् । भूमिम् । च । ज्योतिषा । सह । सुजातमिति सु—जातम् । जातवेदसमिति जात—वेदसम् । अग्निम् । वैश्वानरम् । विभुमिति वि—भुम् । अयक्ष्माय । त्वा । समिति । सृजामि । प्रजाभ्य इति प्र—जाभ्यः । विश्वे । त्वा । देवाः । वैश्वानराः । समिति । सृजन्तु । आनुष्टुभेनेत्यानु—स्तुभेन । छन्दसा । अङ्गिरस्वत् । रुद्राः । संभृत्येति सं—भृत्य । पृथिवीम् । बृहत् । ज्योतिः । समिति । ईधिरे । तेषाम् । भानुः । अजस्रः । इत् । शुक्रः । देवेषु । रोचते । सꣳसृष्टामिति सं—सृष्टाम् । वसुभिरिति वसु—भिः । रुद्रैः । धीरैः । कर्मण्याम् । मृदम् । हस्ताभ्याम् । मृद्वीम् कृत्वा । सिनीवाली । करोतु ( २ ) । ताम् । सिनीवाली । सुकपर्देति सु—कपर्दा । सुकुरीरेति सु—कुरीरा । स्वौपशेति सु—औपशा । सा । तुभ्यम् अदिते । महे । एति । उखाम् । दधातु । हस्तयोः

( उखानिर्माणाभिधानम् )

उखाम् । करोतु । शक्त्या । बाहुभ्यामिति बाहु—भ्याम् । अदितिः । धिया । माता । पुत्रम् । यथा । उपस्थ इत्युप—स्थे । सा । अग्निम् । बिभर्तु । गर्भे । आ । मखस्य । शिरः । असि । यज्ञस्य । पदे इति । स्थः । वसवः । त्वा । कृण्वन्तु । गायत्रेण । छन्दसा । अङ्गिरस्वत् । पृथिवी । असि । रुद्राः । त्वा । कृण्वन्तु । त्रैष्टुभेन । छन्दसा । अङ्गिरस्वत् । अन्तरिक्षम् । असि ( ३ ) । आदित्याः । त्वा । कृण्वन्तु । जागतेन । छन्दसा । अङ्गिरस्वत् । द्यौः । असि । विश्वे । त्वा । देवाः । वैश्वानराः । कृण्वन्तु । आनुष्टुभेनेत्यानु—स्तुभेन । छन्दसा । अङ्गिरस्वत् । दिशः । असि । ध्रुवा । असि । धारय । मयि । प्रजामिति प्र—जाम् । रायः । पोषम् । गौपत्यम् । सुवीर्यमिति सु—वीर्यम् । सजातानिति स—जातान् । यजमानाय । अदित्यै । रास्ना । असि । अदितिः । ते । बिलम् । गृह्णातु । पाङ्क्तेन । छन्दसा । अङ्गिरस्वत् । कृत्वाय । सा । महीम् । उखाम् । मृन्मयीमिति मृत्—मयीम् । योनिम् । अग्नये । ताम् । पुत्रेभ्यः । सम् । प्रेति । अयच्छत् । अदितिः । श्रपयान् । इति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

( अथ चतुर्थकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः । )

---

चतुर्थेऽनुवाके मृदाहरणमुक्तम् । अथ पञ्चम उखानिर्माणमुच्यते—
कल्पः—" वि पाजसेति विस्रस्य " इति ।

पाठस्तु—

वि पाजसा पृथुना शोशुचानो बाधस्व
द्विषो रक्षसो अमीवाः । सुशर्मणो बृहतः
शर्मणि स्यामग्नेरहꣳ सुहवस्य प्रणीतौ ।,इति ।

हेऽग्ने पृथुना विस्तृतेन पाजसा बलेन शोशुचानो दीप्यमानस्त्वं द्विषः श
क्षसो राक्षसानमीवा रोगांश्च विशेषेण बाधस्व । अहं सुशर्मणः शोभनसु
बृहतः प्रौढस्य सुवहस्य सुखेनाऽऽह्वातुं शक्यस्याग्नेः प्रणीतौ परिचर्यायां
यच्छर्म सुखं तस्मिन्सुखे स्यां सर्वदाऽवतिष्ठेय ॥

तमिमं मन्त्रं विनियुङ्क्ते--

" वारुणो वा अग्निरुपनद्धो वि पाजसेति वि स्रꣳसयति सवि
एवास्य विषूचीं वरुणमेनिं वि सृजति " [ सं० का० ५ प्र० १ अ०६]

यद्यप्यमन्त्रकेण लौकिकविस्रंसनेन लौकिकबन्धो निवर्तते तथाऽपि
प्रेरणमन्तरेण वरुणपाशस्य निवृत्त्यभावात्सवितृप्रेरणाय मन्त्रपाठः ।
मन्त्रस्य बन्धविमोचनायैव सवित्रा परमेश्वरेण निर्मितत्वात्तत्पाठे सति
प्रेरितो भवति । वरुणस्य संबन्धिनी पाशबन्धकृता बाधा वरुणमेनिः ।
विषूची सर्वतः प्रसृता बहुधा रज्जुभिरावेष्ट्याऽऽहृतत्वात् । अस्याग्ने
वरुणमेनिं मन्त्रेण विमोचितवान्भवति ॥

कल्पः—" आपो हि ष्ठा मयोभुव इति तिसृभिरप उपसृज्य " इ

तत्र प्रथमामाह—

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे
दधातन । महे रणाय चक्षसे ।,इति ।

हिशब्द एवकारार्थः प्रसिद्ध्यर्थो वा । हे आपो यूयमेव मयोभुवः स्थ
भावयित्र्यो भवत । स्नानपानादिहेतुत्वेन सुखोत्पादकत्वं प्रसिद्धम् ।
दृश्यो यूयं नोऽस्मानूर्जे रसाय भवदीयरसानुभवार्थं दधातन स्था

---

१ क. च. 'वेष्ट्य भृत' ।

किंच महे महते रणाय रमणीयाय चक्षसे दर्शनाय दधातन, अस्मान्परतत्त्व-साक्षात्कारयोग्यान्कुरुतेत्यर्थः ॥

अथ द्वितीयामाह—

यो वः शिवतमो रसस्तस्य भाज-
यतेह नः। उशतीरिव मातरः।, इति।

वो युष्माकं शिवतमः शान्ततमः सुखैकहेतुर्यो रसोऽस्ति, इहास्मिन्कर्मणि नोऽस्मांस्तस्य भाजयत [तं] रसं प्रापयत। तत्र दृष्टान्तः—उशतीरिव मातर इति, कामयमानाः प्रीतियुक्ता मातरो यथा वत्सान्स्वकीयस्तन्यरसं प्रापयन्ति तद्वत् ॥

अथ तृतीयामाह—

तस्मा अरं गमाम वो यस्य क्षयाय
जिन्वथ। आपो जनयथा च नः।, इति।

यस्य रसस्य क्षयाय क्षयेण निवासेन जिन्वथ यूयं प्रीता भवथ, तस्मै रसाय वो युष्मानरं गमामालं भृशं प्राप्नुमः। किंच हे आपो यूयं नोऽस्माञ्जनयथ प्रजोत्पादकान्कुरुथ ॥

एतैर्मन्त्रैः साध्यं जलमेलनं विधत्ते—

"अप उप सृजत्यापो वै शान्ताः शान्ताभिरेवास्य शुचꣳ शमयति" [ सं० का० ५ प्र० १ अ० ६ ] इति।

अस्याग्नेः शुचं शोकं दाहमित्यर्थः ॥

आपो हि ष्ठेत्याद्यृचस्तत्र विनियुङ्क्ते—

"तिसृभिरुप सृजति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्य शुचꣳ शमयति" [सं० का० ५ प्र० १ अ० ६ ] इति।

आहवनीयादिरूपेणाग्नेस्त्रैगुण्यम्। तस्य सर्वस्याग्नेर्मन्त्रत्रयेण दाहशान्तिः ॥

कल्पः—"मित्रः सꣳसृज्य पृथिवीमिति द्वाभ्यां संसर्जनीयैः संसृजत्य कपालैः पिष्टैर्वेणवङ्गारैर्व्रीहितुषैः पलाशकषायेण शर्कराभिः पिष्टाभिः कृष्णाजिनलोमभिरजलोमभिः" इति।

तत्र प्रथमामाह—

मित्रः सꣳसृज्य पृथिवीं भूमिं च ज्योतिषा सह।
सुजातं जातवेदसमग्निं वैश्वानरं विभुम्।, इति।

---

१ ख. च. °लसेचनं।

मित्रनामकः सर्वेषामाप्तो देवः पृथिवीं भूमिं विस्तृतामिमां मृदं, शब्दादस्यां मृद्युपसृष्टा अपश्च ज्योतिषा ज्योतिःशब्दोपलक्षितेन दा तुना वक्ष्यमाणार्मकपालादिना संसृज्याग्निं सुजातमकरोदिति शेषः । शब्दोपलक्षितामुखां निर्मितवानित्यर्थः । कीदृशमग्निं, जातवेदसमुत्पन्न भिज्ञं वैश्वानरं सर्वपुरुषोपकारकत्वेन तत्संबन्धिनं विभुं सर्वेषु यज गृहेषु व्याप्तम् ॥

अथ द्वितीयामाह—

अयक्ष्माय त्वा सꣳ सृजामि प्रजाभ्यः ।
विश्वे त्वा देवा वैश्वानराः सꣳ सृज-
न्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत् ।, इति ।

हेऽग्ने त्वां प्रजाभ्यः प्रजानामयक्ष्माय रोगाभावाय संसृजामि अर्म दिभिः संयोजयामि । वैश्वानराः सर्वपुरुषोपकारिणो विश्वे सर्वेऽपि आनुष्टुभेन च्छन्दसा सहकारिणा युक्तास्त्वां संसृजन्तु । किंवत् । स्वत् । यथाऽङ्गिरसः पूर्वं संयोजितवन्तस्तद्वत् ॥

मन्त्रे देवतान्तरपरित्यागेन मित्रस्यैव स्वीकारे कारणं दर्शयति—

" मित्रः सꣳसृज्य पृथिवीमित्याह मित्रो वै शिवो देवानां तेनैवैन सृजति शान्त्यै " [ सं० का० ५ प्र० १ अ० ६ ] इति ।

देवानां मध्ये मित्रः शिवः शान्तः । अतोऽग्नेः शान्त्यै मित्रस्य स्वीक

अथ दार्ढ्यहेतुभिः कपालैः संसर्गं विधत्ते—

" यद्ग्राम्याणां पात्राणां कपालैः सꣳसृजेद्ग्राम्याणि पात्राणि शुचा दर्मकपालैः सꣳसृजत्येतानि वा अनुपजीवनीयानि तान्येव शुचाऽर्प [ सं० का० ५ प्र० १ अ० ६ ] इति ।

पाकसाधनानां भाण्डानां कपालैः संसर्गे सति सर्वाण्यपि भा शुचाऽर्पयेत्, गृहदाहादिकृतेन भङ्गेन योजितानि भवेयुः । अतस्तन्मा त्यर्मकपालैः संयोजयेत् । चिरकालशून्यग्रामभूमावत्रस्थितानि पुरातन कपालानि, तेषां प्राणिभिरनुपजीवनीयत्वात्तान्येव भङ्गेन योजितानि भ नतु गृहोपकरणानि भाण्डानि ॥

अथ भूमिष्ठैः क्षुद्रपाषाणैश्चूर्णीकृतैः संसर्गं विधत्ते—

" शर्कराभिः सꣳसृजति धृत्या अथो शंत्वाय " [ सं० का० ५ प्र० १ अ० ६ ] इति ।

(उखानिर्माणाभिधानम्)

धृत्यै निर्माणकाले भङ्गराहित्येन दार्ढ्याय। अथो शंत्वाय पाककालेऽपि भङ्गराहित्येन सुखावस्थानाय ॥

द्रव्यान्तरसंसर्गं विधत्ते—

"अजलोमैः सꣳ सृजत्येषा वा अग्नेः प्रिया तनूर्यदजा प्रियैवैनं तनुवा सꣳ सृजत्यथो तेजसा" [ सं० का० ५ प्र० १ अ० ६ ] इति।

अजत्वजातेरग्नेश्च प्रजापतिमुखजत्वसाम्यादजेयमग्नेः प्रिया तनूः। न केवलं प्रियत्वं किं त्वग्निसंबन्धात्तेजोरूपत्वमपि। अतः प्रियया तन्वा तेजसा चाग्निं समर्धयति ॥

पुनरपि द्रव्यान्तरसंसर्गं विधत्ते—

"कृष्णाजिनस्य लोमभिः सꣳ सृजति यज्ञो वै कृष्णाजिनं यज्ञेनैव यज्ञꣳ सꣳ सृजति" [ सं० का० ५ प्र० १ अ० ६ ] इति।

अन्यत्र "यज्ञो देवेभ्यो निलायत कृष्णो रूपं कृत्वा" इत्युक्तत्वाद्यज्ञस्य कृष्णाजिनत्वम्। अतः कृष्णाजिनरूपेण यज्ञेनाग्निरूपं यज्ञं संसृजति ॥

कल्पः—"रुद्राः संभृत्य पृथिवीमिति मृदं संक्षिप्य" इति।

पाठस्तु—

रुद्राः संभृत्य पृथिवीं बृहज्ज्योतिः समीधिरे।
तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते।, इति।

रुद्रनामका देवाः पृथिवीमुखानिष्पादिकां मृदं संभृत्य सम्यग्भरणं कृत्वोखाकरणाय मृदु यथा भवति तथा हस्ताभ्यां संघट्टनं कृत्वेत्यर्थः। तथा कृत्वा बृहज्ज्योतिः समीधिरे प्रौढमाग्निं दीपितवन्तः। तेषां रुद्राणामयमग्निर्भानुर्भासमानोऽजस्र इन्निरन्तर एव शुक्रो दीप्तियुक्तो देवेषु रोचते भाते ॥

कल्पः—"सꣳ सृष्टां वसुभिरिति तिसृभिः कर्त्रे प्रयच्छति" [ सं० का० ५ प्र० १ अ० ६ ] इति।

तत्र प्रथमामाह—

सꣳसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम्। हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली करोतु ताम्।, इति।

मन्त्रे रुद्रशब्देन वसवोऽप्युपलक्षिताः। अतो धीरैर्बुद्धिमद्भिर्वसुभी रुद्रैश्च

या मृदर्मकपालादिभिः संयोजिता सती कर्मण्योखा कर्मयोग्या जाता तां मृदं सिनीवाली देवी पुनरपि हस्ताभ्यां मृद्वीं कृत्वा उखां निष्पादयतु ॥

अथ द्वितीयामाह—

सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा । सा तुभ्यमदिते मह ओखां दधातु हस्तयोः ।, इति ।

या सिनीवाली सुकपर्दा, कपर्दोऽत्र स्त्रीणामुचितः केशबन्धविशेषः । शो- कपर्दो यस्याः सा सुकपर्दा । कुरीरशब्देन स्त्रीभिः शृङ्गारार्थं शिरसि माणं जालकमुच्यते । शोभनं कुरीरं यस्याः सा सुकुरीरा । उपशेते सम्य यनं करोति यैरवयवविशेषैस्ते सर्व उपशास्तेषां समूह औपशः । औपशो यस्याः सा स्वौपशा । हे महे प्रौढेऽदिते भूमिदेवि सा सिनी तुभ्यं तव हस्तयोरुखामादधातु ॥

अथ तृतीयामाह—

उखां करोतु शक्त्या बाहुभ्यामदि- तिर्धिया । माता पुत्रं यथोपस्थे साऽग्निं बिभर्तु गर्भ आ ।, इति ।

इयमदितिर्धिया बुद्धिकौशलेन बाहुभ्यां हस्तकौशलेन शक्त्या लेन चेमामुखां करोतु । यथा लोके माता स्वकीयं पुत्रमुपस्थ बिभर्ति तथा साऽदितिर्गर्भे स्वोत्सङ्गे तमग्निमा कर्मसमाप्तेर्बिभर्तु ॥

उक्तस्य मन्त्रचतुष्टयस्य तात्पर्यं दर्शयति—

" रुद्राः संभृत्य पृथिवीमित्याहैता वा एतं देवता अग्रे समभरन्ताभि सं भरति " [ सं० का० ५ प्र० १ अ० ६ ] इति ।

रुद्रा वसवः सिनीवाल्यदितिश्चेत्येतच्छब्दपरामृष्टा देवताः ॥

## मखस्य शिरोऽसि—

कल्पः—" मखस्य शिरोऽसीति पिण्डं कृत्वा " इति ।

हे मृत्पिण्ड त्वं मखस्य यज्ञस्य शिरः स्थानमसि ॥

तत्र मखशब्दार्थं दर्शयति—

---

१ ख. च. मृत्कपा° । २ ख. च. °पि स्वह° । ३ ख. च. कुरुते । ४ ख. °ते दे° च. °रुखां मृदमा° ।

(उखानिर्माणाभिधानम्)

"मखस्य शिरोऽसीत्याह यज्ञो वै मखस्तस्यैतच्छिरो यदुखा तस्मादेवमाह" [सं० का० ५ प्र० १ अ० ६] इति ॥

## यज्ञस्य पदे स्थः।

कल्पः—"यज्ञस्य पदे स्थ इति कृष्णाजिनं पुष्करपर्णं चाभिमृशति" इति।

हे कृष्णाजिनपुष्करपर्णे युवामुभे यज्ञस्य पादरूपे स्थः ॥

कृष्णाजिनपुष्करपर्णयोर्यज्ञप्राप्तिहेतुत्वाद्यज्ञपदत्वं प्रसिद्धमित्येतद्दर्शयति—

"यज्ञस्य पदे स्थ इत्याह यज्ञस्य ह्येते पदे अथो प्रतिष्ठित्यै" [सं० का० ५ प्र० १ अ० ६ इति ॥

कल्पः—"वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसेति चतुर्भिर्यजुर्भिर्महिष्युखां करोति बहुभार्यस्याध्वर्युरेकभार्यस्य क्रियमाणामेतैरेव यजमानोऽनुमन्त्रयते" इति।

पाठस्तु—

वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाऽङ्गिरस्वत्पृथिव्यसि रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वदन्तरिक्षमस्यादित्यास्त्वा कृण्वन्तु जागतेन छन्दसाऽङ्गिरस्वद्द्यौरसि विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वद्दिशोऽसि ध्रुवाऽसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानाय, इति।

हे उखे वस्वाख्या देवाः सहकारिणा गायत्रेण च्छन्दसा सहाङ्गिरसवत्त्वां कृण्वन्तु निष्पादयन्तु। त्वं च पृथिवीरूपाऽसि। एवमुत्तरेषु त्रिष्वपि योज्यम्। वैश्वानराः सर्वमनुष्योपकारिणः। हे उखे त्वं ध्रुवाऽसि दृढाऽसि। अतो मय्यध्वर्यावन्यस्मिन्वोखाकर्तरि प्रजादिकं धारय स्थापय। यजमानार्थेऽपि प्रजादिकं संपादय। सोऽयं ध्रुवाऽसीत्यादिरन्त्यभागः पूर्वेष्वपि त्रिष्वनुषज्यते ॥

संसृष्टामित्याद्यृग्भिः कर्त्रे प्रदानं वसवस्त्वेत्यादिभिर्यजुर्भिर्यजमानानुमन्त्रणं क्रमेण विधत्ते—

"प्रान्याभिर्यच्छत्यन्वन्यैर्मन्त्रयते मिथुनत्वाय" [सं० का० ५ प्र० १ अ० ६] इति।

अन्याभिर्वसवस्त्वेत्यादियजुर्भ्यो विलक्षणाभिर्ऋग्भिरन्यैः संसृष्टा
दिभ्य ऋग्भ्यो विलक्षणैर्वसवस्त्वेत्यादिभिर्यजुर्भिर्ऋचां स्त्रीलिङ्गत्वाद्य
तथात्वान्मिथुनत्वम् ॥

निर्मातव्याया उखायाः कक्ष्यात्रयं विधत्ते—

" त्र्युद्धिं करोति त्रय इमे लोका एषां लोकानामाप्त्यै " [ सं० का
प्र० १ अ० ६ ] इति ।

उद्धिरूर्ध्वमवस्थितोऽवयवविशेषः । यथा भाण्डस्योपर्यन्यद्भाण्डं तस्यो
परि पुनरप्यन्यद्भाण्डमिति कक्ष्यात्रयं तथेयमेकैवोखा कक्ष्यात्रययुक्ता का

वसवस्त्वेत्यादिभिर्मन्त्रैर्यजमानस्यानुमन्त्रणं पूर्वं विहितमिदानीं तैरेव
कर्तुः कर्मनिष्पादनं विधत्ते—

" छन्दोभिः करोति वीर्यं वै छन्दाꣳसि वीर्येणैवैनां करोति " [
का० ५ प्र० १ अ० ६ ] इति ।

छन्दोभिश्छन्दोलिङ्गकैर्वसवस्त्वेत्यादिभिर्मन्त्रैः ॥

अदित्यै रास्नाऽसि—

कल्पः—" अदित्यै रास्नाऽसीति रास्नां करोति " इति ।

रशनासदृशी भाण्डस्य गलगता रेखा रास्ना । हे रेखे त्वमदित्यै
रूपाया उखाया रास्ना काञ्चीगुणस्थानीया रशनाऽसि ॥

कल्पः—" अदितिस्ते बिलं गृह्णात्विति बिलं कृत्वा " इति ।

पाठस्तु—

अदितिस्ते बिलं गृह्णातु पाङ्-
क्तेन छन्दसाऽङ्गिरस्वत् ।, इति ।

हे उखेऽदितिर्भूमिः सहकारिणा पाङ्क्तेन च्छन्दसा सहाङ्गिरस
तव बिलमन्तश्छिद्रं गृह्णातु करोतु ॥

एतं मन्त्रं विनियुङ्क्ते—

" यजुषा बिलं करोति व्यावृत्त्यै " [ सं० का० ५ प्र०
६ ] इति ।

लौकिकस्य हि भाण्डस्य मन्त्रमन्तरेणैव बिलं क्रियते । अत्र तु
मिति व्यावृत्तिः ॥

उखायाः प्रादेशपरिमाणं विधत्ते—

(उखानिर्माणाभिधानम्)

" इयतीं करोति प्रजापतिना यज्ञमुखेन संमिताम् " [ सं० का० ५ प्र० १ अ० ६ ] इति।

यज्ञपुरुषस्य मुखं मूर्धचु(चि)बुकयोर्मध्यवर्ति प्रादेशमात्रं, तच्च प्रजापतिसृष्टत्वात्प्रजापतिस्वरूपं, तेन मुखेन परिमिता भवति। तत्परिमाणं हस्तेनाभिनीय प्रदर्शनार्थमियतीत्युच्यते ॥

अथ विधत्ते--

" द्विस्तनां करोति द्यावापृथिव्योर्दोहाय " [ सं० का० ५ प्र० १ अ० ६ ] इति।

यथा योषितः स्तनावेवमस्या उखाया द्वौ स्तनाकारौ मृदा निष्पाद्यौ। तथा सति द्वित्वसाम्याद्द्यावापृथिव्योः सारांशदोहनं संपद्यते ॥

पक्षान्तरं विधत्ते—

" चतुस्तनां करोति पशूनां दोहाय " [ सं० का० ५ प्र० १ अ० ६ ] इति।

पुनरप्यन्यं पक्षं विधत्ते--

" अष्टास्तनां करोति छन्दसां दोहाय " [ सं० का० ५ प्र० १ अ० ६ ] इति।

अष्टौ छन्दांसि मन्त्रान्तरे समाम्नातानि—"गायत्री त्रिष्टुब्जगत्यनुष्टुक्पङ्क्त्या सह। बृहत्युष्णिहा ककुत् " इति।

अष्टत्वसंख्यासाम्याच्छन्दसां सारदोहनं संपद्यते। तदेतत्सर्वं सूत्रकारेण संगृहीतम्--" अश्रीणां रास्नायाश्च संधौ द्वौ चतुरः षडष्टौ वा स्तनान्करोति " इति ॥

अधिकारिविशेषेणाश्रिषु संख्याविशेषं विधत्ते—

" नवाश्रिमभिचरतः कुर्यात्त्रिवृतमेव वज्रꣳ संभृत्य भ्रातृव्याय प्र हरति स्तृत्यै " [ सं० का० ५ प्र० १ अ० ६ ] इति।

त्रिवृत्स्तोमस्य नवभिर्ऋग्भिरुपेतत्वादश्रिसंख्या त्रिवृत्संपद्यते। स च त्रिवृत्स्तोमो वैरिविनाशकत्वाद्वज्रसमानः। अतो नवसंख्यया भ्रातृव्याय वज्रप्रहरणं संपद्यते। अभिचाराभावे त्वश्रिसंख्यां सूत्रकारो दर्शयति--" कुर्वंश्चतस्रोऽश्रीः प्रतिदिशमुन्नयत्यष्टाश्रीर्वा " इति ॥

कल्पः-" कृत्वाय सा महीमुखामित्युत्तरतः सिकतासु प्रतिष्ठाप्य " इति।

पाठस्तु--

---

१ ख. च. 'तीमित्यु'। २ ख. च. 'ख्यायात्रिवृत्त्वं संप'।

कृत्वाय सा महीमुखां मृन्मयीं योनिमग्नये । तां पुत्रेभ्यः सं प्रायच्छददितिः श्रपयानिति॥, इति ॥

सेयमदितिर्मृन्मयीं मृत्कार्यामग्नये योनिमग्नेः कारणभूतां महीं महतीं कृत्वाय निष्पाद्य ततस्तामुखां पुत्रेभ्यः स्वपुत्रसदृशेभ्यः श्रपणकारिभ्यः यच्छत्सम्यग्दत्तवती । किं ब्रुवतीति तदुच्यते—श्रपयानिति श्रपयन्तु इति ब्रुवती ॥

तमेतं मन्त्रं विनियुङ्क्ते—

" कृत्वाय सा महीमुखामिति नि दधाति देवतास्वेवैनां प्रति ष्ठापयति" [ सं० का० ५ प्र० १ अ० ६ ] इति ।

अदितिपुत्राणां देवतारूपत्वाद्देवतासु प्रतिष्ठापनं संपद्यते ॥

अत्र विनियोगसंग्रहः—

वि पा विस्रंसयेदापस्त्रिभिर्मृदि जलं क्षिपेत् ।
मित्रोद्वाभ्यां शर्करादियोगो रुद्रेति संक्षिपेत् ॥ १ ॥
संसृष्टत्रिभिर्मृत्तिकां तामुखाकर्त्रे प्रयच्छति ।
मख पिण्डकृतिर्यज्ञ चर्मपर्णाभिमर्शनम् ॥ २ ॥
कुर्याद्वसचतुर्भिस्तां ध्रुवाऽसीत्यनुषज्यते ।
अदि रास्नामदि बिलं कुर्यात्कृत्वाय तामुखाम् ॥
सिकतासु स्थापयीत मन्त्रा एकोनविंशतिः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके
पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ चतुर्थाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः । )

---

वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाऽङ्गिरस्वद्रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेन छन्दसाऽङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानु-

---

१ ख. च. किं कुर्वती ।

(उखासंस्काराभिधानम्)

ष्टुभेन छन्दसाऽङ्गिरस्वदिन्द्रस्त्वा धूपयत्वङ्गिरस्वद्विष्णुस्त्वा धूपयत्वङ्गिरस्वद्वरुणस्त्वा धूपयत्वङ्गिरस्वददितिस्त्वा देवी विश्वदेव्यावती पृथिव्याः सधस्थेऽङ्गिरस्वत्खनत्ववट देवानां त्वा पत्नीः (१) देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वद्दधतूखे धिषणास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वदभीन्धतामुखे ग्नास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वच्छ्रपयन्तूखे वरूत्रयो जनयस्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वत्पचन्तूखे। मित्रैतामुखां पचैषा मा भेदि। एतां ते परि ददाम्यभित्त्यै। अभीमाम् (२) महिना दिवं मित्रो बभूव सप्रथाः। उत श्रवसा पृथिवीम्। मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम्। द्युम्नं चित्रश्रवस्तमम्। देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः। सुबाहुरुत शक्त्या। अपद्यमाना पृथिव्याशा दिश आ पृण। उत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वम्। वसवस्त्वाऽऽच्छृन्दन्तु गायत्रेण छन्दसाऽङ्गिरस्वद्रुद्रास्त्वाऽऽ

च्छृन्दन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वदादित्या-
स्त्वाऽऽ च्छृन्दन्तु जागतेन छन्दसाऽङ्गिरस्व-
द्विश्वे त्वा देवा वैश्वानरा आ च्छृन्दन्त्वानुष्टु-
भेन छन्दसाऽङ्गिरस्वत् ( ३ ) ॥

( पत्नीरिमा॰ रुद्रास्त्वाऽऽ च्छृन्दन्त्वेकान्नविंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके
प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ चतुर्थाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः । )

---

वसवः । त्वा । धूपयन्तु । गायत्रेण । छन्दसा । अङ्गिरस्वत् । रुद्राः । त्वा । धूपयन्तु । त्रैष्टुभेन छन्दसा । अङ्गिरस्वत् । आदित्याः । त्वा । धूप यन्तु । जागतेन । छन्दसा । अङ्गिरस्वत् । विश्वे त्वा । देवाः । वैश्वानराः । धूपयन्तु । आनुष्टुभेनेत्या नु—स्तुभेन । छन्दसा । अङ्गिरस्वत् । इन्द्रः । त्वा धूपयतु । अङ्गिरस्वत् । विष्णुः । त्वा । धूपयतु अङ्गिरस्वत् । वरुणः । त्वा । धूपयतु । अङ्गिरस्वत् अदितिः । त्वा । देवी । विश्वदेव्यावतीति विश्वदे व्य—वती । पृथिव्याः । सधस्थ इति सध—स्थे अङ्गिरस्वत् । खनतु । अवट । देवानाम् । त्वा पत्नीः ( १ ) । देवीः । विश्वदेव्यावतीरिति विश्

देव्य—वतीः । पृथिव्याः । सधस्थ इति सध—स्थे । अङ्गिरस्वत् । दधतु । उखे । धिषणाः । त्वा । देवीः । विश्वदेव्यावतीरिति विश्वदेव्य—वतीः । पृथिव्याः । सधस्थ इति सध—स्थे । अङ्गिरस्वत् । अभीति । इन्धताम् । उखे । ग्नाः । त्वा । देवीः । विश्वदेव्यावतीरिति विश्वदेव्य—वतीः । पृथिव्याः । सधस्थ इति सध—स्थे । अङ्गिरस्वत् । श्रपयन्तु । उखे । वरूत्रयः । जनयः । त्वा । देवीः । विश्वदेव्यावतीरिति विश्वदेव्य—वतीः । पृथिव्याः । सधस्थ इति सध—स्थे । अङ्गिरस्वत् । पचन्तु । उखे । मित्रं । एताम् । उखाम् । पच । एषा । मा । भेदि । एताम् । ते । परीति । ददामि । अभित्त्यै । अभीति । इमाम् ( २ )। महिना । दिवम् । मित्रः । बभूव । सप्रथा इति स—प्रथाः । उत । श्रवसा । पृथिवीम् । मित्रस्य । चर्षणीधृत इति चर्षणि—धृतः । श्रवः । देवस्य । सानसिम् । द्युम्नम् । चित्रश्रवस्तममिति चित्रश्रवः—तमम् । देवः । त्वा । सविता । उदिति । वपतु । सुपाणिरिति सु—पाणिः । स्वङ्गुरिरिति सु—अङ्गुरिः । सुबाहुरिति सु—बाहुः । उत । शक्त्या । अपद्यमाना । पृथिवि । आशाः । दिशः । एति ।

पृण । उदिति॑ । ति॒ष्ठ॒ । बृ॒ह॒ती । भ॒व॒ । ऊ॒र्ध्वा । ति॒ष्ठ॒ । ध्रु॒वा । त्वम् । वस॑वः । त्वा॒ । एति॑ । छृ॒न्द॒न्तु॒ गा॒य॒त्रेण॑ । छन्द॑सा । अ॒ङ्गि॒र॒स्वत् । रु॒द्राः । त्वा॒ एति॑ । छृ॒न्द॒न्तु॒ । त्रैष्टु॑भेन । छन्द॑सा । अ॒ङ्गि॒र॒स्वत् आ॒दि॒त्याः । त्वा॒ । एति॑ । छृ॒न्द॒न्तु॒ । जाग॑तेन । छन्द॑सा । अ॒ङ्गि॒र॒स्वत् । विश्वे॑ । त्वा॒ । दे॒वाः । वै॒श्वा॒न॒राः एति॑ । छृ॒न्द॒न्तु॒ । आनु॑ष्टुभेनेत्यानु॑—स्तु॒भेन । छन्द॑सा अ॒ङ्गि॒र॒स्वत् ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ चतुर्थकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः । )

---

पञ्चमेऽनुवाक उखानिर्माणमुक्तम् । अथ षष्ठे तत्संस्कारोऽभिधीयते । कल्पः—“ वसवस्त्वा धूपयन्तु गायत्रेण छन्दसेति सप्तभिरश्वशकं धूपयन्ति ” इति ।

पाठस्तु—

वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाऽङ्गि- रस्वद्रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाऽ- ङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेन छन्दसाऽङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वदिन्द्रस्त्वा धूपयत्वङ्गिरस्वद्विष्णुस्त्वा धूपयत्वङ्गिर- स्वद्वरुणस्त्वा धूपयत्वङ्गिरस्वद् , इति ।

(उखासंस्काराभिधानम्)

हे उखे त्वामष्टौ वसवः सहकारिणा गायत्रेण च्छन्दसा सहाङ्गिरस इव धूपयन्तु अश्वशकजन्येन धूमेन संस्कुर्वन्तु । एव मुत्तरेष्वपि षट्सु योजनीयम् ॥

एतान्मन्त्रान्विनियुङ्क्ते—

"सप्तभिर्धूपयति सप्त वै शीर्षण्याः प्राणाः शिर एतद्यज्ञस्य यदुखा शीर्षन्नेव यज्ञस्य प्राणान्दधाति तस्मात्सप्त शीर्षन्प्राणाः" [सं० का० ५ प्र० १ अ० ७] इति ।

शिरोवर्तिषु सप्तसु च्छिद्रेषु संचरन्तः प्राणाः सप्तसंख्याकाः । उखा च यज्ञशिरःस्थानीया । तस्मात्सप्तभिर्धूपने सति यज्ञस्य शिरस्येव प्राणानवस्थापयति । यस्मादेवं तस्मात्प्रतिपुरुषं शिरसि च्छिद्रभेदेन सप्त प्राणा वर्तन्ते ॥

धूपसाधनं विधत्ते—

"अश्वशकेन धूपयति प्राजापत्यो वा अश्वः सयोनित्वाय" [सं० का० ५ प्र० १ अ० ७] इति ।

अश्वस्य शकोऽश्वशकृत् । अश्वस्य प्राजापत्यत्वमसकृदुक्तम् । अग्निरपि प्राजापत्यः । "प्रजापतिरग्निमचिनुत" इति श्रवणात् । अत उभयोः समानयोनित्वम् ॥

कल्पः—"अदितिस्त्वा देवीत्यग्रेण गार्हपत्यमवटं खात्वा" इति ।

पाठस्तु—

अदितिस्त्वा देवी विश्वदेव्यावती पृथिव्याः सधस्थेऽङ्गिरस्वत्खनत्ववट, इति ।

विश्वेषां देवानां योग्या उपचारा विश्वदेव्यास्तेऽस्यां सन्तीति विश्वदेव्यावती । तादृशीयमदितिर्देवी पृथिव्याः सधस्थे भूम्या उपरि हेऽवट त्वामङ्गिरस इव खनतु ॥

अस्मिन्मन्त्रे खननकर्तृत्वमदितेरुपपादयति—

"अदितिस्त्वेत्याहेयं वा अदितिरदित्यैवादित्यां खनत्यस्या अक्रूरंकाराय हि स्वः स्व९ हिनस्ति" [सं० का० ५ प्र० १ अ० ७] इति ।

इयं भूमिरेवात्रादितिशब्देन विवक्षिता । अवटखननं[1] हि भूम्यामेव । ततोऽ[2]तेः खननकर्तृत्वे सति भूमेर्हिंसा न भवति । न हि लोके कश्चिदपि स्वयं

---

१ क. घ. ङ. °ननमपि भूम्या एव । २ क. घ. ङ. °पि स्वा° ।

स्वात्मानं हिनस्ति । तस्मात्खननलक्षणक्रूरकार्यकरणाभावायेदमदि
संपाद्यते[1] ॥

कल्पः—" लोहितपचनीयैः संभारैरवस्तीर्य देवानां त्वा प
तस्मिन्नुखामवदधाति " इति ।

पाठस्तु—

देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः
पृथिव्याः सधस्थेऽङ्गिरस्वद्दधतूखे, इति ।

विश्वदेव्यावतीः कृत्स्नदेवार्होपचारयुक्ता या देवानां पत्न्यो दे
पृथिव्याः सधस्थ उपर्यङ्गिरस इव हे उखे त्वां दधतु स्थापयन्तु ॥

देवपत्नीनामुखाकर्तृत्वं पुरातनमित्येतद्दर्शयति—

" देवानां त्वा पत्नीरित्याह देवानां वा एतां पत्नयोऽग्रेऽकुर्व
रेवैनां दधाति " [ सं० का० ५ प्र० १ अ० ७ ] इति ।

पुरा देवपत्नीभिरुखायाः कृतत्वादिदानीमपि ताभिरेव स्थापिता भ

कल्पः—" लोहितपचनैः संभारैः प्रच्छाद्य धिषणास्त्वा देवीरि
भिरुखायामग्निमभ्यादधाति " इति ।

पाठस्तु—

धिषणास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः
सधस्थेऽङ्गिरस्वदभीन्धतामुखे ग्नास्त्वा देवी-
र्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वच्छ्र-
पयन्तूखे वरूत्रयो जनयस्त्वा देवीर्विश्वदेव्या-
वतीः पृथिव्याः सधस्थेऽङ्गिरस्वत्पचन्तूखे, इति ।

विद्याभिमानिन्यो देवता धिषणाः । हे उखे त्वां ता देवता अभी
माभितो ज्वालयन्तु । छन्दोभिमानिन्यो देवता ग्नास्तास्त्वां श्रपयन्
पच्यमानतां संपादयन्तु । वरूत्रयो जनय इति पदभेदेन मन्त्रभेदः । हो
त्रादिषु सप्तसु होत्रकेष्वभिमानिन्यो देवता वरूत्रयः सेनेन्द्रस्येत्या
केनोक्ता देवपत्न्यो जनयः । तत्र वरूत्रयस्त्वां पचन्तु तव पक्वतां संपा
तथा जनयस्त्वां पचन्तु पक्वत्वपरीक्षां कुर्वन्तु । वरूत्रय इति मन्त्रे त्वा
रित्याद्युत्तरभागोऽनुषज्यते ॥

---

१ क. घ. ङ. संपद्यते ।

एषु मन्त्रेषु धिषणादिशब्दानामस्मदुक्तार्थपरतां दर्शयति—

"धिषणास्त्वेत्याह विद्या वै धिषणा विद्याभिरेवैनामभीन्धे ग्नास्त्वेत्याह छन्दाꣳसि वै ग्नाश्छन्दोभिरेवैनाꣳ श्रपयति वरूत्रयस्त्वेत्याह होत्रा वै वरूत्रयो होत्राभिरेवैनां पचति जनयस्त्वेत्याह देवानां वै पत्नीर्जनयस्ताभिरेवैनां पचति" [ सं० का० ५ प्र० १ अ० ७ ] इति।

स्पष्टोऽर्थः॥

अदितिस्त्वा देवीत्यादीनामुक्तानां मन्त्राणां संख्यां प्रशंसति—

"षड्भिः पचति षड्वा ऋतव ऋतुभिरेवैनां पचति" [ सं० का० ५ प्र० १ अ० ७ ] इति।

अवटखननादीनामपि पाकाङ्गत्वेन षड्भिः पचतीत्युच्यते॥

वरूत्रयो जनय इत्यनयोः स्वाभिमतं मन्त्रभेदं दर्शयितुं पचन्त्वित्येवमन्तस्य[2] भागस्यानुषङ्गरूपामावृत्तिं दर्शयति—

"द्विः पचन्त्वित्याह तस्माद्द्विः संवत्सरस्य सस्यं पच्यते" [ सं० का० ५ प्र० १ अ० ७ ] इति।

वरूत्रयः पचन्तु जनयः पचन्त्वित्येवं द्विः प्रयोगः॥

कल्पः—"मित्रैतामुखां पचेति पच्यमानां तिसृभिर्मैत्रीभिरुपचरति" इति।

तत्र प्रथमामाह—

मित्रैतामुखां पचैषा मा भेदि।
एतां ते परि ददाम्यभित्त्यै।, इति।

हे मित्र सर्वप्राणिहितकारिन्देव त्वमेतामुखां पच पक्वां कुरु। एषा चोखा मा भेदि भिन्ना मा भवतु। एतामुखामभित्त्यै भेदाभावाय ते तुभ्यं परिददामि परित्राणाय ददामि॥

अथ द्वितीयामाह—

अभीमां महिना दिवं मित्रो बभूव
सप्रथाः। उत श्रवसा पृथिवीम्।, इति।

मित्र इमामुखामभिबभूवाभितः प्राप्तवान्। कीदृशो मित्रः, सप्रथाः सविस्तारः[3] प्रचुरकीर्तिरित्यर्थः। कीदृशीमिमां, महिना दिवं महिम्ना द्युलोकसदृशीम्। उतापि च श्रवसा पृथिवीं श्रवणेन पृथिवीसदृशीम्॥

अथ तृतीयामाह—

---

१ ख. च. एतेषु। २ च. ख. 'न्त्वितिमन्त्रभा'। ३ क. घ. ङ. 'विस्तरः।

मित्रस्य चर्षणीधृतः श्रवो देवस्य सान-
सिम् । द्युम्नं चित्रश्रवस्तमम् ।,' इति ।

चर्षणीधृतो मनुष्याणां धारयितुर्मित्रस्य देवस्य श्रवः श्रोतुं योग्यं
महदस्तीति शेषः । सानसिं फलदानशीलं द्युम्नं द्रविणप्रदं चित्रश्र
चित्रं श्रवः कीर्तिर्यस्यासौ चित्रश्रवाः, अतिशयेन तादृशस्तमेतादृशमुख
स मित्रः पचत्विति शेषः ॥

देवान्तरपरित्यागेन मित्रदेवताकमन्त्रस्वीकारे कारणं दर्शयति—

"वारुण्युखाऽभीद्धा मैत्रियोपैति शान्त्यै" [ सं० का० ५ प्र० १
७ ] इति ।

अभीद्धा प्रज्वलिता येयमुखा सेयं मुग्रत्वाद्वारुणी, तस्या मै
शान्तिर्भवति ॥

कल्पः—"पक्वां देवस्त्वा सवितोद्वपत्वित्युद्वास्य" इति ।

पाठस्तु—

देवस्त्वा सवितोद्वपतु सुपाणिः स्व-
ङ्गुरिः । सुबाहुरुत शक्त्या ।, इति ।

हे उखे सविता देवस्त्वां स्वकीयया शक्त्योद्वपतु अवटादूर्ध्वमान
कीदृशः सविता, सुपाणिः शोभनौ पाणी यस्यासौ सुपाणिः । शोभना
लयो यस्यासौ स्वङ्गुलिः । छान्दसो रेफः । उतापि च शोभनौ बाहू य
सुबाहुः । मणिबन्धस्योभयतोऽवस्थितौ भागौ पाणिशब्देन बाहु
चोच्येते ॥

अस्मिन्मन्त्रे सवितृशब्दतात्पर्यं दर्शयति—

"देवस्त्वा सवितोद्वपत्वित्याह सवितृप्रसूत एवैनां ब्रह्मणा देवताभिरुद्व
[ सं० का० ५ प्र० १ अ० ७ ] इति ।

सवित्रा प्रेरितः सन्नेनां ब्रह्मणा मन्त्रेण देवताभिश्च सहो[द्वपत्यु
कृतवान्भवति ॥

कल्पः—"अपद्यमाना पृथिव्याशा दिश आ पृणेत्युत्तरतः सि
प्रतिष्ठाप्य" इति ।

पाठस्तु—

१ क. घ. ङ. 'चतीति । २ ख. च. देवतान्त' । ३ ख. च. सेयं दुःस्पर्शाद्वा' ।
घ. ङ. 'ल्पः—दे' ।

अपद्यमाना पृथिव्याशा दिश
आ पृण । उत्तिष्ठ बृहती भवो-
र्ध्वा तिष्ठ ध्रुवा त्वम् ।, इति ।

हे उखे पृथिवि पृथिव्यां भूमौ त्वमपद्यमाना भङ्गमप्राप्नुवती, आशा दिश आपृण प्राच्याद्या दिश आग्नेयादिविदिशश्च सर्वतः पूरय, उत्तिष्ठावटाद्बहिरागत्योत्थिता भव, उत्थाय च बृहती प्रौढा भव । तादृशी त्वमूर्ध्वा सती ध्रुवा स्थिरा भव । ऊर्ध्वोर्ध्वमुखी स्थिरा तिष्ठ ॥

अस्मिन्मन्त्रे यद्दिशामापूरणमुक्तं सेयमग्नेः प्रभया व्याप्तिरित्येतत्तात्पर्यं दर्शयति—

"अपद्यमाना पृथिव्याशा दिश आ पृणेत्याह तस्मादग्निः सर्वा दिशोऽनु वि भाति" [ सं० का० ५ प्र० १ अ० ७ ] इति ।

यस्मादुखायाः सर्वदिक्पूर्तिः प्रार्थ्यते तस्मादुखया मिश्रितोऽग्निः स्वतेजसः सर्वा दिशः प्रकाशयति ॥

उत्तरार्धेन स्थिरप्रतिष्ठा प्रार्थ्यत इति दर्शयति—

"उत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वमित्याह प्रतिष्ठित्यै" [ सं० का० ५ प्र० १ अ० ७ ] इति ॥

कल्पः—"वसवस्त्वाऽऽ च्छृन्दन्तु गायत्रेण छन्दसेति चतुर्भिरजाक्षीरेणोखामा च्छृणत्ति" इति ।

पाठस्तु—

वसवस्त्वाऽऽ च्छृन्दन्तु गायत्रेण छन्दसाऽङ्-
गिरस्वद्रुद्रास्त्वाऽऽ च्छृन्दन्तु त्रैष्टुभेन छन्द-
साऽङ्गिरस्वदादित्यास्त्वाऽऽ च्छृन्दन्तु जागतेन
छन्दसाऽङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा आ
च्छृन्दन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत् ॥, इति ॥

हे उखे वसुनामका देवा अङ्गिरस इव त्वां सिञ्चन्तु । एवमुत्तरत्रापि [यो]ज्यम् ॥

एतैर्मन्त्रैः साध्यं सेचनं विधत्ते—

---

१ ख. घ. ङ. च. अस्य मन्त्रस्य य° ।

" असुर्यं पात्रमनाच्छृण्णमा च्छृणत्ति देवत्राऽकः " [ सं० का० ५ प्र० १ अ० ७ ] इति ।

यज्ञसाधनं पात्रमग्निदग्धं सद्द्रवद्रव्येण यदा न सिक्तं भवति मसुरयोग्यं भवेत्, तत्परिहारायाऽऽसिञ्चेत् । सिक्तं पात्रं देवत्रा करोति देवयोग्यं भवतीत्यर्थः ॥

सेचनसाधनं विधत्ते—

" अजक्षीरेणाऽऽ च्छृणत्ति परमं वा एतत्पयो यदजक्षीरं परमे पयसाऽऽ च्छृणत्ति " [ सं० का० ५ प्र० १ अ०७ ] इति ।

लोकेऽजाक्षीरस्य सर्वव्याधिपरिहारहेतुत्वाद्वेदेऽपि " आग्नेयी वा यदजा " इत्युक्तत्वात्परमत्वम् ॥

लोके दग्धस्य पात्रस्य मन्त्रमन्तरेणैव सेचनं कुर्वन्ति । अतस्तद्व्यावृत्त्यै मन्त्रेण सेचनं विधत्ते—

" यजुषा व्यावृत्त्यै " [ सं० का० ५ प्र० १ अ० ७ ] इति ॥

सामान्येन मन्त्रं विधाय विशेषेण च्छन्दोलिङ्गकान्मन्त्रान्विधत्ते—

" छन्दोभिरा च्छृणत्ति छन्दोभिर्वा एषा क्रियते छन्दोभिरेव छन्दां च्छृणत्ति " [ सं० का० ५ प्र० १ अ० ७ ] इति ।

पूर्वं वसवस्त्वा कृण्वन्तु गायत्रेण च्छन्दसेति च्छन्दोलिङ्गैः क्रियते । अत इयं छन्दोरूपा । तस्मादुखारूपाणि छन्दांसि मन्त्ररूपैः भिरेवाऽऽसिक्तानि भवन्ति ॥

अत्र विनियोगसंग्रहः—

वसवः सप्तभिर्धूपोऽदितिस्त्वेत्यवटं खनेत् ।
देवोखां तत्र संस्थाप्य धिषणेति चतुष्टयात् ॥ १ ॥
अग्निं क्षिपेन्मन्त्रभेदो वरूजनपदद्वयात् ।
मित्रत्रयेणोपचारो देव उद्वासयेदुखाम् ॥ २ ॥
अपेति सिकतास्वेतां निधाय वसवेत्यतः ।
चतुष्टयादजाक्षीरं सिञ्चेद्द्वाविंशतिर्मताः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके
षष्ठोऽनुवाकः ॥ ६ ॥

---

१ क. घ. ङ. 'रूत्रजनयद्व' ।

( पञ्चपञ्चाङ्गभूताग्निकसामिधेन्यभिधानम् )

( अथ चतुर्थकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः । )

---

समांस्त्वाऽग्न ऋतवो वर्धयन्तु संवत्सरा ऋषयो यानि सत्या । सं दिव्येन दीदिहि रोचनेन विश्वा आ भाहि प्रदिशः पृथिव्याः । सं चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय । मा च रिषदुपसत्ता ते अग्ने ब्रह्माणस्ते यशसः सन्तु माऽन्ये । त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने ( १ ) । संवरणे भवा नः । सपत्नहा नो अभिमातिजिच्च स्वे गये जागृह्यप्रयुच्छन् । इहैवाग्ने अधि धारया रयिं मा त्वा नि क्रन्पूर्वचितो निकारिणः । क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः । क्षत्रेणाग्ने स्वायुः सꣳ रभस्व मित्रेणाग्ने मित्रधेये यतस्व । सजातानां मध्यमस्था एधि राज्ञामग्ने विहव्यो दीदिहीह । अति (२) निहो अति स्रिधोऽत्यचित्तिमत्यरातिमग्ने । विश्वा ह्यग्ने दुरिता सहस्वाथास्मभ्यꣳ सहवीराꣳ रयिं दाः । अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्रभृद्दीदिहीह । विश्वा आशाः प्रमुञ्चन्मानुषीर्भियः शिवाभिरद्य परि पाहि

नो वृधे । बृहस्पते सवितर्बोधयैनꣳ सꣳशितं चित्संतराꣳ सꣳ शिशाधि । वर्धयैनं महते सौभगाय ( ३ ) विश्वं एनमनु मदन्तु देवाः । अमुत्र भूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः । प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः । उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ( ४ ) ॥

( इमे शिवो अग्नेऽति सौभगाय चतुस्त्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ चतुर्थाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः । )

---

समाः । त्वा । अग्ने । ऋतवः । वर्धयन्तु । सं[वत्]त्सरा इति सं—वत्सराः । ऋषयः । यानि । सत्या[नि] समितिं । दिव्येन । दीदिहि । रोचनेन । विश्वाः[:] एति । आहि । प्रदिश इति प्र—दिशः । पृथिव्या[ः] समिति । च । इध्यस्व । अग्ने । प्रेति । च । बोध[य] एनम् । उदिति । च । तिष्ठ । महते । सौभग[ाय] मा । च । रिषत् । उपसत्तेत्युप—सत्ता । ते । अ[ग्ने] ब्रह्माणः । ते । यशसः । सन्तु । मा । अ[न्ये]

त्वाम् । अग्ने । वृणते । ब्राह्मणाः । इमे । शिवः । अग्ने ( १ ) । संवरण इति सं—वरणे । भव । नः । सपत्नहेति सपत्न—हा । नः । अभिमातिजिदित्य-भिमाति—जित् । च । स्वे । गये । जागृहि । अप्र-युच्छन्नित्यप्र—युच्छन् । इह । एव । अग्ने । अधीति । धारय । रयिम् । मा । त्वा । नीति । क्रन् । पूर्वचित इति पूर्व—चितः । निकारिण इति नि—कारिणः । क्षत्रम् । अग्ने । सुयममिति सु—यमम् । अस्तु । तुभ्यम् । उपसत्तेत्युप—सत्ता । वर्धताम् । ते । अनिष्टृतः । क्षत्रेण । अग्ने । स्वायु-रिति सु—आयुः । समिति । रभस्व । मित्रेण । अग्ने । मित्रधेय इति मित्र—धेये । यतस्व । सजा-तानामिति स—जातानाम् । मध्यमस्था इति मध्य-म—स्थाः । एधि । राज्ञाम् । अग्ने । विहव्य इति वि—हव्यः । दीदिहि । इह । अतीति ( २ ) । निहः । अतीति । स्रिधः । अतीति । अचित्तिम् । अतीति । अरातिम् । अग्ने । विश्वा । हि । अग्ने । [दु]रितेति दुः—इता । सहस्व । अथ । अस्मभ्यमि-[त्य]स्म—भ्यम् । सहवीरामिति सह—वीराम् । [रयि]म् । दाः । अनाधृष्य इत्यना—धृष्यः । जातवेदा

इति जात—वेदाः । अनिंष्टृतः । विराडिति वि—राट् । अग्ने । क्षत्रभृदिति क्षत्र—भृत् । दीदिहि । इह । विश्वाः । आशाः । प्रमुञ्चन्निति प्र—मुञ्चन् । मानुषीः । भियः । शिवाभिः । अद्य । परीति । पाहि । नः । वृधे । बृहस्पते । सवितः । बोधय । एनम् । सꣳशितमिति सं—शितम् । चित् । संतरमिति सं—तरम् । समिति । शिशाधि । वर्धय । एनम् । महते । सौभगाय ( ३ ) । विश्वे । एनम् । अन्विति । मदन्तु । देवाः । अमुत्रभूयादित्यमुत्र—भूयात् । अध । यत् । यमस्य । बृहस्पते । अभिशस्तेरित्यभि—शस्तेः । अमुञ्चः । प्रतीति । औहताम् । अश्विना । मृत्युम् । अस्मात् । देवानाम् । अग्ने । भिषजा । शचीभिरिति शचि—भिः । उदिति । वयम् । तमसः । परीति । पश्यन्तः । ज्योतिः । उत्तरमित्युत्—तरम् । देवम् । देवत्रेति देव—त्रा । सूर्यम् । अगन्म । ज्योतिः । उत्तममित्युत्—तमम् ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( पञ्चपश्वङ्गभूताग्निकसामिधेन्यभिधानम् )

( अथ चतुर्थकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः । )

---

षष्ठेऽनुवाक उखासंस्कार उक्तः । अथ सप्तमेऽनुवाके पञ्चपश्वङ्गभूता आग्नेय्यः सामिधेन्य उच्यन्ते ।

कल्पः—" एकविंशतिं चतुर्विंशतिं वा पराचीः सामिधेनीरन्वाहैकादश माकृतीः समास्त्वाऽग्न इति दशाऽऽग्निकीः " इति ।

तत्राऽऽद्यामाह[1]—

समास्त्वाऽग्न ऋतवो वर्धयन्तु संवत्सरा ऋषयो यानि सत्या । सं दिव्येन दीदिहि रोचनेन विश्वा आ भाहि प्रदिशः पृथिव्याः ।, इति ।

समाशब्दः संवत्सरवाची । संवत्सरशब्देन तु तदवयवा मासा अर्धमासाश्चोपलक्ष्यन्ते । हेऽग्ने संवत्सर ऋतवो मासा अर्धमासाश्चेत्येते कालविशेषाः । तथर्षयो मन्त्रद्रष्टारः । तथा यानि सत्यानि सत्यवचनानि सन्ति ते सर्वेऽपि त्वां वर्धयन्तु । तैर्वर्धितस्त्वं दिव्येन द्युलोकार्हेण रोचनेन तेजसा संदीदिहि सम्यग्दीप्यस्व । किंच त्वदीयया दीप्त्या पृथिव्याः संबन्धिनीः प्रदिशः सर्वा दिशो विदिशश्चाऽऽभाहि सर्वतो भासय ॥

अथ द्वितीयामाह—

सं चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय । मा च रिषदुपसत्ता ते अग्ने ब्रह्माणस्ते यशसः सन्तु माऽन्ये ।, इति ।

हेऽग्ने त्वं समिध्यस्व च स्वयमपि दीप्तो भव । एनं प्रबोधय च यजमानं कर्मानुष्ठानाय प्रबुद्धं कुरु । महते सौभगायोत्तिष्ठ च यजमानस्यात्यन्तसौभाग्यार्थमुद्युक्तोऽपि भव[2] । हेऽग्ने ते तवोपसत्ता परिचारकश्च मा रिषन्मा हिंस्यताम् । किंच ते त्वदीया ब्रह्माणो ब्राह्मणा ऋत्विग्यजमाना यशसः सन्तु यशस्विनो भवन्तु । अन्ये त्वत्परिचर्याविमुखा यशस्विनो मा भूवन् ॥

अथ तृतीयामाह—

त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने संवरणे

---

१ ख. च. तत्र प्रथमामा' । २ ख. च. 'सैभगार्थं' ।

भवा नः । सपत्नहा नो अभिमाति-
जिच्च स्वे गये जागृह्यप्रयुच्छन् ।, इति ।

हेऽग्न इमे ब्राह्मणा ऋत्विग्यजमानास्त्वां वृणते संभजन्त आराधयन्ति । हेऽग्ने नोऽस्माकं संवरणेऽपराधानामाच्छादने निमित्तभूते सति शिवः शान्तो भव, अपराधं मा प्रकटयेत्यर्थः । किंच नोऽस्माकं सपत्नहा वैरिघाती, अभिमातिजित्पापजयकारी च भूत्वा स्वे गये स्वकीये गृहेऽप्रयुच्छन्प्रमादमकुर्वञ्जागृहि सावधानो भव, अस्मद्धितं विचारयेत्यर्थः ॥

अथ चतुर्थीमाह—

इहैवाग्ने अधि धारया रयिं मा त्वा नि क्रन्पूर्वचितो निकारिणः । क्षत्रमग्ने सुयममस्तु
तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः ।, इति ।

हेऽग्न इहैव गृह एव रयिं धनमधिधारयाऽऽधिक्येन संपादय । पूर्वचितो येऽस्मत्तोऽपि पूर्वमग्नेश्चेतारस्तेऽस्मान्प्रति निकारिणो निराकर्तारो भूत्वा त्वामस्माभिश्चीयमानमग्निं मा निक्रन्मैव निराकुर्वन्तु । हेऽग्ने तुभ्यं तव क्षत्रं बलं सुयममस्तु सुस्थितं भवतु । ते तवोपसत्ता परिचारकोऽनिष्टृतः केनापि नितरामहिंसितः सन्वर्धताम् ॥

अथ पञ्चमीमाह—

क्षत्रेणाग्ने स्वायुः सꣳ रभस्व मित्रेणाग्ने
मित्रधेये यतस्व । सजातानां मध्यमस्था
एधि राज्ञामग्ने विहव्यो दीदिहीह ।, इति ।

हेऽग्ने क्षत्रेण त्वदीयेन बलेन स्वायुरस्मदीयं शोभनमायुः संरभस्व [illegible] क्षाऽऽयुःसंरक्षणेऽप्रमत्तो भव । हेऽग्ने मित्रधेये मित्राणामस्माकं धारणे मित्रे[illegible] नुग्रहयुक्तेन चित्तेन यतस्व प्रयत्नं कुरु । अग्निना सह प्रजापतेर्मुखतो [illegible] त्वाद्ब्राह्मणा अग्नेः सजातास्तेषां मध्यमस्था एधि मध्यमे प्रदेशेऽवस्थितो [illegible] सर्वदा ब्राह्मणान्पूजयेत्यर्थः । हूयतेऽत्रेति हवा यज्ञा विविधाश्च ते ह[illegible] विहवाः । विहवानर्हतीति विहव्यः । हेऽग्ने त्वमिह भूमौ राज्ञां वि[illegible] विविधयज्ञप्रवर्तकः सन्दीदिहि अतिशयेन दीप्यस्व ॥

---

१ ख. च. सुस्थिरं । २ ख. घ. ङ. च. 'गान्याज' ।

( पञ्चपश्वङ्गभूताग्निकसामिधेन्यभिधानम् )

अथ षष्ठीमाह--

अति निहो अति स्रिधोऽत्यचित्तिमत्यरा-
तिमग्ने । विश्वा ह्यग्ने दुरिता सहस्वाथा-
स्मभ्यꣳ सहवीराꣳ रयिं दाः ।, इति ।

निकृष्टानि श्वशूकरादिजन्मानि जिहीते प्राप्नोति यैर्दुरितैस्तानि दुरितानि हकारान्तेन निह्शब्देनोच्यन्ते । शरीरशोषणादिहेतवो रोगविशेषाः स्रिध्-शब्देनोच्यन्ते । हेऽग्ने निहो दुरितान्यतिसहस्वातिशयेन विनाशय । स्रिधो रोगांश्चातिसहस्व । अचित्तिं कर्मानुष्ठानविषयमज्ञानं चातिसहस्व । अरातिं कर्मविघ्नकारिणं शत्रुं चातिसहस्व । हिशब्दोऽपिशब्दार्थः । किं बहुना, हेऽग्ने विश्वान्यपि दुरितान्यनिष्टकारणानि सहस्व विनाशय । अथानन्तरमस्मभ्यं सहवीरां वीरैः पुत्रैः सहितां रयिं धनं दा देहि ॥

अथ सप्तमीमाह--

अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्र-
भृद्दीदिहीह । विश्वा आशाः प्रमुञ्चन्मानुषी-
र्भियः शिवाभिरद्य परि पाहि नो वृधे ।, इति ।

हेऽग्ने त्वमिह कर्मणि दीदिहि दीप्यस्व । कीदृशस्त्वम् । अनाधृष्य इतः परं केनाप्यधर्षणीयः । जातवेदा उत्पन्नसमस्तजगदभिज्ञः । अनिष्टृत इतः पूर्वमपि केनाप्यहिंसितः । विराड्विविधं राजमानः । क्षत्रं बलं बिभर्तीति क्षत्रभृत् । किंच, यथोक्तविशेषणविशिष्टस्त्वं शिवाभिः शान्ताभिरनुग्रहदृष्टिभिरद्या-स्मिन्कर्मणि नोऽस्मान्वृधेऽभिवृद्धये परिपाहि सर्वतः पालय । किं कुर्वन् । विश्वा आशा निषिद्धाचरणविषयाः सर्वास्तृष्णा मानुषीर्भियो मनुष्येषु प्रसक्ता व्याध्यादिभीतीश्च प्रमुञ्चन्प्रकर्षेण निवारयन् ॥

अथाष्टमीमाह--

बृहस्पते सवितर्बोधयैनꣳ सꣳशितं चित्सं-
तराꣳ सꣳ शिशाधि । वर्धयैनं महते सौभ-
गाय विश्व एनमनु मदन्तु देवाः ।, इति ।

अत्र बृहस्पतिसवितृशब्दावग्निपरौ सामिधेनीनामाग्नेयत्वात् । बृहस्पतिस-

---

१ ख. च. 'स्व । अ' । २ क. घ. ङ. 'विधो रा' ।

वितृभ्यां तुल्य हेऽग्न एनं यजमानं बोधय कर्मणि बुद्धिमन्तं कुरु। संशितं-चित्पूर्वमेव निशितबुद्धिमप्येनं संतरां संशिशाधि पुनरप्यतिशयेन सम्यगनुशासनवन्तं कुरु। एनं यजमानं महते सौभगाय वर्धय। विश्वे सर्वेऽपि देवा एनं यजमानमनुमदन्तु समीचीनोऽयमिति हृष्यन्तु ॥

अथ नवमीमाह—

अमुत्रभूयादध यद्यमस्य बृहस्पते अभिश-
स्तेरमुञ्चः । प्रत्यौहतामश्विना मृत्युमस्मा-
द्देवानामग्ने भिषजा शचीभिः । , इति।

भूयो भावः। अमुत्र स्वर्गे भूयोऽमुत्रभूयः, स्वर्गे चिरावस्थानमित्यर्थः। पञ्चमी निमित्तार्था। अधशब्दो धकारयुक्त इदानीमित्येतस्मिन्नर्थे वर्तते। हे बृहस्पतितुल्याग्नेऽमुत्रभूयात्स्वर्गे चिरावस्थानं निमित्तीकृत्याधेदानीं यमस्याभिशस्तेर्यमसंबन्धिहिंसानिमित्तात्पापादस्मानमुञ्चो मोचितवानसीति यत्तेनास्माकं परलोकविषये चिन्ता नास्तीति शेषः। हेऽग्ने देवानां भिषजावश्विनौ देवौ शचीभिः स्वकीयशक्तिभिरस्माद्यजमानान्मृत्युं प्रत्यौहताम्, अपमृत्युमिह लोके निराकुरुताम् ॥

अथ दशमीमाह—

उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् । देवं
देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ , इति॥

वयं तमस उत्तरं ज्योतिस्तमसो विनाशकत्वेनोत्कृष्टमग्निसंबद्धं ज्योतिरुत्तरं पश्यन्त उत्कर्षेण सर्वतोऽवलोकयन्तो देवत्रा देवेषु मध्ये सूर्यं देवं सूर्यरूपेवर्तमानमग्निसंबद्धमेवोत्तमं ज्योतिरगन्म प्राप्तास्म ॥

अत्र विनियोगसंग्रहः—

समास्त्वा सामिधेन्यः स्युर्दशैता आग्निके पशौ ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके
सप्तमोऽनुवाकः ॥ ७ ॥

---

१ क. घ. ङ. 'श्वेऽपि स'। २ ख. च. प्राप्ताः स्मः। अ'।

( आप्रीनामकप्रयाजयाज्याभिधानम् )

( अथ चतुर्थाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः । )

---

ऊर्ध्वा अंस्य समिधों भवन्त्यूर्ध्वा शुक्रा शोचीꣳष्यग्नेः । द्युमत्तमा सुप्रतीकस्य सूनोः । तनूनपादसुरो विश्ववेदा देवो देवेषु देवः । पथ आऽनंक्ति मध्वा घृतेनं । मध्वा यज्ञं नंक्षसे प्रीणानो नराशꣳसो अग्ने । सुकृद्देवः संविता विश्ववारः । अच्छायमेति शवंसा घृतेनेडानो वह्निर्नमंसा । अग्निꣳ स्रुचो अध्वरेषु प्रयत्सु । स यंक्षदस्य महिमानमग्नेः सः ( १ ) ई मन्द्रासु प्रयसंः । वसुश्चेतिंष्ठो वसुधातंमश्च । द्वारों देवीरन्वंस्य विश्वे व्रता ददन्ते अग्नेः । उरुव्यचंसो धाम्ना पत्यमानाः । ते अंस्य योषणे दिव्ये न योनावुषासानक्ता । इमं यज्ञमंवतामध्वरं नंः । दैव्या होतारावूर्ध्वमंध्वरं नोऽग्नेर्जिह्वामभि गृंणीतम् । कृणुतं नः स्विंष्टिम् । तिस्रो देवीर्बर्हिरेदꣳ संदन्त्विडा सरंस्वती ( २ ) भारंती । मही गृंणाना । तन्नस्तुरीपमद्भुतं पुरुक्षु त्वष्टा सुवीरंम् । रायस्पोषं वि ष्यंतु नाभिंमस्मे । वनंस्पतेऽवं सृजा ररांणस्त्मना देवेषु । अग्निर्हव्यꣳ शंमिता सूदयाति । अग्ने

स्वाहा कृणुहि जातवेद इन्द्राय हव्यम् । विश्वे
देवा हविरिदं जुषन्ताम् । हिरण्यगर्भः समव-
र्तताग्रे भूतस्य जातः पतिरेक आसीत् । स
दाधार पृथिवीं द्याम् (३) उतेमां कस्मै
देवाय हविषा विधेम । यः प्राणतो निमिष-
तो महित्वैक इद्राजा जगतो बभूव । य ईशे
अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा
विधेम । य आत्मदा बलदा यस्य विश्वे
उपासते प्रशिषं यस्य देवाः । यस्य छायाऽ-
मृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ।
यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया
सह (४) आहुः । यस्येमाः प्रदिशो यस्य
बाहू कस्मै देवाय हविषा विधेम । यं क्रन्दसी
अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितौ व्येति कस्मै देवाय
हविषा विधेम । येन द्यौरुग्रा पृथिवी च दृढे
येन सुवः स्तभितं येन नाकः । यो अन्तरिक्षे
रजसो विमानः कस्मै देवाय हविषा विधेम ।
आपो ह यन्महतीर्विश्वम् (५) आयन्दक्षं
दधाना जनयन्तीरग्निम् । ततो देवानां निर-

वर्ततासुरेकः कस्मै देवाय हविषा विधेम। यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीरग्निम्। यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम ( ६ ) ॥

( अग्नेः स सरस्वती द्याऽसह विश्वं चतुस्त्रिंशच्च। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ चतुर्थाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः। )

---

ऊर्ध्वाः। अस्य। सामिध इति सम्—इधः। भवन्ति। ऊर्ध्वा। शुक्रा। शोचीꣳषि। अग्नेः। द्युमत्तमेति द्युमत्—तमा। सुप्रतीकस्येति सु—प्रतीकस्य। सूनोः। तनूनपादिति तनू—नपात्। असुरः। विश्ववेदा इति विश्व—वेदाः। देवः। देवेषु। देवः। पथः। एति। अनक्ति। मध्वा। घृतेन। मध्वा। यज्ञम्। नक्षसे। प्रीणानः। नराशꣳसः। अग्ने। सुकृदिति सु—कृत्। देवः। सविता। विश्ववार इति विश्व—वारः। अच्छ। अयम्। एति। शवसा। घृतेन। ईडानः। वह्निः। नमसा। अग्निम्। स्रुचः। अध्वरेषु। प्रयत्स्विति प्रयत्—सु। सः। यक्षत्। अस्य। महिमानम्। अग्नेः। सः ( १ )। ईम्।

मन्द्रासु । प्रयसः । वसुः । चेतिष्ठः । वसुधातम इति वसु—धातमः । च । द्वारः । देवीः । अन्विति । अस्य । विश्वे । व्रता । ददन्ते । अग्नेः । उरुव्यचस इत्युरु—व्यचसः । धाम्ना । पत्यमानाः । ते इति । अस्य । योषणे इति । दिव्ये इति । न । योनौ । उषासानक्ता । इमम् । यज्ञम् । अवताम् । अध्वरम् । नः । दैव्या । होतारौ । ऊर्ध्वम् । अध्वरम् । नः । अग्नेः । जिह्वाम् । अभीति । गृणीतम् । कृणुतम् । नः । स्विष्टिमिति सु—इष्टिम् । तिस्रः । देवीः । बर्हिः । एति । इदम् । सदन्तु । इडा । सरस्वती ( २ ) । भारती । मही । गृणाना । तत् । नः । तुरीपम् । अद्भुतम् । पुरुक्षु । त्वष्टा । सुवीरमिति सु—वीरम् । रायः । पोषम् । वीति । स्यतु । नाभिम् । अस्मे इति । वनस्पते । अवेति । सृज । रराणः । त्मना । देवेषु । अग्निः । हव्यम् । शमिता । सूदयाति । अग्ने । स्वाहा । कृणुहि । जातवेद इति जात—वेदः । इन्द्राय । हव्यम् । विश्वे । देवाः । हविः । इदम् । जुषन्ताम् । हिरण्यगर्भ इति हिरण्य—गर्भः । समिति । अवर्तत । अग्रे । भूतस्य । जातः । पतिः । एकः । आसीत् । सः । दाधार

पृथिवीम् । द्याम् ( ३ ) । उत । इमाम् । कस्मै । देवाय । हविषा । विधेम । यः । प्राणत इति प्र-अनतः । निमिषत इति नि-मिषतः । महित्वेति महि-त्वा । एकः । इत् । राजा । जगतः । बभूव । यः । ईशे । अस्य । द्विपद इति द्वि-पदः । चतुष्पद इति चतुः-पदः । कस्मै । देवाय । हविषा । विधेम । यः । आत्मदा इत्यात्म-दाः । बलदा इति बल-दाः । यस्य । विश्वे । उपासत इत्युप-आसते । प्रशिषमिति प्र-शिषम् । यस्य । देवाः । यस्य । छाया । अमृतम् । यस्य । मृत्युः । कस्मै । देवाय । हविषा । विधेम । यस्य । इमे । हिमवन्त इति हिम-वन्तः । महित्वेति महि-त्वा । यस्य । समुद्रम् । रसया । सह ( ४ ) । आहुः । यस्य । इमाः । प्रदिश इति प्र-दिशः । यस्य । बाहू इति । कस्मै । देवाय । हविषा । विधेम । यम् । क्रन्दसी इति । अवसा । तस्तभाने इति । अभ्यैक्षेतामित्यभि-ऐक्षेताम् । मनसा । रेजमाने इति । यत्र । अधीति । सूरः । उदिताविवत्युत्-इतौ । व्येतीति वि-एति । कस्मै । देवाय । हविषा । विधेम । येन । द्यौः । उग्रा । पृथिवी । च । दृढे इति । येन । सुवः ।

स्तभितम् । येन । नाकः । यः । अन्तरिक्षे । रजसः । विमान इति वि—मानः । कस्मै । देवाय । हविषा । विधेम । आपः । ह । यत् । महतीः । विश्वम् (५)। आयन् । दक्षम् । दधानाः । जनयन्तीः । अग्निम् । ततः । देवानाम् । निरिति । अवर्तत । असुः । एकः । कस्मै । देवाय । हविषा । विधेम । यः । चित् । आपः । महिना । पर्यपश्यदिति परि—अपश्यत् । दक्षम् । दधानाः । जनयन्तीः । अग्निम् । यः । देवेषु । अधीति । देवः । एकः । आसीत् । कस्मै । देवाय । हविषा । विधेम ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ चतुर्थकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः । )

---

सप्तमेऽनुवाकेऽग्निचयनाङ्गभूते पशौ सामिधेन्योऽभिहिताः । अथाष्टमे प्रयाजयाज्या आप्रीनाम(मि)का उच्यन्ते ।

कल्पः—" ऊर्ध्वा अस्य समिधो भवन्तीति प्रयाजानामाप्रियो भवन्ति" इति ।

तत्र प्रथमामाह—

ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीꣳष्यग्नेः । द्युमत्तमा सुप्रतीकस्य सूनोः । , इति ।

प्रयाजानां सर्वेषामग्निविशेषा एव देवताः । तत्र प्रथमप्रयाजदेवतामग्निस्वरूपामयं समिच्छब्द आचष्टे । सम्यगिन्धे प्रकाशत इति व्युत्पत्तेः । बहु

पूजार्थम्। अस्याग्नेः स्वरूपविशेषभूताः समिधः समिन्नामिका देवता ऊर्ध्वा भवन्ति अस्मच्छ्रेयोर्थमुद्युक्ता भवन्तु। तद्योगाच्छोचींषि ज्वालास्वरूपाण्यूर्ध्वा भवन्तूत्तमानि भवन्तु। कीदृशानि शोचींषि, शुक्रा भास्वराणि द्युमत्तमाऽतिशयेन दीप्तिमन्ति। कीदृशस्याग्नेः, सुप्रतीकस्य सुमुखस्य सूनोः पुत्रवद्धितकारिणः॥

अथ द्वितीयामाह—

तनूनपादसुरो विश्ववेदा देवो देवेषु देवः।
पथ आऽनक्ति मध्वा घृतेन।, इति।

तनूर्न पातयति न विनाशयतीति तनूनपात्, शरीरपालक इत्यर्थः। एतन्नामकः कश्चिदग्निविशेषो मध्वा मधुरेण घृतेन पथ आनक्ति स्वर्गसाधनत्वेन[3] तन्मार्गभूतानि हवींषि घृतेनाऽऽक्तानि करोतु। कीदृशस्तनूनपात्। असून्प्राणान्राति ददातीत्यसुरः। अत एव शरीरपालक इति युक्तम्। विश्वं वेत्तीति विश्ववेदाः। देवो द्योतनात्मको मनुष्यैः पूजनीयो वा। न केवलं मनुष्येष्वेव देवोऽपि तु देवेष्वप्यधिको देवः॥

अथ तृतीयामाह—

मध्वा यज्ञं नक्षसे प्रीणानो नराशꣳसो
अग्ने। सुकृद्देवः सविता विश्ववारः।, इति।

नरैः शंसनीयो नराशंसः। एतन्नामकः कश्चिदग्निविशेषः। हेऽग्ने त्वं नराशंसो भूत्वा मध्वा मधुरेण घृतेन प्रीणानस्तृप्यन्निमं यज्ञं नक्षसे प्राप्नोषि निर्वर्तयसीत्यर्थः। कीदृशो नराशंसः। सुष्ठु करोति वैकल्यं परिहरतीति सुकृत्। देवो द्योतनात्मकः। सविता कर्मण्यस्माकं प्रेरकः। विश्वानि दुरितानि वारयतीति विश्ववारः॥

अथ चतुर्थीमाह—

अच्छायमेति शवसा घृतेनेडानो वह्निर्नमसा।
अग्निꣳ स्रुचो अध्वरेषु प्रयत्सु।, इति।

ईडान इत्यग्निविशेषस्य नामधेयम्। स्तुतिप्रियत्वादीडान इत्युच्यते। एतन्नामकोऽयं वह्निः शवसा बलेन युक्तः सन्नच्छ यज्ञं प्राप्तुमेति गच्छति। अग्निमध्वरेषु प्रयत्सु यज्ञेषु प्रवर्तमानेषु स्रुचो घृतेन जुहूनिष्ठेनाऽऽज्येन नमसा नमस्कारेण च परिचरेमेति शेषः॥

१ ख. च. तयो°। २ ख. च. °न्तूत्रतानि। ३ ख. °न तत्तन्मा°।

अथ पञ्चमीमाह—

स यक्षदस्य महिमानमग्नेः स ई मन्द्रासु
प्रयसः । वसुश्चेतिष्ठो वसुधातमश्च । , इति ।

बर्हिर्नामकः कश्चिदग्निविशेषः प्राकृते बर्हिरग्न आज्यस्य वेत्विति मन्त्रे प्राके-
द्धत्वादिह प्रसिद्धत्वाचकेन तच्छब्देन परामृश्यते । स तादृशो बर्हिर्नामकोऽग्नि-
विशेषोऽस्य सामान्यरूपस्याग्नेर्महिमानं यक्षद्यजतु पूजयतु । स *ई म
एव बर्हिर्नामकोऽग्निर्मन्द्रासु हर्षजनिकासु स्तुतिरूपासु ऋक्षु प्रयसः
प्रयासवान्, अधिकपरिचर्यायुक्त इत्यर्थः । किंचायं बर्हिर्नामकोऽग्निर्वसुः
प्राणिनां वासयिता चेतिष्ठोऽतिशयेनाभिज्ञो वसुधातमश्च यजमानार्थं द्रव्यस्या-
तिशयेन धारयिता ॥

अथ षष्ठीमाह—

द्वारो देवीरन्वस्य विश्वे व्रता ददन्ते अग्नेः ।
उरुव्यचसो धाम्ना पत्यमानाः । , इति ।

द्वार्शब्देन स्त्रीमूर्तिधरः कश्चिदग्निविशेष उच्यते । पूजार्थं बहुवचनम् ।
या देव्यो द्वार्शब्दाभिधेयाः प्रथममग्नेर्व्रतमाचरन्ति ता द्वारो देवीरनु वि
सर्वे यजमाना अस्याग्नेः संबन्धीनि व्रतानि कर्माणि ददन्ते हविः प्र
च्छन्ति । कीदृशीर्द्वारः । उरुव्यचसो विस्तीर्णगतीर्धाम्ना तेजसा पत्यमा
प्राप्यमाणास्तेजस्विनीरित्यर्थः ॥

अथ सप्तमीमाह—

ते अस्य योषणे दिव्ये न योनावुषासा-
नक्ता । इमं यज्ञमवतामध्वरं नः । , इति ।

उषासेत्युषःकालरूपा काचिदग्नेर्मूर्तिः, नक्तेति च रात्रिरूपा काचि
मूर्तिः । उषासा च नक्ता चोषासानक्ता । एतन्नामिके ये अस्याग्नेर्मूर्ती ते
स्मदीयमिमं यज्ञं योनावस्मिन्स्थानेऽध्वरं हिंसारहितं यथा भवति तथा
रक्षताम् । कीदृश्यौ ते, योषणे परस्परमिश्रिते । तत्र दृष्टान्तः—दिव्ये न
द्युलोकस्थे मूर्ती भासमाने भवत एवमेते मूर्ती ॥

अथाष्टमीमाह—

---

* मन्त्रेऽनुस्वारलोपश्छान्दसः ।

---

१ ख. च. म दिव्ये इव, य° ।

( आप्रीनामकप्रयाजयाज्याभिधानम् )

दैव्या होताराव़ूर्ध्वमध्वरं नोऽग्नेर्जिह्वामभि गृणीतम्। कृणुतं नः स्विष्टिम्।, इति।

होतृशब्दाभिधेयौ द्वावग्निविशेषौ। होतृत्वं च द्विविधं दैव्यं मानुषं च। तत्रैतौ होतारौ दैव्यौ। हे दैव्या होतारावग्नेर्जिह्वां ज्वालामभिलक्ष्य प्रवृत्तमूर्ध्वमत्युच्छ्रितं नोऽध्वरमस्मदीयमिमं यज्ञं गृणीतं प्रख्यापयतम्। किंच नोऽस्मदर्थं स्विष्टिं कृणुतं वैगुण्यं परिहृत्यैतामिष्टिं शोभनां कुरुतम्॥

अथ नवमीमाह—

तिस्रो देवीर्बर्हिरेदꣳ सदन्त्विडा सरस्वती भारती। मही गृणाना।, इति।

इडा सरस्वती भारतीत्यादिशब्दवाच्यास्तिस्रो देव्योऽग्निमूर्तयो याः सन्ति ता इदं बर्हिरिमं यज्ञमासदन्तु प्राप्नुवन्तु। तासां प्रत्येकं विशेषणमाह—मही महती गृणाना यज्ञं प्रख्यापयन्ती॥

अथ दशमीमाह—

तन्नस्तुरीपमद्भुतं पुरुक्षु त्वष्टा सुवीरम्। रायस्पोषं वि ष्यतु नाभिमस्मे।, इति।

त्वष्टेति कश्चिदग्निविशेषः। सोऽयमस्मे अस्मासु तदैश्वर्यं विष्यतु विशेषेणावसितं करोतु संपूर्णं करोत्वित्यर्थः। कीदृशमैश्वर्यं, नोऽस्मदर्थं तुरीपं तूर्णमेव प्राप्यमाणम्। अद्भुतं गवाश्वादिबाहुल्येनाऽऽश्चर्यरूपं, पुरुक्षु पुरुभिर्बहुभिर्मनुष्यैः क्षूयते शब्द्यते प्रशस्यत इति पुरुक्षु [तादृशम्]। शोभना वीराः पुत्रा यस्मिंस्तत्सुवीरं, रायो धनस्य पोषः पुष्टिर्यस्मिंस्तद्रायस्पोषं, नाभिं रथचक्रगतानामराणां नाभिरिव सर्वेषां बन्धूनामाश्रयभूतं [तादृशम्]॥

अथैकादशीमाह—

वनस्पतेऽव सृजा रराणस्त्मना देवेषु। अग्निर्हव्यꣳ शमिता सूदयाति।, इति।

वनस्पतिनामकः कश्चिदग्निविशेषः। हे वनस्पते त्वं रराणो दानशीलः सत्वरमाणो वा देवेष्वस्माभिर्यष्टव्येषु त्मनाऽवसृजास्मद्दत्तं हविः स्वयमेव स्थापय। अस्माभिः प्रार्थितोऽयमग्निः शमिता दुरितोपशमस्य कर्ता सन्हव्यं सूदयाति अस्मदीयं हविर्देवेषु सूदयतु॥

---

१ ख. °भिमिव।

अथ द्वादशीमाह—

अग्ने स्वाहा कृणुहि जातवेद इन्द्राय हव्यम्।
विश्वे देवा हविरिदं जुषन्ताम् ।, इति।

स्वाहाकाराभिमानी कश्चिदग्निविशेषः। तादृश हे जातवेदोऽग्न इन्द्रार्थमिदं हव्यं स्वाहा कृणुहि स्वाहुतं कुरु । विश्वे देवाः सर्वेऽपि देवास्तदा तदा मया दीयमानमिदं हविर्जुषन्ताम् । यद्यप्येकादशैव प्रयाजास्तथाऽपि द्वितीयतृतीययोर्मन्त्रयोः पुरुषभेदेन व्यवस्थितत्वान्मन्त्राणां द्वादशसंख्या न विरुध्यते। सा च व्यवस्था सूत्रकारेण दर्शिता—" नराशंसो द्वितीयः प्रयाजो वसिष्ठशुनकानां तनूनपादितरेषां गोत्राणाम् " इति ॥

कल्पः—" हिरण्यगर्भः समवर्तताग्र इति स्रुच्यमाघारयति " इति।

पाठस्तु—

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ।, इति।

हिरण्ये ब्रह्माण्डरूपे गर्भरूपेणावस्थितः प्रजापतिर्हिरण्यगर्भः । स भूतस्य प्राणिजातस्याग्रे समवर्तत प्राणिजातोत्पत्तेः पुरा स्वयं शरीरधारी बभूव । स च जात उत्पन्नमात्र एक एवोत्पत्स्यमानस्य सर्वस्य जगतः पतिरासीत्। स एव पृथिवीं द्यां विस्तीर्णां दिवं दाधार धृतवान् । उतापि चेमां भूमिं दाधार। तादृशाय कस्मै प्रजापतये देवायाऽऽघाररूपेण हविषा विधेम परिचरेम ॥

कल्पः—" यः प्राणतो य आत्मदा इति प्राजापत्यस्य " इति।

यः पशुः प्राजापत्यस्तस्यैते याज्यानुवाक्ये इत्यर्थः । तत्र वपायां द्वे ऋचौ पुरोडाशे द्वे ऋचौ हविषि द्वे ऋचाविति षडृचो याज्यानुवाक्याः।

तत्र प्रथमामाह—

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ।, इति।

यः प्रजापतिरेक इदेक एव प्राणतः श्वासयुक्तस्य निमिषतश्चक्षुर्निमेषयुक्त

---

१ क. घ. ङ. गर्भेणा°।

( आप्रीनामकप्रयाजयाज्याभिधानम् )

च सर्वस्य जगतो महित्वा स्वमहिम्ना राजा बभूव । अत एव यः प्रजापतिरस्य द्विपदो मनुष्यादेश्चतुष्पदो गवादेश्चेशे नियमनाय समर्थो भवति । तादृशाय कस्मै देवाय हविषा विधेम ॥

अथ द्वितीयामाह—

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ।, इति ।

यः प्रजापतिरात्मदाः शरीरेषु जीवरूपेणाऽऽत्मप्रदो बलदाः सामर्थ्यप्रदश्च, यस्य प्रजापतेः प्रशिषमाज्ञां विश्वे सर्वे मनुष्या उपासते नातिवर्तन्ते । किं च यस्य प्रशिषं देवा अप्युपासते । अमृतममरणं मोक्षरूपं यस्य च्छाया यस्य प्रजापतेश्छायावत्स्वाधीनं, मृत्युः प्राणिनां मरणमपि यस्य च्छायेव स्वाधीनस्तादृशाय कस्मै देवाय हविषा विधेम ॥

अथ तृतीयामाह—

यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया सहाऽऽहुः । यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ।, इति ।

इमे हिमवन्तो हिमवत्प्रमुखाः पर्वता यस्य महित्वा माहिम्ना वर्तन्ते । रसया भूम्या सहावस्थितं समुद्रं यस्य स्वाधीनमाहुः । इमा दृश्यमानाः प्रदिशः प्राच्यादिदिशो यस्याधीना आहुः । यस्य प्रजापतेर्बाहू धर्माधर्माविति शेषः । तादृशाय कस्मा इत्यादि ॥

अथ चतुर्थीमाह—

यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने । यत्राधि सूर उदितौ व्येति कस्मै देवाय हविषा विधेम ।, इति ।

प्रजापतेः क्रन्दनाद्रोदनादुत्पन्ने द्यावापृथिव्यौ क्रन्दसी । अत एवान्यत्राऽऽम्नातम्—" यदरोदीत्तदनयो रोदस्त्वम् " इति । ते च द्यावापृथिव्याववसा रक्षणेन निमित्तेन यं प्रजापतिं मनसाऽभ्यैक्षेतामभित ईक्षणं कृतवत्यौ, यमावां रक्षत्वित्याशासनं कृतवत्यावित्यर्थः । कीदृशौ द्यावापृथिव्यौ,

१ ख. च. ष्पदः पश्वादे । २ ख. च. ते द्या । ३ ख. च. कीदृश्यौ ।

तस्तभाने देवानां मनुष्याणां चावस्थानाय स्तम्भिते, रेजमाने दीप्यमाने सूरः सूर्यो यत्राधि यस्मिन्प्रजापतावधिश्रित्योदितौ व्येति उदयविषये विविधं गच्छति, तादृशाय कस्मै देवाय हविषा विधेम ॥

अथ पञ्चमीमाह—

येन द्यौरुग्रा पृथिवी च दृढे येन सुवः स्तभितं येन नाकः । यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ।, इति ।

उग्रा पुण्यरहितैः प्राणिभिर्दुष्प्रापा द्यौः पृथिवी चेत्येते उभे येन प्रजापतिना दृढे कृते । सुवः स्वर्गसुखं येन प्रजापतिना स्तभितं पुण्यकृत्सु व्यवस्थापितम् नाको दुःखरहितो मोक्षो येन प्रजापतिना ज्ञानिषु स्तभितः । यश्च प्रजापति-रन्तरिक्षे लोके रजसो राजसस्य यक्षगन्धर्वादेर्विमानो विमाता निर्माता तादृशाय कस्मा इत्यादि ॥

अथ षष्ठीमाह—

आपो ह यन्महतीर्विश्वमायन्दक्षं दधाना जनयन्तीरग्निम् । ततो देवानां निरवर्ततासुरेकः कस्मै देवाय हविषा विधेम ।, इति ।

यद्यस्य प्रजापतेरनुग्रहान्महतीर्महत्य आपो विश्वमायन्विश्वाकारं प्राप्ताः अत एव स्मर्यते—

" अप एव ससर्जाऽऽदौ तासु वीर्यमवासृजत् ।
तदण्डमभवद्धैमम् " इति ।

कीदृश्य आपः, दक्षमग्निचयने कुशलं यजमानं दधाना धारयन्त्य उत्पादयन्त्यः । तथा चेतव्यमग्निं जनयन्तीरुत्पादयन्त्यः । ततस्तस्मात्कारणाद्देवानां सर्वेषामसुर्जीवनहेतुः प्राण एको निरवर्तत निष्पन्नः । तादृशाय कस्मा इत्यादि । सेयमृक्षष्ठी हविषो याज्या ॥

तत्रैवान्यां विकल्पितां याज्यामाह—

यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीरग्निम् । यो देवेष्वधि देव एक

---

१ ख. न. 'धिकृत्यो' । २ घ. ङ. 'वाक्षिपत' ।

आसीत्कस्मै देवाय हविषा विधेम ॥, इति ॥

आप इति द्वितीयाबहुवचनम् । यश्चिद्य एव प्रजापतिः पूर्वोक्तरीत्या विश्वाकारेण परिणता महतीरपो महिना स्वमहिम्ना पर्यपश्यदेपां तथाविधसामर्थ्याय कटाक्षेण वीक्षितवान् । कीदृशीरपः । दक्षं दधाना अग्निं जनयन्तीः । पूर्ववद्व्याख्येयम् । यः प्रजापतिर्देवेषु सर्वेष्वधिको देव आसीत्तादृशाय कस्मा इत्यादि ॥

एतस्मिन्नूर्ध्वा अस्येत्यादावष्टमानुवाके प्रयाजयाज्या आप्रीनामिका आधारमन्त्रो याज्यानुवाक्याश्चोक्ताः । पूर्वस्मिंस्तु सप्तमेऽनुवाके सामिधेन्योऽभिहिताः । तासामेतासामुभयविधानामृचां पशुप्रयोगान्तःपातित्वेन पशुविधिमन्तरेण व्याख्यातुमशक्यत्वात्पशुविधिरादौ वक्तव्यः । तेभ्योऽपि पशुभ्यः पुरुषशीर्षस्य पूर्वं संपादनीयत्वादादौ तत्संपादनं विधत्ते—

"एकविꣳशत्या माषैः पुरुषशीर्षमच्छैत्यमेध्या वै माषा अमेध्यं पुरुषशीर्षममेध्यैरेवास्यामेध्यं निरवदाय मेध्यं कृत्वाऽऽहरति" [ सं० का० ५ प्र० १ अ० ८ ] इति ।

एकविंशतिसंख्याकानि माषबीजानि स्वीकृत्य तैर्युक्तः पुरुषशीर्षं प्राप्तुं गच्छेत् । तथाच सूत्रकारेणोक्तम्—"सप्तैकविंशतिं वा माषानादाय पुरुषशिरोऽच्छैति वैश्यस्य राजन्यस्य चेषुहतस्याशनिहतस्य वा माषानुपन्युप्यायं योऽसि यस्य त इदं शिर इति पुरुषशिरः प्रच्छिद्यैतेन[२] त्वमत्र शीर्षण्वानेधीति सप्तधा वितृण्णां वल्मीकवपां शिरसः स्थाने प्रति निदधाति" इति । माषास्तावदपूतत्वाद्यज्ञानर्हाः । पुरुषशीर्षं चास्पृश्यत्वाद्यज्ञानर्हम् । ततो यथा रजका मलरूपेणोषेण वस्त्रमलमपनीय शोधयन्ति, एवमत्राप्यमेध्यैर्माषैः शिरोनिष्ठममेध्यभागं निःसार्य तच्छिरो यज्ञयोग्यं कृत्वा समानयति ॥

माषसंख्यां प्रशंसति—

"एकविꣳशतिर्भवन्त्येकविꣳशो वै पुरुषः पुरुषस्याऽऽप्त्यै" [ सं० का० ५ प्र० १ अ० ८ ] इति ।

एकविंशतिसंख्यापूरकत्वं पुरुषस्यान्यत्राऽऽम्नातम्—"दश हस्त्या अङ्गुल्यो दश पद्या आत्मैकविꣳशः" इति । अतोऽत्र[३] माषसंख्या पुरुषप्राप्त्यै पद्यते ॥

शिरश्छेदादूर्ध्वं शिरोरहिते कबन्धे वल्मीकवपास्थापनं विधत्ते—

१ क. घ. ङ. 'दर्यात्तथा' । २ क. घ. ङ. 'तिद' । ३ ख. च. अत्रापि ।

"व्यृद्धं वा एतत्प्राणैरमेध्यं यत्पुरुषशीर्ष॰ सप्तधा वितृण्णां वल्मीकवपां प्रति नि दधाति सप्त वै शीर्षण्याः प्राणाः प्राणैरेवैनत्समर्धयति मेध्यत्वाय" [ सं० का० ५ प्र० १ अ० ८ ] इति ।

यच्छिन्नं शिरस्तदेतत्प्राणैर्वियुक्तत्वादमेध्यम् । अतस्तदपनीयान्तस्थितसप्तच्छिद्रोपेतां वल्मीकस्य कांचिद्वपाकारां मृत्संहतिं शिरसः स्थाने प्रतिनिदधाति । जीवतः पुरुषस्य शिरोगतच्छिद्रेषु सप्तसु संचरन्तः प्राणा अपि सप्तैव । अतः सप्तच्छिद्रोपेताया वपायास्तत्र स्थापनेनैतच्छिरोऽपि प्राणैः समृद्धं भवत्येव । तच्च प्राणोपेतत्वं मेध्यत्वाय संपद्यते ॥

तत्र सूत्रकारेण योऽस्य कौष्ठ्य जगत इति तिस्र ऋचः पठित्वाऽन्ते यदुक्तं "तिसृभिर्यमगाथाभिः परिगायति" इति, तदेतद्विधत्ते—

"यावन्तो वै मृत्युबन्धवस्तेषां यम आधिपत्यं परीयाय यमगाथाभिः परि गायति यमादेवैनद्वृङ्क्ते" [ सं० का० ५ प्र० १ अ० ८ ] इति ।

हिरण्यकक्ष्यान्सुधुरानित्यादिमन्त्रेणाऽऽम्नाता अन्यत्रापि कालान्तकादिशब्दैराम्नाता मृत्युबन्धवो यावन्तः सन्ति तेषां सर्वेषामाधिपत्यं यमः प्राप्तवान् । यमो गीयते यास्वृक्षु ता यमगाथाः । तासां पाठेन यमसकाशादेनत्पुरुषशिरो वृङ्क्ते वर्जितं करोति । ताश्च यमगाथा योऽस्य कौष्ठ्येत्याद्या आरण्यकाण्डे पितृमेधप्रपाठके समाम्नाताः ॥

अत्रापेक्षितानां यमगाथानां संख्यां विधत्ते—

"तिसृभिः परि गायति त्रय इमे लोका एभ्य एवैनल्लोकेभ्यो वृङ्क्ते" [ सं० का० ५ प्र० १ अ० ८ ] इति ।

एनच्छिरो लोकेभ्यः पृथक्कृत्य स्वाधीनं करोतीत्यर्थः ॥

प्रसङ्गात्पुरुषार्थं कंचिन्निषेधं दर्शयति—

"तस्माद्गायते न देयं गाथा हि तद्वृङ्क्ते" [सं० का० ५प्र० १ अ० ८] इति ।

यस्तु ब्राह्मणो याजनाध्यापनप्रतिग्रहान्परित्यज्य गानेनैव जीविकां संपादयति तादृशाय ब्राह्मणाय शास्त्रीयं देयं किमपि न दद्यात् । हि यस्माद्गाथा गानविद्यैव तद्द्रव्यममेध्यं कृत्वा वृङ्क्ते देवपितृकार्येभ्यो वर्जयति तस्मात्तादृशाय न देयम् ॥

यदुक्तं सूत्रकारेण—"अग्निभ्यः कामाय पशूनालभते मुष्करान्प्राजापत्यमजं तूपरमुपाकृत्याश्वमृषभवृष्णिबस्तान्," इति, तदेतद्विधत्ते—

१ ख. च. यदुक्तं । २ ख. च. °हादीन्प° । ३ ख. च. °श्वर्षभ° । घ. ङ. °श्ववृ° ।

( आप्रीनामकप्रयाजयाज्याभिधानम् )

" अग्निभ्यः पशूना लभते कामा वा अग्नयः कामानेवाव रुन्धे " [ सं० का० ५ प्र० १ अ० ८ ] इति।

काम्यन्त इति कामाः पुत्रपश्वादयः, तद्धेतवोऽग्नयः, तस्मात्कामान्प्राप्नोत्येव॥

एतेषु पशुषु कंचिद्विशेषं विधत्ते—

" यत्पशूना‌ऽऽलभेतानवरुद्धा अस्य पशवः स्युर्यत्पर्यग्निकृतानुत्सृजेद्यज्ञ-वेशसं कुर्याद्यत्सं स्थापयेद्यातयामानि शीर्षाणि स्युर्यत्पशूना लभते तेनैव पशूनव रुन्धे यत्पर्यग्निकृतानुत्सृजति शीर्ष्णामयातयामत्वाय प्राजापत्येन सं स्थापयति यज्ञो वै प्रजापतिर्यज्ञ एव यज्ञं प्रति ष्ठापयति " [ सं० का० ५ प्र० १ अ० ८ ] इति।

अत्रेदं चिन्तनीयम्—किमाग्नेयाः पशव एव नाऽऽलभ्याः, किं वा तान्पशूनुपाकृत्य पर्यग्निकरणादूर्ध्वमुत्सृजेत्, आहोस्वित्समाप्तिपर्यन्तमनुतिष्ठेदिति। नाऽऽद्यः पशुप्राप्त्यभावप्रसङ्गात्। न द्वितीयः, मध्ये परित्यागेन यज्ञभ्रंशप्रसङ्गात्। न तृतीयः। अत्रैवाश्वऋषभवृष्णिवस्तशिरसां गतसारत्वेन भविष्यन्त्यां चित्यामनुपधेयत्वप्रसङ्गात्। एतद्दोषत्रयपरिहारायेत्थं कर्तव्यम्—आलम्भेनोत्सर्गेण च प्रथमतृतीयदोषौ न भविष्यतः। प्राजापत्येन तूपरेण समापनाद्यज्ञभ्रंशरूपो मध्यमदोषोऽपि न भविष्यति। यज्ञोत्पादकत्वात्प्रजापतिर्यज्ञ एव। ततो यज्ञरूपे प्रजापतावेव क्रियमाणं यज्ञं प्रतिष्ठापयति समापयति॥

इत्थमुपोद्घातत्वेन पशवो विहिताः। अथानुवाकद्वयोक्ता मन्त्रा व्याख्यातव्याः। यद्यपि सामिधेन्यः पूर्वानुवाकोक्ताः पूर्वमेवानुष्ठेयाश्च तथाऽप्यभ्यर्हितं पूर्वमिति वैयाकरणोक्तन्यायेन प्रयाजयाज्यानां प्रीतिहेतूनामभ्यर्हितत्वाद्वा सूचीकटाहन्यायेनाल्पवक्तव्यत्वाद्वा ता एवाऽऽप्रीः प्रथमं विधत्ते—

"प्रजापतिः प्रजा असृजत स रिरिचानोऽमन्यत स एता आप्रीरपश्यत्ताभिर्वै स मुखत आत्मानमाऽप्रीणीत यदेता आप्रियो भवन्ति यज्ञो वै प्रजापतिर्यज्ञमेवैताभिर्मुखत आप्रीणाति" [ सं० का० ५ प्र० १ अ० ८ ] इति।

प्रजासृष्टौ सामर्थ्यस्योपक्षीणत्वाद्रिक्तोऽहमिति स प्रजापतिरमन्यत। ततः सामर्थ्यपूरिका एता आप्रीर्मनसा विचार्य निश्चितवान्। ततस्ताभिरेवाऽऽप्रीभिः स प्रजापतिर्यज्ञप्रारम्भ एव स्वात्मानं प्रीतमकरोत्। तस्मात्प्रयाजानुष्ठानार्थ एता आप्रीनामिका ऋचो भवेयुः। आत्मानमाप्रीणात्येताभिरित्यू-

---

१ ख. च. 'श्वर्षभ°'। २ ख. च. 'वस्तानां ग°'। ३ ख. च. भाविन्यां। ४ घ. ङ. °ष्यत्वा घ°'। ५ ख. च. °ण पशुना स°'। ६ क. घ. ङ. °ज्ञं स°'। ७ क. घ. ङ. °योक्तम°'। ८ ख. च. °वात्सूची°'। ९ ख. च. तथा प्रया°। १० ख. च. °र्थमेता।

ध्वा अस्येत्याद्या ऋच आप्रियः। प्रजापतिजन्यत्वाद्यज्ञः प्रजापतिरेव। अतः प्रजापतिवदेतमेव यज्ञमेताभिर्ऋग्भिर्मुखत एव प्रीतं करोति ॥

तासामाप्रीणां बहुप्रकारच्छन्दस्त्वं पाठप्राप्तं प्रशंसति—

"अपरिमितछन्दसो भवन्त्यपरिमितः प्रजापतिः प्रजापतेराप्त्यै" [सं० का० ५ प्र० १ अ० ८] इति।

बहुप्रकारच्छन्दस्त्वं चैवं द्रष्टव्यम्—सर्वाश्चैतास्त्रिपदाः। आसामाद्या अन्त्याश्च पादा एकादशाक्षराः। मध्यमः पञ्चाक्षरः षडक्षरः सप्ताक्षरोऽष्टाक्षरश्च पादः। ता एताः पिपीलिकामध्यास्त्रिपदा उष्णिहः। दैव्या होताराव्रूर्ध्वे तिस्रो देवीरिति च गायत्र्याविति ॥

एषां छन्दसां मध्यमपादेषु[1] यदेतत्तारतम्यं तादिदं प्रशंसति—

" ऊनातिरिक्ता मिथुनाः प्रजात्यै " [सं० का० ५ प्र० १ अ० ८] इति।

पञ्चाक्षरत्वमारभ्याष्टाक्षरत्वपर्यन्तेपूत्तरोत्तरापेक्षया पूर्वपूर्वस्योनत्वं पूर्वपूर्वापेक्षया तूत्तरोत्तरस्यातिरिक्तत्वम्। एवं कोटिद्वयात्मकत्वान्मिथुनत्वं, तच्च प्रजननाय संपद्यते ॥

आद्यन्तपादापेक्षया मध्यमपादस्य यदल्पत्वं तदिदं प्रशंसति—

" लोमशं वै नामैतच्छन्दः प्रजापतेः पशवो लोमशाः पशूनेवाव रुन्धे " [सं० का० ५ प्र० १ अ० ८] इति।

लोमसदृशं सूक्ष्मं मध्यमस्य[3] च्छन्दसस्तादिदं लोमशं, यथा हस्तपादतदङ्गुल्याद्यपेक्षया लोम्नः सूक्ष्मत्वम्, एवमाद्यन्तपादापेक्षया मध्यमपादस्य सूक्ष्मत्वमित्यर्थः। प्रजापतेः सृष्टा एते पशवस्ते सर्वे लोमशाः। अतोऽस्य च्छन्दसो लोमशत्वसाम्येन पशुप्राप्तिर्भवति ॥

एतास्वाप्रीषु च्छन्दसां नानाविधत्वं प्रशंसति—

" सर्वाणि वा एता रूपाणि सर्वाणि रूपाण्यग्नौ चित्ये क्रियन्ते तस्मा[दे]ता अग्नेश्चित्यस्य भवन्ति " [सं० का० ५ प्र० १ अ० ८] इति।

ऊर्ध्वा अस्येत्याद्या या आप्रियस्ताः सर्वाणि रूपाणि न्यूनातिरिक्तत्व[4] विविधरूपयुक्ता भासन्ते। यश्च वक्ष्यमाणप्रकारेण चेतव्योऽग्निस्तस्मिन्न[पि] सर्वाणि रूपाणि क्रियन्ते। पक्षित्वनिष्पत्तये पक्षपुच्छादीनि बहूनि रू[पाणि] कामनाभेदेन श्येनकङ्कादिरूपाणि च। यस्मादाप्रीणां चित्याग्नेश्चास्ति सा[म्यं] तस्मादेता अग्नेश्चित्यस्याऽऽप्रियो भवितुं योग्याः ॥

तदेवमष्टमानुवाकोक्ता आप्रीर्व्याख्याय बहुवक्तव्यतया पूर्वमुपेक्षिताः

१ ख. च. 'मपदे'। २ क. घ. ङ. 'रूप'। ३ ख. च. मध्यं यस्य। ४ ख. च. ये।

( आप्रीनामकप्रयाजयाज्याभिधानम् )

मानुवाकोक्ताः सामिधेन्यः प्रा¹स्तावसरतया व्याख्यायन्ते । तत्रैतासां सामिधेनीनां प्राकृतीभिः सामिधेनीभिः समुच्चयमभ्युपेत्य संख्याविशिष्टाः सामिधेनीर्विधत्ते—

" एकविꣳशतिꣳ सामिधेनीरन्वाह रुग्वा एकविꣳशो रुचमेव गच्छत्यथो प्रतिष्ठामेव प्रतिष्ठा ह्येकविꣳशः " [ सं० का० ५ प्र० १ अ० ८ ] इति ।

सूत्रकारेण—"एकादश प्राकृतीः समास्त्वाऽग्न इति दशाऽऽग्निकीः " इति ह्युक्तम् । सप्तमकाण्डे—"य एवं विद्वाꣳस एकविꣳशतिरात्रमासते रोचन्त एव" इत्येकविंशतिसंख्याया दीप्तिहेतुत्वश्रावणादत्रत्यया संख्यया बुद्धिस्थ एकविंशस्तोमो दीप्तिरूपः । तथा प्रकृतौ काम्यसामिधेनीप्रस्ताव एकविꣳशस्तोमानां प्रतिष्ठेत्युक्तत्वात्प्रतिष्ठारूपश्च । अतस्तया संख्यया रुचं प्रतिष्ठां च, प्राप्नोति ॥

तत्रैव विकल्पितं पक्षान्तरं विधत्ते—

" चतुर्विꣳशतिमन्वाह चतुर्विꣳशतिरर्धमासाः संवत्सरः संवत्सरोऽग्निर्वैश्वानरः साक्षादेव वैश्वानरमव रुन्धे " [सं० का० ५ प्र० १ अ० ८] इति ।

तत्र शाखान्तरोक्ता उपेमसृक्षि वाजयुरित्याद्यास्तिस्रो धाय्याः प्रक्षिप्य चतुर्विंशतिसंख्या पूरणीया । विश्वेषां नराणां हितो वैश्वानरः । दाहपाकादिकारित्वाद्धितत्वम् । तादृशोऽग्निः संवत्सररूपः । ' संवत्सर मुख्यं भूत्वा ' इत्यग्नेः संवत्सरसंबन्धस्य वक्ष्यमाणत्वात् । ततश्चतुर्विंशतिसंख्याया अर्धमाससंवत्सरद्वारेण मुख्यमेव वैश्वानरं प्राप्नोति ॥

प्रकृतौ यदुक्तं ' त्रिः प्रथमामन्वाह त्रिरुत्तमाम् ' इति, तदेतदपवदितुं विधत्ते—

" पराचीरन्वाह पराङिव हि सुवर्गो लोकः " [ सं० का० ५ प्र० १ अ० ८ ] इति ।

पराचीरनावृत्ताः । स्वर्गलोकोऽपि पराङेव न कदाचिदावर्तते । तदेतत्सर्वं सूत्रकारेण संगृहीतम्—" एकविंशतिं चतुर्विंशतिं वा पराचीः सामिधेनीरन्वाह " इति ॥

तत्राऽऽग्निकीषु प्रथमाया ऋचः प्रथमपादे संवत्सरवाचिनः समाशब्दस्य ऋतुशब्दस्य [ च ] तात्पर्यं दर्शयति—

" समास्त्वाऽग्न ऋतवो वर्धयन्त्वित्याह समाभिरेवाग्निं वर्धयत्यृतुभिः संवत्सरम् " [ सं० का० ५ प्र० १ अ० ८ ] इति ।

---

१ च. च. °स्ता दशाऽऽग्निक्यो व्या° । २ ख. च. °भिः सह स° ।

ऋतवः प्रवर्तमानाः संवत्सरं पूरयन्ति । संवत्सरश्चोखाग्निधारणेनाग्निं वर्धयति ॥

एवमृतूनां संवत्सरस्य चाभिवृद्धिसाधनत्वं प्रतिपाद्य चतुर्थपादे 'आ भाहि' इत्यस्य तात्पर्यं दर्शयति—

" विश्वा आ भाहि प्रदिशः पृथिव्या·इत्याह तस्मादग्निः सर्वा दिशोऽनु वि भाति " [ सं० का० ५ प्र० १ अ० ८ ] इति ॥

नवम्या ऋचस्तृतीयपादे प्रत्यौहतामितिपदस्य तात्पर्यं दर्शयति—

" प्रत्यौहतामश्विना मृत्युमस्मादित्याह··मृत्युमेवास्मादप नुदति " [ सं० का० ५ प्र० १ अ० ८ ] इति ॥

दशम्या ऋचः प्रथमपादे तमःशब्दार्थं दर्शयति—

" उद्वयं तमसस्परीत्याह पाप्मा वै तमः पाप्मानमेवास्मादप हन्ति" [ सं० का० ५ प्र० १ अ० ८ ] इति ॥

चतुर्थपादे ज्योतिःशब्दार्थं दर्शयति—

" अगन्म ज्योतिरुत्तममित्याहासौ वा आदित्यो ज्योतिरुत्तममादित्यस्यैव सायुज्यं गच्छति " [ सं० का० ५ प्र० १ अ० ८ ] इति ।

सायुज्यं सहभावम् ॥

उद्वयं तमसस्परीत्यस्या ऋचः पाठप्राप्तं चरमभावित्वं प्रशंसति—

" न संवत्सरस्तिष्ठति नास्य श्रीस्तिष्ठति यस्यैताः क्रियन्ते ज्योतिष्मतीमुत्तमामन्वाह ज्योतिरेवास्मा उपरिष्टाद्दधाति सुवर्गस्य लोकस्यानुख्यात्यै" [ सं० का० ५ प्र० १ अ० ८ ] इति ।

यस्य यजमानस्यैताः समास्त्वाऽग्न इत्याद्याः सामिधेन्यः क्रियन्ते त[स्य] स्वर्गाधिगत्यर्थमुख्याग्निधारणहेतुः संवत्सरो वा, एतदग्निसाधनसमृद्ध[ा] श्रीर्वा न तिष्ठति न पर्याप्नोति, ज्योतिर्विरहाचाभ्यां स्वर्गो नाधिग[म्यत] इत्यर्थः । अथ स्वर्गाधिगतिक्षमां ज्योतिष्मतीमृचमुत्तमां ब्रूयात् । पद[े] ज्योतिरित्येवं ज्योतिःशब्दस्य विद्यमानत्वादुद्वयं तमसस्परीत्येषा ज्[योति]ष्मती । अस्मै यजमानार्थं ज्योतिष उपरि धारणादूर्ध्वदेशवर्ती स्वर्गलो[कोऽ]नुख्यातो भवति ॥

अत्र विनियोगसंग्रहः—

ऊर्ध्वाः प्रयाजयाज्याः स्युर्द्वादशाऽऽप्रीतिनामिकाः ।
हिर स्रुवाघारहोमो यः प्राणेति द्वयं द्वयम् ॥ १ ॥

याज्यानुवाक्ये हि वपापुरोडाशहविःषु ताः।
यश्चिद्धिकल्पितो मन्त्र इति विंशतिरीरिताः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके ऽष्टमोऽनुवाकः ॥ ८ ॥

---

(अथ चतुर्थाष्टके प्रथमप्रपाठके नवमोऽनुवाकः।)

---

आकूतिमग्निं प्रयुजꣳ स्वाहा मनो मेधामग्निं प्रयुजꣳ स्वाहा चित्तं विज्ञातमग्निं प्रयुजꣳ स्वाहा वाचो विधृतिमग्निं प्रयुजꣳ स्वाहा प्रजापतये मनवे स्वाहाऽग्नये वैश्वानराय स्वाहा विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा मा सु भित्था मा सु रिषो दृꣳहस्व वीडयस्व सु। अम्ब धृष्णु वीरयस्व (१) अग्निश्चेदं करिष्यथः। दृꣳहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधया कृताऽसि। जुष्टं देवानामिदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन्। मित्रैतामुखां तपैषा मा भेदि। एतां ते परि ददाम्यभित्त्यै। द्रन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः। सहसस्पुत्रो अद्भुतः। परस्या अधि संवतोऽवराꣳ अभ्या (२) तर। यत्राहमस्मि

ताः अव । परमस्याः परावतो रोहिदश्व इहाऽऽगहि । पुरीष्यः पुरुप्रियोऽग्ने त्वं तरा मृधः । सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् । मैनामर्चिषा मा तपसाऽभि शूशुचोऽन्तरस्याः शुक्रज्योतिर्वि भाहि । अन्तरग्ने रुचा त्वमुखायै सदने स्वे । तस्यास्त्वः हरसा तपञ्जातवेदः शिवो भव । शिवो भूत्वा मह्यमग्नेऽथो सीद शिवस्त्वम् । शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहाऽसदः (३) ॥

( वीरयस्वाऽऽतपन्विंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ चतुर्थाष्टके प्रथमप्रपाठके नवमोऽनुवाकः । )

---

आकूतिमित्या—कूतिम् । अग्निम् । प्रयुजमिति प्र—युजम् । स्वाहा । मनः । मेधाम् । अग्निम् । प्रयुजमिति प्र—युजम् । स्वाहा । चित्तम् । विज्ञातमिति वि—ज्ञातम् । अग्निम् । प्रयुजमिति प्र—युजम् । स्वाहा । वाचः । विधृतिमिति वि—धृतिम् । अग्निम् । प्रयुजमिति प्र—युजम् । स्वाहा । प्रजापतय इति प्रजा—पतये ।

( अग्न्युत्पादनाभिधानम् )

मनवे। स्वाहा। अग्नये। वैश्वानराय। स्वाहा।
विश्वे। देवस्य। नेतुः। मर्तः। वृणीत। सख्यम्।
विश्वे। रायः। इषुध्यसि। द्युम्नम्। वृणीत।
पुष्यसे। स्वाहा। मा। स्विति। भित्थाः। मा।
स्विति। रिषः। दृꣳहस्व। वीडयस्व। सु। अम्ब।
धृष्णु। वीरयस्व (१)। अग्निः। च। इदम्।
करिष्यथः। दृꣳहस्व। देवि। पृथिवि। स्वस्तये।
आसुरी। माया। स्वधयेति स्व—धया। कृता।
असि। जुष्टम्। देवानाम्। इदम्। अस्तु। हव्यम्।
अरिष्टा। त्वम्। उदिति। इहि। यज्ञे। अस्मिन्।
मित्रे। एताम्। उखाम्। तप। एषा। मा।
भेदि। एताम्। ते। परीति। ददामि। अभित्त्यै। द्र्वन्न
इति द्रु—अन्नः। सर्पिरासुतिरिति सर्पिः—आसुतिः।
प्रत्नः। होता। वरेण्यः। सहसः। पुत्रः। अद्भुतः।
परस्याः। अधीति। संवत इति सं—वतः। अव-
रान्। अभि। एति (२)। तर। यत्र। अहम्।
अस्मि। तान्। अव। परमस्याः। परावत इति
परा—वतः। रोहिदश्व इति रोहित्—अश्वः। इह।
एति। गहि। पुरीष्यः। पुरुप्रिय इति पुरु—प्रियः।
अग्ने। त्वम्। तर। मृधः। सीद। त्वम्। मातुः।

अस्याः । उपस्थ इत्युप—स्थे । विश्वानि । अग्ने । वयुनानि । विद्वान् । मा । एनाम् । अर्चिषा । मा । तपसा । अभीति । शूशुचः । अन्तः । अस्याम् । शुक्रज्योतिरिति शुक्र—ज्योतिः । वीति । भाहि । अन्तः । अग्ने । रुचा । त्वम् । उखायै । सदने । स्वे । तस्याः । त्वम् । हरसा । तपन् । जातवेद इति जात—वेदः । शिवः । भव । शिवः । भूत्वा । मह्यम् । अग्ने । अथो इति । सीद । शिवः । त्वम् । शिवाः । कृत्वा । दिशः । सर्वाः । स्वाम् । योनिम् । इह । एति । असदः ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ चतुर्थकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः । )

---

अष्टमेऽनुवाक आप्रियो याज्यानुवाक्याः प्रोक्ताः । अथ नवमेऽनुवाकेऽग्न्युत्पादनमभिधत्ते ।

कल्पः—" यत्प्राग्दीक्षाहुतीभ्यस्तत्कृत्वाऽऽकूत्यै प्रयुजेऽग्नये स्वाहेति पश्चाऽऽध्वरिकीर्हुत्वाऽऽकूतिमग्निमिति षडाग्निकीर्विश्वे देवस्य नेतुरिति पूर्णाहुतिं सप्तमीम् " इति ।

पाठस्तु—

आकूतिमग्निं प्रयुजꣳ स्वाहा मनो मेधामग्निं प्रयुजꣳ स्वाहा चित्तं विज्ञातमग्निं प्रयुजꣳ स्वाहा वाचो विधृतिमग्निं प्रयुजꣳ स्वाहा प्रजा-

(अग्न्युत्पादनाभिधानम्)

पतये मनवे स्वाहाऽग्नये वैश्वानराय स्वाहा विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा, इति।

आकूतिः संकल्पोऽस्मदीयानुष्ठानविषयस्तां प्रयुजं प्रेरकमग्निमुद्दिश्य स्वाहुतमिदमस्तु। अनुष्ठेयस्मरणसाधनं यन्मनः स्मृतस्य धारणसामर्थ्यरूपा या मेधा तदुभयं प्रति प्रयुजं प्रेरकमग्निमुद्दिश्य स्वाहुतमिदमस्तु। अविज्ञातस्यानुष्ठानस्य ज्ञानसाधनं यच्चित्तं यदपि तेन चित्तेन ज्ञातु(त)मनुष्ठानं तदुभयं प्रति प्रेरकमग्निमुद्दिश्य स्वाहुतमिदमस्तु। वाचो मन्त्रपाठरूपाया विधृतिर्विधारणं तां प्रति प्रेरकमग्निमुद्दिश्य स्वाहुतमिदमस्तु। मनवे मनुष्याणां जनकाय प्रजापतये स्वाहुतमिदमस्तु। विश्वेषां नराणामनुग्रहीतृत्वेन वैश्वानरायाग्नये स्वाहुतमिदमस्तु। विश्वे विश्वात्मकस्य नेतुर्जगन्निर्वाहकस्य देवस्य सख्यमनुग्रहं मर्तो मरणवान्यजमानः सहसा वृणीत याचेत। तच्च सख्यमीदृशेन स्तोत्रेण लभ्यते। विश्वे विश्वात्मकस्य रायो धनस्येषुध्यसीशिषे त्वं नियन्ताऽसीति स्तुत्वा[1] पुष्यसे यज्ञपोषणाय द्युम्नं धनं वृणीत याचेत। इदं हविस्तव हुतमस्तु॥

आकूतिमित्यादिभिर्वैश्वानराय[2] स्वाहेत्यन्तैर्मन्त्रैः साध्यं होमं विधत्ते—

"षड्भिर्दीक्षयति षड्वा ऋतव ऋतुभिरेवैनं दीक्षयति" [सं० का० ५ प्र० १ अ० ९] इति।

होमेन दीक्षाख्यं संस्कारं कुर्यादित्यर्थः॥

विश्वे देवस्य नेतुरिति पूर्णाहुतिं सप्तमीमिति विधिमभिप्रेत्य विधेयगतां सप्तसंख्यां प्रशंसति—

"सप्तभिर्दीक्षयति सप्त छन्दाꣳसि छन्दोभिरेवैनं दीक्षयति" [सं० का० ५ प्र० १ अ० ९] इति।

गायत्री त्रिष्टुब्जगतीत्यादिमन्त्रोक्तेषु च्छन्दःस्वष्टस्वन्त्ययोरुष्णिक्ककुभोरेकीकारेण च्छन्दसां सप्तत्वम्॥

विश्वे देवस्येतिमन्त्रे यदनुष्टुप्छन्दो यच्चास्य मन्त्रस्योत्तमत्वं चरमरूपत्वं तदुभयं प्रशंसति—

"विश्वे देवस्य नेतुरित्यनुष्टुभोत्तमया जुहोति वाग्वा अनुष्टुप्तस्मात्प्राणानां वागुत्तमा" [सं० का० ५ प्र० १ अ० ९] इति।

---

१ ख. च. स्तुत्वा। २ घ. ङ. 'दिवैश्वा'।

यस्मादिहानुष्टुब्वाग्रूपा सर्वमन्त्रेष्वन्त्या च तस्माल्लोकेऽपि प्राणानां चक्षुरादीन्द्रियाणां मध्ये वागुत्कृष्टा । वाचा हि विद्वत्सभायां राजसभायां च पूज्यो भवति ॥

अशेषजगद्व्यवहारसमर्थत्वेन मन्त्रौ प्रस्तौति—

"एकस्मादक्षरादनाप्तं प्रथमं पदं तस्माद्यद्वाचोऽनाप्तं तन्मनुष्या उपजीवन्ति पूर्णया जुहोति पूर्ण इव हि प्रजापतिः प्रजापतेराप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानाꣳ सृष्ट्यै" [ सं० का० ५ प्र० १ अ० ९ ] इति ।

यस्मादस्यामृचि प्रथमं पदं प्रथमः पाद एकेनाक्षरेण न्यूनं तस्मान्मनुष्या वाचः स्वरूपमनाप्तमसंपूर्णमुपजीवन्ति । मूलाधारादुत्पन्नो वायुर्मूर्धपर्यन्तं प्रसृतो वक्त्रे तत्तत्स्थानेषु वर्णानुत्पादयति । तदिदं वर्णाभिव्यक्तिलक्षणं वाचश्चतुर्थं पदम् । पूर्वाणि तु त्रीणि पदानि कण्ठादध एव गूढत्वान्नाभिव्यञ्जयितुं शक्यन्ते । तथा चाऽऽम्नायते—" गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति " इति । तुरीयं वैखर्याख्यवाचो रूपम् । एतेनासंपूर्णे वाग्व्यवहारसामर्थ्यं दर्शितम् । किंचेयमृगुत्तरेषु पादेष्वक्षरसंपूर्णा । तेन सृष्टिपूर्णप्रजापतिसाम्यात्तत्प्राप्तये भवति । प्रथमपादे यदक्षरन्यूनत्वं तेन सृष्टिशून्यजगद्बीजसाम्यात्प्रजोत्पत्तये भवति । हि यस्मान्नितरामूनात्प्रलीनविकारादुपादानात्प्रजा असृजत ॥

कल्पः—" यत्प्राङ्मुष्टिकर्मणस्तत्कृत्वा शणकुलायेन मुञ्जकुलायेन वोखां प्रच्छाद्य मा सु भित्था इति द्वाभ्यामाहवनीये प्रवृणक्ति " इति।

तत्र प्रथमामाह—

मा सु भित्था मा सु रिषो दृꣳहस्व
वीडयस्व सु । अम्ब धृष्णु वीर-
यस्वाग्निश्चेदं करिष्यथः । , इति ।

हे उखे त्वं मा भित्था भिन्ना मा भव । तदिदमभिन्नत्वं सुष्ठु कर्तव्यम् । तथा मा रिषः स्फुटितेनापि हिंसिता मा भव । तदेतदस्फुटनं, सुष्ठु कर्तव्यम् । सर्वात्मना द्वैधीभावो भेदः । लेशस्य पृथग्भावः स्फुटनं, तदुभयं तव मा भूदित्यर्थः । दृंहस्व भेदाभावाय दृढा भव । सुवीडयस्व स्फुटनाभावाय स्वाङ्गा-

१ ख. च. 'त्रेषु व्याप्ता च । २ ख. च. मन्त्रं । ३ क. ख. घ. ङ. 'त्प्रकृतेरवि' । ४ ङ. 'न वो' । ५ ख. चोखा' । ६ ख. च. स्फुटनेना' ।

सुष्ठु दृढी कुरु। हे धृष्णु धर्षणयुक्ते हेऽम्ब मातृसदृशि वीरयस्व वीरवदाचर। अग्निश्च त्वं च मिलित्वेदमस्मदीयं कर्म करिष्यथः ॥

अथ द्वितीयामाह—

दृꣳहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधया कृताऽसि। जुष्टं देवानामिदमस्तु हव्य-मरिष्टा त्वमुदिहि यज्ञे अस्मिन्। , इति।

हे पृथिवि देवि, मृत्कार्यत्वात्पृथिवीरूपत्वं, मन्त्रैर्निष्पाद्यत्वाद्देवतात्वं, तथाविधे हे उखे स्वस्तये यजमानार्थं दृंहस्व दृढा भव। आसुरी माया शम्बराद्यसुरनिर्मितमायेव स्वधया कृताऽसि, कव्यप्रदानवाचिना स्वधाशब्देनान्नमात्रमुपलक्ष्यते, अन्नेन निमित्तभूतेन तद्धेतुयागसिद्ध्यर्थं त्वं निष्पादिताऽसि। आसुरी माया यद्वदचिन्त्यरचनारूपं चित्रं वस्तु सहसा भूत्वा प्रतिभाति तद्वत्त्वमपि द्विस्तनत्वादिरचनायुक्ता निष्पन्नाऽसीत्यर्थः। त्वन्मुखान्निष्पत्स्यमानमिदं हव्यं देवानां जुष्टं प्रियमस्तु। त्वमप्यरिष्टा केनाप्यहिंसिता सत्यस्मिन्यज्ञ उदिह्युद्गता भव ॥

अस्यामुखायां परितोऽङ्गारानोप्य[1] तापनं विधत्ते—

"यदर्चिषि प्रवृञ्ज्याद्भूतमव रुन्धीत यदङ्गारेषु भविष्यदङ्गारेषु प्र वृणक्ति भविष्यदेवाव रुन्धे भविष्यद्धि भूयो भूतात्" [सं० का० ५ प्र० १ अ० ९] इति।

यदि ज्वालायामुखां प्रतपेत्तदानीं यदस्य गृहे भूतं पूर्वं विद्यमानं धनमस्ति तदेव स्वाधीनं भवति, नतु भविष्यत्। यदि अङ्गारेषु प्रतपेत्तदानीं गृहे भविष्यदविद्यमानं धनं प्राप्नोति। हि यस्माज्जना भविष्यद्धनं भूताद्भूयोऽधिकं मन्यन्ते। न खलु कश्चिदपि भूतार्थं प्रति यतते भविष्यदर्थं तु सर्वोऽपि प्रयतते। अङ्गारेषु काष्ठैः समिन्धनेन ज्वाला भाविनी। अतोऽङ्गाराणां भाविधनहेतुत्वं युक्तम् ॥

तस्मिन्प्रतापने मा सु भित्था इत्यादिमन्त्रद्वयं विनियुङ्क्ते—

"द्वाभ्यां प्र वृणक्ति द्विपाद्यजमानः प्रतिष्ठित्यै" [सं० का० ५ प्र० १ अ० ९] इति ॥

कल्पः—"मित्रैतामुखां तपेति प्रदक्षिणमङ्गारैः परीन्धे" इति।

---

[1] ख. च. °रानारोप्य।

पाठस्तु—

मित्रैतामुखां तपैषा मा भेदि । एतां
ते परि ददाम्यभित्त्यै ।, इति ।

हे मित्रैतामुखां तप तप्तां कुरु । एषोखा मा भेदि मा भिद्यताम् । अभित्त्यै भङ्गाभावार्थमेतामुखां ते तव हस्ते परितो ददामि ॥

देवतान्तरपरित्यागेन मित्रायैवोखायाः परिदाने कारणं दर्शयति—

"ब्रह्मणा वा एषा यजुषा संभृता यदुखा सा यद्भिद्येताऽऽर्तिमार्छेद्यजमानो हन्येतास्य यज्ञो मित्रैतामुखां तपेत्याह ब्रह्म वै मित्रो ब्रह्मन्नेवैनां प्रतिष्ठापयति नाऽऽर्तिमार्छति यजमानो नास्य यज्ञो हन्यते" [ सं० का० ५ प्र० १ अ० ९ ] इति ।

येयमुखा सैषा परब्रह्मस्वरूपेण वसवस्त्वा कृण्वन्त्वित्यादिना यजुषा संपादिता । परब्रह्मण उत्पन्नत्वाद्यजुषो ब्रह्मत्वम् । तथाविधेन यजुषोत्पन्नाया उखायाः कदाचिदपि भेदो न युक्तः कुलालेन निर्मितादयजुष्काद्घटादिविलक्षणत्वात् । एवं सति यदि कदाचित्प्रमादाद्भिद्येत तदानीं यजमानो म्रियेत यज्ञोऽपि विनश्येत् । मित्रायोखायाः परिदाने तु मित्रस्य परब्रह्मरूपत्वाद्ब्रह्मण्येवोखा प्रतिष्ठापिता भवति । ततो यजमानस्य यज्ञस्य च नास्ति हानिः ।

अथ भेदे सति प्रायश्चित्तं विधत्ते—

"यदि भिद्येत तैरेव कपालैः सꣳसृजेत्सैव ततः प्रायश्चित्तिः" [ सं० का० ५ प्र० १ अ० ९ ] इति ।

पक्काया उखाया भेदे तदीयैरेव कपालैर्मृदन्तरं मिश्रयित्वा पुनरप्युखां निष्पादयेत् । सैव पुनर्निष्पादितोखा ततो भेदरूपादपराधात्प्रायश्चित्तिर्विमोचनहेतुः ॥

पूर्वं सामान्याकारेणोखायाः प्रतपनमाहवनीये विहितम् । अथ गतश्रियो विशेषं विधत्ते—

"यो गतश्रीः स्यान्मथित्वा तस्याव दध्याद्भूतो वा एष स स्वां देवतामुपैति" [ सं० का० ५ प्र० १ अ० ९ ] इति ।

योऽग्निचयने प्रवृत्तो गतश्रीः शुश्रुवान्ग्रामणी राजन्यो वा भवेत्तस्य मथितमग्निमुखायामवदध्यात् । नत्वाहवनीय उखायाः प्रवृञ्जनं कार्यम् । एष त्रय

१ ख. च. 'रिद' ।

(अग्न्युत्पादनाभिधानम्)
गतश्रियां मध्येऽन्यतमो भूतो भूतिमानैश्वर्योपेतः । अतः प्रभुत्वात्स स्वकीयामेव मथिताग्निरूपां देवतामुपैतुमर्हति नत्वाहवनीयदेवतान्तराम् ॥

यस्तु गतश्रीः सन्पुनर्भूतिं कामयेत तस्य मथिताग्निमपोह्य पूर्ववत्प्रवृञ्जनमपि विधत्ते—

" यो भूतिकामः स्याद्य उखायै संभवेत्स एव तस्य स्यादतो ह्येष संभवत्येष वै स्वयंभूर्नाम भवत्येव " [ सं० का० प्र० १ अ० ९ ] इति ।

आहवनीये प्रतप्तायामुखायां योऽग्निः संभवेत्स एव तस्य भूतिकामस्य गतश्रियः कार्यो नतु मथितः । हि यस्मादत उखायामेष संभवति तस्मान्मथनापेक्षामन्तरेण स्वयमेवोत्पन्नत्वादेष स्वयंभूरित्युच्यते । एवं सति यजमानो भवत्येव भूतिं प्राप्नोत्येव ॥

यजमानद्वेषिणोऽध्वर्योः प्रकारान्तरं विधत्ते—

" यं कामयेत भ्रातृव्यमस्मै जनयेयमित्यन्यतस्तस्याऽऽहृत्याव दध्यात्साक्षादेवास्मै भ्रातृव्यं जनयति " [ सं० का० ५ प्र० १ अ० ९ ] इति ।

यमुद्दिश्य शत्रुमस्मै जनयेयमिति कामयेताध्वर्युस्तस्यान्यतो गृहान्तरादिप्रदेशादग्निमानीयोखायां प्रक्षिपेत् । तथा सति विलम्बमन्तरेणैव भ्रातृव्यं जनयति ॥

अथ कामनाविशेषेणान्यमग्निं विधत्ते—

" अम्बरीषादन्नकामस्याव दध्यादम्बरीषे वा अन्नं भ्रियते सयोन्येवान्नमव रुन्धे " [ सं० का० ५ प्र० १ अ० ९ ] इति ।

घृतादिना शाकादिभर्जनार्थं यल्लौकिकं लोहादिपात्रं तदम्बरीषं तस्मिन्प्रतप्ते घृतप्रक्षेपेण प्रौढा ज्वालोत्पद्यते । ततोऽग्निमाहृत्योखायामवदध्यात् । लोके हि तस्मिन्नम्बरीषे शाकादिकमन्नं धार्यते । अतः काम्यमानेनान्नेनैतस्याग्नेः समानयोनित्वाद्यजमानोऽन्नं प्राप्नोत्येव ॥

तदेवं प्रवृञ्जनप्रसङ्गागतान्विधीन्परिसमाप्य प्रकृतप्रवृञ्जनोपयुक्तं द्रव्यं विधत्ते—

" मुञ्जानव दधात्यूर्ग्वै मुञ्जा ऊर्जमेवास्मा अपि दधाति " [ सं० का० ५ प्र० १ अ० ९ ] इति ।

शुष्कान्मुञ्जाख्यांस्तृणविशेषानुखायां प्रक्षिपेत् । महिष्यादिभिर्भक्ष्यत्वान्मुञ्जा ऊर्ग्रूपाः । अन्नमेव यजमानाय संपादयतीति ॥

---

१ घ. ङ. 'पोह्य पू' । २ क. घ. ङ. 'सङ्ग' । ३ ख. च. 'हिषादिभक्ष्य' ।

कल्पः—“ द्रून्नः सर्पिरासुतिरिति तस्यां क्रुमुकमुल्लिखितं घृतेनाङ्क्त्वाऽवदधाति मुञ्जांश्च ” इति ।

पाठस्तु—

द्रून्नः सर्पिरासुतिः प्रत्नो होता
वरेण्यः । सहसस्पुत्रो अद्भुतः ।, इति ।

अत्रोत्पत्स्यमानोऽग्निरेतैर्विशेषणैः प्रशस्यते । द्रुशब्देन वृक्षा उच्यन्ते । “ द्रुषदमित्याह । वनस्पतयो वै द्रु । वनस्पतीनामेवैतेन सूयते । ” इति श्रुत्यन्तरात् । द्रुशब्दाभिधेया वृक्षा अन्नं यस्यासौ द्रून्नः । सर्पिरेवाऽऽहारत्वेन सूयते प्रक्षिप्यतेऽस्मिन्निति सर्पिरासुतिः । प्रत्नः पुरातनः । होता देवानामाह्वाता । वरेण्यो वरणीयः । सहसो बलस्य पुत्रः[2] । मथनहेतुना बलेनोत्पद्यमानत्वात् । अद्भुत आश्चर्यरूपः ॥

अनेन मन्त्रेण साध्यं क्रुमुकावधानं विधत्ते—

“ अग्निर्देवेभ्यो निलायत स क्रुमुकं प्राविशत्क्रुमुकमव दधाति यदेवास्य तत्र न्यक्तं तदेवाव रुन्धे ” [ सं० का० ५ प्र० १ अ० ९ ] इति ।

क्रुमुकमल्पं काष्ठशकलम् । न्यक्तं विलीनमग्निरूपम् । तत्र तस्मिन्नेव शकलेऽस्याग्नेर्यदेव रूपं न्यक्तं विलीनं तत्प्राप्नोति । चूर्णरूपं क्रुमुकमिति सूत्रकारेणोक्तम् ॥

अस्य क्रुमुकस्य घृताक्तत्वं विधत्ते—

“ आज्येन सं यौत्येतद्वा अग्नेः प्रियं धाम यदाज्यं प्रियेणैवैनं धाम्ना समर्धयत्यथो तेजसा ” [ सं० का० ५ प्र० १ अ० ९ इति ।

संयौति तत्क्रुमुकं संमिश्रयेत् । आज्यस्याग्निस्थानत्वम् “आ प्यायतां घृतयोनिरग्निः” इत्यादिमन्त्रवर्णाद्धृतेन ज्वालोत्पत्तेश्चावगन्तव्यम् । ज्वालोत्पत्तिरेवात्राथो तेजसा समर्धयतीत्युच्यते ॥

कल्पः—“ परस्या अधि संवत इति वैकङ्कतीं समिधमादधाति ” इति ।

पाठस्तु—

परस्या अधि संवतोऽवराꣳ अभ्या
तर । यत्राहमस्मि ताꣳ अव ।, इति ।

सम्यग्वनुते देवान्भजते यस्यां क्रियायां सा क्रिया संवत् । परस्याः संव-

---

१ ख. च. 'ते प्रेर्यते' । २ ख. च. 'त्रः । धन' ।

तोऽप्युत्कृष्टाया इष्टेरधिष्ठानं त्वमवरान्निकृष्टानप्यस्मानभ्यातराऽऽभिमुख्ये-नाऽऽगत्य दुःखात्तारय। यत्र येषु बन्धुष्वहमस्मि तानपि बन्धूनत्र रक्ष॥

अनेन मन्त्रेण साध्यं समिदाधानं विधत्ते—

"वैकङ्कतीमा दधाति भा एवाव रुन्धे" [सं० का० ५ प्र० १ अ० ९] इति।

आग्नेयी दीप्तिर्विकङ्कतवृक्ष एवावतिष्ठते। अत एवाऽऽधानब्राह्मणे स्तूयते— "अग्नेः सृष्टस्य यतः। विकङ्कतं भा आर्छत्।" इति। अतो वैकङ्कतसमिधा दीप्तिः प्राप्यते॥

कल्पः—"परमस्याः परावत इति शमीमयीम्" इति।

पाठस्तु—

परमस्याः परावतो रोहिदश्व इहाऽऽ गहि।
पुरीष्यः पुरुप्रियोऽग्ने त्वं तरा मृधः।, इति।

परावच्छब्दो दूरदेशवाची। हेऽग्ने परमस्याः परावतोऽत्यन्तदूरदेशादिहा-स्मिन्कर्मणि त्वमागहि आगच्छ। कीदृशस्त्वं, रोहिदश्वो लोहितवर्णोऽश्वो यस्यासौ रोहिदश्वः। अत एवान्यत्राप्याम्नायते—"रोहितेन त्वाऽग्निर्दे-वतां गमयतु" इति। पुरीषमुखाहेतुभूतं पांसुमर्हतीति पुरीष्यः। पुरूणां यजमानानां प्रियः पुरुप्रियः। तादृशस्त्वं मृधः शत्रूंस्तरातिलङ्घय॥

अनेन मन्त्रेण साध्यं समिदाधानं विधत्ते—

"शमीमयीमा दधाति शान्त्यै" [सं० का० ५ प्र० १ अ० ९] इति।

शमीवृक्षस्याग्निदाहशमनहेतुत्वात्तदीयया समिधा शान्तिर्भवति। अत एवाऽऽधानब्राह्मणे पठ्यते—"प्रजापतिरग्निमसृजत। सोऽबिभेत्प्र मा धक्ष्यतीति। तꣳ शम्याऽशमयत्। तच्छम्यै शमित्वम्।" इति॥

कल्पः—"सीद त्वं मातुरस्या उपस्थ इति तिसृभिर्जातमुख्यमुपति-ष्ठते" इति।

तत्र प्रथमामाह—

सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान्। मैनामर्चिषा मा तपसाऽभि शूशुचोऽन्तरस्याꣳ शुक्रज्योतिर्वि भाहि।, इति।

---

१ ख. च. श्रूयते।

हेऽग्ने त्वं मातृसमानाया अस्या उखाया उपस्थ उत्सङ्गे सीदोपविश। कीदृशस्त्वं, विश्वानि वयुनानि सर्वाञ्ज्ञानोपायान्विद्वानेनामुखामर्चिषा त्वदीयदीप्त्या मा शूशुचोऽत्यन्तं मा दीपय। तपसा संतापेनाभि मा शूशुचः अर्चिः कारणं तपः कार्यं, कारणेनेषत्तापो भवति, कार्येण तु भूयान्। तदुभयं मा कुर्वित्यर्थः। अस्यामुखायामन्तः शुक्रज्योतिर्निर्मलप्रकाशः सन्विभाहि विशेषेण दीप्यस्व ॥

अथ द्वितीयामाह—

अन्तरग्ने रुचा त्वमुखायै सदने स्वे। तस्या-
स्त्वꣳ हरसा तपञ्जातवेदः शिवो भव।, इति।

हेऽग्न उखायै तस्या उखाया अन्तर्मध्ये स्वे सदने स्वकीये स्थाने रुचा दीप्त्या युज्यस्वेति शेषः। हे जातवेदस्त्वं तस्या उखायाः शिवो भव सुखप्रदो भव। किं कुर्वन्। हरसा तेजसा तपञ्ज्वलन् ॥

अथ तृतीयामाह—

शिवो भूत्वा मह्यमग्नेऽथो सीद
शिवस्त्वम्। शिवाः कृत्वा दिशः
सर्वाः स्वां योनिमिहाऽसदः॥, इति ॥

हेऽग्ने मह्यं मदर्थं शिवः शान्तो भूत्वाऽथो अनन्तरं त्वं शिवः सन्सीद सर्वान्प्रति शान्तः सन्नुपविश। सर्वा दिशः शिवाः शान्ताः कृत्वेहास्यामुखायां स्वां योनिं स्वकीयं स्थानमासद आगत्योपविश ॥

एतान्मन्त्रान्विनियुङ्क्ते—

"सीद त्वं मातुरस्या उपस्थ इति तिसृभिर्जातमुप तिष्ठते त्रय इमे लोका एष्वेव लोकेष्वाविदं गच्छत्यथो प्राणानेवाऽऽत्मन्धत्ते" [ सं० का० ५ प्र० १ अ० ९ ] इति।

आविदं ख्यातिम्। किंच प्राणापानव्यानानां त्रित्वात्तानपि त्रिसं[2]ख्यया स्वात्मनि स्थापयति ॥

अत्र विनियोगसंग्रहः—

आकूतिं सप्तभिर्दीक्षाहुतिर्मा स्विति च द्वयात्।
पूर्वाग्नौ मद्वणक्त्योखां मित्राङ्गारैः समिध्यते ॥ १ ॥

---

१ ख. च. 'प्त्या दीप्यस्वे'। २ ख. च. त्रित्वसं'।

( अग्न्युत्पादनाभिधानम् )

द्रुन्नः क्रुमुकमाधत्ते पर वैकङ्कतीं परम्।
शमीमयीं सीद जातं तिसृभिश्चोपतिष्ठते॥
नवमे त्वनुवाकेऽस्मिन्मन्त्राः षोडश वर्णिताः॥ २॥

अथ मीमांसा।

दशमाध्यायस्य तृतीयपादे चिन्तितम्—

षड्भिर्दीक्षयतीत्यग्निगतं प्राकृतबाधकम्।
समुच्चितं वा बाधः स्यात्कार्यैक्यात्पाठवाक्यतः॥
अग्नौ होमाङ्गता कॢप्तेरतिदिष्टेन तुल्यता।
विनाऽऽवृत्तिं द्वादशत्वसिद्धये स्यात्समुच्चयः॥

अग्निचयने दीक्षाहुतयः श्रूयन्ते—"षड्भिर्दीक्षयति" इति। प्रकृतावपि—"स्रुवेण चतस्रो जुहोति दीक्षितत्वाय" इत्यादिना दीक्षाहुतयः षड्विहिताः। तत्र मन्त्रा भिन्नाः "आकूत्यै प्रयुजेऽग्नये स्वाहा" इत्यादयः प्राकृता मन्त्राः, "आकूतिमग्निं प्रयुज᳚ स्वाहा" इत्यादयो वैकृताः। तत्र वैकृतमाहुतिमन्त्रषट्कं प्राकृतस्य बाधकं किं वा प्राकृतेन समुच्चितमिति संशये बाधकमिति तावत्प्राप्तम्। कुतः। कार्यैक्यात्। दीक्षणीयाङ्गभूताहुत्युपकारलक्षणं यत्कार्यं प्राकृतानां मन्त्राणां तदेव वैकृतानामपि। नच विकृतौ तन्न प्रतीयत इति शङ्कनीयम्। स्वाहान्तपाठरूपेण लिङ्गेन मन्त्राणामाहुत्युपकारकत्वप्रतीतेः। आहुतीनां च षड्भिर्दीक्षयतीतिवाक्येन दीक्षणीयाङ्गत्वप्रतीतेः। तस्माच्छ्रूयमाणैर्मन्त्रैरतिदिष्टानां बाध इति पूर्वः पक्षः। अग्नौ मन्त्राणां स्वरूपं यद्यपि श्रुतिसिद्धं तथाऽपि होमाङ्गत्वं लिङ्गेन कल्पनीयम्। तथाचातिदेशकॢप्तैर्मन्त्रैस्तुल्यबलत्वान्न बाध्यबाधकता। एवमपि न समुच्चये प्रमाणमस्तीति चेत्। अस्त्येव। द्वादश जुहोतीति संख्याविधानेन तत्सिद्धेः। न च वैकृतानामेव षण्णामावृत्त्या संख्या सिध्यतीति वाच्यम्। आवृत्तेरश्रुतत्वात्। न च सा कल्पयितुं शक्यतेऽन्यथाऽपि संख्योपपत्तेः। तस्मात्समुच्चय इति राद्धान्तः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके
नवमोऽनुवाकः॥ ९॥

---

१ घ. ङ. °क्यगम्। अ°। २ ख. च. 'स्मादुपदिश्यमानैर्मं°। ३ क. ख. घ. च.° कल्पैर्मं'।

( अग्निधारणाभिधानम् )

( अथ चतुर्थाष्टके प्रथमप्रपाठके दशमोऽनुवाकः । )

---

यद॑ग्ने यानि॒ कानि॒ चाऽऽ ते॒ दारू॑णि द॒ध्मसि॑ । तद॑स्तु तु॒भ्यमिद्घृ॒तं तज्जु॑षस्व यविष्ठ्य । यद॒त्त्यु॑प॒जिह्वि॑का॒ यद्व॒म्रो अ॑ति॒सर्प॑ति । सर्वं॒ तद॑स्तु ते घृ॒तं तज्जु॑षस्व यविष्ठ्य । रात्रि॑ꣳरा- त्रि॒मप्र॑याव॒ं भर॒न्तोऽश्वा॑येव॒ तिष्ठ॑ते घा॒सम॑स्मै । रा॒यस्पोषे॑ण॒ समि॒षा मद॒न्तोऽग्ने॒ मा ते॒ प्रति॑- वेशा रिषाम । नाभा॑ ( १ ) पृ॒थि॒व्याः स॑मि- धा॒नम॒ग्निꣳ रा॒यस्पोषा॑य बृह॒ते ह॑वामहे । इ॒र॒- म॒दं बृ॒हदु॑क्थ॒ं यज॑त्र॒ं जेता॑रम॒ग्निं पृत॑नासु सास॒हिम् । याः सेना॑ अ॒भीत्व॑रीरा॒व्याधि॑नी॒- रुग॑णा उ॒त । ये स्ते॒ना ये च॒ तस्क॑रा॒स्ताꣳस्ते॑ अ॒ग्नेऽपि॑ दधाम्या॒स्ये॑ । द॒ꣳष्ट्रा॑भ्यां म॒लिम्लू॒- ञ्जम्भ्यै॒स्तस्क॑राꣳ उ॒त । हनू॑भ्याꣳ स्ते॒नान्भ॑गव॒- स्ताꣳस्त्वं खा॑द॒ सुखा॑दिता॒न् । ये जने॑षु म॒लिम्ल॑- वः स्ते॒नास॒स्तस्क॑रा॒ वने॑ । ये ( २ ) कक्षे॑ष्व- घा॒यव॒स्ताꣳस्ते॑ दधा॒मि जम्भ॑योः । यो अ॒स्म- भ्य॑मराती॒याद्यश्च॑ नो॒ द्वेष॑ते॒ जनः॑ । निन्दा॒द्यो अ॒स्मान्दिप्सा॑च्च॒ सर्वं॒ तं म॑स्म॒सा कु॑रु । सꣳ- शि॑तं मे॒ ब्रह्म॒ सꣳशि॑तं वी॒र्यं॑ बल॑म् । सꣳशि॑तं

क्षत्रं जिष्णु यस्याहमस्मि पुरोहितः। उदेषां बाहू अतिरमुद्वर्च उदू बलम्। क्षिणोमि ब्रह्मणाऽमित्रानुन्नयामि (३) स्वाꣳ अहम्। दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः। अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः। विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे। वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो वि राजति। नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची। द्यावा क्षामा रुक्मः (४) अन्तर्वि भाति देवा अग्निं धारयन्द्रविणोदाः। सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरो गायत्रं चक्षुः स्तोम आत्मा साम ते तनूर्वामदेव्यं बृहद्रथंतरे पक्षौ यज्ञायज्ञियं पुच्छं छन्दाꣳस्यङ्गानि धिष्णियाः शफा यजूꣳषि नाम। सुपर्णोऽसि गरुत्मान्दिवं गच्छ सुवः पत (५) ॥

(नाभा वने ये नयामि क्षामा रुक्मोऽष्टात्रिꣳशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ चतुर्थाष्टके प्रथमप्रपाठके दशमोऽनुवाकः । )

---

यत् । अग्ने । यानि । कानि । च । एति । ते । दारूणि । दध्मसि । तत् । अस्तु । तुभ्यम् । इत् । घृतम् । तत् । जुषस्व । यविष्ठ्य । यत् । अत्ति । उपजिह्विकेत्युप—जिह्विका । यत् । वम्रः । अतिसर्पतीत्यति—सर्पति । सर्वम् । तत् । अस्तु । ते । घृतम् । तत् । जुषस्व । यविष्ठ्य । रात्रिंरात्रिमिति रात्रिं—रात्रिम् । अप्रयावमित्यप्र—यावम् । भरन्तः । अश्वाय । इव । तिष्ठते । घासम् । अस्मै । रायः । पोषेण । समिति । इषा । मदन्तः । अग्ने । मा । ते । प्रतिवेशा इति प्रति—वेशाः । रिषाम । नाभा (१) । पृथिव्याः । समिधानमिति सम्—इधानम् । अग्निम् । रायः । पोषाय । बृहते । हवामहे । इरंमदमितीरं—मदम् । बृहदुक्थमिति बृहत्—उक्थम् । यजत्रम् । जेतारम् । अग्निम् । पृतनासु । सासहिम् । याः । सेनाः । अभीत्वरीरित्यभि—इत्वरीः । आव्याधिनीरित्या—व्याधिनीः । उगणाः । उत । ये । स्तेनाः । ये । च । तस्कराः । तान् । ते । अग्ने । अपीति । दधामि । आस्ये । दंष्ट्राभ्याम् । मलिम्लून् । जम्भ्यैः । तस्करान् । उत । हनूभ्यामिति हनु—

भ्याम् । स्तेनान् । भगव इति भग—वः । तान् । त्वम् । खाद । सुखादितानिति सु—खादितान् । ये । जनेषु । मलिम्लवः । स्तेनासः । तस्कराः । वने । ये ( २ ) । कक्षेषु । अघायव इत्यंघ—यवः । तान् । ते । दधामि । जम्भयोः । यः । अस्मभ्यमित्यस्म—भ्यम् । अरातीयात् । यः । च । नः । द्वेषते । जनः । निन्दात् । यः । अस्मान् । दिप्सात् । च । सर्वम् । तम् । मस्मसा । कुरु । सःशितमिति सं—शितम् । मे । ब्रह्म । सःशितमिति सं—शितम् । वीर्यम् । बलम् । सःशितमिति सं—शितम् । क्षत्रम् । जिष्णु । यस्य । अहम् । अस्मि । पुरोहित इति पुरः—हितः । उदिति । एषाम् । बाहू इति । अतिरम् । उदिति । वर्चः । उदिति । उ । बलम् । क्षिणोमि । ब्रह्मणा । अमित्रान् । उदिति । नयामि ( ३ ) । स्वान् । अहम् । दृशानः । रुक्मः । उर्व्या । वीति । अद्यौत् । दुर्मर्षमिति दुः—मर्षम् । आयुः । श्रिये । रुचानः । अग्निः । अमृतः । अभवत् । वयोभिरिति वयः—भिः । यत् । एनम् । द्यौः । अजनयत् । सुरेता इति सु—रेताः । विश्वा । रूपाणि । प्रतीति । मुञ्चते । कविः । प्रेति ।

असावीत् । भद्रम् । द्विपद इति द्वि—पदे । चतुष्पद इति चतुः—पदे । वीति । नाकम् । अख्यत् । सविता । वरेण्यः । अन्विति । प्रयाणमिति प्र—यानम् । उषसः । वीति । राजति । नक्तोषासा । समनसेति स—मनसा । विरूपे इति वि—रूपे । धापयेते इति । शिशुम् । एकम् । समीची इति । द्यावा । क्षाम । रुक्मः (४) । अन्तः । वीति । भाति । देवाः । अग्निम् । धारयन् । द्रविणोदा इति द्रविणः—दाः । सुपर्ण इति सु—पर्णः । असि । गरुत्मान् । त्रिवृदिति त्रि—वृत् । ते । शिरः । गायत्रम् । चक्षुः । स्तोमः । आत्मा । साम । ते । तनूः । वामदेव्यमिति वाम—देव्यम् । बृहद्रथंतरे इति बृहत्—रथंतरे । पक्षौ । यज्ञायज्ञियम् । पुच्छम् । छन्दांसि । अङ्गानि । धिष्णियाः । शफाः । यजूंषि । नाम । सुपर्ण इति सु—पर्णः । असि । गरुत्मान् । दिवम् । गच्छ । सुवः । पत (५) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ चतुर्थकाण्डे प्रथमप्रपाठके दशमोनुवाकः । )

---

नवमेऽनुवाकेऽग्न्युत्पादनमुक्तम् । अथ दशमेऽग्निधारणमुच्यते ।

(अग्निधारणाभिधानम्)

कल्पः—"यदग्ने यानि कानि चेति पञ्चभिरौदुम्बरमपरशुवृक्णमुख्य इध्ममभ्यादधाति" इति।

तत्र प्रथमामाह—

यदग्ने यानि कानि चाऽऽ ते दारूणि दध्मसि।
तदस्तु तुभ्यमिद्घृतं तज्जुषस्व यविष्ठ्य।, इति।

हेऽग्ने ते त्वदर्थं यानि कानि च दारूणि, दारुशब्देन कुठारच्छेदरहितमविदारितं काष्ठमुच्यते। तादृशानि यानि कान्यप्यरण्ये पतितानि काष्ठान्यानीय दध्मसि धारयाम इति यत्तत्सर्वं तुभ्यं त्वदर्थं घृतमिद्घृतमेव घृतवत्प्रियमस्तु। हे यविष्ठ्य युवतम तद्दारुजातं जुषस्व॥

अथ द्वितीयामाह—

यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति। सर्वं
तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य।, इति।

जिह्वाः प्रधानज्वालाः। तत्समीपवर्तिनी क्षुद्रज्वालोपजिह्विका। अस्माभिररण्यादानीतेषु दारुषु मध्ये यद्दारु महारण्ये दावाग्नेरुपजिह्विका स्वल्पज्वालाऽत्ति भक्षयतीषद्दहतीत्यर्थः। वम्रशब्दः पिपीलिकासदृशं क्षुद्रजीवमाचष्टे। स च यत्काष्ठमतिसर्पति अतिशयेन सर्पति प्राप्नोति काष्ठावयवेषु तत्र तत्र सारं भक्षयतीत्यर्थः। तत्सर्वमित्यादि पूर्ववत्॥

अथ तृतीयामाह—

रात्रिꣳरात्रिमप्रयावं भरन्तोऽश्वायेव तिष्ठते
घासमस्मै। रायस्पोषेण समिषा मद-
न्तोऽग्ने मा ते प्रतिवेशा रिषाम।, इति।

हेऽग्ने ते तव प्रतिवेशाः प्रत्यासन्ना वयं मा रिषाम हिंसां न प्राप्नुमः। किं कुर्वन्तः। रायस्पोषेण धनपुष्ट्या धनपोषेणेषाऽन्नेन च सम्यङ्मदन्तः। तथा रात्रिं रात्रिमप्रयावं प्रतिदिनं पृथग्भावमकृत्वा, एकमपि दिनमवर्जयित्वेत्यर्थः। अस्मा अग्नये घासं समिद्रूपं भक्ष्यं भरन्तः संपादयन्तः। तत्र दृष्टान्तः—तिष्ठतेऽश्वायेव वाजिशालायां बद्ध्वा स्थापिताय प्रौढायाश्वायैकमपि दिनमवर्जयित्वा यथा घासं प्रयच्छन्ति तद्वत्॥

अथ चतुर्थीमाह—

---

१ ख. च. °तमिव।

नाभा पृथिव्याः समिधानमग्निं रायस्पो-
षाय बृहते हवामहे। इरंमदं बृहदुक्थं यजत्रं
जेतारमग्निं पृतनासु सासहिम्।, इति।

बृहते प्रौढाय रायस्पोषायाग्निमिमं वयं हवामह आह्वयामः। कीदृशमग्निं, पृथिव्या नाभा समिधानमुखाया मध्ये सम्यग्दीप्यमानम्। इरया समिद्रूपेणान्नेन माद्यतीतीरंमदस्तम्। बृहन्ति प्रौढान्युक्थानि प्रशंसनानि यस्यासौ बृहदुक्थस्तम्। यजत्रं यागहेतुं, जेतारं राक्षसादिविषये जयशीलं, पृतनास्वग्नि सङ्ग्रामेष्वग्रे गच्छन्तं, सासहिमस्मदपराधानामतिशयेन सोढारम्॥

अथ पञ्चमीमाह—

याः सेना अभीत्वरीराव्याधिनीरुगणा
उत। ये स्तेना ये च तस्करा-
स्तांस्ते अग्नेऽपि दधाम्यास्ये।, इति।

याः काश्चित्परकीयाः सेना अभीत्वरीरस्मदाभिमुख्येन गमनशीला आव्याधिनीः सर्वतोऽस्मान्पीडयन्त्य उगणा उत्कृष्टगणोपेता बहुस्तोमा इत्यर्थः। एवंविधा याः सेनाः सन्ति, उतापि च ये स्तेना गुप्तचोरा ये च तस्कराः प्रकटचोरास्तान्सर्वांस्तवाऽऽस्ये मुखेऽपिदधामि प्रक्षिपामि॥

एतान्मन्त्रान्विनियुङ्क्ते—

"न ह स्म वै पुराऽग्निरपरशुवृक्णं दहति तदस्मै प्रयोग एवर्षिरस्वदयद्यदग्ने यानि कानि चेति समिधमा दधात्यपरशुवृक्णमेवास्मै स्वदयति" [ सं० का० ५ प्र० १ अ० १० ] इति।

पुरैतन्मन्त्रप्रयोगात्पूर्वं कदाचिदप्यग्निरपरशुवृक्णं परशुच्छेदरहितं काष्ठं न ह स्म वै दहति सर्वथा न दहाति अविदारितं काष्ठमग्नौ प्रक्षिप्तमपि न भस्मी भवति, किंतु ज्वालया क्वचित्कृष्णं भवतीत्यर्थः। एवं सति प्रयोगः प्रयुज्यमान ऋषिरेव यदग्ने यानीति मन्त्र एवास्मा अग्नये तत्काष्ठमविदारितमस्वदयत्स्वादूकृतवान्। एतदर्थमेव यद्दारु तद्घृतमस्त्विति मन्त्रे पठ्यते। तस्माद्यदग्न इत्यादिमन्त्रैः समिधमादध्यात्तेनास्मा अग्नये परशुच्छेदरहितं काष्ठं स्वदयत्येव॥

एतद्वेदनं प्रशंसति—

"सर्वमस्मै स्वदते य एवं वेद" [ सं० का० ५ प्र० १ अ० १० ] इति॥

---

१ ख. घ. ङ. च. 'षयज'।

यत्काष्ठमपरशुवृक्णमभ्याधेयं तस्य जातिविशेषं विधत्ते—

"औदुम्बरीमा दधात्यूर्ग्वा उदुम्बर ऊर्जमेवास्मा अपि दधाति" [ सं० का० ५ प्र० १ अ० १० ] इति ॥

यदग्न इत्यादिमन्त्रसंघरूपं सूक्तं प्रशंसति—

"प्रजापतिरग्निमसृजत तꣳ सृष्टꣳ रक्षाꣳस्यजिघाꣳसन्त्स एतद्राक्षोघ्नमपश्यत्तेन वै स रक्षाꣳस्यपाहत यद्राक्षोघ्नं भवत्यग्नेरेव तेन जाताद्रक्षाꣳस्यप हन्ति" [ सं० का० ५ प्र० १ अ० १० ] इति ।

रक्षोघ्नोऽयमग्निस्तत्सूक्तं राक्षोघ्नं यदग्ने यानि कानि चेत्यारभ्यामित्रानुन्नयामि स्वाꣳ अहमित्येतदन्तम् । अनेन सूक्तेन रक्षांसि प्रजापतिर्हतवान् । तस्मादत्राप्यनेन सूक्तेन तथैव भवितव्यम् । तेन सूक्तेनोत्पन्नादग्नेः सकाशाद्रक्षांसि विनाशयति ॥

कल्पः—"दꣳष्ट्राभ्यां मलिम्लूनित्याश्वत्थीं समिधमादधाति" इति ।

पाठस्तु—

दꣳष्ट्राभ्यां मलिम्लूञ्जम्भ्यैस्तस्कराꣳ
उत । हनूभ्याꣳ स्तेनान्भगवस्ताꣳ-
स्त्वं खाद सुखादितान् ।, इति ।

गुप्ताः प्रकटाश्चेति द्विविधाश्चोराः । प्रकटा अपि द्विविधाः, अरण्येषु मार्गमध्येऽपहृत्य प्रत्यक्षमेव पलायमानाः प्रकटाः । ततोऽप्यतिप्रकटा निर्भया ग्रामेष्वेवाऽऽगत्य वन्दिकराः[1] । त एतेऽत्र मलिम्लव इत्युच्यन्ते । मलं पापाधिक्यमेषामस्तीति मलिनाः । तथाविधा भूत्वा म्लोचयन्ति चौर्यं कुर्वन्तीति मलिम्लवस्तान् । दन्तपङ्क्तिमध्ये याभ्यां तीक्ष्णदन्ताभ्यां क्रमुकादिकं भक्ष्यते ते दंष्ट्रे । ततः पुरोवर्तिनो बहिर्दृश्यमाना दन्ता जम्भ्याः । अन्तर्लीने तु हनू । तत्र मलिम्लून्दंष्ट्राभ्यां पीडयित्वा जम्भ्यैस्तस्करानपि पीडयित्वा हनूभ्यां स्तेनान्पीडयित्वा हे भगवः पूजनीयाग्ने तान्सर्वान्सुखादितान्पुनर्जीवनरहिता यथा भवन्ति तथा त्वं खाद भक्षय ॥

एतन्मन्त्रसाध्यं समिदाधानं विधत्ते—

"आश्वत्थीमा दधात्यश्वत्थो वै वनस्पतीनाꣳ सपत्नसाहो विजित्यै" [ सं० का० ५ प्र० १ अ० १० ] इति ।

सपत्नान्सहतेऽभिभवतीति सपत्नसाहः । अश्वरूपधारिणोऽग्नेरस्मिन्वृक्षेऽव-

---

१ ख. च. बन्दीकाराः ।

स्थितत्वादश्वत्थस्य सपत्नसाहत्वम् । तत्रावस्थानमाधानब्राह्मणे श्रूयते—"अग्निर्देवेभ्यो निलायत । अश्वो रूपं कृत्वा । सोऽश्वत्थे संवत्सरमतिष्ठत् । तदश्वत्थस्याश्वत्थत्वम् । " इति । अतस्तदीया समिद्विजयाय संपद्यते ॥

कल्पः—" ये जनेषु मलिम्लव इति वैकङ्कतीम् " इति । आदधातीति शेषः ।

पाठस्तु—

ये जनेषु मलिम्लवः स्तेनासस्तस्करा वने । ये कक्षेष्वघायवस्ताँस्ते दधामि जम्भयोः । , इति ।

ग्रामवर्तिषु जनेषु वनेषु गच्छत्सु च ये त्रिविधाः पूर्वोक्ताश्चोराः सन्ति, ये चान्ये व्याघ्रादयः कक्षेषु स्थित्वाऽघायवो भवन्ति, अघं पापं हिंसनमिच्छन्तीत्यघायवः, तान्सर्वांस्तव जम्भयोर्दधामि ॥

एतन्मन्त्रसाध्यं समिदाधानं विधत्ते—

" वैकङ्कतीमा दधाति भा एवाव रुन्धे " [ सं० का० ५ प्र० १ अ० १० ] इति ॥

कल्पः—" यो अस्मभ्यमरातीयादिति शमीमयीम् " इति ।

पाठस्तु—

यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः । निन्दाद्यो अस्मान्दिप्साच्च सर्वं तं मस्मसा कुरु । , इति ।

पूर्वं चोरभेदा दर्शिताः । इदानीं शत्रुभेदा उच्यन्ते । ते च त्रिविधा अरातयो द्वेषिणो निन्दकाश्चेति । तत्र दातव्यत्वेन प्राप्तं धनं यो न ददाति सोऽयमरातिः । कार्यविघातं यः करोति स द्वेषी । वाग्दौर्जन्यमात्रं यः करोति स निन्दकः । हन्तुकामश्चतुर्थः । तत्र योऽस्मभ्यमस्माकमरातीयादरातित्वमिच्छति, यो यजमानानस्मान्द्वेषते कार्यनाशेन बाधते, योऽप्यन्योऽस्मान्निन्दान्निन्दति, यश्चापरोऽस्मान्दिप्साद्दम्भितुं हिंसितुमिच्छति, तं सर्वं जनं मस्मसा कुरु । चूर्णजन्यशब्दस्यानुकरणं मस्मसेति, चूर्णीं कुर्वित्यर्थः ॥

एतन्मन्त्रसाध्यं समिदाधानं विधत्ते—

" शमीमयीमा दधाति शान्त्यै " [ सं० का० ५ प्र० १ अ० १० ] इति ।

( अग्निधारणाभिधानम् )

कल्पः—“ सꣳशितं मे ब्रह्मोदेषां बाहू अतिरमित्युत्तमे यजमानं वाचयं-स्तूष्णीमौदुम्बर्यौ समिधावादधाति ” इति।

तत्र प्रथमामाह—

**सꣳशितं मे ब्रह्म सꣳशितं वीर्यं बलम्। सꣳशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहितः ।, इति।**

मे मदीयं ब्रह्म ब्राह्मण्यं संशितं सम्यक्तीक्ष्णीकृतं शास्त्रीयमार्गवर्ति कृतमित्यर्थः। तथा वीर्यमिन्द्रियशक्तिः । बलं शरीरजशक्तिः । तदुभयं संशितं सम्यक्स्वकार्यक्षमं, तथा यस्य क्षत्रस्य राज्ञोऽहं पुरोहितोऽस्मि मे मदीयं तत्क्षत्रं जिष्णु जयशीलं यथा भवति तथा संशितम्। अस्त्विति शेषः ॥

अथ द्वितीयामाह—

**उदेषां बाहू अतिरमुद्वर्च उदू बलम्। क्षिणोमि ब्रह्मणाऽमित्रानुन्नयामि स्वाꣳ अहम् ।, इति।**

एषां स्वकीयानां राजब्राह्मणादीनां मध्य एकैकस्य बाहू उदतिरमुत्कर्षेण वर्धितवानस्मि। लौकिकोक्तिरियम्। लोके हि योऽन्यसमादुत्कृष्टो भवति तं जना एवमाहुः—स्वकीयहस्तमुपरितनं कृतवानिति। वर्चः कान्तिः। तामप्युदतिरम्। बलं शारीरं तदप्युदतिरम्। ब्रह्मणा मन्त्रसामर्थ्येनामित्राञ्शत्रून्क्षिणोमि क्षीणान्करोमि। स्वान्स्वकीयान्पुरुषानहमुन्नयाम्युत्कर्षं प्रापयामि ॥

एतन्मन्त्रसाध्यं यजमानवाचनं विधत्ते—

“ सꣳशितं मे ब्रह्मोदेषां बाहू अतिरमित्युत्तमे औदुम्बरी वाचयति ब्रह्मणैव क्षत्रꣳ सꣳश्यति क्षत्रेण ब्रह्म तस्माद्ब्राह्मणो राजन्यवानत्यन्यं ब्राह्मणं तस्माद्राजन्यो ब्राह्मणवानत्यन्यꣳ राजन्यम् ” [ सं० का० ५ प्र० १ अ० १० ] इति।

उत्तमे राक्षोघ्नसूक्तस्यान्तिमे ऋचौ यजमानं वाचयेत्। औदुम्बर्यौ द्वे समिधौ तूष्णीमादध्यादिति शेषः। प्रथममन्त्रे ब्रह्मक्षत्रयोः संशितत्वं यदुक्तं तत्र परस्परोपकारो विज्ञायते। ब्राह्मणेनैव पुरोहितेन राजा धर्मे तीक्ष्णीकृतो भवति। राज्ञा नियामकेन ब्राह्मणोऽपि संशितः स्वाचारे नियमितो भवति । यस्मादेवं तस्माद्राजन्येन स्वामिना युक्तो ब्राह्मणः स्वामिरहितं ब्राह्मणमत्येति। राजाऽपि धर्मबोधकेन पुरोहितेन ब्राह्मणेन युक्तस्तद्रहितमधार्मिकं राजन्यं राजानमत्येति ॥

---

१ ख. ʻरशʼ।

कल्पः—“ एकविंशतिनिर्बाधो रुक्मः सूत्रोतस्तं दृशानो रुक्म इति समासीनो यजमानोऽन्तर्निर्बाधं प्रतिमुच्य बहिर्निर्बाधान्कुरुते ” इति।

पाठस्तु—

दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः
श्रिये रुचानः। अग्निरमृतो अभवद्व-
योभिर्यदेनं द्यौरजनयत्सुरेताः। ,इति।

दृशानो दर्शनीयरूपो रुक्मः सुवर्णनिर्मितः फलकाकार आभरणविशेष उर्व्या महत्या दीप्त्या व्यद्यौद्विद्योतते स्म। किं कुर्वन्। दुर्मर्षमतिरस्कार्यमायुर्जीवनं श्रिये श्रयितुं रुचानो वाञ्छन्। तथाविधोऽग्निर्वयोभिरन्नैर्हविर्भिरमृतोऽभवत्। यद्यस्मादेनमग्निं द्यौर्द्युलोकवासिदेवगणः सुरेताः सन्नजनयत्तस्मादमृतत्वं युक्तम्। अत्र रुक्मस्याग्निधारणाङ्गत्वादग्नित्वमुपचरितम्॥

अनेन मन्त्रेण साध्यं रुक्मप्रतिमोकं विधत्ते—

“ मृत्युर्वा एष यदग्निरमृतꣳ हिरण्यꣳ रुक्ममन्तरं प्रति मुञ्चतेऽमृतमेव मृत्योरन्तर्धत्ते ” [ सं० का० ५ प्र० १ अ० १० ] इति।

अग्नेर्दाहेन विनाशकत्वान्मृत्युत्वं, हिरण्यस्याग्निसंपर्केऽपि भस्मीभावादर्शनादमृतत्वम्। एवं सति धारयिष्यमाणस्याग्नेः स्वकीयस्योरसश्चान्तरं मध्यवर्ति यथा भवति तथा रुक्मं दीर्घसूत्रेण प्रोतं गले प्रतिमुञ्चेत्। तेन प्रतिमुक्तेन दाहकादग्निरूपान्मृत्योरमृतं रुक्मं व्यवधानरूपं कृतवान्भवति॥

तस्य रुक्मस्य बिन्दुसदृशानाकारविशेषान्विधत्ते—

“एकविꣳशतिनिर्बाधो भवत्येकविꣳशतिर्वै देवलोका द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳश एतावन्तो वै देवलोकास्तेभ्य एव भ्रातृव्यमन्तरेति ” [ सं० का० ५ प्र० १ अ० १० ] इति।

सुवर्णफलके निम्नोन्नतभावमापद्य स्पर्शकारिणं पुरुषं निःशेषेण बाधन्त इति निर्बाधाः स्फोटसदृशा अवयवविशेषाः। ते चैकविंशतिसंख्याका यस्मिन्रुक्मे सोऽयमेकविंशतिनिर्बाधः। तादृशं रुक्मं कुर्यात्। लोक्यन्ते भुज्यन्ते यैर्देशकालादिसाधनविशेषैस्ते लोकाः। मासादयश्च देवानां भोगसाधनानीति त एव लोका इत्युच्यन्ते। अतो निर्बाधगतयैकविंशतिसंख्यया मासादिकेभ्य आदित्यान्तेभ्य एकविंशतिलोकेभ्यो भ्रातृव्यमन्तरितं करोति॥

विहितान्निर्बाधान्प्रशंसति—

१ घ. ङ. 'धो यो रु'। २ क. घ. ङ. 'कालसा'।

(अग्निधारणाभिधानम्)

" निर्बाधैर्वै देवा असुरान्निर्बाधेऽकुर्वत तन्निर्बाधानां निर्बाधत्वं निर्बाधी भवति भ्रातृव्यानेव निर्बाधे कुरुते" [सं० का० ५ प्र० १ अ० १०] इति।

चर्मखड्गधारिणो देवाश्चर्मणो बहिर्भागे खचितैः कांस्यादिमयैः प्रौढस्फोटाकारैर्निर्बाधैः स्वग्रहणार्थमागतानसुरानास्फाल्य भूमिपतनादिरूपे निर्बाधे स्थितानकुर्वत। यस्मान्निश्चितवाधा एते तस्मान्निर्बाधाः। अतोऽत्र रुक्मस्य निर्बाधित्वेन भ्रातृव्यान्सर्वान्निश्चितवाधे पतितान्कुरुते॥

कल्पः—" विश्वा रूपाणीति शिक्यपाशं प्रतिमुञ्चते " इति।

पाठस्तु—

विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे। वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो वि राजति।, इति।

कविर्विद्वान्वरेण्यः श्रेष्ठः सविता विश्वा रूपाणि समस्तानि जगद्रूपाणि प्रतिमुञ्चते स्वस्मिन्स्वी करोति प्रकाशयतीत्यर्थः। द्विपदे चतुष्पदे मनुष्याणां पशूनां च भद्रं स्वस्वव्यवहारप्रकाशनरूपं श्रेयः प्रासावीत्संपादितवान्। नाकं स्वर्गं विशेषेणाख्यत्प्रकाशितवान्। उषसः प्रयाणमनूषःकालेऽतीते सति विराजति विशेषेण प्रकाशते॥

अनेन मन्त्रेण साध्यं शिक्यपाशप्रतिमोकं विधत्ते—

" सावित्रिया प्रति मुञ्चते प्रसूत्यै " [सं० का०५ प्र० १ अ०१०] इति।

सविता वरेण्य इति मन्त्रलिङ्गादियं सावित्री सम्यक्प्रेरणाय संपद्यते॥

कल्पः—"नक्तोषासेति कृष्णाजिनमुत्तरम्" इति। प्रतिमुञ्चत इत्यनुवर्तते।

पाठस्तु—

नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची। द्यावा क्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयन्द्रविणोदाः।, इति।

नक्तं चोषाश्च नक्तोषासा रात्रिदिवसावित्यर्थः। समनसा परस्परमेकमतियुक्ते, विरूपे रात्रिः कृष्णा दिवसस्तु शुक्ल इत्येवं विलक्षणरूपे, समीची समीच्यावनुकूले सत्यौ, एकं शिशुमग्निं धापयेते यजमानकर्तृकमग्निधारणं संपादयतः। द्यावा द्युलोके क्षामा क्षितौ भूलोकेऽन्तस्तदुभयमध्यवर्तिन्यन्तरिक्षे

---

१ ख. स्वग्रह'। २ ख. च. निश्चितबाधेऽवस्थि'। ३ ख. 'बाधत्वे'।

रुक्मो विभाति । अयमग्निर्विशेषेण प्रकाशते । दीव्यन्ति विहरन्तीति देवाः प्राणाः । ते च द्रविणोदा याग्द्वारेण द्रविणं धनरूपं फलं प्रयच्छन्ति । तादृशा यजमानस्य प्राणा अग्निमेतं धारयन्धृतवन्तः ॥

एतन्मन्त्रसाध्यं कृष्णाजिनप्रतिमोकं विधत्ते—

" नक्तोषासेत्युत्तरयाऽहोरात्राभ्यामेवैनमुद्यच्छते " [ सं० का० ५ प्र० १ अ० १० ] इति ।

पूर्वां सावित्रीमृचमपेक्ष्येयमुत्तरा तया कृष्णाजिनं प्रतिमुञ्चत इति शेषः । तथा सति तन्मन्त्रप्रतिपादिताभ्यामहोरात्राभ्यामेवैनमूर्ध्वं धृतवान्भवति ॥

तस्य मन्त्रस्य चतुर्थपादे देवशब्देन प्राणा विवक्षिता इति दर्शयति—

" देवा अग्निं धारयन्द्रविणोदा इत्याह प्राणा वै देवा द्रविणोदा अहोरात्राभ्यामेवैनमुद्यत्य प्राणैर्दाधार " [ सं० का० ५ प्र० १ अ० १० ] इति ।

उद्यमनमात्रमहोरात्रयोः कृत्यं, धारणं तु प्राणानामित्यर्थः ॥

रुक्मशिक्यपाशकृष्णाजिनानां यः प्रतिमोकस्तस्य काल उपवेशनं विधत्ते—

" आसीनः प्रति मुञ्चते तस्मादासीनाः प्रजाः प्र जायन्ते " [सं० का० ५ प्र० १ अ० १० ] इति ।

तस्मादासीनप्रतिमोकाल्लोकेऽपि प्रजा आसीना एवोत्पद्यन्ते न तूत्थिताः ॥

कृष्णाजिनस्य शिक्याद्बहिर्देशवर्तित्वं विधत्ते—

"कृष्णाजिनमुत्तरं तेजो वै हिरण्यं ब्रह्म कृष्णाजिनं तेजसा चैवैनं ब्रह्मणा चोभयतः परि गृह्णाति " [ सं० का० ५ प्र० १ अ० १० ] इति ।

शिक्यस्यैकतो रुक्ममन्यतः कृष्णाजिनमिति तेजोरूपेण रुक्मेण वेदरूपेण कृष्णाजिनेन चोभयतः शिक्यं परिगृहीतं भवति । कृष्णाजिनस्य ब्रह्मरूपत्वं दीक्षाप्रकरणे समाम्नातम्—" ब्रह्मणो वा एतद्रूपम् । यत्कृष्णाजिनम् " इति ॥

शिक्यस्योद्यमनहेतुरज्जुसंख्यां विधत्ते—

" षडुद्यामꣳ शिक्यं भवति षड्वा ऋतव ऋतुभिरेवैनमुद्यच्छते " [ सं० का० ५ प्र० १ अ० १० ] इति ॥

पक्षान्तरं विधत्ते—

"यद्द्वादशोद्यामꣳ संवत्सरेणैव" [ सं० का० ५ प्र० १ अ० १० ] इति

---

१ क. घ. ङ. 'मेतमधा' ।

(अग्निधारणाभिधानम्)

द्वादश मासाः संवत्सर इत्युक्तत्वात्संवत्सरेणैवैनमुद्यच्छते ॥

शिक्यस्य प्रकृतिद्रव्यं विधत्ते—

" मौञ्जं भवत्यूर्ग्वै मुञ्जा ऊर्जैवैनꣳ समर्धयति " [सं० का० ५ प्र० १ अ० १०] इति।

कल्पः—" सुपर्णोऽसि गुरुत्मानित्युख्यमवेक्षते " इति।

पाठस्तु—

सुपर्णोऽसि गुरुत्मान्त्रिवृत्ते शिरो गायत्रं चक्षुः स्तोम आत्मा साम ते तनूर्वामदेव्यं बृहद्रथंतरे पक्षौ यज्ञायज्ञियं पुच्छं छन्दाꣳस्यङ्गानि धिष्णियाः शफा यजूꣳषि नाम ।, इति।

हेऽग्ने त्वं सुपर्णः पक्षिरूपोऽसि, पक्ष्याकारेण चेष्यमाणत्वात्। अत एवाऽऽम्नायते—" वयसां वा एष प्रतिमया चीयते यदग्निः " इति। तत्र दृष्टान्तः—यथा गरुत्मान्पक्षिराजस्तद्वत्। पक्ष्याकारस्यावयवाः संप (पा) द्यन्ते त्रिवृत्ते शिरो बहिष्पवमानस्तोत्रे योऽयं त्रिवृत्स्तोमः स एव स्तोमस्तव शिरस्थानीयः, प्रजापतिमुखजन्यत्वेनोक्तत्वात्। यद्गायत्राख्यं साम तत्त्वदीयं चक्षुः। यः पञ्चदशादिस्तोमस्तव स जीवात्मा। यद्वामदेव्यं साम तच्छिरोऽव्यतिरिक्ततनुस्थानीयम्। ये बृहद्रथंतराख्ये सामनी ते तव पक्षस्थानीये। यद्यज्ञायज्ञियाख्यं साम तत्तव पुच्छस्थानीयम्। यानि गायत्र्यादीनि च्छन्दांसि तानि हृदयाद्यङ्गस्थानीयानि। ये सौमिकवेद्यां होत्रियादिधिष्णियास्ते तव शफस्थानीयाः। यानि यजूंषि तानि तव नामस्थानीयानि ॥

एतं मन्त्रं विनियुङ्क्ते—

" सुपर्णोऽसि गरुत्मानित्यवेक्षते रूपमेवास्यैतन्महिमानं व्याचष्टे " [सं० का० ५ प्र० १ अ० १०] इति।

अवेक्षते, उख्यमिति शेषः। मन्त्रस्वरूपेणैवार्थप्रतीतेर्नात्र पृथग्व्याख्यातव्यमस्ति ॥

कल्पः— " सुपर्णोऽसि गुरुत्मानित्यादायोत्थाय " इति।

पाठस्तु—

सुपर्णोऽसि गुरुत्मान्दिवं गच्छ सुवः पत ॥, इति ॥

---

१ ख. च. 'वेक्ष्य' इ'।

हेऽग्ने त्वं गरुड इव पक्षिरूपोऽसि। अत आकाशं प्रति गच्छ। ततोऽपि स्वर्गलोकं प्राप्नुहि ॥

मन्त्रस्य स्वर्गप्राप्तिपरत्वं दर्शयति--

" दिवं गच्छ सुवः पतेत्याह सुवर्गमेवैनं लोकं गमयति " [ सं० का० ५ प्र० १ अ० १० ] इति।

एनं यजमानमात्मानम् ॥

अत्र विनियोगसंग्रहः--

यदग्ने पञ्चभिः काष्ठं वद्धावौदुम्बरं क्षिपेत्।
दंष्ट्राऽऽश्वत्थीमादधाति ये ज वैकङ्कतीं तथा ॥ १ ॥
यो अस्मभ्यं शमीकाष्ठं संशितद्वयवाचनम्।
दृशा रुक्मं निजे कण्ठे बद्ध्वा विश्वेतिमन्त्रतः ॥ २ ॥
साग्न्युखाशिक्यपाशं तु स्वाम्यत्र प्रतिमुञ्चते।
नक्तोऽजिनं चोपरिष्टात्सुपर्णोऽग्निमवेक्षते ॥
सुपर्णः साग्निरुत्तिष्ठन्मन्त्राः पञ्चदशेरिताः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके
दशमोऽनुवाकः ॥ १० ॥

---

( अथ चतुर्थाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः। )

---

अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि। स इद्देवेषु गच्छति। सोम यास्ते मयोभुवं ऊतयः सन्ति दाशुषे। ताभिर्नोऽविता भव। अग्निर्मूर्धा भुवः। त्वं नः सोम या ते धामानि। तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः प्रभूती पूरुषत्वता (१)।

देवेषु च सवितर्मानुषेषु च त्वं नो अत्र सुवतादनागसः। चोदयित्री सूनृतानां चेतन्ती सुमतीनाम्। यज्ञं दधे सरस्वती। पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात्। ग्नाभिरच्छिद्रꣳ शरणꣳ सजोषा दुराधर्षं गृणते शर्म यꣳसत्। पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः। पूषा वाजꣳ सनोतु नः। शुक्रं ते अन्यद्यजतं ते अन्यत् (२) विषुरूपे अहनी द्यौरिवासि। विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु। तेऽवर्धन्त स्वतवसो महित्वनाऽऽ नाकं तस्थुरुरु चक्रिरे सदः। विष्णुर्यद्धाऽऽवद्वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये। प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम्। ये सहाꣳसि सहसा सहन्ते (३) रेजते अग्ने पृथिवी मखेभ्यः। विश्वे देवा विश्वे देवाः। द्यावा नः पृथिवी इमꣳ सिध्रमद्य दिविस्पृशम्। यज्ञं देवेषु यच्छताम्। प्र पूर्वजे पितरा नव्यसीभिर्गीर्भिः कृणुध्वꣳ सदने ऋतस्य। आ नो द्यावापृथिवी दैव्येन जनेन यातं महि वां वरूथम्। अग्निꣳ स्तोमेन

बोधय समिधानो अमर्त्यम् । हव्या देवेषु नो दधत् । स हव्यवाडमर्त्य उशिग्दूतश्चनोहितः । अग्निर्धिया समृण्वति । शं नो भवन्तु वाजेवाजे ( ४ ) ॥

( पुरुषत्वतां यजतं ते अन्यत्सहन्ते चनोहितोऽष्टौ च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

युञ्जान इमामगृभ्णन्देवस्य सं ते वि पाजसा वसवस्त्वा समास्त्वोर्ध्वा अस्याऽऽकूतिं यदग्ने यान्यग्ने यं यज्ञमेकादश ॥ ११ ॥

युञ्जानो वर्म च स्थ आदित्यास्त्वा भारती स्वाऽ अहऽ षट्चत्वारिंशत् ॥ ४६ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके प्रथमः प्रपाठकः ॥ १ ॥

---

( अथ चतुर्थाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः । )

---

अग्ने । यम् । यज्ञम् । अध्वरम् । विश्वतः । परिभूरिति परि—भूः । असि । सः । इत् । देवेषु । गच्छति । सोम । याः । ते । मयोभुव इति मयः—भुवः । उतयः । सन्ति । दाशुषे । ताभिः । नः । अविता । भव । अग्निः । मूर्धा । भुवः । त्वम् । नः ।

सोम। या। ते। धामानि। तत्। सवितुः। वरे-
ण्यम्। भर्गः। देवस्य। धीमहि। धियः। यः।
नः। प्रचोदयादिति प्र—चोदयात्। अचित्ती। यत्।
चकृम। दैव्ये। जने। दीनैः। दक्षैः। प्रभूतीति
प्र—भूती। पूरुषत्वतेति पूरुष—त्वता (१)। देवे-
षु। च। सवितः। मानुषेषु। च। त्वम्। नः।
अत्र। सुवतात्। अनागसः। चोदयित्री। सूनृता-
नाम्। चेतन्ती। सुमतीनामिति सु—मतीनाम्।
यज्ञम्। दधे। सरस्वती। पावीरवी। कन्या। चित्रा-
युरिति चित्र—आयुः। सरस्वती। वीरपत्नीति वीर—
पत्नी। धियम्। धात्। ग्नाभिः। अच्छिद्रम्। शर-
णम्। सजोषा इति स—जोषाः। दुराधर्षमिति दुः—
आधर्षम्। गृणते। शर्म। यंसत्। पूषा। गाः।
अन्विति। एतु। नः। पूषा। रक्षतु। अर्वतः। पूषा।
वाजम्। सनोतु। नः। शुक्रम्। ते। अन्यत्। यजतम्। ते।
अन्यत्(२)। विषुरूपे इति विषु—रूपे। अहनी इति।
द्यौः। इव। असि। विश्वाः। हि। मायाः। अव-
सि। स्वधाव इति स्वधा—वः। भद्रा। ते। पूषन्।
इह। रातिः। अस्तु। ते। अवर्धन्त। स्वतवस इति

स्व—तवसः । महित्वनेति महि—त्वना । एति । नाकम् । तस्थुः । उरु । चक्रिरे । सदः । विष्णुः । यत् । ह । आवत् । वृषणम् । मदच्युतमिति मद—च्युतम् । वयः । न । सीदन् । अधीति । बर्हिषि । प्रिये । प्रेति । चित्रम् । अर्कम् । गृणते । तुराय । मारुताय । स्वतवस इति स्व—तवसे । भरध्वम् । ये । सहांसि । सहसा । सहन्ते ( ३ ) । रेजते । अग्ने । पृथिवी । मखेभ्यः । विश्वे । देवाः । विश्वे । देवाः । द्यावा । नः । पृथिवी इति । इमम् । सिध्रम् । अद्य । दिविस्पृशमिति दिवि—स्पृशम् । यज्ञम् । देवेषु । यच्छताम् । प्रेति । पूर्वजे इति पूर्व—जे । पितरा । नव्यसीभिः । गीर्भिः । कृणुध्वम् । सदने इति । ऋतस्य । एति । नः । द्यावापृथिवी इति द्यावा—पृथिवी । दैव्येन । जनेन । यातम् । महि । वाम् । वरूथम् । अग्निम् । स्तोमेन । बोधय । समिधान इति सम्—इधानः । अमर्त्यम् । हव्या । देवेषु । नः । दधत् । सः । हव्यवाडिति हव्य—वाट् । अमर्त्यः । उशिक् । दूतः । चनोहितः । अग्निः । धिया ।

समितिं । कृण्वति । शम् । नः । भवन्तु । वाजेवा-
ज इति वाजे—वाजे (४) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके
प्रथमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके
प्रथमः प्रपाठकः ॥ १ ॥

---

( अथ चतुर्थकाण्डे प्रथमप्रपाठक एकादशोऽनुवाकः । )

---

दशमेऽनुवाके वह्निधारणमुक्तम् । अथैकादशे चातुर्मास्यगते वैश्वदेवाख्ये प्रथमपर्वणि विहितानां हविषां याज्यानुवाक्या उच्यन्ते ।

तत्र प्रथमस्याऽऽज्यभागस्य चोदकप्राप्तामपवदितुमन्यां पुरोनुवाक्यामाह—

अग्ने यं यज्ञमध्वरं विश्वतः परिभू-
रसि । स इद्देवेषु गच्छति । , इति ।

हेऽग्नेऽध्वरं हिंसारहितं यं यज्ञं विश्वतः परिभूरासि सर्वतः प्राप्तवानसि, स इत्स एव यज्ञो देवेषु गच्छति ॥

अथ द्वितीयस्याऽऽज्यभागस्य पुरोनुवाक्यामाह—

सोम यास्ते मयोभुव ऊतयः सन्ति
दाशुषे । ताभिर्नोऽविता भव ।,इति ।

हे सोम दाशुषे हविर्दत्तवते यजमानाय मयोभुवः सुखं भावयितुस्ते तव या ऊतयो रक्षणप्रकाराः सन्ति ताभिरूतिभिर्नोऽस्माकमविता रक्षको भव ॥

अथाऽऽग्नेयमष्टाकपालं निर्वपतीत्यस्मिन्हविषि याज्यापुरोनुवाक्ययोः प्रतीके दर्शयति—

अग्निर्मूर्धा भुवः । , इति ।

अग्निर्मूर्धेति पुरोनुवाक्या । भुवो यज्ञस्येति याज्या । एतच्चोभयमैष्टिके

हौत्रकाण्डे समाम्नातं, तच्चास्माभिरुद्रात्तस्य चक्षुषी वा एते यज्ञस्येत्यस्मिन्ननुवाके व्याख्यातम् ॥

अथ सौम्यं चरुमित्यस्मिन्हविषि याज्यापुरोनुवाक्ययोः प्रतीके दर्शयति—

त्वं नः सोम या ते धामानि । , इति ।

त्वं नः सोम विश्वत इति पुरोनुवाक्या। या ते धामानीति याज्या । एतच्चोभयं स प्रत्नवन्नि काव्येत्यनुवाके व्याख्यातम् ॥

अथ सावित्रं द्वादशकपालमित्येतस्य हविषः पुरोनुवाक्यामाह—

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् । , इति ।

यः सविताऽस्माकं बुद्धीः प्रेरयति तस्य सवितुर्देवस्य वरणीयं भर्गस्तेजो ध्यायेम ॥

तत्रैव याज्यामाह—

अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः
प्रभूती पूरुषत्वता । देवेषु च सवितर्मा-
नुषेषु च त्वं नो अत्र सुवतादनागसः ।, इति ।

पूरुषस्य भावः पूरुषत्वं पूरुषत्वमेव पूरुषत्वता । सा च प्रभूत्यतिबहुला देहेन्द्रियादिसंघातेषु पुरुषोऽहमस्मीतितादात्म्याभिधानभ्रान्तिरत्यन्तं दृढे-त्यर्थः । तथा सत्यचित्ती कर्तव्याकर्तव्ययोरज्ञानेन दीनैर्दक्षैर्विषयलम्पटतया दीनत्वं प्राप्तैः स्वस्वव्यापारकुशलैरिन्द्रियैर्दैव्ये जने देवतासंबन्धिनि शरीरे यच्चकृम यत्पापं वयं कृतवन्तः, हे सवितस्त्वं देवेषु मनुष्येषु चात्रास्मिन्कर्मणि नोऽस्माननागसः पापरहिता यथा भवामस्तथा सुवतात्प्रेरय ॥

अथ सारस्वतं चरुमित्यस्य पुरोनुवाक्यामाह—

चोदयित्री सूनृतानां चेतन्ती सुमती-
नाम् । यज्ञं दधे सरस्वती । , इति ।

सूनृतानां प्रियवाक्यानां(णां) चोदयित्री प्रेरयित्री सुमतीनां शोभनबुद्धीनामस्माकं कृत्यं चेतन्ती जानन्ती सरस्वती यज्ञमिमं दधे धारितवती ॥

तत्रैव याज्यामाह—

---

१ क. घ. ङ. च. 'रुपात्त' ।

( चातुर्मास्यगतवैश्वदेवाख्यपर्वविहितहविषां याज्यापुरोनुवाक्याभिधानम् )

पावीरवी कन्या चित्रायुः सरस्वती वीर-
पत्नी धियं धात् । ग्नाभिरच्छिद्रꣳ शरणꣳ
सजोषा दुराधर्षं गृणते शर्म यꣳसत् । , इति ।

सरस्वती धियं धादस्मदीये कर्मणि सावधानां बुद्धिं धारयतु । कीदृशी, पावीरवी पातॄन्वीरांश्च वयति जनयतीति पावीरवी । कन्या कमनीया । चित्रायुर्विचित्रं जीवनं यस्याः सा । वीरपत्नी वीराणां पालयित्री । ग्नाभिश्छन्दोभिर्युक्ता सरस्वती सजोषा यजमानेन समानप्रीतिः सती गृणते स्तुवते यजमानाय शर्म यंसत्सुखं प्रयच्छतु । कीदृशं शर्म, अच्छिद्रमविच्छिन्नं शरणं रक्षकं दुराधर्षमन्यैर्धर्षयितुमशक्यम् ॥

अथ पौष्णं चरुमित्यस्य पुरोनुवाक्यामाह—

पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः ।
पूषा वाजꣳ सनोतु नः । , इति ।

अयं पूषा नोऽस्माकं गा अन्वेतु रक्षणाय पृष्ठतो गच्छतु । किंचायं पूषाऽर्वतोऽश्वान्रक्षतु । पूषा नोऽस्मभ्यं वाजमन्नं सनोतु संपादयतु ॥

तत्रैव याज्यामाह—

शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अह-
नी द्यौरिवासि । विश्वा हि माया अवसि स्व-
धावो भद्रा ते पूषन्निह रातिरस्तु । , इति ।

हे पूषंस्ते तव शुक्रं शुद्धस्वरूपमन्यदनेकप्रकारम्, उदयकाले रक्तवर्णं रूपमन्यत्, मध्याह्नकाले श्वेतवर्णं रूपमन्यत्, इत्येवमनेकप्रकारत्वम् । तथा ते तव यजतं पूजनमप्यन्यत् । प्रातःकाले मित्रस्य चर्षणीधृत इत्यादिभिर्मन्त्रैः पूज्यसे मध्याह्ने त्वा सत्येनेत्यादिभिः । तथा त्वया निष्पादिते अहनी अपि विषुरूपे नानारूपे । अहःशब्दश्छत्रिन्यायेन [1]रात्रिमप्युपलक्षयति । अहः प्रकाशोपेतं रात्रिस्तमोयुक्तेति नानारूपत्वम् । एवं हि चित्रकार्य[2]कृदपि त्वं द्यौरिवासि । आकाशं यथैकरूपं तद्वत्त्वमपि पक्षपातराहित्यादेकरूपोऽसि । मीयन्ते पदार्था याभिश्चित्तवृत्तिभिस्ताश्चित्तवृत्तयो मायाः । कव्यदानवाचिना च स्वधाशब्देन कृत्स्नमप्यन्नमुपलक्ष्यते । हे स्वधावोऽन्नवन्विश्वा हि मायाः सर्वा

---

१ ख. च. °वं विचि° । २ ख. च. °र्थयुक्तोऽपि ।

अपि अन्यदीयचित्तवृत्तीरवसि रक्षसि । हे पूषन्निह कर्मणि ते तव रातिर्भद्राऽस्तु फलप्रदानं समीचीनं भवतु ॥

अथ मारुतं सप्तकपालमित्यस्य पुरोनुवाक्यामाह—

ते॒ऽव॑र्धन्त॒ स्वत॑वसो महित्व॒नाऽऽ नाकं॑ त॒स्थु-
रु॒रु च॑क्रिरे॒ सदः॑ । विष्णु॒र्यद्धाऽऽव॒द्वृष॑णं मद॒-
च्युतं॒ वयो॒ न सी॑द॒न्नधि॑ ब॒र्हिषि॑ प्रि॒ये । , इति ।

तवो बलं, स्वं स्वाधीनं तवो येषां ते स्वतवसः । तादृशास्ते मरुतो महित्वना महत्त्वेन स्वकीयेनावर्धन्त । ते मरुतो नाकं स्वर्गमातस्थुः प्राप्तवन्तः । उरु सदश्चक्रिरे स्वर्गे यजमानाय स्थानं कृतवन्तः । वृषणं कामानां वर्षकं, मदच्युतं हर्षक्षारकमत्यन्तं हर्षकारणमित्यर्थः । तादृशं यद्धर्हिर्मरुत्संबन्धि कर्म विष्णुर्ह विष्णुरेवाऽऽवत्पालितवांस्तस्मिन्प्रिये बर्हिषि मरुतोऽधिष्ठाय वयो न वय इव सीदन् । यथा पक्षिणः सायंकाले वृक्षे सीदन्ति तद्वदेव तिष्ठन्तीति ॥

तत्रैव याज्यामाह—

प्र चि॒त्रम॒र्कं गृ॑ण॒ते तु॒राय॒ मारु॑ताय॒ स्वत॑-
वसे भरध्वम् । ये सहां॑सि॒ सह॑सा॒ सह॑न्ते॒
रेज॑ते अग्ने पृथि॒वी म॒खेभ्यः॑ । , इति ।

हे ऋत्विग्यजमानाश्चित्रमर्कं विविधमर्चनं मारुताय मरुत्समूहाय प्रभरध्वं प्रकर्षेण संपादयत । कीदृशाय मारुताय, गृणते हविर्दानाय गृणते, तुराय शीघ्रगामिने(णे), स्वतवसे स्वाधीनबलाय[1] । हे ऋत्विग्यजमाना ये भवन्तः[3] सहसा मरुतां बलेन सहांसि वैरिबलानि सहन्तेऽभिभवन्ति[4] ते यूयं भरध्वमिति पूर्वत्रान्वयः । हेऽग्ने त्वमेव तत्पश्येत्यध्याहारः । किं द्रष्टव्यं तदाश्चर्यमिति तदुच्यते—इयं पृथिवी मखेभ्यो मारुतयज्ञेभ्यो रेजते कम्पते । कथं नामैतदीया यज्ञा निर्विघ्नेन समाप्यन्त इति प्रयत्नं करोति[5] एतदिदमिति ॥

अथ वैश्वदेवीमामिक्षामित्येतस्मिन्हविषि याज्यानुवाक्ययोः प्रतीके दर्शयति—

विश्वे॑ दे॒वा विश्वे॑ दे॒वाः । , इति ।

विश्वे देवा ऋतावृध इति पुरोनुवाक्या । विश्वे देवाः शृणुतेति याज्या । एतच्चोभयं नवोनवो भवतीत्येतस्मिन्ननुवाके व्याख्यातम् ॥

---

१ क. घ. ङ. 'र्षकार' । २ ख. च. 'य । ये । ३ ख. च. 'वन्त ऋत्विग्यजमानाः स' । ४ ख. च. 'वन्तीति । ५ ख. च. 'ति त' ।

(चातुर्मास्यगतवैश्वदेवाख्यपर्वविहितहविषां याज्यापुरोनुवाक्याभिधानम्)

द्यावापृथिव्यमेककपालमित्यस्य पुरोनुवाक्यामाह--

द्यावा नः पृथिवी इमꣳ सिध्रमद्य दिविस्पृ-
शम्। यज्ञं देवेषु यच्छताम्।, इति।

द्यावापृथिवी द्युदेवता पृथिवीदेवता चेत्युभे अद्यास्मिन्दिने नोऽस्म-दीयमिमं यज्ञं देवेषु समर्पयेताम्। कीदृशं यज्ञं, सिध्रं फलस्य साधकं, दिविस्पृशम्, अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठत इति न्यायेन स्वर्ग-स्पर्शयुक्तम्॥

तत्रैव याज्यामाह--

प्र पूर्वजे पितरा नव्यसीभिर्गीर्भिः कृणुध्वꣳ
सदने ऋतस्य। आ नो द्यावापृथिवी दैव्येन
जनेन यातं महि वां वरूथम्।, इति।

प्रपूर्वजे प्रथमोत्पन्ने द्यावापृथिव्यौ पितरा मातापितृसमाने "द्यौः पिता। पृथिवी माता।" इति श्रुत्यन्तरात्। हे ऋत्विग्यजमाना ऋतस्य सदने यज्ञस्य स्थाने नव्यसीभिरतिशयेन नूतनाभिर्गीर्भिर्मन्त्ररूपाभिर्वाग्भिः कृणुध्वं द्यावा-पृथिव्योः स्तुतिं कुरुध्वम्। हे द्यावापृथिव्यौ दैव्येन जनेन देवसंबन्धिना पुरुषसमूहेन सह नोऽस्मान्प्रत्यायातम्। वां युवयोः संबन्धि वरूथं यज्ञगृहं महि पूज्यम्॥

अथ तत्रैव स्विष्टकृतः पुरोनुवाक्यामाह—

अग्निꣳ स्तोमेन बोधय समिधानो अम-
र्त्यम्। हव्या देवेषु नो दधत्।, इति।

हे यजमान त्वं समिधानोऽग्निं दीपयन्नमर्त्यं मरणरहितमग्निं स्विष्टकृद्रूपं स्तोमेन स्तोत्रेण तोषयित्वाऽनेन प्रकारेण बोधय। केन प्रकारेणेति तदुच्यते—नोऽस्मदीयानि हव्या हवींषि देवेषु दधत्स्थापयेति॥

तत्रैव याज्यामाह—

स हव्यवाडमर्त्य उशिग्दूतश्चनो-
हितः। अग्निर्धिया समृण्वति।, इति।

स्विष्टकृद्रूपोऽग्निर्धिया करुणायुक्तेन चेतसा समृण्वति सम्यगिह प्राप्नोतु[1]।

---

1 ख. प्राप्नोति।

कीदृशोऽग्निः। हव्यं वहतीति हव्यवाट्। अमर्त्यो मरणरहितः। उशिगनुग्रह-पूर्वमस्मान्कामयमानः। दूतो देवानामाज्ञाकारी। चनोहितः, चनसां मनुष्याणां यजमानानां हितोऽभीष्टकारी ॥

अथ वाजिनो यजतीति विहिते कर्मणि याज्यानुवाक्ययोः प्रतीके दर्शयति—

शं नो भवन्तु वाजेवाजे । , इति ।

शं नो भवन्तु वाजिन इति पुरोनुवाक्या । वाजेवाजेऽवत वाजिन इति याज्या । एतच्चोभयं देवस्याह१ सवितुः प्रसव इत्यनुवाके व्याख्यातम् ॥

अत्र विनियोगसंग्रहः—

अथ याज्या वैश्वदेवे चातुर्मास्यादिपर्वणि ।
अग्ने सो अनुवाक्ये ते अग्नीषोमाज्यभागयोः ॥ १ ॥
अग्निर्भुवस्तथाऽऽग्नेये त्वं नो या ते च सौमिके ।
तत्सेति युग्मं सावित्रे चोद सारस्वते तथा ॥ २ ॥
पूषा पौष्णे मारुते ते विश्वे द्वे वैश्वदेविके ।
द्यावा द्यावापृथिव्ये स्यादग्निं स्विष्टकृतो यजेः ।
शं वाजे वाजिने मन्त्रा द्वाविंशतिरुदीरिताः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठक
एकादशोऽनुवाकः ॥ ११ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य
श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विर-
चिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
चतुर्थकाण्डे प्रथमः प्रपाठकः ॥ १ ॥

---

१ क. ख. च. यजि: ।

(अथ चतुर्थाष्टके द्वितीयः प्रपाठकः।)

(तत्र प्रथमोऽनुवाकः।)

हरिः ॐ।

विष्णोः क्रमोऽस्यभिमातिहा गायत्रं छन्द आ रोह पृथिवीमनु वि क्रमस्व निर्भक्तः स यं द्विष्मो विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभं छन्द आ रोहान्तरिक्षमनु वि क्रमस्व निर्भक्तः स यं द्विष्मो विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आ रोह दिवमनु वि क्रमस्व निर्भक्तः स यं द्विष्मो विष्णोः (१) क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभं छन्द आ रोह दिशोऽनु वि क्रमस्व निर्भक्तः स यं द्विष्मः। अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन्। सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः। अग्नेऽभ्यावर्तिन्नभि न आ वर्तस्वाऽऽयुषा वर्चसा सन्या मेधया प्रजया धनेन। अग्ने (२) अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः। तासां पोषस्य पोषेण पुनर्नो नष्टमा कृधि पुनर्नो रयिमा कृधि।

पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽयुषा ।
पुनर्नः पाहि विश्वतः । सह रय्या नि वर्त-
स्वाग्ने पिन्वस्व धारया । विश्वप्स्निया विश्वत-
स्परि । उदुत्तमं वरुण पाशमस्मदवाधमम्
( ३ ) वि मध्यमꣳ श्रथाय । अथा वयमा-
दित्य व्रते तवानागसो अदितये स्याम । आ
त्वाऽहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः । विश-
स्त्वा सर्वा वाञ्छन्त्वस्मिन्राष्ट्रमधि श्रय ।
अग्ने बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान्तमसो
ज्योतिषाऽगात् । अग्निर्भानुना रुशता स्वङ्ग
आ जातो विश्वा सद्मान्यप्राः । सीद त्वं मातु-
रस्याः ( ४ ) उपस्थे विश्वान्यग्ने वयुनानि
विद्वान् । मैनामर्चिषा मा तपसाऽभि शूशु-
चोऽन्तरस्याꣳ शुक्रज्योतिर्वि भाहि । अन्तरग्ने
रुचा त्वमुखायै सदने स्वे । तस्यास्त्वꣳ हरसा
तपञ्जातवेदः शिवो भव । शिवो भूत्वा मह्य-
मग्नेऽथो सीद शिवस्त्वम् । शिवाः कृत्वा
दिशः सर्वाः स्वां योनिमिहाऽसदः । हꣳसः
शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोण-

सव् । नृषद्वंरसद्दृंतसद्व्योमसदब्जा गोजा ऋंतजा अंद्रिजा ऋतं बृहत् (५) ॥

(दिवमनु वि क्रमस्व निर्भक्तः स यं द्विष्मो विष्णोर्धेनेनाग्नेऽग्रममस्याः शुचिषत्षोडश च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

(अथ चतुर्थाष्टके द्वितीयः प्रपाठकः ।)

---

(तत्र प्रथमोऽनुवाकः ।

---

हरिः ॐ ।

विष्णोः । क्रमः । असि । अभिमातिहेत्यंभि-माति—हा । गायत्रम् । छन्दः । एति । रोह । पृथिवीम् । अनु । वीति । क्रमस्व । निर्भक्त इति निः—भक्तः । सः । यम् । द्विष्मः । विष्णोः । क्रमः । असि । अभिशस्तिहेत्यंभिशस्ति—हा । त्रैष्टुभम् । छन्दः । एति । रोह । अन्तरिक्षम् । अनु । वीति । क्रमस्व । निर्भक्त इति निः—भक्तः । सः । यम् । द्विष्मः । विष्णोः । क्रमः । असि । अरा-तीयतः । हन्ता । जागतम् । छन्दः । एति । रोह । दिवम् । अनु । वीति । क्रमस्व । निर्भक्त इति निः—भक्तः । सः । यम् । द्विष्मः । विष्णोः (१) ।

क्रमः । असि । शत्रूयत इति शत्रु—यतः । हन्ता । आनुष्टुभमित्यानु—स्तुभम् । छन्दः । एति । रोह । दिशः । अनु । वीति । क्रमस्व । निर्भक्त इति निः—भक्तः । सः । यम् । द्विष्मः । अक्रन्दत् । अग्निः । स्तनयन् । इव । द्यौः । क्षाम । रेरिहत् । वीरुधः । समञ्जन्निति सम्—अञ्जन् । सद्यः । जज्ञानः । वीति । हि । ईम् । इद्धः । अख्यत् । एति । रोदसी इति । भानुना । भाति । अन्तः । अग्ने । अभ्यावर्तिन्नित्यभि—आवर्तिन् । अभीति । नः । एति । वर्तस्व । आयुषा । वर्चसा । सन्या । मेधया । प्रजयेति प्र—जया । धनेन । अग्ने (२) । अङ्गिरः । शतम् । ते । सन्तु । आवृत इत्या—वृतः । सहस्रम् । ते । उपावृत इत्युप—आवृतः । तासाम् । पोषस्य । पोषेण । पुनः । नः । नष्टम् । एति । कृधि । पुनः । नः । रयिम् । एति । कृधि । पुनः । ऊर्जा । नीति । वर्तस्व । पुनः । अग्ने । इषा । आयुषा । पुनः । नः । पाहि । विश्वतः । सह । रय्या । नीति । वर्तस्व । अग्ने । पिन्वस्व । धारया । विश्वप्स्न्येति विश्व—प्स्न्या । विश्वतः । परि । उदिति । उत्तममित्युत्—तमम् । वरुण । पाशम् । अस्मत् । अवेति । अध-

(आसन्द्यामुखाग्निस्थापनप्रतिपादनम्)

मम् (३)। वीति। मध्यमम्। श्रथाय। अथ।
वयम्। आदित्य। व्रते। तव। अनागसः। अदि-
तये। स्याम। एति। त्वा। अहार्षम्। अन्तः।
अभूः। ध्रुवः। तिष्ठ। अविचाचलिरित्यवि—चाच-
लिः। विशः। त्वा। सर्वाः। वाञ्छन्तु। अस्मिन्।
राष्ट्रम्। अधीति। श्रय। अग्रे। बृहन्। उषसाम्।
ऊर्ध्वः। अस्थात्। निर्जग्मिवानिति निः—जग्मि-
वान्। तमसः। ज्योतिषा। एति। अगात्। अग्निः।
भानुना। रुशता। स्वङ्ग इति सु—अङ्गः। एति।
जातः। विश्वा। सद्मानि। अप्राः। सीद। त्वम्।
मातुः। अस्याः (४)। उपस्थ इत्युप—स्थे।
विश्वानि। अग्ने। वयुनानि। विद्वान्। मा। एना-
म्। अर्चिषा। मा। तपसा। अभीति। शूशुचः।
अन्तः। अस्याम्। शुक्रज्योतिरिति शुक्र—ज्योतिः।
वीति। भाहि। अन्तः। अग्ने। रुचा। त्वम्। उखायै।
सदने। स्वे। तस्याः। त्वम्। हरसा। तपन्।
जातवेद इति जात—वेदः। शिवः। भव। शिवः।
भूत्वा। मह्यम्। अग्ने। अथो इति। सीद। शिवः।
त्वम्। शिवाः। कृत्वा। दिशः। सर्वाः। स्वाम्।
योनिम्। इह। एति। असदः। हंसः। शुचिष-

दिति शुचि—सत् । वसुः । अन्तरिक्षसदित्यन्तरिक्ष—सत् । होता । वेदिषदिति वेदि—सत् । अतिथिः । दुरोणसदिति दुरोण—सत् । नृषदिति नृ—सत् । वरसदिति वर—सत् । ऋतसदित्यृत—सत् । व्योमसदिति व्योम—सत् । अब्जा इत्यप्—जाः । गोजा इति गो—जाः । ऋतजा इत्यृत—जाः । अद्रिजा इत्यद्रि—जाः । ऋतम् । बृहत् ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ चतुर्थकाण्डे द्वितीयः प्रपाठकः । )

---

तत्र प्रथमोऽनुवाकः ।

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
आद्यप्रपाठके ह्युख्यो योऽग्निः सोऽयं प्रपञ्चितः ।
प्रपाठके द्वितीये तु स्याद्देवयजनग्रहः ॥ २ ॥
चयनार्थस्तत्र चानुवाका एकादशेरिताः ।
आसन्द्यां स्थापनं वात्सप्रसूक्तेन ह्युपस्थितिः ॥ ३ ॥
+ उखाग्नेर्नयनं गार्हपत्याग्निचयनं भुवः ।
कर्षणं चौषधावापो लोष्टक्षेपादिकं तथा ॥ ४ ॥
रुक्मादेरुपधानं स्वयमातृण्णादिकस्य च ।
निधानं पशुशीर्षाणां याज्या अर्था उदीरिताः ॥ ५ ॥

तत्र प्रथमानुवाक आसन्द्यामुखाग्निस्थापनं प्रतिपाद्यते ।

कल्पः—" उपरि नाभेर्धारयमाणो विष्णोः क्रमोऽसीति चतुरो विष्णुक्रमान्प्राचः क्रामति " इति ।

पाठस्तु—

---

+ उखाग्नेश्चयनमिति ख. पुस्तके टिप्पण्यां पाठः ।

( आसन्द्यामुखाभिस्थापनप्रतिपादनम् )

विष्णोः क्रमोऽस्यभिमातिहा गायत्रं छन्द आ रोह पृथिवीमनु वि क्रमस्व निर्भक्तः स यं द्विष्मो विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभं छन्द आ रोहान्तरिक्षमनु वि क्रमस्व निर्भक्तः स यं द्विष्मो विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आ रोह दिवमनु वि क्रमस्व निर्भक्तः स यं द्विष्मो विष्णोः क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभं छन्द आ रोह दिशोऽनु वि क्रमस्व निर्भक्तः स यं द्विष्मः।, इति।

यज्ञप्रयोगं कृत्स्नं व्याप्नोतीति विष्णुर्यजमानः। यद्वा विष्णुना परमेश्वरेणाभेदोपचारं कृत्वा विष्णुरित्युच्यते। हे प्रथमपादविन्यास त्वं विष्णोरभिमातिहा पापघाती क्रमोऽसि। पाप्मा वा अभिमातिरिति श्रुत्यन्तरम्। तादृशस्त्वं गायत्रं छन्द आरोहानुग्राहकत्वेन स्वी कुरु। ततः पृथिवीमनु विक्रमस्व भूदेवतारूपमिमं प्रदेशं विशेषेण प्राप्नुहि। यमभिमातिं वयं द्विष्मः सोऽयं निर्भक्तोऽस्मात्प्रदेशान्निःसारितः। एवमुत्तरेष्वपि योज्यम्। अभिशस्तिहा मिथ्यापवादघाती। अरातिरवश्यदातव्यस्य दानाभावस्तमात्मन इच्छतीत्यरातीयंस्तस्य हन्ता विनाशकः। प्रहारेण हन्तृत्वं शत्रुत्वं तदिच्छतीति शत्रूयंस्तस्य हन्ता विनाशकः। अत्र सर्वत्र यजमानः स्वात्मानं विष्णुत्वेन भावयेत्। चतुर्णां प्रक्रमाणां प्रदेशान्पृथिव्यादिलोकरूपत्वेन भावयेत्। गायत्रादिच्छन्दोभिमानिदेवतास्तेषां प्रक्रमाणामनुग्राहिकाः॥

एतैर्मन्त्रैः साध्यान्विष्णुक्रमान्विधत्ते—

"विष्णुमुखा वै देवाश्छन्दोभिरिमाँल्लोकाननपजय्यमभ्यजयन्यद्विष्णुक्रमान्क्रमते विष्णुरेव भूत्वा यजमानश्छन्दोभिरिमाँल्लोकाननपजय्यमभि जयति विष्णोः क्रमोऽस्यभिमातिहेत्याह गायत्री वै पृथिवी त्रैष्टुभमन्तरिक्षं जागती द्यौरानुष्टुभीर्दिशश्छन्दोभिरेवेमाँल्लोकान्यथापूर्वमभि जयति" [ सं० का० ५ प्र० २ अ० १ ] इति।

देवाः पूर्वं स्वेषु विष्णुमेव मुख्यं कृत्वा छन्दोभिमानिदेवैः सहिता अनपजय्यमन्यैर्जेतुं यथा न शक्यन्ते तथेमाँल्लोकानभ्यजयन्। अतो यजमानो विष्णुक्रमैस्तथा जयति। गायत्रादिच्छन्दोदेवानां पृथिव्यादिलोकस्वामित्वेन

तैः सह लोकानां जेतुं शक्यतया मन्त्रेषु गायत्रं छन्द आरोहेत्यादि पठितमित्यभिप्रायः ॥

कल्पः—" अक्रन्ददग्निरित्येतामनुद्रुत्य " इति ।

पाठस्तु—

अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः । , इति ।

अयमग्निरक्रन्ददस्मदनिष्टनिवारणार्थं गर्जतु । किमिव, स्तनयन्निव द्यौः । यथा द्युलोकस्थो मेघः सस्यशोषभीतिनिवारणाय स्तनयति तद्वत् । किं कुर्वन् । क्षाम दाहकमस्मद्विरुद्धं रेरिहल्लेलिहानः, वीरुधः समञ्जन्पुष्पफलसमृद्धलतावदस्मदनुकूलानि सम्यगभिव्यञ्जयन् । हि यस्माज्जज्ञान उत्पद्यमानः सद्य ईं तदानीमेवेद्धो दीप्तः सन्विविधं जगदख्यत्प्रख्यापयति । रोदसी द्यावापृथिव्योरन्तर्भानुना रश्मिना स्वयमाभाति समन्तात्प्रकाशते ॥

एतस्य मन्त्रस्यानुवचनं विधत्ते—

" प्रजापतिरग्निमसृजत सोऽस्मात्सृष्टः पराङैत्तमेतयाऽन्वैदक्रन्ददिति तया वै सोऽग्नेः प्रियं धामावारुन्ध यदेतामन्वाहाग्नेरेवैतया प्रियं धामाव रुन्धे " [ सं० का० ५ प्र० २ अ० १ ] इति[2] ।

स सृष्टोऽग्निरस्मात्प्रजापतेः पराङ्मावृत्तिरहित ऐदगच्छत् । अक्रन्ददित्येतयर्चा तमग्निमनुगम्य स प्रजापतिस्तयैवर्चाऽग्नेः प्रियं स्थानं प्राप्तवान् । अत एवास्या अनुवचनमग्नेः प्रियस्य स्थानस्य संपादनाय भवति ॥

कल्पः—" अग्नेऽभ्यावर्तिन्निति चतसृभिः प्रदक्षिणमावर्तते " इति ।

तत्र प्रथमामाह—

अग्नेऽभ्यावर्तिन्नभि न आ वर्तस्वाऽऽयुषा वर्चसा सन्या मेधया प्रजया धनेन । , इति ।

आभिमुख्येनाऽऽवर्तितुं शीलमस्यास्तीत्यभ्यावर्ती, तादृश हेऽग्न आयुरादिभिः सह नोऽस्मानभिलक्ष्याऽऽवर्तस्व । आयुरपमृत्युराहितं, वर्चः कान्तिर्बलं वा, सनिर्धनदानं, मेधा श्रुतार्थधारणशक्तिः । प्रजा पुत्रादिः । धनं सुवर्णम् । धनशब्देन संपादयितव्यमुच्यते । सनिशब्देन संपादितस्य बन्धुभ्यः प्रदानशक्तिरुच्यते ॥

---

१ ख. च. °भीर्सि निवारयति । २ ख. च. °ति सृष्टः सोऽग्नि° ।

( आसन्द्यामुखाग्निस्थापनप्रतिपादनम् )

अथ द्वितीयामाह—

अग्ने अङ्गिरः शतं ते सन्त्वावृतः सहस्रं
त उपावृतः । तासां पोषस्य पोषेण पुनर्नो
नष्टमा कृधि पुनर्नो रयिमा कृधि । , इति ।

हेऽङ्गिरोऽङ्गसौष्ठवयुक्ताग्ने ते तवाऽऽवृतः शतं सन्तु । आवृतिशक्तयः शतसंख्याका भवन्तु । तथा ते तवोपावृत उपावृतिशक्तयः सहस्रसंख्याका भवन्तु । स्वस्यैवाऽऽवर्तनमावृत् । समीपवर्तिनां पुरुषाणां द्रव्यविशेषाणां चाऽऽवर्तनमुपावृत् । अस्मासु स्नेहातिशयात्त्वमपि पुनः पुनरावर्तस्व, त्वदीयाः पुरुषास्त्वदीयानि च द्रव्याणि पुनः पुनरावर्तन्तामित्यर्थः । तासामावृतिशक्तीनां शतसहस्रसंख्याकानां यः पोषः समृद्धिस्तस्यापि पोषस्यान्यः पोषोऽयुतलक्षादिसंख्याकाभिवृद्धिस्तादृशेन पोषेण नोऽस्मदीयं नष्टं धनं पुनर्भूयोऽप्याकृध्यावृतं कुरु । पुनर्भूयोऽपि रयिं पूर्वमसंपादितं धनमाकृधि सर्वतः संपादितं कुरु ॥

अथ तृतीयामाह—

पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽ-
युषा । पुनर्नः पाहि विश्वतः ।,इति ।

हेऽग्ने त्वमूर्जा क्षीरादिरसेन सह पुनर्निवर्तस्वात्राऽऽगच्छ । इषाऽन्नेनाऽऽयुषा सह पुनरागच्छ । नोऽस्मान्पुनः पुनः कृताद्विश्वतः सर्वस्मादपराधात्पाहि ॥

अथ चतुर्थीमाह—

सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया ।
विश्वप्स्निया विश्वतस्परि । , इति ।

हेऽग्ने रय्या धनेन सह निवर्तस्व । प्सा भक्षण इति धातुः । विश्वैः सर्वैः प्सायते भक्ष्यते पीयत इति विश्वप्स्नी तादृश्या वृष्टिधारया विश्वतस्परि सर्वेषां तृणधान्यलतापादपानामुपरि पिन्वस्व सिञ्च ॥

एतैर्मन्त्रैरावर्तनं विधत्ते—

" ईश्वरो वा एष पराङ्प्रदघो यो विष्णुक्रमान्क्रमते चतसृभिरा वर्तते चत्वारि छन्दांसि छन्दांसि खलु वा अग्नेः प्रिया तनूः प्रियामेवास्य तनुवमभि पर्यावर्तते " [ सं० का० ५ प्र० २ अ० १ ] इति ।

---

१ ख. 'वैसं' ।

यो यजमानो विष्णुक्रमानाचरत्येष पराङ्गावृत्तिरहितः प्रदघ ईश्वरः प्रकर्षेण गन्तुं समर्थः पुनरावृत्तिं न लभत इत्यर्थः। अत आवृत्तिलाभाय चतसृभि[1]र्ऋग्भिरावृत्तिं कुर्यात्। गायत्री त्रिष्टुब्जगत्यनुष्टुबिति चतुर्णां छन्दसामभ्यादानादावुपात्तत्वादग्निशरीरत्वम्॥

आवृत्तौ प्रादक्षिण्यं विधत्ते—

"दक्षिणा पर्यावर्तते स्वमेव वीर्यमनु पर्यावर्तते तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवाऽऽवृतमनु पर्यावर्तते" [सं० का० ५ प्र० २ अ० १] इति।

दक्षिणा प्रादक्षिण्येन, दक्षिणभागमवस्थाप्य वामभागस्य परिभ्रमणं प्रादक्षिण्यम्। पुरुषस्य दक्षिणभागे सामर्थ्यातिशयसद्भावात्तदेवानुसृत्याऽऽवृत्तिः कृता भवति। यस्माद्दक्षिणभागे वीर्यं श्रुतेरभिमतं भवति तस्माल्लोकेऽपि सर्वेषु व्यापारेषु दक्षिणहस्तस्यैव वीर्यातिशय उपलभ्यते। किंच, आदित्यो मेरुं प्रदक्षिणी करोति तदप्यत्रानुसृतं भवति॥

कल्पः—"उदुत्तममिति शिक्यपाशमुन्मुच्य" इति।

पाठस्तु—

उदुत्तमं वरुण पाशमस्मदवाधमं वि
मध्यमꣳ श्रथाय। अथा वयमादित्य व्रते
तवानागसो अदितये स्याम।, इति।

हे वरुणोत्तममुत्तमाङ्गे शिरसि स्थापितं त्वदीयं पाशमु(मस्मदस्मत्त उ)त्कृष्य श्रथाय विनाशय। अधममधमाङ्गे स्थापितं पादप्रदेशे स्थापितं पाशमवकृष्य विनाशय। मध्यमप्रदेशे स्थापितं पाशं विच्छेदय। अथ पाशत्रयविनाशानन्तरं हे आदित्य सूर्यसदृश वरुण वयमनागसः पापरहिताः सन्तस्तव व्रते त्वदीये कर्मणि अदितयेऽखण्डितत्वाय स्याम योग्या भवेम॥

अनेन मन्त्रेण शिक्यपाशोन्मोकमभिप्रेत्य मन्त्रगतस्य वरुणपाशस्य प्रसङ्गं दर्शयति—

"शुनःशेपमाजीगर्तिं वरुणोऽगृह्णात्स एतां वारुणीमपश्यत्तया वै स आत्मानं वरुणपाशादमुञ्चद्वरुणो वा एतं गृह्णाति य उखां प्रतिमुञ्चत उदुत्तमं वरुण पाशमस्मदित्याहाऽऽत्मानमेवैतया वरुणपाशान्मुञ्चति" [सं० का० ५ प्र० २ अ० १] इति।

---

१ ख. च. °भिरभेऽभ्यावर्तीभिस्यादिभिर्ऋ°।

(आसन्द्यामुख्याग्निस्थापनप्रतिपादनम्)

शुनःशेपो नाम ऋषिः स चाजीगर्तस्य पुत्रस्तं कदाचिद्वरुणोऽगृह्णाद्गृहीतवान्। वरुणगृहीतत्वं च जलोदरव्याधिनाऽभिव्यज्यते। स च शुनःशेपस्तत्परिहारायोदुत्तममित्येतां वारुणीमृचमपश्यत्। ततस्तयैवर्चा स शुनःशेपः स्वात्मानं वरुणपाशान्मोचितवान्। अतोऽत्रापि यो यजमान उखां प्रतिमुञ्चते सोऽयं वरुणगृहीतः संस्तत्परिहारायोदुत्तममित्यनया शिक्यपाशमुन्मुच्य तन्मन्त्रप्रसादेन वरुणपाशान्मुक्तो भवति॥

कल्पः—"आ त्वाऽहार्षमित्याहृत्य" इति।

पाठस्तु—

आ त्वाऽहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः। विशस्त्वा सर्वा वाञ्छन्त्वस्मिन्राष्ट्रमधि श्रय।, इति।

हेऽग्ने त्वामाहार्षमाहृतवानस्मि। त्वं चोखाया अन्तरभूरवस्थितोऽसि। अविचाचलिरत्यन्तं चलनरहितो ध्रुवस्तिष्ठ स्थिरस्तिष्ठ। सर्वा विशः प्रजास्त्वां वाञ्छन्तु। अस्मिन्यजमाने राष्ट्रमधिश्रयाधिकं स्थापय॥

अस्य मन्त्रस्य प्रथमपादे वह्नेराहरणं प्रसिद्धमेव प्रतीयत इति दर्शयति—

"आ त्वाऽहार्षमित्याहाऽऽह्येनꣳ हरति" [सं० का० ५ प्र० २ अ० १] इति॥

द्वितीयपादेऽन्वयव्यतिरेकाभ्यां प्रतिष्ठा सिध्यतीत्याह—

"ध्रुवस्तिष्ठाविचाचलिरित्याह प्रतिष्ठित्यै" [सं० का० ५ प्र० २ अ० १] इति॥

तृतीयपादे प्रजासमृद्धिं चतुर्थपादे राज्यस्थैर्यं च क्रमेण दर्शयति—

"विशस्त्वा सर्वा वाञ्छन्त्वित्याह विशैवैनꣳ समर्धयत्यस्मिन्राष्ट्रमधि श्रयेत्याह राष्ट्रमेवास्मिन्ध्रुवमकः" [सं० का० ५ प्र० २ अ० १] इति।

विशा प्रजया। एनं यजमानम्। अस्मिन्यजमाने। अकः करोति॥

चतुर्थपादपाठकाले यजमानविषयं काम्यं मनसा ध्यानं विधत्ते—

"यं कामयेत राष्ट्रꣳ स्यादिति तं मनसा ध्यायेद्राष्ट्रमेव भवति" [सं० का० ५ प्र० २ अ० १] इति।

यं यजमानमुद्दिश्य राज्यमस्त्वित कामयेताध्वर्युस्तं चतुर्थपादोच्चारणकाले ध्यायेत्॥

---

१ ख. च. 'ष्ट्रमिदम'।

कल्पः—" उपतिष्ठतेऽग्रे बृहन्नुषसामूर्ध्वो अस्थात् " इति ।

पाठस्तु—

अग्रे बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान्त-
मसो ज्योतिषाऽगात् । अग्निर्भानुना रुशता
स्वङ्ग आ जातो विश्वा सद्मान्यप्राः । , इति ।

अयमग्निर्बृहन्नुषसामग्र उषसां मुख ऊर्ध्वोऽस्थात्, अग्निहोत्रादौ बोध्यमान उत्तिष्ठति । ज्योतिषा स्वकीयेन तेजसा तमसो निर्जगन्वान्निर्गतः सन्नागात् । कीदृशोऽग्निः । रुशता तमो हिंसता भानुना रश्मिना स्वङ्गः शोभनशरीरः । किंच जात उत्पन्नमात्र एव विश्वा सद्मानि सर्वाणि स्थानानि आप्राः स्वकीयेन तेजसा सर्वत्र पूरितवान् ॥

अस्य मन्त्रस्य प्रथमार्धे भागत्रयं क्रमेण व्याचष्टे—

" अग्रे बृहन्नुषसामूर्ध्वो अस्थादित्याहाग्रमेवैनꣳ समानानां करोति निर्जगन्वान्तमस इत्याह तम एवास्मादप हन्ति ज्योतिषाऽगादित्याह ज्योतिरेवास्मिन्दधाति " [ सं० का० ५ प्र० २ अ० १ ] इति ।

कल्पः—" सीद त्वं मातुरस्या उपस्थ इति तस्यां चतसृभिरुख्यं सादयति " इति ।

औदुम्बर्या(रा)सन्द्याः प्रकृतत्वात्सैव तस्यामिति परामृश्यते ॥

तत्र प्रथमामाह—

सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् । मैनामर्चिषा मा तपसाऽभि
शूशुचोऽन्तरस्याꣳ शुक्रज्योतिर्वि भाहि । , इति ।

हेऽग्ने त्वं मातृसमानाया अस्या आसन्द्या उखाया उपस्थ उत्सङ्गे सीदोपविश । कीदृशस्त्वं, विश्वानि वयुनानि सर्वाञ्ज्ञानोपायान्विद्वान् । एनांमुखामर्चिषा त्वदीयदीप्त्या मा शूशुचोऽत्यन्तं मा दीपय । तपसा संतापेनापि माऽभिशूशुचः । अर्चिः कारणं, तपः कार्यम् । कारणेनैष तापो भवति । कार्येण तु भूयान्, तदुभयं मा कुर्वित्यर्थः । अस्यामुखायामन्तः शुक्रज्योतिर्निर्मलप्रकाशः सन्विभाहि विशेषेण दीप्यस्व ॥

अथ द्वितीयामाह—

---

१ ख. च. 'न्या उप' । २ ख. च. 'नामासन्दीम' ।

(आसन्द्यामुखाग्निस्थापनप्रतिपादनम्)

अन्तरग्ने रुचा त्वमुखायै सदने स्वे । तस्या-
स्त्वꣳ हरसा तपञ्जातवेदः शिवो भव ।, इति ।

हेऽग्न उखायै तस्या उखाया अन्तर्मध्ये स्वे सदने स्वकीये स्थाने रुचा दीप्त्या युज्यस्व। हे जातवेदस्त्वं तस्या उखायाः शिवो भव सुखप्रदो भव। किं कुर्वन्हरसा तेजसा तपञ्ज्वलन् ॥

अथ तृतीयामाह—

शिवो भूत्वा मह्यमग्नेऽथो सीद शिव-
स्त्वम् । शिवाः कृत्वा दिशः
सर्वाः स्वां योनिमिहाऽसदः ।, इति ।

हेऽग्ने मह्यं मदर्थं शिवः शान्तो भूत्वाऽथो अनन्तरं त्वं शिवः सीद सर्वान्प्रति शान्तः सन्नुपविश। सर्वा दिशः शान्ताः कृत्वेहास्यामुखायां स्वां योनिं स्वकीयं स्थानमासद आगत्योपविश ॥

अथ चतुर्थीमाह—

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदति-
थिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा
गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥, इति ॥

हन्ति स्वयमाहवनीयादिदेशेषु गच्छतीति वा वैरिणं हिनस्तीति वा हंसोऽयमग्निः । शुचौ यजने सीदतीति शुचिषत् । यजमानं वासयतीति वसुः। अन्तरिक्षे धूमज्वालारूपेण सीदतीत्यन्तरिक्षसत्। होता देवानामाह्वाता। वेद्यां यज्ञसंबन्धिन्यां सीदतीति वेदिषत् । अतिथिर्दुरोणसदतिथिसमानः सन्दुरोणेषु यजमानगृहेषु सीदतीति दुरोणसत् । नृषु मनुष्येषु जठराग्निरूपेण सीदतीति नृषत् । वरे श्रेष्ठे श्रोत्रियगृहे सीदतीति वरसत् । ऋते यज्ञे तन्निष्पादकत्वेन सीदतीति ऋतसत्। व्योमन्याकाशे सूर्यरूपेण सीदतीति व्योमसत्। अप्सु वृष्टिधारारूपासु वैद्युतरूपेण जायते प्रादुर्भवतीत्यब्जाः। गोकार्ये घृते ज्वालारूपेण जायते व्यज्यत इति गोजाः । ऋतार्थं यज्ञार्थमेव जातत्वादृतजाः । अद्रौ पर्वते दावानलरूपेण जायत इत्यद्रिजाः। ईदृशोऽग्निर्बृहद्तं प्रौढमग्निचयनोपेतं यज्ञं निष्पादयत्विति शेषः ॥

---

१ ख. च. आसन्द्याः । २ च. °स्यामासन्द्यां स्वां । ३ क. घ. ङ. °जमाने ।

एतन्मन्त्रसाध्यमग्निस्थापनं विधत्ते—

" चतसृभिः सादयति चत्वारि छन्दाꣳसि छन्दोभिरेव " [सं० का० ५ प्र० २ अ० १] इति ।

सादयतीत्यनुवर्तते । सीद त्वं मातुरित्यादिभिश्चतसृभिरौदुम्बर्यामुख्याग्निं स्थापयेत् । छन्दोभिरेव स्थापितवान्भवति ॥

हꣳस इत्यादिकायामुत्तमायामृचि च्छन्दोविशेषं[1] प्रशंसति—

" अतिच्छन्दसोत्तमया वर्ष्म वा एषा छन्दसां यदतिच्छन्दा वर्ष्मैवैनꣳ समानानां करोति " [ सं० का० ५ प्र० २ अ० १ ] इति ।

अतिच्छन्दस्यन्यच्छन्दसामन्तर्भावात्सर्वेषामन्येषां छन्दसामियमतिच्छन्दा[2] ऋक्शरीरम् । अ(य)त ईदृश्योत्तमया सादनेनैनं यजमानं समानानामन्येषां पुरुषाणां शरीरस्थानीयमेव करोति, तस्मादनयोत्तमया सादयति ॥

अत्रोत्तमायां ये बहवः सच्छब्दाः शुचिषदित्यादयस्तान्प्रशंसति—

" सद्वती भवति सत्त्वमेवैनं गमयति " [ सं०का०५प्र०२अ०१ ] इति[3] ।

ऋचो बहुभिः सच्छब्दैरुपेतत्वेनैनं[4] यजमानं सत्त्वं चिरकालावस्थत्वं[5] गमयति प्रापयति ॥

अत्र विनियोगसंग्रहः—

विष्णोश्चतुर्भिराक्रामेदक्रन्देत्यनुवक्त्यथ ।
अग्ने चतुर्भिरावृत्त उदु पाशं विमुञ्चति ॥ १ ॥
आ त्वोख्यमाहरेदग्रेऽभ्युपस्थाय चतुष्टयात् ।
सीदेत्यादेस्तथाऽऽसन्द्यां सादयेत्षोडशोदिताः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके
प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ चतर्थाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः । )

---

दि॒वस्परि॑ प्रथ॒मं ज॑ज्ञे अ॒ग्निर॒स्मद्द्वि॒तीयं॒ परि॑ जा॒तवे॑दाः । तृ॒तीय॑म॒प्सु नृ॒मणा॒ अज॑स्र-

---

१ क. घ. ङ. °विषयं प्र° । २ ख. च. °च्छन्दोयुक्तर्गतिच्छन्दाः शरी° । ३ ख. च. °ति, हंस इत्यादिकाया ऋ° । ४ ख. च. °तत्वात्सैव सद्वती । एनं । ५ ख. च. °वस्थायित्वं प्रा° ।

मिन्धान एनं जरते स्वाधीः । विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा । विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ । समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् । तृतीये त्वा (१) रजसि तस्थिवाꣳसमृतस्य योनौ महिषा अहिन्वन् । अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः । उशिक्पावको अरतिः सुमेधा मर्तेष्वग्निरमृतो नि धायि । इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् । विश्वस्य केतुर्भुवनस्य गर्भ आ (२) रोदसी अपृणाज्जायमानः । वीडुं चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च । श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः । वसोः सूनुः सहसो अप्सु राजा वि भात्यग्र उषसामिधानः । यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने । प्र तं नय प्रतरां वस्यो अच्छाभि द्युम्नं देवभक्तं यविष्ठ । आ (३) तं भज

सौश्रवसेष्वग्न उक्थउक्थ आ भज शस्यमाने। प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनदुदुज्जनित्वैः। त्वामग्ने यजमाना अनु द्यून्विश्वा वसूनि दधिरे वार्याणि। त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो वि वव्रुः। दृशानो रुक्म उर्व्या व्यद्यौदुर्मर्षमायुः श्रिये रुचानः। अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः (४)॥

(तृतीये त्वा गर्भे आ यविष्ठाऽऽ यच्चत्वारिं च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

(अथ चतुर्थाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः।)

---

दिवः। परीति। प्रथमम्। जज्ञे। अग्निः। अस्मत्। द्वितीयम्। परीति। जातवेदा इति जात—वेदाः। तृतीयम्। अप्स्वित्यप्—सु। नृमणा इति नृ—मनाः। अजस्रम्। इन्धानः। एनम्। जरते। स्वाधीरिति स्व—धीः। विद्म। ते। अग्ने। त्रेधा। त्रयाणि। विद्म। ते। सद्म। विभृतमिति वि—भृतम्। पुरुत्रेति पुरु—त्रा। विद्म। ते। नाम।

परमम्। गुहा। यत्। विद्म। तम्। उत्सम्। यतः। आजगन्थेत्या—जगन्थ। समुद्रे। त्वा। नृमणा इति नृ—मनाः। अप्स्वित्यप्—सु। अन्तः। नृचक्षा इति नृ—चक्षाः। ईधे। दिवः। अग्ने। ऊधन्। तृतीये। त्वा (१)। रजसि। तस्थिवाꣳसम्। ऋतस्य। योनौ। महिषाः। अहिन्वन्। अक्रन्दत्। अग्निः। स्तनयन्। इव। द्यौः। क्षाम। रेरिहत्। वीरुधः। समञ्जन्निति सम्—अञ्जन्। सद्यः। जज्ञानः। वीति। हि। ईम्। इद्धः। अख्यत्। एति। रोदसी इति। भानुना। भाति। अन्तः। उशिक्। पावकः। अरतिः। सुमेधा इति सु—मेधाः। मर्तेषु। अग्निः। अमृतः। नीति। धायि। इयर्ति। धूमम्। अरुषम्। भरिभ्रत्। उदिति। शुक्रेण। शोचिषा। द्याम्। इनक्षत्। विश्वस्य। केतुः। भुवनस्य। गर्भः। एति (२)। रोदसी इति। अपृणात्। जायमानः। वीडुम्। चित्। अद्रिम्। अभिनत्। परायन्निति परा—यन्। जनाः। यत्। अग्निम्। अयजन्त। पञ्च। श्रीणाम्। उदारः। धरुणः। रयीणाम्। मनीषाणाम्। प्रार्पण इति प्र—अर्पणः। सोमगोपा इति सोम—गोपाः। वसोः। सूनुः।

सहंसः । अप्स्वित्यंप्—सु । राजां । वीतिं । भाति । अग्रें । उषसांम् । इधानः । यः । ते । अद्य । कृणवंत् । भद्रशोच इतिं भद्र—शोचे । अपूपम् । देव । घृतवंन्तमितिं घृत—वन्तम् । अग्ने । प्रेतिं । तम् । नय । प्रतरामितिं प्र—तराम् । वस्यः । अच्छं । अभीतिं । द्युम्नम् । देवभंक्तमितिं देव—भक्तम् । यविष्ठ । एतिं ( ३ ) । तम् । भज । सौश्रवसेषुं । अग्ने । उक्थउंक्थ इत्युक्थे—उक्थे । एतिं । भज । शस्यमांने । प्रियः । सूर्यें । प्रियः । अग्ना । भवाति । उदितिं । जातेनं । भिनदंत् । उदितिं । जनित्वैः । त्वाम् । अग्ने । यजंमानाः । अन्वितिं । द्यून् । विश्वां । वसूंनि । दधिरे । वार्याणि । त्वयां । सह । द्रविंणम् । इच्छमांनाः । व्रजम् । गोमंन्तमिति गो—मन्तम् । उशिजंः । वीतिं । वव्रुः । दृशानः । रुक्मः । उर्व्या । वीतिं । अद्यौत् । दुर्मर्षमितिं दुः—मर्षम् । आयुः । श्रिये । रुचानः । अग्निः । अमृतः । अभवत् । वयोंभिरिति वयः—भिः । यत् । एनम् । द्यौः । अजंनयत् । सुरेता इतिं सु—रेताः ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

———

( आसन्दीस्थापिताग्नेरुपस्थानम् )

( अथ चतुर्थकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाकः । )

---

प्रथमेऽनुवाके वह्नेरासन्द्यां स्थापनमुक्तम् । द्वितीये तस्याग्नेरुपस्थानमुच्यते । कल्पः—" दिवस्परीत्येकादशभिर्द्वादशभिस्त्रयोदशभिर्वा वात्सप्रेणोपतिष्ठते पूर्वेद्युर्विष्णुक्रमान्क्रामत्युत्तरेद्युरुपतिष्ठत एवं सदा कुर्याद्यदहः सोमं क्रीणीयात्त-दहरुभयं समस्येत्प्र च क्रामेदुप च तिष्ठति " इति ।

तत्र प्रथमामाह—

दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः । तृतीयमप्सु नृमणा अजस्र-मिन्धान एनं जरते स्वाधीः । , इति ।

अग्निः प्रथमं दिवस्परि द्युलोकस्योपरि जज्ञे सूर्यरूपेणोत्पन्नः । अस्मत्पर्यस्मदी-यस्य मनुष्यलोकस्योपरि जातवेदा द्वितीयं जज्ञे प्रसिद्धवह्निरूपेण द्वितीयं जन्म प्राप्तवान् । अप्सु समुद्रे तृतीयं जज्ञे वडवानलरूपेणोत्पन्नः । अजस्रं त्रिष्वपि जन्मसु नृमणा नृषु यजमानेषु मनोऽनुग्रहबुद्धिर्यस्यासौ नृमणाः । एनमीदृशम-ग्निमिन्धानः पुरोडाशादिभिर्दीपयन्स्वाधीः स्वायत्तचित्तो जरते जीर्यते जरा-पर्यन्तं परिचरतीत्यर्थः ॥

अथ द्वितीयामाह—

विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा । विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ । , इति ।

हेऽग्ने यानि पूर्वस्मिन्मन्त्रे दिवस्परीत्यादिना त्रेधा स्वरूपाण्युक्तानि आदित्या-ग्निवडवानलरूपाणि तानि त्रयाणि त्रित्वसंख्याकानि रूपाणि वयं विद्म ज्ञा-तुमिच्छाम । किंच ते तव पुरुत्रा पुरुषु प्रदेशेषु गार्हपत्याहवनीयान्वाहार्यपच-नाग्नीध्रीयशामित्ररूपेषु सद्म विभृतमवस्थानं संपादितं तदपि विद्म ज्ञातुमि-च्छाम । किंच ते तव परममुत्कृष्टं गुहा गुह्यं गोप्यं देवेद्ध मन्विद्धेत्यादिमन्त्रप्र-तिपाद्यं नाम यदस्ति तदपि विद्म । देवेद्धादीनां नामत्वं मन्त्रान्तरे संबुद्धि-बलादवगम्यते—अग्ने देवेद्ध मन्विद्ध मन्द्रजिह्वेति । किंच यत उत्साहृष्टिरूपा-त्प्रस्रवणादाजगन्थ वैद्युतरूपेण त्वमागतोऽसि तमुत्सं विद्म ॥

---

१ ख. च. तमप्युत्सं ।

अथ तृतीयामाह—

समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् । तृतीये त्वा रजसि तस्थिवांसमृतस्य योनौ महिषा अहिन्वन् ।, इति ।

हेऽग्ने त्वामीधे यजमानोऽहं दीपयामि । कीदृशो यजमानः, नृमणा नृषु मनुष्येषु कर्मानुष्ठानपरेषु ऋत्विक्षु मनोऽनुसंधानकारणं चित्तं यस्यासौ नृमणाः, नृचक्षा नृषु पुरुषेषु वेदपारं गतेषु मध्ये चष्टे मन्त्रान्विस्पष्टं वक्तीति नृचक्षाः । कीदृशं त्वाम् । समुद्रे तस्थिवांसं वडवानलरूपेण स्थितम् । तथाऽप्सु वृष्टिरूपास्वन्तर्वैद्युतरूपेण तस्थिवांसम् । तथा दिवो द्युलोकस्योधन्नूधस्थानीये तृतीये समुद्रवृष्ट्यपेक्षया तृतीयस्थाने रजसि रञ्जनात्मके तेजोमण्डले सूर्यरूपेण तस्थिवांसम् । महिषा महान्तो यजमाना ऋतस्य योनौ यज्ञस्य संबन्धिनि वेदिस्थानेऽहिन्वंस्त्वां प्रीणयन्ति ॥

अथ चतुर्थीमाह—

अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ।, इति ।

अयमग्निरक्रन्ददस्मदानिष्टनिवारणार्थं गर्जतु । किमिव, स्तनयन्निव द्यौः । यथा द्युलोकस्थो मेघो गर्जन्सस्यशोषभीतिं निवारयति तद्वत् । किं कुर्वन्क्षाम दाहकमस्मद्विरुद्धं रेरिहल्लेलिहानो वीरुधः समञ्जन्पुष्पलतावदस्मदनुकूलानि सम्यगभिषिञ्चन् । हि यस्माज्जज्ञान उत्पद्यमानः सद्य ईं तदानीमेवेद्धो दीप्तो विविधं जगदख्यत्प्रख्यापयति । रोदसी द्यावापृथिव्योरन्तर्भानुना रश्मिना स्वयमाभाति समन्तात्प्रकाशते ॥

अथ पञ्चमीमाह—

उशिक्पावको अरतिः सुमेधा मर्तेष्वग्निरमृतो नि धायि । इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षत् ।, इति ।

उशिगनुग्रहपूर्वमस्मान्कामयमानः । पावकः शोधकः । अरतिर्यागरहितेषु

---

१ ख. च. °कारि चि° ।

भीतिरहितः। सुमेधाः शोभना मेधा सेवकाभिप्रायधारणशक्तिर्यस्यासौ सुमेधाः। अमृतो मरणरहितः। तादृशोऽग्निर्मर्तेषु मनुष्येषु निधायि निहितः। अरुषमरोषं चक्षुराद्युपद्रवरहितं धूमं भरिभ्रदतिशयेन धारयन्नुदियर्त्यूर्ध्वं प्रसारयति। शुक्रेण शोचिषा निर्मलेन तेजसा प्रभारूपेण द्यामिनक्षन्नक्षति व्याप्नोति॥

अथ षष्ठीमाह—

विश्वस्य केतुर्भुवनस्य गर्भ आ रोदसी अपृणाज्जायमानः। वीडुं चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च। , इति।

विश्वस्य केतुर्जगतो ज्ञाता भुवनस्य गर्भो गर्भवदन्तरवस्थितो जायमानो जातमात्र एव सन्रोदसी द्यावापृथिव्यावापृणात्सर्वतः स्वतेजसा पूरयति। यद्यदा पञ्च यजमानसहितऋत्विग्रूपाः पञ्चसंख्याका जना अग्निमयजन्त तदानीं परायन्नाहुतिरूपेणाऽऽदित्यस्य समीपं गच्छन्वीडुंचिद्दृढमेवाद्रिं पर्वतसमानं मेघमभिनद्विदारितवान्॥

अथ सप्तमीमाह—

श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः। वसोः सूनुः सहसो अप्सु राजा वि भात्यग्र उषसामिधानः। , इति।

श्रीणां गवाश्वादीनां संपदामुदार उत्कर्षेण प्रापयिता। रयीणां धनानां धरुणो धारयिता। मनीषाणामपेक्षितानां स्वर्गादिफलानां प्रार्पणः प्रापयिता। सोमगोपा यजमानेनानुष्ठेयस्य सोमयागस्य रक्षिता। वसोर्निवासहेतोः सहसो मथनवेगरूपस्य बलस्य सूनुः पुत्रः। अप्सु वृष्टिरूपासु राजा वैद्युतरूपेण दीप्यमानः। उषसामग्रे प्रातःकाल इधानोऽग्निहोत्रिभिर्दीप्यमानो विभाति विशेषेण भासते॥

अथाष्टमीमाह—

यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने। प्र तं नय प्रतरां वस्यो

---

१ ख. घ. ङ. च. 'हिता ऋ'। २ ख. च. 'चिद्दृढ'।

अच्छाभि द्युम्नं देवभक्तं यविष्ठ ।, इति ।

हे भद्रशोचे कल्याणदीप्तेऽग्ने देव ते तवाद्यास्मिन्दिवसे घृतवन्तमपूपमुपस्तरणाभिघारणोपेतं पुरोडाशं यो यजमानः कृणवत्करोति । हे यविष्ठ युवतम देव भक्तं देवेषु भक्तियुक्तं तं पुरोडाशकारिणं यजमानमभिद्युम्नमच्छाभिमतं धनं प्राप्तुं प्रकर्षेण नय प्रेरय । कीदृशं द्युम्नं, प्रतरां प्रकृष्टतरं वस्योऽतिशयेन निवासकारणम् ॥

अथ नवमीमाह—

आ तं भज सौश्रवसेष्वग्न उक्थउक्थ
आ भज शस्यमाने । प्रियः सूर्ये प्रियो अग्ना
भवात्युज्जातेन भिनददुज्जनित्वैः ।, इति ।

शोभनं श्रवः कीर्तिः सुश्रवस्तस्य संबन्धीनि तत्कारणानि कर्माणि सौश्रवसानि तेषु कर्मसु, उक्थ उक्थ निष्केवल्यप्रउगादिरूपे तत्तच्छस्त्रे शस्यमाने सति तं देवभक्तं यजमानमाभज सर्वतः संप्रेरय निरन्तरं कर्मानुष्ठायिनं कुर्वित्यर्थः । आभजेति द्विरुक्तेर्वाक्यद्वयमिदं कर्तव्यं, सौश्रवसेषु कर्मसु प्रेरयेत्येकं वाक्यम् । तत्तच्छस्त्रे प्रेरयेत्येकं वाक्यम् । अयं यजमानः सूर्ये प्रियो भवाति भवतु । अग्ना वह्नावपि प्रियो भवतु । तथा जातेनोत्पन्नेन पुत्रेणोद्भिनददुद्भेदमभिवृद्धिं प्राप्नोतु । तथा जनित्वैर्जनिष्यमाणैः पौत्रादिभिश्चोद्भिनदत् ॥

अथ दशमीमाह—

त्वामग्ने यजमाना अनु द्यून्विश्वा वसूनि
दधिरे वार्याणि । त्वया सह द्रविणमिच्छमा-
ना व्रजं गोमन्तमुशिजो वि वव्रुः ।, इति ।

हेऽग्ने यजमानाः सर्वेऽनु द्यून्प्रतिदिनं त्वामनु त्वामेवानुगच्छन्तो वार्याणि वरणीयानि विश्वा वसूनि सर्वाणि धनानि दधिरे धृतवन्तः । त्वया सहावस्थितास्ते यजमाना द्रविणमिच्छमानाः पुनरप्यधिकं द्रव्यं काङ्क्षन्त उशिजो धनसाध्यानि कर्माणि कामयमाना गोमन्तं बहुभिर्गोभिर्युक्तं व्रजं गोनिवासस्थानं विवव्रुर्विशेषेण वृतवन्तः ॥

अथैकादशीमाह—

दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः

१ ख. घ. 'तरां व'।

( आसन्दीस्थापिताग्नेरुपस्थानम् )

श्रिये रुचानः । अग्निरमृतो अभवद्व-
योभिर्यदेनं द्यौरजनयत्सुरेताः ॥, इति ॥

दृशानो दर्शनीयो रुक्मः सुवर्णसदृश उर्व्या महत्या दीप्त्या व्यद्यौद्विद्योतते स्म। किं कुर्वन्, दुर्मर्षमितरैरतिरस्कार्यमायुर्जीवनं श्रिये श्रयितुं रुचानो वाञ्छन् । तथाविधोऽग्निर्वयोभिरन्नैर्हविर्भिरमृतोऽभवत् । यद्यस्मादेनमग्निं द्यौर्द्युलोकवासिदेवगणः सुरेताः सन्नजनयत्तस्मादमृतत्वं युक्तम् ॥

तदेतदेकादशमन्त्रात्मकं सूक्तं विनियुङ्क्ते—

“वात्सप्रेणोप तिष्ठत एतेन वै वत्सप्रीर्भालन्दनोऽग्नेः प्रियं धामावारुन्धाग्ने-रेवैतेन प्रियं धामाव रुन्धे” [ सं० का० ५ प्र० २ अ० १ ] इति।

वत्सप्रीनामकेन महर्षिणाऽधीतं दिवस्परीत्यादिकं सूक्तं वात्सप्रं, तेनाग्निमुपतिष्ठेत। भालन्दनस्य पुत्रो वत्सप्रीनामको महर्षिरेतेन सूक्तेनाग्नेः प्रियं धाम स्थानं प्राप्तवान्। ततो यजमानोऽपि तथा प्राप्नोति॥

तस्य सूक्तस्यैकादशमन्त्रसमूहात्मकत्वं विधत्ते—

“एकादशं भवत्येकधैव यजमाने वीर्यं दधाति” [ सं० का० ५ प्र० २ अ० १ ] इति।

एकधैव युगपदेव, समूहस्य युगपत्प्रवृत्तत्वात् ॥

तदिदं सूक्तं विष्णुक्रमांश्च लोकद्वयहेतुत्वेन प्रशंसति—

“स्तोमेन वै देवा अस्मिँल्लोक आर्ध्नुवञ्छन्दोभिरमुष्मिन्त्स्तोमस्येव खलु वा एतद्रूपं यद्वात्सप्रं यद्वात्सप्रेणोपतिष्ठत इममेव तेन लोकमभि जयति यद्विष्णु-क्रमान्क्रमतेऽमुमेव तैर्लोकमभि जयति” [ सं० का० ५ प्र०२ अ०१] इति।

गीत्याश्रयाणामावृत्तानामृचां समूहः स्तोमः स्तुतिहेतुर्मन्त्रसमूह एतल्लोकस-मृद्धिप्राप्तिसाधनं, समूहाकारमन्तरेण विशिष्टानि च्छन्दांसि स्वर्गसमृद्धिकार-णानि। तथा सति वात्सप्रसूक्तं समूहरूपत्वादेतल्लोकसमृद्धिकरम्। छन्दः-शब्दोपेता विष्णुक्रममन्त्रास्तु बहुत्वात्स्वर्गसमृद्धिहेतवः ॥

उभयानुष्ठानस्य कालविशेषं विधत्ते—

“पूर्वेद्युः प्र क्रामत्युत्तरेद्युरुप तिष्ठते तस्माद्योगेऽन्यासां प्रजानां मनः क्षेमेऽन्यासां तस्माद्यायावरः क्षेम्यस्येशे तस्माद्यायावरः क्षेम्यमध्यवस्यति” [ सं० का० ५ प्र० २ अ० १ ] इति।

अलब्धस्य लाभो योगो लब्धस्य परिपालनं क्षेमः। काश्चित्प्रजा योगः श्रेयानिति मन्यन्त आर्जनशीला बहुव्ययाः। काश्चित्क्षेम एव श्रेयानिति

मन्यन्त इतः परमर्जयितुमशक्त्या व्ययभीरवः। तदिदं प्रजानां मनोवैलक्षण्यं क्रमे(म)णोपस्थानकालहेतुकम्। यस्मात्प्रयाणशीलस्य पुरुषस्यार्जयितुमवकाशो नास्ति तस्माद्यायावरः प्रयाणशीलः पुरुषः क्षेम्यस्येशे विद्यमानद्रव्यरक्षणस्यै प्रभुर्भवति। यस्मादेवं लोके दृष्टं तस्मादत्र देवयजनदेशं प्रति यायावरो यजमानः साधनान्तरसंपादनेच्छां परित्यज्य विद्यमानान्येवा[1]ग्न्यादिसाधनान्युपस्थानादिव्यापारैः परि[2][र]क्षितुमध्यवस्यति ॥

सोमविकृतित्वं द्योतयितुं तदङ्गानुष्ठानकालविशेषं चावगमयितुं दीक्षाङ्गं किंचिद्विधत्ते—

"मुष्टी करोति वाचं यच्छति यज्ञस्य धृत्यै" [सं० का० ५ प्र० २ अ० १] इति।

स्वाहा यज्ञं मनसेत्यादिभि[4]र्मन्त्रैर्हस्तयोरङ्गुल्याकुञ्चनं मुष्टीकरणम्। मौनं वाग्यमः। तदुभयं यज्ञस्य[3] पलायनपरिहाराय भवति ॥

अत्र विनियोगसंग्रहः—

दिर्वस्परीत्यनुवाके वात्सप्रेणोपतिष्ठते ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ चतुर्थाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः।)

---

अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः। प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे। उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः। स नो भव शिवतमः सुप्रतीको विभावसुः। प्रेदग्ने ज्योतिष्मान्याहि शिवेभिरर्चिभिस्त्वम्। बृहद्भिर्भानुभिर्भासन्मा हिं-

---

१ ख. च. °न्येवोख्याग्नया°। २ ख. च. परीक्षि°। ३ ख. च. °स्य पालनदार्ढ्याय भ°
४ ख. च. °व इत्य°। ५ ख. च. °केन वा°।

सीस्तनुवा प्रजाः। समिधाऽग्निं दुवस्यत घृतैर्बोधयतातिथिम्। आ (१) अस्मिन्हव्या जुहोतन। प्रप्रायमग्निर्भरतस्य शृण्वे वि यत्सूर्यो न रोचते बृहद्भाः। अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः। आपो देवीः प्रति गृह्णीत भस्मैतत्स्योने कृणुध्वꣳ सुरभावु लोके। तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृता स्वेनम्। अप्स्वग्ने सधिष्टव (२) सौषधीरनु रुध्यसे। गर्भे सञ्जायसे पुनः। गर्भो अस्योषधीनां गर्भो वनस्पतीनाम्। गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि। प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने। सꣳसृज्य मातृभिस्त्वं ज्योतिष्मान्पुनराऽसदः। पुनरासद्य सदनमपश्च पृथिवीमग्ने। शेषे मातुर्यथोपस्थेऽन्तरस्याꣳ शिवतमः। पुनरूर्जा (३) नि वर्तस्व पुनरग्न इषाऽऽयुषा। पुनर्नः पाहि विश्वतः। सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया। विश्वप्स्निया विश्वतस्परि। पुनस्त्वाऽऽदित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः। घृतेन

त्वं तनुवो वर्धयस्व सत्याः सन्तु यजमानस्य कामाः । बोधा नो अस्य वचसो यविष्ठ मꣳहिष्ठस्य प्रभृतस्य स्वधावः । पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तनुवं वन्दे अग्ने । स बोधि सूरिर्मघवा वसुदावा वसुपतिः । युयोध्यस्मद्द्वेषाꣳसि ( ४ ) ॥

( आ तवोर्जाऽनु षोडश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ चतुर्थाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः । )

---

अन्नपत इत्यन्न—पते । अन्नस्य । नः । देहि । अनमीवस्य । शुष्मिणः । प्रेति । प्रदातारमिति प्र—दातारम् । तारिषः । ऊर्जम् । नः । धेहि । द्विपद इति द्वि—पदे । चतुष्पद इति चतुः—पदे । उदिति । उ । त्वा । विश्वे । देवाः । अग्ने । भरन्तु । चित्तिभिरिति चित्ति—भिः । सः । नः । भव । शिवतम इति शिव—तमः । सुप्रतीक इति सु—प्रतीकः । विभावसुरिति विभा—वसुः । प्रेति । इव । अग्ने । ज्योतिष्मान् । याहि । शिवेभिः । अर्चिभिरि-

स्वर्चि—भिः। त्वम्। बृहद्भिरिति बृहत्—भिः।
भानुभिरिति भानु—भिः। भासन्। मा। हिꣳसीः।
तनुवा। प्रजा इति प्र—जाः। समिधेति सम्—
इधा। अग्निम्। दुवस्यत। घृतैः। बोधयत। अति-
थिम्। एति (१)। अस्मिन्। हव्या। जुहोतन।
प्रप्रेति प्र—प्र। अयम्। अग्निः। भरतस्य। शृण्वे।
वीति। यत्। सूर्यः। न। रोचते। बृहत्। भाः।
अभीति। यः। पूरुम्। पृतनासु। तस्थौ। दीदाय।
दैव्यः। अतिथिः। शिवः। नः। आपः। देवीः।
प्रतीति। गृह्णीत। भस्म। एतत्। स्योने। कृणु-
ध्वम्। सुरभौ। उ। लोके। तस्मै। नमन्ताम्।
जनयः। सुपत्नीरिति सु—पत्नीः। माता। इव।
पुत्रम्। बिभृत। स्विति। एनम्। अप्स्वित्यप्—सु।
अग्ने। सधिः। तव (२)। सः। ओषधीः।
अन्विति। रुध्यसे। गर्भे। सन्। जायसे। पुनः।
गर्भः। असि। ओषधीनाम्। गर्भः। वनस्पती-
नाम्। गर्भः। विश्वस्य। भूतस्य। अग्ने। गर्भः।
अपाम्। असि। प्रसद्येति प्र—सद्य। भस्मना।
योनिम्। अपः। च। पृथिवीम्। अग्ने। सꣳसृ-
ज्येति सं—सृज्य। मातृभिरिति मातृ—भिः। त्वम्।

ज्योतिष्मान् । पुनः । एति । असदः । पुनः । आस-
द्येत्यां—सद्यं । सदनम् । अपः । च । पृथिवीम् ।
अग्ने । शेषे । मातुः । यथा । उपस्थ इत्युप—स्थे ।
अन्तः । अस्याम् । शिवतम इति शिव—तमः ।
पुनः । ऊर्जा ( ३ ) । नीति । वर्तस्व । पुनः । अग्ने ।
इषा । आयुषा । पुनः । नः । पाहि । विश्वतः ।
सह । रय्या । नीति । वर्तस्व । अग्ने । पिन्वस्व ।
धारया । विश्वप्स्नियेति विश्व—प्स्निया । विश्वतः ।
परि । पुनः । त्वा । आदित्याः । रुद्राः । वसवः ।
समिति । इन्धताम् । पुनः । ब्रह्माणः । वसुनी-
थेति वसु—नीथ । यज्ञैः । घृतेन । त्वम् । तनुवः ।
वर्धयस्व । सत्याः । सन्तु । यजमानस्य । कामाः ।
बोध । नः । अस्य । वचसः । यविष्ठ । मंहि-
ष्ठस्य । प्रभृतस्येति प्र—भृतस्य । स्वधाव इति स्व-
धा—वः । पीयति । त्वः । अन्विति । त्वः ।
गृणाति । वन्दारुः । ते । तनुवम् । वन्दे । अग्ने ।
सः । बोधि । सूरिः । मघवेति मघ—वा । वसु-
दावेति वसु—दावा । वसुपतिरिति वसु—पतिः ।
युयोधि । अस्मत् । द्वेषांसि ( ४ ) ॥

इति कृष्णयजुर्वेदियतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके
द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( चयनार्थदेवयजनपरिग्रहाभिधानम् )

( अथ चतुर्थकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः । )

---

द्वितीयानुवाके वह्रेरुख्यस्योपस्थानमुक्तं, तृतीये चयनार्थस्य देवयजनस्य परिग्रहोऽभिधीयते ।

कल्पः—" व्रतकालेऽन्नपतेऽन्नस्य नो देहीत्यौदुम्बरीं समिधं व्रतेऽक्त्वाऽभ्यादधाति " इति । व्रतार्थे क्षीरद्रव्ये ।

पाठस्तु—

अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ।, इति ।

हेऽन्नपतेऽग्नेऽनमीवस्य रोगरहितस्य शुष्मिणो बलहेतोरन्नस्य प्राप्तिं नोऽस्मभ्यं देहि । प्रकर्षेण हविषो दातारं यजमानं प्रतारिषः प्रकर्षेण दुरितात्तारय । नोऽस्माकं द्विपदे चतुष्पदे मनुष्याय पशवे चोर्जं बलं धेहि संपादय ॥

अस्य मन्त्रस्य प्रथमपादेऽन्नपतिशब्दार्थं दर्शयति—

" अन्नपतेऽन्नस्य नो देहीत्याहाग्निर्वा अन्नपतिः स एवास्मा अन्नं प्र यच्छति " [ सं० का० ५ प्र० २ अ० २ ] इति ॥

द्वितीयपादेऽनमीवशब्दार्थं दर्शयति—

" अनमीवस्य शुष्मिण इत्याहायक्ष्मस्येति वावैतदाह " [ सं० का० ५ प्र० २ अ० २ इति ॥

उत्तरार्धे तारिषो धेहीति पदयोस्तात्पर्यं दर्शयति—

" प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पद इत्याहाऽऽशिषमेवैतामा शास्ते " [ सं० का० ५ प्र० २ अ० २ ] इति ॥

कल्पः—" उदु त्वा विश्वे देवा इत्युख्यमुद्यम्य " इति ।

पाठस्तु—

उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः । स नो भव शिवतमः सुप्रतीको विभावसुः ।, इति ।

हेऽग्ने विश्वे सर्वेऽपि देवाः प्राणरूपाश्चित्तिभिरुद्यमनकुशलाभिर्धीवृत्तिभिरुद्धर्वमेव त्वां भरन्तु । स त्वं नोऽस्माकं शिवतमः शान्ततमः सुप्रतीकः सुमुखो विभावसुः प्रभया वासयिता च भव ॥

अस्य मन्त्रस्य प्रथमपादे देवशब्दार्थं दर्शयति—

" उदु त्वा विश्वे देवा इत्याह प्राणा वै विश्वे देवाः प्राणैरेवैनमुद्यच्छते " [ सं० का० ५ प्र० २ अ० २ ] इति ।

दीव्यन्ति स्वस्वकार्येषु व्यवहरन्तीति देवाः प्राणाः ॥

द्वितीयपादे बुद्ध्यादिशब्दान्परित्यज्य चित्तिशब्दप्रयोगस्य तात्पर्यं दर्शयति—

" अग्ने भरन्तु चित्तिभिरित्याह यस्मा एवैनं चित्तायोद्यच्छते तेनैवैन१ समर्धयति " [ सं० का० ५ प्र० २ अ० २ ] इति ।

चित्तिशब्देन चित्ताभिप्रेतकार्यं समुच्यते । तथा सति यस्मै कार्यायेदमुद्यमनं तेनैव कार्येणैनमग्निं समृद्धं करोति ॥

यदुक्तं सूत्रकारेण—" सीद त्वं मातुरस्या उपस्थ इति चतसृभिर्द्वीपे शकटे प्रउँग उख्यमासादयति " इति, ईषाग्रयोर्मेलनस्थानं प्रउगं, तदेतत्सूत्रोक्तमासादनं विधत्ते—

" चतसृभिरा सादयति चत्वारि छन्दाꣳसि छन्दोभिरेवातिच्छन्दसोत्तमया वर्ष्म वा एषा छन्दसां यदतिच्छन्दा वर्ष्मैवैन१ समानानां करोति सद्वती भवति सत्त्वमेवैनं गमयति " [ सं० का० ५ प्र० २ अ० २ ] इति ।

सीद त्वमित्यादयश्चतस्र ऋचस्तद्ब्राह्मणं चेत्येतत्सर्वं प्रथमानुवाके व्याख्यातम् ॥

कल्पः—" प्रेदग्ने ज्योतिष्मान्याहीति प्रयाति " इति ।

पाठस्तु—

प्रेदग्ने ज्योतिष्मान्याहि शिवेभिरर्चिभिस्त्वम् । बृहद्भिर्भानुभिर्भासन्मा हिꣳसीस्तनुवा प्रजाः । , इति ।

हेऽग्ने शिवेभिरर्चिभिः शान्ताभिर्ज्वालाभिर्ज्योतिष्मान्प्रकाशयुक्तस्त्वं प्रेद्याहि देवयजनप्रदेशं प्रयाह्येव । बृहद्भिर्भानुभिः प्रौढै रश्मिभिर्भासञ्जगदवभासयंस्तनुवा स्वकीयेन दाहकेन शरीरेण प्रजा मा हिंसीः ॥

अस्य मन्त्रस्य प्रथमपादे ज्योतिष्मच्छब्दस्य तात्पर्यं दर्शयति—

" प्रेदग्ने ज्योतिष्मान्याहीत्याह ज्योतिरेवास्मिन्दधाति " [ सं० का० ५ प्र० २ अ० २ ] इति ॥

---

१ घ. ङ. च. चित्तश° । २ ख. च. सूच्यते । ३ घ. ङ. °उगे शकटमा° ।

( चयनार्थदेवयजनपरिग्रहाभिधानम् )

चतुर्थपादे हिंसां निषेद्धुं[1] प्रसक्तिं दर्शयति—

" तनुवा वा एष हिनस्ति य९ हिनस्ति मा हि९सीस्तनुवा प्रजा इत्याह प्रजाभ्य एवैन९ शमयति " [ सं० का० ५ प्र० २ अ० २ ] इति।

अग्निर्यं पुरुषं हिनस्ति न तं शस्त्रेण प्रहृत्य हन्ति, किं तु ज्वालामयेन[2] स्वशरीरेणैव तं दग्ध्वा हन्ति। अतस्तनुवा मा हि९सीरिति प्रार्थ्यते॥

प्रयाणकाले शकटस्य ध्वनौ सति प्रायश्चित्तं विधत्ते—

" रक्षा९सि वा एतद्यज्ञ९ सचन्ते यदन उत्सर्जत्यक्रन्ददित्यन्वाह रक्षसामपहत्यै " [ सं० का० ५ प्र० २ अ० २ ] इति।

यदनः शकटमुत्सर्जति गमने ध्वनिं करोत्येतद्यज्ञसाधनं शकटं रक्षांसि सचन्ते समवयन्ति अतस्तत्परिहारायाक्रन्ददग्निरित्येतामृचमनुब्रूयात्। सा च पूर्वानुवाके समाम्नाता व्याख्याता च॥

विधत्ते—

" अनसा वहन्त्यपचितिमेवास्मिन्दधाति तस्मादनस्वी च रथी चातिथीनामपचिततमौ " [ सं० का० ५ प्र० २ अ० २ ] इति।

एतमग्निमनसा शकटेन देवयजनप्रदेशं वहन्ति प्रापयेत्। तथा सत्यस्मिन्नग्नौ पूजां संपादितवान्भवति। यस्मादेवं तस्माल्लोकेऽपि गमनकाले शकटारूढरथारूढावतिथीनां मध्येऽतिपूजितौ। परिवृढो हि तथा गच्छति न दरिद्रः॥

एतद्वेदनं प्रशंसति—

" अपचितिमान्भवति य एवं वेद " [ सं० का०५ प्र०२ अ०२ ] इति॥

कल्पः—" समिधाऽग्निं दुवस्यतेति घृतानुषिक्तामवसिते समिधमादधाति " इति।

पाठस्तु—

समिधाऽग्निं दुवस्यत घृतैर्बोधयतातिथिम्।
आऽस्मिन्हव्या जुहोतन। , इति।

हे ऋत्विग्यजमाना एतमग्निं समिधा दुवस्यत परिचरत घृतानुषिक्तयाऽनया परिचरतेत्यर्थः। घृतैरेतैः[3] स्पृष्टैरतिथिमिवैनं बोधयतोद्दीपयत। ततश्चास्मिन्नग्नौ हव्यानि हवींष्याजुहोतन साकल्येन जुहुत॥

तमेतं मन्त्रं विनियुङ्क्ते—

" समिधाऽग्निं दुवस्यतेति घृतानुषिक्तामवसिते समिधमा दधाति यथाऽति-

---

१ क. घ. ङ. हिंसानिषेधप्र°। २ क. घ. ङ. °लायमानेन। ३ क. घ. ङ. °तत्स्पृष्टै°।

थय आगताय सर्पिष्वदातिथ्यं क्रियते तादृगेव तत् " [ सं० का० ५ प्र० २ अ० २ ] इति ।

अवसिते प्रयाणे समाप्ते सति । सर्पिष्वद्घृतयुक्तमन्नम् ॥

कल्पः—"उत्तरया त्रिष्टुभा राजन्यस्य" इति । समिधमादधातीत्यनुवर्तते।

पाठस्तु—

प्रप्रायमग्निर्भरतस्य शृण्वे वि यत्सूर्यो न रोचते बृहद्भाः । अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः ।, इति ।

अयमग्निर्भरतस्य हविर्भृतवतो यजमानस्याऽऽह्वानं प्रप्रशृण्वेऽतिप्रकर्षेण शृणोतु । यद्योऽग्निः सूर्यो न सूर्य इवाधिकं [भा] भासमानः सन्बृहद्रोचतेऽत्यन्तं दीप्यते । योऽग्निः पृतनासु सङ्ग्रामेषु पूरुं जयपूर्तिमभितस्थौ सर्वतः करोति, सोऽग्निर्नोऽस्माकमतिथिर्दीदाय भवतु अतिथिरिवेहास्मास्वा (ह समा)गच्छतु । कीदृशोऽग्निः,दैव्यो देवेभ्यो हितः, शिवः परममङ्गलरूपः ॥

समिधाऽग्निं प्रप्रायमग्निरित्यनयोः समिदाधानमन्त्रयोर्विषयव्यवस्थां विधत्ते—

" गायत्रिया ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्यः " [ सं० का० ५ प्र० २ अ० २ ] इति ।

समिधाऽग्निमिति गायत्री, प्रप्रायमिति त्रिष्टुप् ॥

कल्पः—" आपो देवीः प्रतिगृह्णीत भस्मैतदिति तिसृभिरप्सु भस्म प्रवेशयति " इति ।

तत्र प्रथमामाह—

आपो देवीः प्रति गृह्णीत भस्मैतत्स्योने कृणुध्वꣳ सुरभावु लोके । तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृता स्वेनम् ।, इति ।

हे आपो देवीर्देव्यो भस्मोख्याग्नेरुपरि संचितं भस्म प्रतिगृह्णीत । एतदेवाभिप्रेत्य सूत्रकारेणोक्तम्—" यद्युखां भस्माभिनिषींदेदुख्यमादायोदकान्तं गत्वा " इति । एतत्प्रतिगृहीतं भस्म स्योने सुखकरे सुरभावु सुगन्धयुक्त एव लोके स्थाने कृणुध्वं स्थापयत । शोभनः पतिर्वरुणो यासां ताः सुपत्न्यः।

---

१ ख. च. 'विर्भरणव' । २ ख. च. इव भा' । ३ ख. च. 'हद्विरोच' । ४ ख. ङ. 'दायाति' । ५ क. घ. ङ. 'रिव चास्मा' ।

( चयनार्थदेवयजनपरिग्रहाभिधानम् )

आपो वरुणस्य पत्नय आसन्नित्यन्यत्र श्रूयते। जनयोऽग्नेर्जनन्य आपः। वाडववैद्युतरूपमग्निं प्रत्यपां जनयितृत्वम्। ईदृश्य आपस्तस्मा अग्नये नमन्ताँ प्रह्वी भवन्तु, तमग्निं पालयितुं वश्याः सावधाना भवन्त्वित्यर्थः। हे आपो माता पुत्रं पोषयति यद्वत्तद्वदेनमग्निं सुष्ठु बिभृत पोषयत दीपयत ॥

अथ द्वितीयामाह—

अप्स्वग्ने सधिष्टव सौषधीरनु रु-
ध्यसे। गर्भे सञ्जायसे पुनः।, इति।

हेऽग्ने तव सधिः सहो बलं भस्मरूपमप्सु वर्तते। स त्वमोषधीरनुरुध्यसे व्रीहियवाद्योषधीरनुसरसि, जाठराग्निरूपेण तत्स्वीकारात्। अरण्योर्गर्भे स्थितः सन्पुनः पुनः सम्यग्जायसे ॥

अथ तृतीयामाह—

गर्भो अस्योषधीनां गर्भो वनस्पतीनाम्। गर्भो
विश्वस्य भूतस्याग्ने गर्भो अपामसि।, इति।

भेषजरूप[3] ओषधिविशेष उत्पद्यमानत्वात्त्वमोषधीनां गर्भोऽसि। तथाऽरणीभ्यामुत्पद्यमानत्वाद्वनस्पतीनां गर्भोऽसि। हेऽग्ने विश्वस्य भूतस्य सर्वस्य प्राणिजातस्य जठरे वर्तमानतया गर्भोऽसि। तथा वाडववैद्युतरूपेणापां गर्भोऽसि ॥

एतैर्मन्त्रैः साध्यं प्रवेशनं विधत्ते—

" अप्सु भस्म प्र वेशयत्यप्सुयोनिर्वा अग्निः स्वामेवैनं योनिं गमयति " [ सं० का० ५ प्र० २ अ० २ ] इति ॥

आपो देवीरित्यादिकान्मन्त्रान्विनियुङ्क्ते—

" तिसृभिः प्र वेशयति त्रिवृद्वा अग्निर्यावानेवाग्निस्तं प्रतिष्ठां गमयति " [ सं० का० ५ प्र० २ अ० २ ] इति।

आहवनीयादिरूपेणाग्नेस्त्रिवृत्त्वम् ॥

कल्पः—" भस्मनोपादाय प्रपीड्य प्रसद्य भस्मनेति द्वाभ्यामुखायां प्रत्याधाय " इति।

तत्र प्रथमामाह—

प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने। सꣳ-
सृज्य मातृभिस्त्वं ज्योतिष्मान्पुनराऽसदः।, इति।

१ क. घ. ङ. प्रह्वा। २ ख. च. पालयति। ३ ख. च. 'रूपैस्तृणविशेषैरुत्प'।

हेऽग्ने भस्मना सह योनिं कारणभूतां पृथिवीं प्रसद्य, किं पृथिवीमेव नेत्याह—अपश्च योनिभूताः प्रतिपद्य, किंच मातृभिरद्भिः पृथिव्या च संश्ल्यैकीभूय त्वं[1] ज्योतिष्मान्भृशं ज्योतिः संपन्नः पुनः पश्चादासदः स्त्रीयमे स्थानमुखामासीद ॥

अथ द्वितीयामाह—

> पुनरासद्य सदनमपश्च पृथिवीमग्ने । शेषे
> मातुर्यथोपस्थेऽन्तरस्याः शिवतमः ।, इति ।

हेऽग्ने पुनरपि सदनं स्वस्थानमपः पृथिवीं चाऽऽसद्य प्रतिपद्य पुनः स्यामेवोखायामन्तर्मध्ये शिवतमः शान्ततमः शेषे शयनं करोषि । यथा मातुरुपस्थ उत्सङ्गे सुतः सुखं शेते तद्वत् ॥

एतौ मन्त्रौ विनियुङ्क्ते—

" परा वा एषोऽग्निं वपति योऽप्सु भस्म प्रवेशयति ज्योतिष्मतीभ्याम् दधाति ज्योतिरेवास्मिन्दधाति " [ सं० का० ५ प्र० २ अ० २ ] इति ।

यो यजमान उखाग्निसंबद्धं भस्माप्सु प्रवेशयति[2] स एषोऽग्निं परावपति नाशयति । अतो विनाशपरिहाराय जलगतं भस्म निष्पीड्य ज्योतिष्मच्छब्दोपेताभ्यामृग्भ्यामुखायामवदध्यात् । त्वं ज्योतिष्मान्पुनरासद इत्ये ज्योतिष्मच्छब्दोपेतत्वम् ॥

मन्त्रद्वित्वं प्रशंसति—

" द्वाभ्यां प्रतिष्ठित्यै " [ सं० का० ५ प्र० २ अ० २ ] इति ।

कल्पः—" पुनरूर्जा सह रय्येति पुनरुदैति " इति । निष्पीडितभस्मोपेतायामुखायामग्निं स्थापयेदित्यर्थः ॥

तत्र प्रथमामाह—

> पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽ-
> युषा । पुनर्नः पाहि विश्वतः ।, इति ।

हेऽग्ने त्वमूर्जा क्षीरादिरसेन सह पुनर्निवर्तस्वाऽऽगच्छ । इषाऽन्नेनाऽऽयुषा सह पुनरागच्छ । नोऽस्मान्पुनर्विश्वतः सर्वस्मादपराधात्पाहि ॥

अथ द्वितीयामाह—

---

१ क. घ. ङ. त्वं भृशं ज्योतिष्मान्संप' । २ ख. च. 'ति ए' । ३ ख. च. 'त्रद्वयं प्र' ४ ख. च. 'पयतील' । ५ ख. च. 'न्पुनः पुनः कृताद्विश्व' ।

सह रय्या नि वर्तस्वाग्ने पिन्वस्व
धारया। विश्वप्स्निया विश्वतस्परि।, इति।

हेऽग्ने रय्या धनेन सह निवर्तस्व। प्सा भक्षण इति धातुः। विश्वैः सर्वैः प्सायते भक्ष्यते पीयत इति विश्वप्स्नी, तादृश्या वृष्टिधारया विश्वतस्परि सर्वेषां तृणसस्यलतापादपादीनामुपरि पिन्वस्व सिञ्च॥

मन्त्रद्वयं विनियुङ्क्ते—

"परा वा एष प्रजां पशून्वपति योऽप्सु भस्म प्रवेशयति पुनरूर्जा सह रय्येति पुनरुदैति प्रजामेव पशूनात्मन्धत्ते" [सं० का० ५ प्र० २ अ० २] इति।

भस्मनोऽप्सु प्रवेशनेन विनाशितायाः प्रजायाः पशूनां च स्वात्मनि स्थापनाय पुनरुदैति पूर्वमुखाया अपनीतमग्निं पुनरपि निष्पीडितभस्मसहितायामुखायां मन्त्रद्वयेन स्थापयेत्। तत्र मन्त्रद्वयबलात्प्रजायाः पशूनां च स्वात्मनि स्थापनं भवति॥

कल्पः—"पुनस्त्वाऽऽदित्या रुद्रा वसवः समिन्धतामिति पुनरुख्यमुपसमिन्धे" इति।

पाठस्तु—

पुनस्त्वाऽऽदित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः। घृतेन त्वं तनुवो वर्धयस्व सत्याः सन्तु यजमानस्य कामाः।, इति।

हेऽग्ने त्वामादित्या रुद्रा वसवश्च पुनः समिन्धतामुपशान्तं पुनः संदीपयन्तु। हे वसुनीथ वसूनां धनानां नीथ प्रापयितर्ब्रह्माणो ब्राह्मणा ऋत्विजो यज्ञैर्निमित्तभूतैस्त्वां पुनः समिन्धताम्। त्वं घृतेन तुष्टः संस्तनुवोऽस्मदीयशरीराणि वर्धयस्व। तत्वतस्त्वयि तुष्टे सति यजमानस्य कामाः सत्याः सन्तु॥

अस्मिन्मन्त्रे रुद्राद्युक्तेस्तात्पर्यं दर्शयति—

"पुनस्त्वाऽऽदित्या रुद्रा वसवः समिन्धतामित्याहैता वा एतं देवता अग्रे समैन्धत ताभिरेवैन৺ समिन्धे" [सं० का० ५ प्र० २ अ० २] इति॥

कल्पः—"बोधा स बोधीति बोधवतीभ्यामुपतिष्ठते" इति।

तत्र प्रथमामाह—

---

१ क. घ. ङ. °णधान्यल°। २ क. घ. ङ. °पाना°।

बोधा नो अस्य वचसो यविष्ठ मंहिष्ठस्य
प्रभृतस्य स्वधावः । पीयति त्वो अनु त्वो
गृणाति वन्दारुस्ते तनुवं वन्दे अग्ने । ,इति ।

हे स्वधावः स्वधोपलक्षितान्नवन्यविष्ठ युवतम नोऽस्मदीयस्यास्य वचसः स्तुतिरूपस्य बोध तात्पर्यं बुध्यस्व । कीदृशस्य वचसः, मंहिष्ठस्यातिशयेनाभिवृद्धिहेतोः प्रभृतस्य प्रकृष्टेनाऽऽदरेण संपादितस्य । पीयति त्वः । ओप्यायी वृद्धावित्यस्माद्धातोरुत्पन्नः पीयतिशब्दः । त्वशब्द एकशब्दार्थे वर्तते । भवदीयस्तुतिकारिणोर्द्वयोर्यजमानयोर्मध्ये त्व एकः स्तोता यजमानः पीयति वृद्धिमधिकं वक्ति उचितोक्तिमुल्लङ्घ्य निन्दारूपेणातिप्रशंसारूपेण वा यत्किंचिद्वक्ति । त्वोऽनुगृणाति एकः स्तोताऽनुकूलमुचितमेव वक्ति । अतोऽस्मदभिप्रायं बुध्यस्वेति प्रार्थ्यते[1] । वन्दारुरभिवन्दनपरोऽहं हेऽग्ने त्वदीयां तनुवं वन्दे ॥

अथ द्वितीयामाह—

स बोधि सूरिर्मघवा वसुदावा वसु-
पतिः । युयोध्यस्मद्द्वेषांसि ॥, इति ॥

हेऽग्ने स त्वं बोधि अस्मदभिप्रायं बुध्यस्व । कीदृशस्त्वं, सूरिर्विद्वान्मघवाऽन्नवान्वसुदावा वसुप्रदो वसुपतिर्धनपतिः । तादृशस्त्वं द्वेषांसि शत्रुभिः कृतान्द्वेषानस्मद्युयोध्य[2]स्मत्तः[3] पृथक्कुरु ॥

तदेतन्मन्त्रद्वयं विनियुङ्क्ते—

" बोधा स बोधीत्युप तिष्ठते बोधयत्येवैनं तस्मात्सुप्त्वा प्रजाः प्र बुध्यन्ते " [ सं० का० ५ प्र० २ अ० २ ] इति ।

बोधेति मन्त्रेण स बोधीति मन्त्रेण चैतमग्निं बोधयत्येव । यस्मादत्र शान्तमग्निं पुनरुद्बोधयति तस्माल्लोकेऽपि प्रजाः स्वापं प्राप्य पुनः प्रबुध्यन्ते ॥

उपस्थानदेशं विधत्ते—

" यथास्थानमुप तिष्ठते तस्माद्यथास्थानं पशवः पुनरेत्योप तिष्ठन्ते " [ सं० का० ५ प्र० २ अ० २ ] इति ।

आहवनीयस्य दक्षिणभागो यजमानस्योपस्थानदेशः । अतोऽत्रापि दक्षिणदेश एव स्थित्वोप[4]तिष्ठेत । यस्मादेवं तस्माल्लोकेऽपि पशवः प्रातःकाले शालाया निर्गत्यारण्ये गत्वा सायं पुनरागत्य स्वं स्वं स्थानमेव सेवन्ते ॥

---

१ ख. च. °ते । अतो व° । २ ख. च. °ध्यस्माकमपाकुरु । ३ क. घ. ङ. °स्मत्पृथ° ४ ख. च. °तिष्ठते । य° ।

( गार्हपत्यचयनाभिधानम् )

अत्र विनियोगसंग्रहः--

अन्नाऽऽदधाति समिधमुद्यच्छेदुदृचाऽनलम् ।
प्रेतप्रयात्यथ समिधा गम्यन्ते समिधं क्षिपेत् ॥ १ ॥
राजन्यश्चेत्येति मन्त्र आपो भस्माप्सु वेशयेत् ।
त्रिभिः प्रसेति तु द्वाभ्यामुखायां स्थापयेदमुम् ॥ २ ॥
पुनर्द्वाभ्यामुदैत्यग्निं पुनस्त्वेति समिन्धयेत् ।
बोधद्वाभ्यामुपस्थानं मन्त्राः पञ्चदशेरिताः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके
तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ चतुर्थाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः । )

---

अपे॑त॒ वी॑त॒ वि च॑ सर्प॒ता॒तो ये᳚ऽत्र॒ स्थ
पु॒रा॒णा ये च॒ नूत॑नाः । अदा॑दि॒दं य॒मो᳚ऽव॒-
सानं॑ पृथि॒व्या अक्र॑न्नि॒मं पि॒तरो॑ लो॒कम॑स्मै ।
अ॒ग्नेर्भस्मा᳚स्य॒ग्नेः पुरी॑षमसि सं॒ज्ञान॑मसि काम॒-
ध॒रण॑ं॒ मयि॑ ते कामध॒रणं॑ भूयात् । सं या वः॑
प्रि॒यास्त॒नुवः॒ सं प्रि॒या हृद॑यानि वः । आ॒त्मा
वो॑ अस्तु (१) संप्रि॑यः॒ संप्रि॑यास्त॒नुवो॒ मम॑ ।
अ॒यꣳ सो अ॒ग्निर्यस्मि॒न्त्सोम॒मिन्द्रः॑ सु॒तं द॒धे
ज॒ठरे॑ वावशा॒नः । स॒ह॒स्रियं॒ वाज॒मत्यं॒ न
सप्तिꣳ॑ सस॒वान्त्सन्त्स्तू॑यसे जातवेदः । अग्ने॒
दि॒वो अर्ण॒मच्छा॑ जिगा॒स्यच्छा॑ दे॒वाꣳ ऊ॑चिषे॒
धि॒ष्णिया॒ ये । याः प॒रस्ता᳚द्रोच॒ने सूर्य॑स्य॒

याश्चावस्तादुपतिष्ठन्त आपः। अग्ने यत्ते दिवि वर्चः पृथिव्यां यदोषधीषु ( २ ) अप्सु वा यजत्र। येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः। पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः। जुषन्ताꣳ हव्यमाहुतमनमीवा इषो महीः। इडामग्ने पुरुदꣳसꣳ सनिं गोः शश्वत्तमꣳ हवमानाय साध। स्यान्नः सूनुस्तनयो विजावाऽग्ने सा ते सुमतिर्भूत्वस्मे। अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः। तं जानन् ( ३ ) अग्न आ रोहाथा नो वर्धया रयिम्। चिदसि तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद परिचिदसि तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद लोकं पृण छिद्रं पृणाथो सीद शिवा त्वम्। इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्। ता अस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः। जन्मन्देवानां विशस्त्रिष्वा रोचने दिवः ( ४ ) ॥

( अस्त्वोषधीषु जानन्नष्टाचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

(गार्हपत्यचयनाभिधानम्)

(अथ चतुर्थाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः।)

---

अपेति। इत। वीति। इत। वीति। च। सर्पत। अतः। ये। अत्र। स्थ। पुराणाः। ये। च। नूतनाः। अदात्। इदम्। यमः। अवसानमित्यव—सानम्। पृथिव्याः। अक्रन्। इमम्। पितरः। लोकम्। अस्मै। अग्नेः। भस्म। असि। अग्नेः। पुरीषम्। असि। संज्ञानमिति सं—ज्ञानम्। असि। कामधरणमिति काम—धरणम्। मयि। ते। कामधरणमिति काम—धरणम्। भूयात्। समिति। याः। वः। प्रियाः। तनुवः। समिति। प्रिया। हृदयानि। वः। आत्मा। वः। अस्तु (१)। संप्रिय इति सं—प्रियः। संप्रिया इति सं—प्रियाः। तनुवः। मम। अयम्। सः। अग्निः। यस्मिन्। सोमम्। इन्द्रः। सुतम्। दधे। जठरे। वावशानः। सहस्रियम्। वाजम्। अत्यम्। न। सप्तिम्। ससवानिति स—सवान्। सन्। स्तूयसे। जातवेद इति जात—वेदः। अग्ने। दिवः। अर्णम्। अच्छ। जिगासि। अच्छ। देवान्। ऊचिषे। धिष्णियाः। ये। याः। परस्तात्। रोचने। सूर्यस्य। याः। च। अवस्तात्। उपतिष्ठन्त इत्युप—तिष्ठन्ते। आपः। अग्ने। यत्। ते। दिवि।

वर्चः । पृथिव्याम् । यत् । ओषधीषु ( २ ) । अप्स्वित्यप्—सु । वा । यजत्र । येन । अन्तरिक्षम् । उरु । आततन्थेत्या—ततन्थ । त्वेषः । सः । भानुः । अर्णवः । नृचक्षा इति नृ—चक्षाः । पुरीष्यासः । अग्नयः । प्रावणेभिरिति प्र—वनेभिः । सजोषस इति स—जोषसः । जुषन्ताम् । हव्यम् । आहुतमित्या—हुतम् । अनमीवाः । इषः । महीः । इडाम् । अग्ने । पुरुदंसमिति पुरु—दंसम् । सनिम् । गोः । शश्वत्तममिति शश्वत्—तमम् । हवमानाय । साध । स्यात् । नः । सूनुः । तनयः । विजावेति वि—जावा । अग्ने । सा । ते । सुमतिरिति सु—मतिः । भूतु । अस्मे इति । अयम् । ते । योनिः । ऋत्वियः । यतः । जातः । अरोचथाः । तम् । जानन् ( ३ ) । अग्ने । एति । रोह । अथ । नः । वर्धय । रयिम् । चित् । असि । तया । देवतया । अङ्गिरस्वत् । ध्रुवा । सीद । परिचिदिति परि—चित् । असि । तया । देवतया । अङ्गिरस्वत् । ध्रुवा । सीद । लोकम् । पृण । छिद्रम् । पृण । अथो इति । सीद । शिवा । त्वम् । इन्द्राग्नी इतीन्द्र—अग्नी । त्वा । बृहस्पतिः । अस्मिन् । योनौ । असीषदन् । ताः । अस्य । सूददोहस इति

सूदं—दोहसः । सोमंम् । श्रीणन्ति । पृश्नयः । जन्मन् । देवानाम् । विशः । त्रिषु । एति । रोचने । दिवः ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ चतुर्थकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः । )

---

तृतीयेऽनुवाके वह्नेरुख्यस्य चयनदेशं प्रति नयनमुक्तम् । अथ चतुर्थे गार्हपत्यचयनमुच्यते ।

कल्पः—"अपवृत्ते दीक्षापरिमाणेऽपेत वीतेति गार्हपत्यचितेरायतनं +व्याममात्रं चतुरस्रं परिमण्डलं वोद्धत्य" इति ।

पाठस्तु—

अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः । अदादिदं यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै । ,इति ।

यमस्य सर्वभूम्यधिपतित्वात्तद्भृत्याः पृथिव्यां सर्वत्र वर्तन्ते । हे यमभृत्या अत्र देवयजनस्थाने पुरातना ये यूयं स्थ नूतनाश्च ये यूयं स्थ ते सर्वेऽप्यपेतास्मात्स्थानादपगच्छत । वीतात्यन्तं विदूरं गच्छत । विसर्पत चातोऽस्मात्स्थानादपेत्य सांनिध्यं परित्यज्य विविधं गच्छत । पृथिव्या इदमवसानं स्थानमस्मभ्यं यमोऽदात् । पितरश्चास्मै यजमानायेमं लोकमक्रन्नेतच्चयनस्थानं कृतवन्तः ॥

तमेतं मन्त्रं विनियुङ्क्ते—

"यावती वै पृथिवी तस्यै यम आधिपत्यं परीयाय यो वै यमं देवयजनमस्या अनिर्याच्याग्निं चिनुते यमायैनꣳ स चिनुतेऽपेतेत्यध्यवसाययति यममेव देवयजनमस्यै निर्याच्याऽऽत्मनेऽग्निं चिनुते" [ सं० का० ५ प्र० २ अ० ३ ] इति ।

---

+ सर्वपुस्तकेषु व्यायाममात्रमिति पाठो दृश्यते, स प्रामादिकः ।

---

१ क. घ. ङ. 'यं नू' ।

सर्वस्याः पृथिव्या आधिपत्ये यमेन प्राप्ते सति यो यजमानो यमं प्रत्यस्याः पृथिव्याः संबन्धि देवयजनमयाचित्वा तत्राग्निं चिनुते तच्चयनं यमार्थमेव भवति न तु स्वयं तत्फलभाग्भवति। अतो यमं याचितुमपेतेति मन्त्रेणाध्यवसाययति देवयजनं निश्चिनुयात्। अतो याचितत्वात्स्वार्थमेव तच्चयनं भवति ॥

तमिमं मन्त्रं प्रशंसति—

" इष्वग्रेण वा अस्या अनामृतमिच्छन्तो नाविन्दन्ते देवा एतद्यजुरपश्यन्नपेतेति यदेतेनाध्यवसाययत्यनामृत एवाग्निं चिनुते " [ सं० का० ५ प्र० २ अ० ३ ] इति।

मृतैः प्राणिभिराक्रान्तमामृतं तथा न भवतीत्यनामृतं, तादृशमस्याः पृथिव्याः संबन्धि स्थानमिच्छन्तोऽपेक्षमाणा देवा बाणाग्रेण परिमितमीषदपि नाविन्दन्नालभन्त, सर्वमपि भूमिस्थानं प्रेतैराक्रान्तमेवेत्यर्थः। यद्यत्स्थानमन्विष्यते तत्र तत्र विचारणायां बहवः प्रेता अतीता भवन्ति। एतदेवाभिप्रेत्य महाभारते स्मरन्ति[1]—

" अत्र भीष्मशतं दग्धं द्रोणानां च शतत्रयम् " इति।

एवं सति देवास्तत्परिहारोपायं विचार्यैतद्यजुर्यजुर्वेदस्थमपेत वीतेत्येतं मन्त्रमपश्यन्। तस्मादनेन मन्त्रेण प्रेतानां निःसारितत्वात्तैरनाक्रान्त एव स्थानेऽग्निं चिनुते ॥

गार्हपत्यचितिस्थानस्योद्धननं विधत्ते—

" उद्धन्ति यदेवास्या अमेध्यं तदप हन्ति " [ सं० का० ५ प्र० २ अ० ३ ] इति।

अस्याः पृथिव्या उपरि निष्ठीवनादिना यत्स्थानममेध्यं जातं तदुध्दननेन विनिवार्यते ॥

उद्धते प्रदेशे जलेनावोक्षणं विधत्ते—

" अपोऽवोक्षति शान्त्यै " [ सं० का० ५ प्र० २ अ० ३ ] इति।

उद्धननेन निष्पन्ना भूमिर्जलेन शान्ता भवति ॥

कल्पः—" अग्नेर्भस्मासीति सिकता निवपति " इति।

पाठस्तु—

अग्नेर्भस्मास्यग्नेः पुरीषमसि, इति।

---

१ ख. च. स्मर्यते।

( गार्हपत्यचयनाभिधानम् )

हे सिकतास्वरूप त्वमग्नेर्भस्म भासकमसि। सिकताधारो ह्यग्निरतितीक्ष्णो भवति। तथा त्वमग्नेरवस्थानाय पुरीषमसि पांसुरूपमसि ॥

एतन्मन्त्रसाध्यं सिकतावापं विधत्ते--

"सिकता नि वपत्येतद्वा अग्नेर्वैश्वानरस्य रूप९ रूपेणैव वैश्वानरमव रुन्धे" [ सं० का० ५ प्र० २ अ० ३ ] इति।

आधानप्रकरणे—"वैश्वानरस्य रूपम्। पृथिव्यां परिस्रसा।" इत्याम्नातत्वात्सिकताशरीरं वैश्वानरस्याग्नेः स्वरूपम् ॥

कल्पः--"संज्ञानमित्यूषान्।" इति। निवपतीत्यनुवर्तते।

पाठस्तु—

संज्ञानमसि कामधरणं मयि
ते कामधरणं भूयात्।, इति।

हे ऊषस्वरूप त्वं संज्ञानं पशुसंबन्धि सम्यग्ज्ञानमसि। पशवो ह्याघ्राणेन सम्यग्ज्ञात्वा तमूषप्रदेशं लिहन्ति। तथा कामधरणमसि यज्ञियांशत्वेन ब्राह्मणे वक्ष्यमाणत्वाद्यज्ञद्वारा कामानां धारकमसि। अतस्ते यत्कामधरणसामर्थ्यं तन्मयि भूयात् ॥

एतन्मन्त्रसाध्यमूषनिवपनं विधत्ते—

"ऊषान्नि वपति पुष्टिर्वा एषा प्रजननं यदूषाः पुष्ट्यामेव प्रजननेऽग्निं चिनुतेऽथो संज्ञान एव संज्ञान९ ह्येतत्पशूनां यदूषाः" [ सं० का० ५ प्र० २ अ० ३ ] इति ]।

पुष्टिहेतुत्वं प्रजोत्पत्तिहेतुत्वं चोषाणां यज्ञद्वारा द्रष्टव्यम्। तस्मादूषनिवापे सति पुष्टिहेतौ प्रजननहेतौ च देशेऽग्निश्चितो भवति। किंच संज्ञानहेतावेव देशेऽग्निश्चितो भवति। ऊषाणां पशुज्ञानहेतुत्वं लोके प्रसिद्धम्। पशवो ह्यूषरप्रदेशं ज्ञात्वा तत्रत्यं लवणोदकमेव पातुं गच्छन्ति। पीत्वा च पुष्टिं प्राप्नुवन्ति। अतः संज्ञानत्वं पुष्टिहेतुत्वं च ॥

यदुक्तं सूत्रकारेण—"तान्निवपन्यददश्चन्द्रमसि कृष्णं तदिहास्त्विति मनसा ध्यायति" इति, तदेतद्विधत्ते--

"द्यावापृथिवी सहाऽऽस्तां ते वियती अब्रूतामस्त्वेव नौ सह यज्ञियमिति यदमुष्या यज्ञियमासीत्तदस्यामदधात्त ऊषा अभवन्यदस्या यज्ञियमासीत्तदमुष्यामदधात्तददश्चन्द्रमसि कृष्णमूषान्निवपन्नदो ध्यायेद्द्यावापृथिव्योरेव यज्ञियेऽग्निं चिनुते" [ सं० का० ५ प्र० २ अ० ३ ] इति।

---

१ क. घ. ङ. 'घप्र'।

पुरा सृष्टिकाले प्रजापतिना सृष्टे द्यावापृथिव्यौ जतुकाष्ठवत्संश्लिष्टे तिष्ठतः। ते यदा प्रजापत्यनुज्ञया वियुज्येते तदानीं परस्परानुरागेणैवं भागं कृतवत्यौ नावावयोर्यद्यज्ञयोग्यं सारं तत्सहैवास्त्विवति। ततोऽमुष्या दिवो यद्यज्ञयोग्यं सारमासीत्तदस्यां पृथिव्यां सा द्यौः स्थापितवती। तच्च सारं भूम्यामिदानीं दृश्यमानास्ते प्रसिद्धा ऊषा आसन्। यच्चास्याः पृथिव्या यज्ञयोग्यं सारमासीत्तत्सारममुष्यां दिवि सा पृथिवी स्थापितवती। तत्स्थापितं चन्द्रमसि दृश्यमानं कृष्णरूपमभूत्। अत उभयोः सारयोरेकीभावायोपान्नित्रपन्नदश्चन्द्रमसि कृष्णरूपं ध्यायेत्। तेन ध्यानेन द्यावापृथिव्योः संबन्धिनि यज्ञयोग्ये सारेऽग्निं चितवान्भवति॥

कल्पः—"सं या वः प्रियास्तनुव इत्यूषान्सिकताश्च सꣳसृज्य" इति।

पाठस्तु—

सं या वः प्रियास्तनुवः सं प्रिया
हृदयानि वः। आत्मा वो अस्तु
संप्रियः संप्रियास्तनुवो मम।, इति।

हे सिकतोषा वो युष्माकं याः प्रियास्तनुवः स्युस्ताः परस्परं संसृज्यन्ताम्। वो युष्माकं प्रिया प्रियाणि हृदयान्यपि संसृज्यन्ताम्। तथा वो युष्माकमात्माऽपि संप्रियोऽस्तु। अपि च ममापि तनुवः संप्रियाः सन्तु॥

कल्पः—"अयꣳसो अग्निरिति चतस्रो मध्ये प्राचीरिष्टका गार्हपत्याचितावुपदधाति" इति।

अयꣳसो अग्निरित्येतस्मिन्सूक्ते प्रथमामाह—

अयꣳ सो अग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे
जठरे वावशानः। सहस्रियं वाजमत्यं
न सप्तिꣳ ससवान्त्सन्त्स्तूयसे जातवेदः।, इति।

यस्मिन्गार्हपत्यचितिरूपेऽग्नौ वावशानः कामयमान इन्द्रः सुतमभिषुतं सोमं जठरे दधे स्वोदरे धारयति स ताद्दशोऽयमग्निरिदानीमिष्टकाभिश्चीयत इति शेषः। हे जातवेदोऽत्यं सप्तिं न सत्वरगमनकुशलमश्वमिव सहस्रियं सहस्रसंख्याकेन धनेन संमितं वाजमन्नं ससवान्दत्तवान्सन्यजमानैः स्तूयसे॥

अथ द्वितीयामाह—

अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाꣳ

(गार्हपत्यचयनाभिधानम्)

ऊचिषे धिष्णिया ये। याः परस्ताद्रोचने सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपः।, इति।

हे इष्टकारूपाग्ने दिवः सकाशादर्णमुदकमच्छाऽऽभिमुख्येन जिगासि प्राप्नोषि। यागद्वारेण पुष्टिं संपादयसीत्यर्थः। ये देवा धिष्णिया धिष्णियाधारास्तान्देवानच्छाऽऽभिमुख्येनोचिषे हविः स्वी कुरुतेति ब्रूषे। त्वय्यत्रोपहिते त्वया समाहूता इव देवा आगत्य हविः स्वी करिष्यन्तीत्यर्थः। सूर्यस्य रोचने दीप्तिरूपे मण्डले सन्ति या आपः परस्तादूर्ध्वप्रदेश उपतिष्ठन्ते, याश्चावस्तादधोभागे वर्तन्ते ताः सर्वास्त्वय्युपहित इहाऽऽगमिष्यन्तीति शेषः॥

अथ तृतीयामाह—

अग्ने यत्ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्सु वा यजत्र। येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः।, इति।

हे यजत्र यागनिष्पादकाग्ने ते तव यद्वर्चो दिवि सूर्यरूपेण वर्तते, पृथिव्यां वह्निज्वालारूपेण वर्तते। तथा यत्तेज ओषधीषु तत्फलपरिपाककालाकारेण वर्तते, अप्सु वडवानलरूपेण वर्तते, येन त्वदीयेन वर्चसा विद्युद्रूपेणोरु विस्तीर्णमन्तरिक्षमाततन्थ सर्वतो विस्तारितवानसि प्रकाशितवानित्यर्थः। त्वेषो दीप्तिमान्स त्वदीयवर्चःसमूहो भानुर्भासकोऽर्णवः समुद्ररूपविस्तीर्णो नृचक्षा मनुष्यान्प्रख्यापयिता। तथाविधतेजोरूपामिष्टकामुपदधामीति शेषः॥

अथ चतुर्थीमाह—

पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः। जुषन्ताꣳ हव्यमाहुतमनमीवा इषो महीः।, इति।

अग्नय इष्टकारूपा आहुतं हव्यं जुषन्ताम्। कीदृशा अग्नयः। पुरीषे पांसुरूपे भवाः पुरीष्यासः। प्रावणेभिः प्रकर्षेण संभजनशीलैर्मनोभिः सजोषसः परस्परं समानप्रीतयः। अनमीवा रोगरहिताः। इषोऽभीष्टप्राप्तिहेतवः। महीः प्रौढाः। तथाविधाग्निरूपामिष्टकामुपदधामीति शेषः॥

कल्पः—"इडामग्नेऽयं ते योनिर्ऋत्विय इति द्वे पुरस्तात्समीची" इति। उपदधातीत्यनुवर्तते।

---

१ ख. च. 'षे च स्थाने स। २ ख. च. 'र्ध्वदिशि उ'। ३ ख. च. ङ. 'ति। एतेऽग्न'। ४ क. घ. ङ. 'ण भ'।

तत्र प्रथमामाह—

इडामग्ने पुरुदꣳसꣳ सनिं गोः शश्वत्तमꣳ
हवमानाय साध। स्यान्नः सूनुस्तनयो विजा-
वाऽग्ने सा ते सुमतिर्भूत्वस्मे।, इति।

हेऽग्ने हवमानाय होतुं प्रवृत्ताय यजमानाय गोः सनिं गवादिपशूनां दातारं साध संपादय। कीदृशं सनिम्। इडां सर्वैरीड्यं प्रशंसनीयम्। पुरुदंसं बहुधा दर्शनीयम्। शश्वत्तममत्यन्तमविच्छेदेन वर्तमानम्। किं च त्वत्प्रसादान्नोऽस्माकं सूनुः स्यात्पुत्रोऽस्तु। कीदृशः, तनयः, औरस इत्यर्थः। पुत्रसामान्यस्य सूनुशब्देनोक्तत्वाद्दत्तपुत्रादिव्यावृत्तये विशेषविवक्षया तनयशब्दः प्रयुज्यते। विजावा विविधानां जनयिता। हेऽग्ने ते तव सा सुमतिस्तथाविधाऽनुग्रहबुद्धिरस्मे भूत्वस्मासु भवतु॥

अथ द्वितीयामाह—

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः। तं
जानन्नग्न आ रोहाथा नो वर्धया रयिम्।, इति।

हेऽग्नेऽयमिष्टकारूपः पदार्थस्ते तव योनिरुत्पत्तिहेतुः, ऋत्विय ऋतुकालीनस्त्रीपुरुषसंगमतुल्य इति। यतो योनेरिष्टकारूपाज्जात उत्पन्नस्त्वमरोचथा दीप्तिमानसि, तं तथाविधं योनिमिष्टकारूपं जानन्नवगच्छन्सन्नारोह प्राप्नुहि। अथानन्तरं नोऽस्माकं रयिं धनं वर्धय॥

कल्पः—"ऐ[२]वं पश्चाच्चिदसि परिचिदसीति समीची तिरश्ची वा द्वे" इति। उपदधातीत्यनुवर्तते।

प्रथममन्त्रपाठस्तु—

चिदसि तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद, इति।

भोगांश्चिनोति संपादयतीति चित्। हे इष्टके त्वं चिदसि। यया देवतया त्वमभिमन्यसे तया देवतयाऽनुगृहीता त्वं ध्रुवा स्थिरा भूत्वा सीदावतिष्ठ। तत्र दृष्टान्तः—अङ्गिरस्वत्। अङ्गिरोभिरुपहितेष्टका यथा ध्रुवा भवति तद्वत्॥

द्वितीयमन्त्रपाठस्तु—

परिचिदसि तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद, इति।

---

१ ख. च. °पवाची त°। २ क. घ. ङ. एनं।

परितो भोगांश्चिनोति संपादयतीति परिचित्। शेषं पूर्ववत्। तया देवतयेत्यादिवाक्यं पूर्वेष्वप्युपधानमन्त्रेषु प्रयोक्तव्यम्। तथा च सूत्रकारेणोक्तम्—

"तया देवतयाऽन्ततो दधाति" इति॥

उक्तेषूपधानमन्त्रेष्वय२ं सो अग्निरित्यारभ्याथा नो वर्धया रयिमित्येतदन्तं षडृचमेकं सूक्तं, तदिदं प्रशंसति—

"अय२ं सो अग्निरिति विश्वामित्रस्य सूक्तं भवत्येतेन वै विश्वामित्रोऽग्नेः प्रियं धामावारुन्धाग्नेरेवैतेन प्रियं धामात्र रुन्धे" [ सं० का० ५ प्र० २ अ० ३ ] इति॥

तस्मिन्सूक्ते चतसृभिराद्याभिर्ऋग्भिः साध्यमिष्टकोपधानं विधत्ते—

"छन्दोभिर्वै देवाः सुवर्गं लोकमायन्चतस्रः प्राचीरुप दधाति चत्वारि छन्दा२ंसि छन्दोभिरेव तद्यजमानः सुवर्गं लोकमेति" [ सं० का० ५ प्र० २ अ० ३ ] इति।

छन्दोयुक्ताभिश्चतसृभिर्ऋग्भिरुपधायेत्यध्याहारः। देववद्यजमानोऽपि च्छन्दोयुक्ताभिर्ऋग्भिश्चतस्र इष्टकाः प्रागग्रा उपदध्यात्॥

अथ सूक्तगताभ्यां पञ्चमषष्ठमन्त्राभ्यामुपरितनयजुर्भ्यां च साध्यमिष्टकोपधानं विधत्ते—

"तेषा२ं सुवर्गं लोकं यतां दिशः समव्लीयन्त ते द्वे पुरस्तात्समीची उपादधत द्वे पश्चात्समीची ताभिर्वै ते दिशोऽदृ२ंहन्यद्द्वे पुरस्तात्समीची उपदधाति द्वे पश्चात्समीची दिशां विधृत्यै" [ सं० का० ५ प्र० २ अ० ३ ] इति।

यदा चतस्र इष्टका उपधाय ते देवाः स्वर्गं लोकं गच्छन्ति तदा तेषां संबन्धिन्यो दिशः पालकाभावात्समव्लीयन्त सम्यग्विशीर्णा अभवन्, दिग्वर्तिन्यः प्रजा विह्वला अभवन्नित्यर्थः। तन्मा भूदिति देवाः पुरस्ताद्दिशि ऋग्भ्यां द्वे इष्टके पश्चाच्च यजुर्भ्यां द्वे इष्टके उपादधत। ताभिश्चतसृभिरिष्टकाभिस्ते देवा दिशोऽदृंहन्दृढीकृतवन्तः। तथा यजमानोऽप्युपदध्यात्॥

अथ पूर्वमुपहिताश्चतस्र इदानीमुपहिताश्चतस्रश्च मिलित्वा पुनः प्रशंसति—

"अथो पशवो वै छन्दा२ंसि पशूनेवास्मै समीचो दधात्यष्टावुप दधात्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तं चिनुतेऽष्टावुप दधात्यष्टाक्षरा गायत्री गायत्री सुवर्गं लोकमञ्जसा वेद सुवर्गस्य लोकस्य प्रज्ञात्यै" [ सं० का० ५ प्र० २ अ० ३ ] इति।

दिशां विधारणायोपधानं पूर्वमुक्तम्। अपि च च्छन्दसां पशुप्राप्तिहेतुत्वेन पशुरूपत्वाच्छन्दोयुक्ताभिर्ऋग्भिरुपधानेन समीचः पशून्संपादयति। उपरित-

नाभ्यां द्वाभ्यां सहाष्टत्वेन गायत्रीसाम्यम् । मुखजत्वेन गायत्रीसंबद्धोऽग्नि-र्यावानस्ति तं सर्वं चिनुते । किंच गायत्र्याः स्वर्गलोकाभिज्ञत्वात्तत्साम्यं स्वर्गाभिज्ञानाय संपद्यते ॥

कल्पः—" अवशिष्टं त्रयोदशभिर्लोकंपृणाभिः प्रच्छादयति लोकं पृण ता अस्य सूददोहस इति द्वाभ्यां मन्त्राभ्यामेकैकां लोकंपृणामुपदधाति" इति ।

तत्र प्रथमामाह—

लोकं पृण छिद्रं पृणाथो सीद
शिवा त्वम् । इन्द्राग्नी त्वा बृह-
स्पतिरस्मिन्योनावसीषदन् ।, इति ।

हे इष्टके लोकं गार्हपत्यचयनार्थे प्रदेशे पूर्वोक्ताभिरिष्टकाभिरनाक्रान्तमव-शिष्टं स्थानं पृण पूरय । तथा छिद्रं पृण द्वयोरिष्टकयोर्मध्ये किंचिदपि छिद्रं यथा न दृश्यते तथा पूरय, अत्यन्तं श्लिष्टा भवेत्यर्थः । अथो अपि च त्वं शिवा शान्ता सती सीद तिष्ठ । इन्द्राग्नी बृहस्पतिश्चेत्येते देवा अस्मिन्योनौ स्थाने त्वामसीषदन्सादितवन्तः ॥

अथ द्वितीयामाह—

ता अस्य सूददोहसः सोमꣳ श्री-
णन्ति पृश्नयः । जन्मन्देवानां
विशस्त्रिष्वा रोचने दिवः ॥, इति ॥

दिवो रोचने स्वर्गस्य प्रकाशकेऽस्य जन्मन्यजमानस्य[2] जन्मनि निमित्तभूते सति देवानां संबन्धिन्यो विशः प्रजारूपाः पृश्नयो गोसदृशाः सूददोहसोऽ-स्य दोहयित्र्यस्ता इष्टकाः सोमं श्रीणन्ति पक्कं कुर्वन्ति । कदा[3], त्रिष्वा समन्ताद्यानि प्रातःसवनादीनि तेषु, निरन्तरं सोमपाकहेतव एता इष्टका इत्यर्थः ॥

एतन्मन्त्रद्वयसाध्यमुपधानं विधत्ते—

" त्रयोदश लोकंपृणा उप दधात्येकविꣳशतिः सं पद्यन्ते प्रतिष्ठा वा एक-विꣳशः प्रतिष्ठा गार्हपत्य एकविꣳशस्यैव प्रतिष्ठां गार्हपत्यमनु प्रति तिष्ठति " [ सं० का० ५ प्र० २ अ० ३ ] इति ।

---

१ ख. घ. ङ. च. °भ्यां द्वाभ्यां म° । २ ख. च. °योऽल्पगो° । ३ ख. च. °दा, आ त्रि° ।

( गार्हपत्यचयनाभिधानम् )

लोकमिष्टकानाक्रान्तमवशिष्टं देशं पूरयन्तीति लोकंपृणाः, एतन्नामिका इष्टकास्त्रयोदशसंख्याका उपदध्यात् । एवं सति पूर्वोक्ताभिरष्टभिरिष्टकाभिः सहैकविंशतिः संपद्यन्ते । तथा सत्येकविंशः स्तोमो यथा स्तोमान्तराणां त्रिवृदादीनां प्रतिष्ठा तथा नित्यं धार्यो गार्हपत्योऽप्याहवनीयाद्यग्नीनां प्रतिष्ठा । तदुभयप्रतिष्ठामनु यजमानः प्रतितिष्ठतीति ॥

वेदनं प्रशंसति—

" प्रत्यग्निं चिक्यानस्तिष्ठति य एवं वेद " [ सं० का० ५ प्र० २ अ० ३ ] इति ।

चिक्यानश्चयनं कृतवान्भूत्वा प्रतितिष्ठतीत्यर्थः ॥

एवं निरूपिता येयमेका चितिः, ईदृशीनां चितीनामुपर्यधोभावेन वर्तमानानां पञ्चसंख्यां विधत्ते—

" पञ्चचितीकं चिन्वीत प्रथमं चिन्वानः पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञमेव पशूनव रुन्धे " [ सं० का० ५ प्र० २ अ० ३ ] इति ।

प्रथमं चिन्वानः प्रथमवारमग्निचयनं कुर्वन्यजमानः पञ्चचितीकं पञ्चसंख्याकाश्चितयोऽनन्तरोक्ता यस्याग्नेस्तादृशं चिन्वीत । धानादिपयस्यान्तैः पञ्चभिर्हविर्भिर्युक्तत्वात्पाङ्क्तो यज्ञः । सपुच्छैश्चतुर्भिः पादैः पाङ्क्ताः पशवः । एवं चयनं कृत्वा यज्ञं पशूंश्च प्राप्नोति ॥

द्वितीयवारमग्निचयनं कुर्वतः संख्यां विधत्ते--

" त्रिचितीकं चिन्वीत द्वितीयं चिन्वानस्त्रय इमे लोका एष्वेव लोकेषु प्रतितिष्ठति[1] " [ सं० का० ५ प्र० २ अ० ३ ] इति ॥

तृतीयवारमग्निचयनं कुर्वतः संख्यां विधत्ते--

" एकचितीकं चिन्वीत तृतीयं चिन्वान एकधा वै सुवर्गो लोक एकवृतैव सुवर्गं लोकमेति " [ सं० का० ५ प्र० २ अ० ३ ] इति ।

एकधैकप्रकारः, सुखैकस्वाभाव्यात्स्वर्गप्राप्तस्य तद्धेतुकर्मसमाप्तेः पूर्वं पुनरावृत्त्यभावाच्च । एकवृतैकगुणया चित्या त्रिगुणत्वपञ्चगुणत्ववर्जितया ॥

पांसुप्रक्षेपं विधत्ते—

" पुरीषेणाभ्यूहति तस्मान्मांसेनास्थि छन्नम् " [ सं० का० ५ प्र० २ अ० ३ ] इति ।

यस्मादस्थिसमाः कठिना इष्टका मांससमेन मृदुना पांसुनाऽभ्यूह्याच्छादयति तस्माल्लोकेऽपि मांसेनास्थि च्छन्नम् ॥

---

१ ख. घ. ङ. च. °ति । द्वितीयं द्वितीयवारम् । तृ° ।

वेदनं प्रशंसति—

" न दुश्चर्मा भवति य एवं वेद " [ सं० का० ५ प्र० २ अ० ३ ] इति ॥

चितिगतां पुरीषगतां च संख्यां मिलित्वा प्रशंसति—

" पञ्च चितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहति दश संपद्यन्ते दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रति तिष्ठति" [ सं०का०५प्र०२अ०३ ] इति ।

एकां चितिं कृत्वा पुरीषेणाऽऽच्छादयेत् । तस्या उपरि द्वितीयां चितिं कृत्वा तामप्याच्छादयेत् । एवं चितिपञ्चकेन पुरीषपञ्चकेन च दशसंख्यासंपत्तेर्विराट्छन्दोद्वारेणान्ने प्रतितिष्ठति ॥

अत्र विनियोगसंग्रहः--

अपोद्धन्ति चितिस्थानमग्नेस्तु सिकतां ( ता ) वपेत् ।
संज्ञानमूषान्निवपेत्संया( याः ) संसृजते द्वयम् ॥ १ ॥
अयं चतसृभिः प्राचीरिष्टका आदधाति हि ।
इडां द्वाभ्यां पुरस्ताद्धे चिद्वाभ्यां पश्चिमे द्वयम् ।
लोकं लोकंपृणा द्वाभ्यां मन्त्रा अत्र चतुर्दश ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ चतुर्थाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः । )

---

समितꣳ सं कल्पेथाꣳ संप्रियौ रोचिष्णू सुमनस्यमानौ । इषमूर्जमभि संवसानौ सं वां मनाꣳसि सं व्रता समु चित्तान्याऽकरम् । अग्ने पुरीष्याधिपा भवा त्वं नः । इषमूर्जं यजमानाय धेहि । पुरीष्यस्त्वमग्ने रयिमान्पुष्टिमाꣳ असि । शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहाऽसदः । भवतं नः समनसौ समोकसौ

( आहवनीयचयनार्थं भूकर्षणाभिधानम् )

( १ ) अरेपसौ। मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः। मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनावभारुखा। तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा वि मुञ्चतु। यदस्य पारे रजसः शुक्रं ज्योतिरजायत। तन्नः पर्षदति द्विषोऽग्ने वैश्वानर स्वाहा। नमः सु ते निर्ऋते विश्वरूपे ( २ ) अयस्मयं वि चृता बन्धमेतम्। यमेन त्वं यम्या संविदानोत्तमं नाकमधि रोहयेमम्। यत्ते देवी निर्ऋतिराबबन्ध दाम ग्रीवास्वविचर्त्यम्। इदं ते तद्वि ष्याम्यायुषो न मध्यादथा जीवः पितुमद्धि प्रमुक्तः। यस्यास्ते अस्याः क्रूर आसञ्जुहोम्येषां बन्धानामवसर्जनाय। भूमिरिति त्वा जना विदुर्निर्ऋतिः ( ३ ) इति त्वाऽहं परि वेद विश्वतः। असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यां तस्करस्यान्वेषि। अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु। देवीमहं निर्ऋतिं वन्दमानः पितेव पुत्रं दसये वचोभिः। विश्वस्य या जायमानस्य वेद शिरः

शिरः प्रति सूरी वि चष्टे । निवेशनः संगमनो वसूनां विश्वा रूपाऽभि चष्टे (४) शचीभिः । देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् । सं वरत्रा दधातन निराहावान्कृणोतन । सिञ्चामहा अवटमुद्रिणं वयं विश्वाऽहाऽदस्तमक्षितम् । निष्कृताहावमवटः सुवरत्रः सुषेचनम् । उद्रिणः सिञ्चे अक्षितम् । सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक् । धीरा देवेषु सुम्नया । युनक्त सीरा वि युगा तनोत कृते योनौ वपतेह (५) बीजम् । गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्या पक्वमाऽयत् । लाङ्गलं पवीरवः सुशेवः सुमतित्सरु । उदित्कृषति गामविं प्रफर्व्यं च पीवरीम् । प्रस्थावद्रथवाहनम् । शुनं नः फाला वि तुदन्तु भूमिः शुनं कीनाशा अभि यन्तु वाहान् । शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम् । कामं कामदुघे धुक्ष्व मित्राय वरुणाय च । इन्द्रायाग्नये पूष्ण ओषधीभ्यः प्रजाभ्यः । घृतेन सीता मधुना समक्ता विश्वैर्देवैरनुमता मरुद्भिः ।

(आहवनीयचयनार्थं भूकर्षणाभिधानम्)

ऊर्जस्वती पयसा पिन्वमानाऽस्मान्त्सीते पयसाऽभ्यावंवृत्स्व (६)॥

(समोकसौ विश्वरूपे विदुर्निर्ऋतिरभि चंष्ट इह मित्राय द्वाविꣳशतिश्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

(अथ चतुर्थाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः।)

---

समिति। इतम्। समिति। कल्पेथाम्। संप्रियाविति सं—प्रियौ। रोचिष्णू इति। सुमनस्यमानाविति सु—मनस्यमानौ। इषम्। ऊर्जम्। अभीति। संवसानाविति सं—वसानौ। समिति। वाम्। मनाꣳसि। समिति। व्रता। समिति। उ। चित्तानि। एति। अकरम्। अग्ने। पुरीष्य। अधिपा इत्यधि—पाः। भव। त्वम्। नः। इषम्। ऊर्जम्। यजमानाय। धेहि। पुरीष्यः। त्वम्। अग्ने। रयिमानिति रयि—मान्। पुष्टिमानिति पुष्टि—मान्। असि। शिवाः। कृत्वा। दिशः। सर्वाः। स्वाम्। योनिम्। इह। एति। असदः। भवतम्। नः। समनसाविति स—मनसौ। समोकसाविति सम्—ओकसौ (१)। अरेपसौ। मा। यज्ञम्। हिꣳसिष्टम्। मा। यज्ञपतिमिति यज्ञ—पतिम्। जातवेद-

साविति जात—वेदसौ । शिवौ । भवतम् । अद्य । नः । माता । इव । पुत्रम् । पृथिवी । पुरीष्यम् । अग्निम् । स्वे । योनौ । अभाः । उखा । ताम् । विश्वैः । देवैः । ऋतुभिरित्यृतु—भिः । संविदान इति सं—विदानः । प्रजापतिरिति प्रजा—पतिः । विश्व-कर्मेति विश्व—कर्मा । वीति । मुञ्चतु । यत् । अस्य । पारे । रजसः । शुक्रम् । ज्योतिः । अजायत । तत् । नः । पर्षत् । अतीति । द्विषः । अग्ने । वैश्वानर । स्वाहा । नमः । स्विति । ते । निर्ऋत इति निः—ऋते । विश्वरूप इति विश्व—रूपे ( २ )। अयस्म-यम् । वीति । चृत । बन्धम् । एतम् । यमेन । त्वम् । यम्या । संविदानेति सं—विदाना । उत्तम-मित्युत्—तमम् । नाकम् । अधीति । रोहय । इमम् । यत् । ते । देवी । निर्ऋतिरिति निः—ऋतिः । आब-बन्धेत्या—बबन्ध । दाम । ग्रीवासु । अविचर्त्यमि-त्यवि—चर्त्यम् । इदम् । ते । तत् । वीति । स्यामि । आयुषः । न । मध्यात् । अथ । जीवः । पितुम् । अद्धि । प्रमुक्त इति प्र—मुक्तः । यस्याः । ते । अस्याः । क्रूरे । आसन् । जुहोमि । एषाम् । बन्धा-नाम् । अवसर्जनायेत्यव—सर्जनाय । भूमिः । इति ।

(आहवनीयचयनार्थं भूकर्षणाभिधानम्)

त्वा। जनाः। विदुः। निर्ऋतिरिति निः—ऋतिः (३)। इति। त्वा। अहम्। परीति। वेद। विश्वतः। असुन्वन्तम्। अयजमानम्। इच्छ। स्तेनस्य। इत्याम्। तस्करस्य। अन्विति। एषि। अन्यम्। अस्मत्। इच्छ। सा। ते। इत्या। नमः। देवि। निर्ऋत इति निः—ऋते। तुभ्यम्। अस्तु। देवीम्। अहम्। निर्ऋतिमिति निः—ऋतिम्। वन्दमानः। पिता। इव। पुत्रम्। दसये। वचोभिरिति वचः—भिः। विश्वस्य। या। जायमानस्य। वेद। शिरःशिर इति शिरः—शिरः। प्रतीति। सूरी। वीति। चष्टे। निवेशन इति नि—वेशनः। संगमन इति सं—गमनः। वसूनाम्। विश्वा। रूपा। अभीति। चष्टे (४)। शचीभिरिति शचि—भिः। देवः। इव। सविता। सत्यधर्मेति सत्य—धर्मा। इन्द्रः। न। तस्थौ। समर इति सम्—अरे। पथीनाम्। समिति। वरत्राः। दधातन। निरिति। आहावानित्या—हावान्। कृणोतन। सिञ्चामहै। अवटम्। उद्रिणम्। वयम्। विश्वा। अहा। अदस्तम्। अक्षितम्। निष्कृताहावमिति निष्कृत—आहावम्। अवटम्। सुवरत्र-

मिति सु—वरत्रम् । सुषेचनमिति सु—सेचनम् । उद्रिणम् । सिञ्चे । अक्षितम् । सीरा । युञ्जन्ति । कवयः । युगा । वीति । तन्वते । पृथक् । धीराः । देवेषु । सुम्नया । युनक्त । सीरा । वीति । युगा । तनोत । कृते । योनौ । वपत । इह (५) । बीजम् । गिरा । च । श्रुष्टिः । सभरा इति स—भराः । असत् । नः । नेदीयः । इत् । सृण्या । पक्कम् । एति । अयत् । लाङ्गलम् । पवीरवम् । सुशेवमिति सु—शेवम् । सुमतित्सर्विति सुमति—त्सरु । उदिति । इत् । कृषति । गाम् । अविम् । प्रफर्व्यमिति प्र—फर्व्यम् । च । पीवरीम् । प्रस्थावदिति प्रस्थ—वत् । रथवाहनमिति रथ—वाहनम् । शुनम् । नः । फालाः । वीति । तुदन्तु । भूमिम् । शुनम् । कीनाशाः । अभीति । यन्तु । वाहान् । शुनम् । पर्जन्यः । मधुना । पयोभिरिति पयः—भिः । शुनासीरा । शुनम् । अस्मासु । धत्तम् । कामम् । कामदुघ इति काम—दुघे । धुक्ष्व । मित्राय । वरुणाय । च । इन्द्राय । अग्नये । पूष्णे । ओषधीभ्य इत्योषधि—भ्यः । प्रजाभ्य इति प्र—जाभ्यः । घृतेन । सीता । मधुना । समक्तेति सम्—

अक्ता। विश्वैः। देवैः। अनुमतेत्यनु—मता। मरुद्भिरिति मरुत्—भिः। ऊर्जस्वती। पयसा। पिन्वमाना। अस्मान्। सीते। पयसा। अभ्याववृत्स्वेत्यभि—आववृत्स्व (६)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

( अथ चतुर्थकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः। )

---

चतुर्थेऽनुवाके गार्हपत्यचयनमुक्तम्। अथ पञ्चमेऽनुवाक आहवनीयचयनार्थं भुवः कर्षणमुच्यते।

कल्पः—" समितमिति तस्यां चतसृभिरुख्यं संनिवपति " इति।

तत्र प्रथमामाह—

समितꣳ सं कल्पेथाꣳ संप्रियौ रोचिष्णू सुमनस्यमानौ। इषमूर्जमभि संवसानौ सं वां मनाꣳसि सं व्रता समु चित्तान्याऽकरम्।, इति।

येयं गार्हपत्यचितिः पूर्वानुवाकेऽभिहिता तस्यामुख्याग्निसंनिवपनवेलायां द्वावग्नी संपद्येते। पूर्वसिद्धोऽग्निरेको द्वितीयसिद्धोऽग्निरपरः। तावुभौ संबोध्येदमुच्यते—हेऽग्नी युवामुभौ समितं संगतौ भवतम्। संगत्य च संकल्पेथां सम्यग्यज्ञस्य कल्पनं निष्पादनं कुरुतम्। कीदृशावग्नी, संप्रियौ सम्यक्परस्परं प्रीतियुक्तौ, रोचिष्णू दीप्यमानौ, सुमनस्यमानौ परस्परं सौमनस्यं प्राप्तौ, इषमन्नमूर्जं रसं च (चाभि) संवसानौ [सर्वतः] सम्यक्संपादयन्तौ। वां युवयोर्मनांसि मनोजन्यान्संकल्पान्समाकरं सर्वतः संगतानि करोमि। तथा व्रतानि कर्माणि समाकरम्। तथा चित्तानि कर्मविषयज्ञानानि समाकरम्॥

अथ द्वितीयामाह—

अग्ने पुरीष्याधिपा भवा त्वं नः।
इषमूर्जं यजमानाय धेहि।, इति।

---

१ क. घ. ङ. भवेत्°।

हे पुरीष्य पांसुयुक्ताग्ने मिलितोभयाग्निस्वरूप त्वं नोऽस्माकमधिपा भवा- धिकं पालयिता भव । तादृशस्त्वं यजमानायान्नं रसं च संपादय ॥

अथ तृतीयामाह—

पुरीष्यस्त्वमग्ने रयिमान्पुष्टिमाꣳ असि । शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहाऽसदः ।, इति ।

हेऽग्ने द्व्यात्मक त्वं पुरीष्यः पुरीषार्हो रयिमान्धनवान्पुष्टिमानप्यासि । सर्वा दिशः शिवाः शान्ताः कृत्वेह चितौ स्वां योनिं स्वकीयं स्थानमासदः प्राप्नुहि ॥

अथ चतुर्थीमाह—

भवतं नः समनसौ समोकसावरेपसौ ।
मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं
जातवेदसौ शिवौ भवतमद्य नः ।, इति ।

योऽग्निः पुरातनो यश्चोख्यस्तौ युवां नोऽस्मान्प्रति समनसौ समानमनस्कौ विप्रतिपत्तिरहितौ समोकसौ समाननिवासस्थानावरेपसौ पापचित्तरहितौ यज्ञस्य यज्ञपतेश्च हिंसां मा कुरुतम् । अद्यास्मिन्कर्मणि हे जातवेदसौ नोऽस्मान्प्रति शिवौ शान्तौ भवतम् ॥

एतान्मन्त्रान्विनियुङ्क्ते—

" वि वा एतौ द्विषाते यश्च पुराऽग्निर्यश्चोखायाꣳ समितमिति चतसृभिः सं नि वपति चत्वारि छन्दाꣳसि छन्दाꣳसि खलु वा अग्नेः प्रिया तनूः प्रियैवैनौ तनुवा सꣳ शास्ति " [ सं० का० ५ प्र० २ अ० ४ ] इति ।

अग्निं चिकीर्षतः पुरुषस्य यश्च पूर्वसिद्ध आहितोऽग्निर्यश्चोखायां वर्तमान इदानींतनोऽग्निरेतावुभौ परस्परं विद्विषाते । अहमेवाऽऽहुत्याधारो भूयासं न त्वमित्येवंरूपो विद्वेषः । अतो विद्वेषपरिहाराय संनिवपति तावुभौ संयोजयेत् । अभ्यादानादिषु गायत्र्यादिच्छन्दसां साधनत्वाच्छन्दांस्यग्नेः प्रिया तनूः । तथा सत्यत्र मन्त्रगतया चतुःसंख्यया चतुर्णां गायत्र्यादिच्छन्दसां बुद्धिस्थत्वात्प्रिययैव तनुवा संगतौ यथा भवतस्तथा संशासनं कृतवान्भवति ॥

प्रथममन्त्रगतस्य समितमितिपदस्य तात्पर्यं दर्शयति—

"समितमित्याह तस्माद्ब्रह्मणा क्षत्रꣳ समेति"[सं०का०५प्र०२अ०४]इति ।

यस्मादयं मन्त्रः संगतौ भवतमिति ब्रूते तस्माल्लोकेऽपि पुरोहितरूपेण ब्राह्मणेन क्षत्रियरूपो राजा संगच्छते । अत एवान्यत्र श्रुत्योदाहृतं " तस्माद्ब्राह्मणो राजन्यवान्, तस्माद्राजन्यो ब्राह्मणवान् " इति ॥

( आहवनीयचयनार्थं भूकर्षणाभिधानम् )

तमेवाग्न्योः संगमं पुनः प्रशंसति—

" यत्संन्युप्य विहरति तस्माद्ब्रह्मणा क्षत्रं व्येति " [ सं० का० ५ प्र० २ अ० ४ ] इति।

यस्मादग्निद्वयं संयोज्य तस्मिन्संयुक्तेऽग्नौ विहरणमुत्तरकालीनं विविधमनुष्ठानं करोति तस्माल्लोकेऽपि ब्राह्मणक्षत्रिययोः संयुक्तयोः सतोः पश्चाद्ब्राह्मणेन नियमितः क्षत्रियो विविधं शास्त्रीयं राज्यपरिपालनं प्राप्नोति ॥

कल्पः—" मातेव पुत्रमिति शिक्यादुखां निरू(रु)ह्य " इति।

पाठस्तु—

मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योना-
वभारुखा। तां विश्वैर्देवैर्ऋतुभिः संवि-
दानः प्रजापतिर्विश्वकर्मा वि मुञ्चतु।, इति।

यथा लोके माता पुत्रं बिभर्ति तथा पृथिवीरूपेयमुखा स्वे योनौ स्वकीयगर्भस्थाने पुरीष्यमेतमग्निमभार्बिभर्ति। तामुखां प्रजापतिर्विमुञ्चतु शिक्यपाशान्मुक्तां करोतु। कीदृशः प्रजापतिः, विश्वैर्देवैर्ऋतुभिश्च संविदान ऐकमत्यं गतः, विश्वं सृष्टिरूपं कर्म यस्यासौ विश्वकर्मा ॥

अस्मिन्मन्त्र ऋतुभिरिति पदस्य तात्पर्यं दर्शयति—

" ऋतुभिर्वा एतं दीक्षयन्ति स ऋतुभिरेव विमुच्यो मातेव पुत्रं पृथिवी पुरीष्यमित्याहर्तुभिरेवैनं दीक्षयित्वर्तुभिर्वि मुञ्चति " [ सं० का० ५ प्र० २ अ० ४ ] इति।

एतं यजमानमृतुभिः पुरा संस्कुर्वन्ति। " षड्भिर्दीक्षयति षड्वा ऋतव ऋतुभिरेवैनं दीक्षयति" इत्युक्तत्वात्। अतस्तादृशयजमानसंबन्धी स उख्योऽग्निरत्राप्यृतुभिरेव विमोचनीयो भवति। अतो विमोचनसाधनेऽस्मिन्मन्त्र ऋतुप्रयोगाद्दीक्षाविमोकयोरेकसाधनत्वं संपद्यते। यद्यपि दीक्षा यजमानस्य विमोकश्चोख्यस्य तथाऽप्यभेदोपचारेणैकविषयत्वोपन्यासः ॥

कल्पः—" यदस्य पारे रजस इति वैश्वानर्या शिक्यमादत्ते " इति।

पाठस्तु—

यदस्य पारे रजसः शुक्रं ज्योतिरजायत।
तन्नः पर्षदति द्विषोऽग्ने वैश्वानर स्वाहा।[1], इति।

---

१ ख. च. 'र्याऽग्निशि'।

रजसो रजःसदृशस्य धूमस्य पारेऽवसानेऽस्याग्नेः शुक्रं निर्मलं यज्ज्योतिरजायत तज्ज्योतिर्द्विषोऽति द्वेष्टॄनतिक्रम्य नोऽस्मान्पर्षत्प्रीणयतु। हे वैश्वानरोख्याग्ने त्वदीयं शिक्यं स्वाहा सुष्ठ्वाहुतम् ॥

तमेतं मन्त्रं विनियुङ्क्ते—

"वैश्वानर्या शिक्यमा दत्ते स्वदयत्येवैनत्" [ सं० का० ५ प्र० २ अ० ४ ] इति।

वैश्वानरशब्दो यस्यामृच्यस्ति सेयं वैश्वानरी। "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः" इति स्मृतेर्जाठराग्निरूपस्य वैश्वानरस्य स्वादुत्वकारित्वात्तदीयमन्त्रेणोपात्तं शिक्यं स्वादूकृतं भवति ॥

कल्पः—"नैर्ऋतीरिष्टकाः कृष्णास्तिस्रस्तुषपक्वास्ताः शिक्यं रुक्मसूत्रमासन्दीं चाऽऽदाय दक्षिणमपरमवान्तरदेशं गत्वा नमः सु ते निर्ऋत इति स्वकृत इरिणे प्रदरे वा शिक्यं निधाय" इति।

पाठस्तु—

नमः सु ते निर्ऋते विश्वरूपेऽयस्मयं
वि चृता बन्धमेतम्। यमेन त्वं यम्या
संविदानोत्तमं नाकमधि रोहयेमम्।, इति।

हे निर्ऋते दक्षिणपश्चिममध्यमस्थितावान्तरादिगभिमानिनि देवते विश्वरूपे बहुविधरूपयुक्ते ते तुभ्यं नमोऽस्तु। अयस्मयं लोहनिर्मितं शृङ्खलावद्दृढमेतं बन्धं स्वर्गप्राप्तिप्रतिबन्धकमिमं पाप्मानं विचृत विनाशय। ततस्त्वं यमेनाग्निना यम्या पृथिव्या च संविदानैकमत्यं गता सतीमं यजमानमुत्तमं नाकं सर्वसुखोपेतं दुःखमात्ररहितं स्वर्गमधिरोहय प्रापय ॥

अत्रोदाहृते सूत्रे या इष्टका अभिहितास्ता विधत्ते—

"नैर्ऋतीः कृष्णास्तिस्रस्तुषपक्वा भवन्ति निर्ऋत्यै वा एतद्भागधेयं यत्तुषा निर्ऋत्यै रूपं कृष्णꣳ रूपेणैव निर्ऋतिं निरवदयते" [ सं० का० ५ प्र० २ अ० ४ ] इति।

निर्ऋतिर्देवता यासामिष्टकानां ता नैर्ऋत्यः। तुषा इति यत्तदेतन्निर्ऋते राक्षसदेवताया भागधेयम्। अत एवैष्टिकप्रकरणे रक्षसां भागोऽसीति तुषोपवापमन्त्र आम्नातः। रूपं च निर्ऋतिदेवतायाः कृष्णम्। अतस्तदानुकूल्यायेष्टकास्तुषपक्वाः कृष्णवर्णाश्च कुर्युः। तथा सत्यनुरूपेणैव भागेन निर्ऋतिं निरवदयते निःसारितवान्भवति ॥

---

१ क. घ. ङ. °दुका°।

( आहवनीयचयनार्थं भूकर्षणाभिधानम् )

दक्षिणपश्चिमावान्तरदिशमङ्गुल्या निर्दिश्य विधत्ते—

"इमां दिशं यन्त्येषा वै निर्ऋत्यै दिक्स्वायामेव दिशि निर्ऋतिं निरवदयते" [ सं० का० ५ प्र० २ अ० ४ ] इति ॥

कल्पः—"यत्ते देवी निर्ऋतिराबबन्धेति शिक्यजालेनैनाः प्रच्छाद्य" इति ।

एना वक्ष्यमाणमन्त्ररूपधेया इष्टकाः। अर्थक्रमेणायं मन्त्रो वक्ष्यमाणेभ्यस्त्रिभ्य उत्तरभावी, पाठक्रमेण तु पूर्वभावी ।

तत्पाठस्तु—

> यत्ते देवी निर्ऋतिराबबन्ध दाम ग्रीवास्वविचर्त्यम् । इदं ते तद्वि ष्याम्यायुषो न मध्यादथा जीवः पितुमद्धि प्रमुक्तः ।, इति ।

हे यजमान ते तव ग्रीवासु ग्रीवायाः संबन्धिषु प्रदेशविशेषेषु निर्ऋतिर्देवी यद्दाम स्वकीयं पाशमविचर्त्यं विनाशयितुमशक्यमाबबन्ध दृढं बबन्ध, तदिदं ते दाम त्वदीयग्रीवास्थं पाशं विष्यामि विमुञ्चामि । तच्च विमोचनं त्वदीयस्याऽऽयुषो मध्यादारभ्य न भवति, किंतु कृत्स्नेऽप्यायुषि । अथ पाशविमोकानन्तरं त्वं जीवश्चिरंजीवी सन्प्रमुक्तः सर्वैः प्रतिबन्धैर्विरहितः पितुमन्नमद्धि भक्षय ॥

कल्पः—"तस्येष्टकाभिः पाशमभ्युपदधाति यस्यास्ते अस्याः क्रूर आसञ्जुहोमीत्येताभिस्तिसृभिः पराचीरसंस्पृष्टा दक्षिणापवर्गं[2] तया[3] ( यथा )देवतं करोति" इति। तस्य शिक्यस्य पाशमभिलक्ष्य कृष्णाभिरिष्टकाभिरुपधानं संपादयेदित्यर्थः ॥

तिसृषु प्रथमामाह—

> यस्यास्ते अस्याः क्रूर आसञ्जुहोम्येषां बन्धानामवसर्जनाय । भूमिरिति त्वा जना विदुर्निर्ऋतिरिति त्वाऽहं परि वेद विश्वतः ।, इति ।

हे निर्ऋते यस्यास्ते तवास्याः क्रूर आसन्नुग्ररूप आस्ये जुहोमि आहुतिवदेष्टकामुपदधामि । किमर्थम्, एषां बन्धानामवसर्जनाय यजमानस्य परलोकप्राप्तिप्रतिबन्धकानामेषां पाप्मनां विनाशाय । यस्यास्ते तव मुखे प्रदरस्त्व इरिणरूपे वाऽहमिष्टकामुपदधामि त्वा तादृशीं त्वां जना जन्तुमात्ररूपाः शास्त्र-

---

१ ख. च. °दीयं ग्री° । २ क. घ. ङ. °र्गं न त° । ३ ख. °या दैव° ।

संस्काररहिता भूमिरिति विदुर्न तु निर्ऋतिर्देवीति। अहं तु शास्त्राभिज्ञतया त्वां विश्वतः सर्वतः सर्वथा निर्ऋतिर्देवीत्येव परिवेद सम्यग्जानामि। तत्र तावन्निर्ऋतिरित्येतद्देवतानामधेयम्। अवयवार्थश्चैवं व्युत्पादनीयः—सर्वदेवसाधारणाद्देवयजनान्निष्कृष्य स्वकृते प्रदरादावृतिः प्राप्तिर्यस्याः सा निर्ऋतिः। तदिदं प्रकारद्वयमभिप्रेत्य विश्वत इत्युक्तम् ॥

अथ द्वितीयामाह—

असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यां तस्करस्यान्वेषि। अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु। , इति।

हे निर्ऋते यः सोमयागं न करोति यश्च हविर्यज्ञं न करोति तादृशमसुन्वन्तमयजमानं च ग्रहीतुमिच्छ। किं च यः स्तेनः प्रच्छन्नचोरो यश्च तस्करः प्रकटचोरस्तयोरित्यां गतिमन्वेषि अनुगच्छ, गत्वा तावपि गृहाणेत्यर्थः। सर्वथाऽपि सोमं सुन्वद्भ्यो हविर्यज्ञैश्च यष्टृभ्योऽस्मदन्यमिच्छ नास्मानिच्छ। सा दुष्टशिक्षा तवेत्या गतिश्चर्या। हे निर्ऋते देवि तुभ्यं नमोऽस्तु ॥

अथ तृतीयामाह—

देवीमहं निर्ऋतिं वन्दमानः पितेव पुत्रं दसये वचोभिः। विश्वस्य या जायमानस्य वेद शिरःशिरः प्रति सूरी वि चष्टे। , इति।

देवीं निर्ऋतिं वन्दमानोऽहं वचोभिः स्तुतिरूपैर्वाक्यैर्दसय उपक्षीणां स्वाधीनां करोमि। तत्र दृष्टान्तः—यथा लोके पिता पुत्रं दुःशीलं बालं हे तात हे वत्सेत्यादिभिरुपलालनवचनैः स्वाधीनं करोति तद्वत्। या सूरी विदुषी निर्ऋतिर्जायमानस्य विश्वस्य सर्वस्य स्तेनतस्करादेः शिरःशिरः प्रति हस्तेनैकैकं शिरः प्रतिगृह्य वेद त्वदीयमपराधं जानामीति विचष्टे विशेषेण कथयति, तादृशीं निर्ऋतिं देवीं वन्दमान इति पूर्वत्रान्वयः ॥

एतैर्मन्त्रैः साध्यमिष्टकोपधानं विधत्ते—

"स्वकृत इरिण उप दधाति प्रदरे वैतद्वै निर्ऋत्या आयतनꣳ स्व एवाऽऽयतने निर्ऋतिं निरवदयते" [ सं० का० ५ प्र० २ अ० ४ ] इति।

स्वकृतं स्वयमेव निष्पन्नं न तु देशान्तरादानीय चयनस्थान इव प्रक्षि-

---

१ ख. घ. ङ. च. 'दुर्निर्ऋ'। २ क. घ. ङ. सर्वदा। ३ ख. स्वतन्त्रेण। घ. ङ. स्वतन्त्रे।

( आहवनीयचयनार्थं भूकर्षणाभिधानम् )

तादृश इरिण ऊषरे वा प्रदरे भूच्छिद्रे वा कृष्णास्तिस्र इष्टका उपदध्यात्। एतदुभयमेव निर्ऋत्या आयतनं स्थानमतिस्पष्टमिति यद्यत्रेष्टकोपधानं क्रियते तदा स्वीय एव स्थाने तां निर्ऋतिं निरवदयते देवयजनान्निष्कृष्येमामवस्थापयति ॥

शिक्योपरि जालमूलभागं परित्यज्य पाशरूपमग्रभागमभिलक्ष्यावस्थितो यो देशस्तं देशमिष्टकोपधानस्य विधत्ते—

"शिक्यमभ्युप दधाति नैर्ऋतो वै पाशः साक्षादेवैनं निर्ऋतिपाशान्मुञ्चति" [ सं० का० ५ प्र० २ अ० ४ ] इति।

शिक्यमभिलक्ष्य तत्पाशभागमभिलक्ष्यावस्थितो यो देशस्तत्रोपदध्यादित्यर्थः। साक्षाद्विलम्बमन्तरेण। एनं यजमानम् ॥

इष्टकानां संख्यां विधत्ते—

" तिस्र उप दधाति त्रेधाविहितो वै पुरुषो यावानेव पुरुषस्तस्मान्निर्ऋतिमव यजते " [ सं० का ५ प्र० २ अ० ४ ] इति।

शरीरस्योर्ध्वाधोमध्यभागैः पुरुषस्त्रेधाविहितस्तादृशात्पुरुषादादाय त्रिसंख्या निर्ऋतिमवयजते विनाशयति ॥

यदुक्तं सूत्रकारेण " पराचीरसंस्पृष्टा दक्षिणापवर्गम् " इति, तदिदं विधत्ते—

" पराचीरुप दधाति पराचीमेवास्मान्निर्ऋतिं प्र णुदते " [ सं० का० ५ प्र० २ अ० ४ ] इति।

दक्षिणामुखः पुरुष एकामुपधाय ततो दक्षिणतो द्वितीयां ततोऽपि दक्षिणतस्तृतीयामुपदध्यात्तदिदं पराक्त्वम्। एवं सत्यस्माद्देवयजनाद्यजमानाद्वा पराङ्मुखीं कृत्वा निर्ऋतिं निःसारयति ॥

उपधानादूर्ध्वं देवयजनं प्रत्यागमनं विधत्ते—

" अप्रतीक्षमा यन्ति निर्ऋत्या अन्तर्हित्यै " [ सं० का० ५ प्र० २ अ० ४ ] इति।

अप्रतीक्षं पृष्ठतो दृष्टिमकृत्वेत्यर्थः। तच्च निर्ऋत्या अन्तर्धानाय दर्शनाभावाय भवति ॥

कल्पः—" निवेशनः संगमनो वसूनामित्याहवनीयं गार्हपत्यं वोपतिष्ठन्ते " इति।

पाठस्तु—

---

१ ख. च. ॰ति तस्मिन्निष्ट॰। २ ख. च. ॰नं यदि क्रि॰। ३ ख. च. स्व। ४ ख. च. ॰त्यं चोप॰।

निवेशनः संगमनो वसूनां विश्वा रूपाऽभि चष्टे शचीभिः । देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् । , इति ।

अयमग्निर्निवेशनो यजमानानां स्वस्वगृहे निवेशयिता वसूनां संगमनः प्रजापशुरूपाणां द्रव्याणां प्रापकः सञ्शचीभिः स्वकीयाभिः शक्तिभिर्विश्वा रूपा सर्वाणि रूपाण्यभिचष्टेऽभितः ख्यापयति । तत्र दृष्टान्तः—सविता देव इव । यथा सूर्यः सर्वाणि रूपाणि प्रकाशयति तद्वत् । कीदृशोऽग्निः, सत्यधर्मा सत्योऽवश्यंभाविफलोपेतो धर्मोऽग्निहोत्रादिलक्षणो यस्यासौ सत्यधर्मा । इन्द्रः परमैश्वर्यवान् । अत एव पथीनां समरे न तस्थौ परिपन्थिनां शत्रूणां समागमे पुरतः स्वयमागत्य न तिष्ठति, किंतु स्वकीयनामग्रहणमात्रेण ते पलायन्त इत्यर्थः ॥

अनेन मन्त्रेण साध्यमुपस्थानं विधत्ते—

" मार्जयित्वोप तिष्ठन्ते मेध्यत्वाय " [ सं० का० ५ प्र० २ अ० ४ ] इति ।

शं नो देवीरिति मन्त्रेण मार्जनं कृत्वा पश्चान्निवेशन इति मन्त्रेणोपतिष्ठन्ते । अनेनोपस्थानेन यजमानो मेध्यो भवति ॥

उपस्थेयं विधत्ते—

" गार्हपत्यमुप तिष्ठन्ते निर्ऋतिलोक एव चरित्वा पूता देवलोकमुपावर्तन्ते " [ सं० का० ५ प्र० २ अ० ४ ] इति ।

दक्षिणपश्चिमावान्तरदिग्रूपे निर्ऋतिस्थान एनं(व) चयनार्थं चरित्वा ततो मार्जनेन पूताः सन्तो गार्हपत्यसमीपरूपं देवलोकमागच्छन्ति ॥

मन्त्रगतामेकत्वसंख्यां प्रशंसति—

" एकयोप तिष्ठन्त एकधैव यजमाने वीर्यं दधति " [ सं० का० ५ प्र० २ अ० ४ ] इति ।

एकधा युगपदित्यर्थः ॥

मन्त्रगतस्य वसुशब्दस्यार्थं दर्शयति—

" निवेशनः संगमनो वसूनामित्याह प्रजा वै पशवो वसु प्रजयैवैनं पशुभिः समर्धयन्ति " [ सं० का० ५ प्र० २ अ० ४ ] इति ॥

अथाग्निचयनभूमेः परिमाणं विधत्ते—

---

१ ख. च. °त्। ताद°। २ ख. च. °स्थाने च°।

( आहवनीयचयनार्थं भूकर्षणाभिधानम् )

"पुरुषमात्रेण वि मिमीते यज्ञेन वै पुरुषः संमितो यज्ञपरुषैवैनं वि मिमीते" [ सं० का० ५ प्र० २ अ० ५ ] इति।

पुरुषः प्रमाणं यस्य दण्डस्य सोऽयं पुरुषमात्रस्तेन दण्डेन भूमेः प्रमाणं कुर्यात्। यज्ञाभिमानिदेवेन समानप्रमाणो लौकिकः पुरुषः। पुरुषमात्रेण विमी(मि)ते सति यज्ञस्य परुषा पर्वणा प्रमाणेनैवैनमग्निं विमी ( मि ) तवा-न्भवति ॥

पुरुषो हि द्विविधोऽवाग्बाहुरूर्ध्ववाहुश्चेति, अतो विशेषं विधत्ते—

" यावान्पुरुष ऊर्ध्ववाहुस्तावान्भवत्येतावद्वै पुरुषे वीर्यं वीर्येणैवैनं वि मिमीते " [ सं० का० ५ प्र० २ अ० ५ ] इति।

पुरुषोऽप्यूर्ध्वं प्रसारितस्य बाहोरुपरि स्थितं वस्तु स्प्रष्टुं न शक्नोति। अतः पुरुषवीर्यस्य तावन्मात्रत्वाद्वीर्येणैव मानसिद्ध्यर्थमूर्ध्वपुरुषप्रमाणं कुर्यात् ॥

वामदक्षिणपार्श्वयोः पक्षस्थानं विधत्ते—

" पक्षी भवति न ह्यपक्षः पतितुमर्हति " [ सं० का० ५ प्र० २ अ० ५ ] इति।

पक्षभङ्गे सत्यपक्षिण उत्पतितुमशक्यत्वात्पक्ष्याकारस्याग्नेरुत्पततः पक्षयुक्तत्वं कुर्यात् ॥

यदुक्तं सूत्रकारेण—" चतुर आत्मनि पुरुषान्विमिमीते पुरुषं दक्षिणे पक्षे पुरुषं पुच्छे पुरुषमुत्तरेऽरत्निना दक्षिणतो दक्षिणं पक्षं प्रवर्धयत्येवमुत्तरत उत्तरम् " इति, तयोः परिमाणाधिक्यं विधत्ते—

" अरत्निना पक्षौ द्राघीयाꣳसौ भवतस्तस्मात्पक्षप्रवयाꣳसि वयाꣳसि " [ सं० का० ५ प्र० २ अ० ५ ] इति।

चतुर्विंशतिरङ्गुलयोऽरत्निस्तेनारत्निना पक्षौ पुरुषाद्दीर्घतरौ कुर्यात्। यस्मादेवं तस्माल्लोके पक्षिणोऽपि पक्षयोरभिवृद्धियुक्ता दृश्यन्ते ॥

पक्षयोराधिक्यांशं विधाय स्वरूपपरिमाणं विधत्ते—

" व्याममात्रौ पक्षौ च पुच्छं च भवत्येतावद्वै पुरुषे वीर्यं वीर्यसंमितः " [ सं० का० ५ प्र० २ अ० ५ ] इति।

बाहोः प्रसारणं व्यामस्तत्पक्षयोः पुच्छस्य च परिमाणं, पुरुषव्यवहारसा-मर्थ्यस्य च तावत्त्वादयमग्निर्वीर्येण संमितो भवति ॥

मानसाधनं विधत्ते—

" वेणुना वि मिमीत आग्नेयो वै वेणुः सयोनित्वाय " [ सं० का० ५ प्र० २ अ० ५ ] इति।

अग्निना प्रविष्टत्वाद्वेणुराग्नेयः । तथा ह्याम्नातम्—" अग्निर्देवेभ्यो निलायत स वेणुं प्राविशत् " इति । अतोऽग्नेः स्वकीयस्थानसहितत्वाय वेणुना विमानं कुर्यात् ॥

कल्पः—" सं वरत्रा दधातनेति संप्रेष्यति " इति ।

पाठस्तु—

सं वरत्रा दधातन निराहावान्कृणो-
तन । सिञ्चामहा अवटमुद्रिणं वयं
विश्वाऽहाऽदस्तमक्षितम् ।, इति ।

हे कर्षकाः पुरुषा वरत्रा च(श्च)र्ममयी रज्जुः(ज्जूः) संदधातन सम्यक्स्थापयत । तत्राऽऽहावान्बलीवर्दानामुदकपानार्थं द्रोणीविशेषान्नि-ष्कृणोतन निष्पादयत । अवटमुदकोद्धारणाय संपादितं कूपमुद्रिणं बहुलोदकयुक्तं यथा भवति तथा सिञ्चामहै, भूतलगतपङ्कोद्धारणेन सेकयुक्तं प्रस-वणोपेतमवटं कुर्मः । कीदृशमवटम्, विश्वाऽहा सर्वेष्वप्यहःस्वदस्तं कूल-पातराहित्येनाहिंसितम् । अक्षितं घर्मकालेऽपि शोषाभावलक्षणम् ॥

कल्पः—" निष्कृताहावमवटमित्यवटादुदकमाहावेषूत्सिञ्चति " इति ।

पाठस्तु—

निष्कृताहावमवटꣳ सुवरत्रꣳ सुषेचनम् ।
उद्रिणꣳ सिञ्चे अक्षितम् ।, इति ।

काष्ठपाषाणनिर्मितानां द्रोणीनामन्तःस्थितावकाशरूपो योऽयमवटस्तमवटमहं सिञ्चे तत्रोदकं क्षारयामि । कीदृशमवटं, निष्कृताहावं पार्श्वेषु सच्छिद्रत्वेन निष्कृता निष्पादिता आहावा द्रोण्यो यस्यावटस्य सोऽयं निष्कृताहावस्तं, सुवरत्रं कूपादुदकमुद्धर्तुं शोभना दृढा वरत्राश्चर्ममयरज्जवो यस्यासौ सुवरत्र-स्तम् । सुषेचनं सुष्ठु सेक्तुं योग्यान्युदकोद्धरणसाधनानि पात्राणि यस्यासौ सुषेचनस्तम् । उद्रिणमुदकवन्तम् । अक्षितमुदकस्यागलितत्वेनापक्षय-रहितम् ॥

कल्पः—" सीरा युञ्जन्तीति द्वाभ्याꣳ सीरं युनक्ति " इति ।

तत्र प्रथमामाह—

सीरा युञ्जन्ति कवयो युगा वि तन्वते
पृथक् । धीरा देवेषु सुम्नया ।, इति ।

---

१ ख. च. °था चाऽऽम्ना° । २ ख. च. °कोद्धर° । ३ ख. घ. ङ च. °ङ्कोद्धर° ।

(आहवनीयचयनार्थं भूकर्षणाभिधानम्)

कवयः कृषिकर्माभिज्ञाः सीरा सीरं लाङ्गलं युञ्जन्ति सज्जी कुर्वन्तु। तथा युगा युगानि त्रिषु षट्सु वा कक्ष्याविशेषेष्वपेक्षितानि पृथग्वितन्वत एकैकं विस्तारयन्तु। कीदृशाः कवयः, धीरा धैर्ययुक्ता अनलसा इत्यर्थः। देवेषु देवताविशेषविषयेषु सुम्नया सुम्नं सुखमिच्छन्तीति सुम्नया॥

अथ द्वितीयामाह—

युनक्त सीरा वि युगा तनोत कृते योनौ वपतेह बीजम्। गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्या पक्वमाऽयत्,। इति।

हे कर्षकाः सीरा युनक्त लाङ्गलं योजयत। युगा वितनोत युगानि विस्तारयत। कृते कर्षणेन योग्य इह योनावस्मिन्स्थाने बीजं वपत। किंच, तद्बीजं गिराऽऽशीर्वादरूपेण मङ्गलवाक्येन युक्तमिति शेषः। श्रुष्टिस्तत्र निष्पन्नः स्तम्बो नोऽस्मदर्थं सभरा असत्फलभारयुक्तोऽस्तु। पक्वं फलं नो नेदीय इदन्तिकतममेवाल्पकालनिष्पाद्यमेवासत्। सृण्या लवनसाधनेन दात्रेण लूनं सन्न आयदस्मत्समीपमागच्छतु॥

कल्पः—"लाङ्गलं पवीरवमिति द्वाभ्यां कृषति" इति।

पाठस्तु—

लाङ्गलं पवीरवꣳ सुशेवꣳ सुमतित्सरु। उदित्कृषति गामविं प्रफर्व्यं च पीवरीम्। प्रस्थावद्रथवाहनम्।, इति।

इदं लाङ्गलमुदित्कृषत्युद्धृतानि मौढलोष्ठानि यथा भवन्ति तथैव कृषतु। कीदृशं लाङ्गलं, पवीरवं वज्रवदतितीक्ष्णम्। सुशेवं कर्षकैः सुष्ठु सेवितुं शक्यम्। अतितीक्ष्णत्वेन सहसा भूमिभेदात्कर्षकाणां नास्ति प्रयास इत्यर्थः। सुमतित्सरु कर्षकैः शोभनमिदमिति मन्यमानः सुमति(तिः) त्सरुर्भूमौ निम्नोन्नतत्वेन विच्छिद्यगमनविशेषो यस्य तत्सुमतित्सरु। अनेन कर्षणेन फलाधिक्ये सति गवादिकं यजमानः प्राप्नोतीति शेषः। तत्र गौरविरित्युभयं प्रसिद्धम्। प्रफर्व्यां प्रथमवयस्का कन्या, पीवरी पुष्टा गौः, प्रस्थावत्प्रयाणसमर्थं

---

१ क. कुर्वन्ति। २ ध. ङ. 'ताविषये'। ३ क. घ. ङ. निमग्नत्वे'।

रथवाहनं रथं वोढुं योग्यमश्वादिकम् । यदा हि कृषिः समृद्धा भवति तदानीमेतत्सर्वं यजमानस्य सुलभम्* ॥

अथ द्वितीयामाह—

शुनं नः फाला वि तुदन्तु भूमिꣳ शुनं कीनाशा अभि यन्तु वाहान् । शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम् । , इति ।

नोऽस्माकं शुनं सुखं यथा भवति तथा फाला लाङ्गलमुखानि भूमिं वितुदन्तु विशेषेण कृषन्तु । कीनाशाः कर्षका वाहान्बलीवर्दाञ्शुनं यथा भवति तथाऽभियन्तु अभितः प्रेरयन्तो गच्छन्तु । पर्जन्यो मेघः शुनं यथा भवति तथा मधुना मधुररसेन युक्तैः पयोभिरुदकैर्वृष्टिमातिसृजत्विति शेषः । शुनासीरा वाय्वादित्यौ युवां शुनं सुखमस्मासु धत्तम् ॥

सीरा युञ्जन्तीति मन्त्रद्वयेन साध्यं लाङ्गलयोगं लाङ्गलं पवीरवमिति मन्त्रद्वयेन साध्यं कर्षणं च क्रमेण विधत्ते—

"यजुषा युनक्ति यजुषा कृषति व्यावृत्त्यै" [ सं० का० ५ प्र० २ अ० ५ ] इति ।

यजुषा मन्त्रेण । लौकिकं तु कर्षणममन्त्रकमिति व्यावृत्तिः ॥

बलीवर्दसंख्यां विधत्ते—

"षड्गवेन कृषति षड्वा ऋतव ऋतुभिरेवैनं कृषति" [ सं० का० ५ प्र० २ अ० ५ ] इति ।

कक्ष्यात्रयरूपेणावस्थितेषु त्रिषु युगेषु बध्यमानाः षट्संख्याका गावो बलीवर्दा यस्य लाङ्गलस्य तत्षड्गवम् ॥

पक्षान्तरं विधत्ते—

"यद्द्वादशगवेन संवत्सरेणैव" [ सं० का० ५ प्र० २ अ० ५ ] इति ।

कक्ष्याषट्कगतेषु बध्यमाना द्वादशसंख्याका गावो यस्य लाङ्गलस्य तद्द्वादशगवं, तेन यदि कृषेत्तदानीं द्वादशमासात्मकेन संवत्सरेणैव कर्षणं कृतं भवति ॥

चयनस्थानस्य साकल्येन कर्षणप्राप्तौ तद्वारयितुं विधत्ते—

---

* एतदनन्तरं क. पुस्तके "ईदृशलाङ्गलेन कर्षणे सति कृषिसमृद्धिद्वारा प्रफर्व्यं प्रथमवयस्कां पीवरीं पुष्टां गामविं प्रस्थावत्त्रयाणसमर्थं रथवाहनमश्वादिकं यजमानः प्राप्नोतीति शेष इति पाठान्तरम्" इति वर्तते ।

( आहवनीयचयनार्थं भूकर्षणाभिधानम् )

" इयं वा अग्नेरतिदाहादबिभेत्सैतद्द्विगुणमपश्यत्कृष्टं चाकृष्टं च ततो वा इमां नात्यदहद्यत्कृष्टं चाकृष्टं च भवत्यस्या अनतिदाहाय " [ सं० का० ५ प्र० २ अ० ५ ] इति ।

साकल्येन कृष्टे स्थाने चीयमानोऽग्निर्भूमिमत्यन्तं दहति तस्मादतिदाहादबिभेदिति सा भूमिस्तमतिदाहं परिहर्तुमुपायं विचार्य कस्मिंश्चित्प्रदेशे कृष्टं कस्मिंश्चिदकृष्टमित्येवमेतद्द्विगुणमुभयविधस्थानमुपायत्वेनापश्यत् । लोकेऽपि प्रहारेण च्छिन्नेऽवयवेऽग्निसामीप्येन यावान्संतापो न तावानितरस्मिन्नवयवे दृश्यते । तस्मात्कृष्टाकृष्टभेदेन द्वैगुण्ये सत्यग्निश्चितो भूमिं नात्यन्तं दहति । तस्माद्भूमेरनतिदाहाय किंचित्कृष्टं किंचिदकृष्टमित्येवं द्विगुणं कुर्यात् ॥

तदेतद्द्वैगुण्यं प्रकारान्तरेण प्रशंसति—

" द्विगुणं त्वा अग्निमुद्यन्तुमर्हतीत्याहुर्यत्कृष्टं चाकृष्टं च भवत्यग्नेरुद्यत्यै " [ सं० का० ५ प्र० २ अ० ५ ] इति ।

गार्हपत्यादुत्तरवेदिं प्रत्यग्निप्रणयनकाले सिकताभिरेकं पात्रमापूर्य तस्योपरि पात्रान्तरेऽग्निं प्रक्षिप्य द्विगुणेन पात्रेणाग्नेरुद्यमनं दृष्टं तद्वदत्रापि कृष्टाकृष्टभेदेन द्विगुणं स्थानमग्नेरुद्यमनयोग्यमित्यभिज्ञा आहुः । तस्मादुद्यमनाय द्विगुणं कर्तव्यम् ॥

अथ कर्षणसमाप्तेरूर्ध्वं यदा बलीवर्दानुत्सृजति तदानीमुत्सर्जनाय दिग्विशेषं विधत्ते—

" एतावन्तो वै पशवो द्विपादश्च चतुष्पादश्च तान्यत्प्राच उत्सृजेद्रुद्रायापि दध्याद्यद्दक्षिणा पितृभ्यो नि धुवेद्यत्प्रतीचो रक्षाꣳसि हन्युरुदीच उत्सृजत्येषा वै देवमनुष्याणाꣳ शान्ता दिक्तामेवैनाननूत्सृजत्यथो खल्विमां दिशमुत्सृजत्यसौ वा आदित्यः प्राणः प्राणमेवैनाननूत्सृजति " [ सं० का० ५ प्र० २ अ० ५ ] इति ।

बलीवर्दप्रेरकाः कर्षका द्विपादो बलीवर्दाश्चतुष्पादस्तानुदङ्मुखत्वेन निःसारयेत् । रुद्रः स्वदिक्सामीप्यात्प्राच्यां दिश्यागत्य निर्गच्छतो बलीवर्दान्ग्रहीष्यामीत्यवतिष्ठते । अतस्तत्र निर्गमने रुद्राय दत्ता भवन्ति । दक्षिणस्यां दिशि पितरः स्वत एव तिष्ठन्ति, तत्र निर्गमने तेभ्यो निधुवेन्नितरामर्पयति । प्रतीच्यां वरुणप्रेरितानि रक्षांस्यवतिष्ठन्ते, तानि च पशून्हन्युः । उदीची तु बाधकरहितत्वाद्देवानां मनुष्याणां च शान्ता । अतस्तामेवानु एनान्बलीवर्दानुत्सृजेत् । अथो खल्वपि च येयमुदीची तामिमां दिशं प्रति यदोत्सृजति तदानीं प्राणरूपमादित्यमनूत्सर्जनं कृतं भवति । आदित्यस्य प्राणरूपत्वं

प्राणस्वामित्वादवगन्तव्यम् । अत एवारण्यकाण्डे समाम्नायते—"योऽसौ तपन्नुदेति । स सर्वेषां भूतानां प्राणानादायोदेति । " इति । आथर्वणिकाश्चाऽऽमनन्ति—" आदित्यो ह वै बाह्यः प्राण उदयत्येव ह्येनं चाक्षुषं प्राणमनुगृह्णानः" इति। तस्य चाऽऽदित्यस्योत्तरदिग्वर्तित्वं पुरुषविशेषापेक्षया द्रष्टव्यम्। मेरोः परितस्तत्तल्लोकेषु तत्तत्प्राणिनो वर्तन्ते । तथा सति मेरुं प्रदक्षिणीकुर्वन्नादित्योऽस्मदपेक्षया योदीची तस्यामप्यागच्छति । तदानीं कस्मिंश्चिन्मेरुपार्श्वेऽवस्थितैरादित्यो विलोक्यते । सोऽयं तेषां प्रत्युदयः । एतत्सर्वमभिप्रेत्य तस्योत्तरदिगुदयमङ्गीकृत्य सा दिक्प्रशस्यते ॥

कर्षणादूर्ध्वमुत्सर्जनप्रकार उक्तः । अथ कर्षणकाले कश्चिद्विशेष उच्यते ।

कल्पः—" पुच्छाच्छिरोऽधि कृषति कामं कामदुघे[२] धुक्ष्वेति प्रदक्षिणमावर्तयंस्तिस्रास्तिस्रः सीताः संहिताः कृषति मध्ये संभिन्ना भवन्ति दक्षिणात्पक्षादुत्तरस्माद्दक्षिणायै[३][४] श्रोणेरुत्तरमंसमुत्तरायै दक्षिणम् " इति ।

पाठस्तु—

कामं कामदुघे धुक्ष्व मित्राय
वरुणाय च । इन्द्रायाग्नये पूष्ण
ओषधीभ्यः प्रजाभ्यः । , इति ।

काम्यन्त इति कामा भोगास्तान्दोग्धि संपादयतीति कामदुघा लाङ्गलपद्धतिः । हे कामदुघे मित्रादीनां काममपेक्षितं भोगं धुक्ष्व संपादय ॥

कर्षणकाले प्रादक्षिण्येनाऽऽवृत्तिं विधत्ते—

" दक्षिणा पर्यावर्तन्ते स्वमेव वीर्यमनु पर्यावर्तन्ते तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवाऽऽवृतमनु पर्यावर्तन्ते तस्मात्पराञ्चः पशवो वि तिष्ठन्ते प्रत्यञ्च आ वर्तन्ते " [ सं० का० ५ प्र० २ अ० ५ ] इति ।

दक्षिणा प्रादक्षिण्येन दक्षिणभागमवस्थाप्य वामभागस्य परिभ्रामणं[५] प्रादक्षिण्यं, पुरुषस्य दक्षिणभागे सामर्थ्यसद्भावात्तदेवानुसृत्य पर्यावृत्तिः कृता भवति । यस्माद्दक्षिणभागे वीर्यं श्रुत्यभिप्रेतं तस्माल्लोके सर्वव्यापारे दक्षिणहस्तस्यैव वीर्यातिशय उपलभ्यते । किं चाऽऽदित्यो मेरुं प्रदक्षिणी कुरुते तदप्यत्रानुसृतं भवति । यस्मादत्राऽऽवृत्तिः कृता तस्माल्लोकेऽपि प्रातःकाले पशवः पराञ्चोऽरण्ये गत्वा विविधं संचरन्ति, पुनः सायंकाले गृहं प्रत्यभिमुखा आवर्तन्ते ॥

---

१ क. घ. ङ. प्राणिस्वा° । २ घ. ङ. समिता । ३ क. घ. ङ. 'दुत्तरमुत्त° । ४ क. घ. ङ. °क्षिणं दक्षिणा' । ५ ख. च. 'रिभ्रम' ।

(आहवनीयचयनार्थं भूकर्षणाभिधानम्)

कर्षणे प्रकारविशेषं विधत्ते—

"तिस्रस्तिस्रः सीताः कृषति त्रिवृतमेव यज्ञमुखे वि यातयति" [ सं० का० ५ प्र० २ अ० ५ ] इति।

लाङ्गलपद्धतिः सीता। पुच्छादारभ्य शिरःपर्यन्तं तिस्रः सीताः कृषेत्। तथा दक्षिणात्पक्षादारभ्योत्तरपक्षपर्यन्तं तिस्रः सीताः कृषेत्। तथा दक्षिणस्याः श्रोणेरारभ्योत्तरांसपर्यन्तं तिस्रः सीताः कृषेत्। तथोत्तरस्याः श्रोणेरारभ्य दक्षिणांसपर्यन्तं तिस्रः सीताः कृषेत्। एवं द्वादश सीताः संपद्यन्ते। एवमावृत्तया त्रिसंख्यया त्रिवृत्स्तोममेव यज्ञप्रारम्भे[1] प्रसारयति॥

कल्पः—"घृतेन सीतेति सीतान्तरालान्यभिमृशति" इति।

पाठस्तु—

घृतेन सीता मधुना समक्ता विश्वैर्देवैरनुमता मरुद्भिः। ऊर्जस्वती पयसा पिन्वमानाऽस्मान्त्सीते पयसाऽभ्यावव्रृत्स्व॥, इति॥

इयं सीता मधुना मधुरेण घृतेन समक्ता सम्यगार्द्रीकृता। अत एव विश्वैर्देवैर्मरुद्भिः समीचीनेयमित्यङ्गीकृता। सा पुनरूर्जस्वती पयसा पिन्वमाना जलेनाऽऽप्यायिता वर्तसे(ते)। हे सीते जलेनाऽऽप्यायिता त्वमस्मान्प्रत्यभ्याववृत्स्वाभित आवृत्ता भव॥

अत्र विनियोगसंग्रहः—

सं गार्हपत्य उख्याग्निं चतुर्भिर्निवपेदमुम्।
माता शिक्यादुखां मुञ्चेद्यद शिक्यपरिग्रहः॥ १॥
नमो नैर्ऋतदेशे तच्छिक्यं त्यक्त्वा यदित्यतः।
शिक्यजालेन याः कृष्णा इष्टकाः स्थापयेदमूः॥ २॥
यस्यास्त्रिभिस्तिस्र एताः कृष्णा उपदधाति हि।
निवेऽग्निमुपतिष्ठेत सं व संप्रेष्यतीतरान्॥ ३॥
निष्कृताहाऽवटे सिञ्चेत्सीराद्वाभ्यां हलार्पणम्।
लाङ्गद्वाभ्यां कृषेत्काममावर्तेत प्रदक्षिणम्॥
घृतेऽन्तराले संस्पर्श इति मन्त्रास्तु विंशतिः॥ ४॥

अथ मीमांसा।

तृतीयाध्यायस्य द्वितीयपादे चिन्तितम्—

---

1 ख. च. 'म्भे विस्तार'।

ऐन्द्र्या निवेशनेत्याग्निं गार्हपत्यं भजेदिति ।
प्रकाश्यो मुख्य इन्द्रो वा गौणो मुख्यस्तु पूर्ववत् ॥
एकस्य गौणताध्रौव्ये मन्त्रस्यैवानुवादतः ।
गौणताऽतोऽग्न्युपस्थाने मन्त्रः श्रुत्या नियुज्यते ॥

अग्निचयने निवेशनः संगमन इत्यादिका काचिदृगैन्द्री समाम्नाता । तस्या उत्तरार्ध इन्द्रो न तस्थाविति विद्यमानत्वात्[1] । तन्मन्त्रविषयं ब्राह्मणं चैवमाम्नायते—"निवेशनः संगमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठते" इति । एतेन ब्राह्मणेन गार्हपत्ये विनियुज्यमानो मन्त्रोऽर्थं प्रकाशयन्मुख्यमिन्द्रं प्रकाशयति । मुख्यश्चेन्द्रः स्वर्गाधिपतिः सहस्राक्षस्तत्रैवेन्द्रशब्दस्य रूढत्वात् । गौणस्त्विन्द्रो गार्हपत्यस्तस्यैश्वर्यगुणयोगेन यज्ञसाधनत्वेन मुख्येन्द्रसदृशत्वात् । तत्र पूर्वन्यायेन शीघ्रप्रतीत्या मुख्येन्द्रे मन्त्रेण प्रकाशिते सति मन्त्रब्राह्मणयोर्विसंवादं वारयितुं गार्हपत्यशब्देन मुख्येन्द्रो गार्हपत्यसमीपदेशो वा लक्षणीय इति प्राप्ते ब्रूमः—इन्द्रगार्हपत्ययोरन्यतरस्य गौणत्वेऽवश्यंभाविनि सति ब्राह्मणवाक्यस्य विधायकत्वादप्राप्तार्थत्वेन विधौ लक्षणाया अन्याय्यत्वात्प्राप्तार्थत्वेनानुवादको मन्त्र एव स्वघटकेन्द्रशब्देन वह्निं लक्षयति । ततो गार्हपत्यप्रकाशने समर्थं मन्त्रमैन्द्र्येति तृतीयाश्रुतिर्वन्ह्युपस्थाने विनियुङ्क्ते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके
पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ चतुर्थाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः । )

---

या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा ।
मन्दामि बभ्रूणामहꣳ शतं धामानि सप्त च ।
शतं वो अम्ब धामानि सहस्रमुत वो रुहः ।
अथा शतक्रत्वो यूयमिमं मे अगदं कृत ।
पुष्पावतीः प्रसूवतीः फलिनीरफला उत ।

---

[1] ख. च. 'त्वात्तन्मन्त्र इन्द्रविषयः । ब्रा' ।

अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ।
ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे । रपाꣳसि विघ्नतीरित रपः ( १ ) चातयमानाः ।
अश्वत्थे वो निषदनं पर्णे वो वसतिः कृता ।
गोभाज इत्किलासथ यत्सनवथ पूरुषम् । यदहं वाजयन्निमा ओषधीर्हस्त आदधे । आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा । यदोषधयः संगच्छन्ते राजानः समिताविव । विप्रः स उच्यते भिषग्रक्षोहाऽमीवचातनः । निष्कृतिर्नाम वो माताऽथा यूयꣳ स्थ संकृतीः ।
सराः पतत्रिणीः (२) स्थन यदामयति निष्कृत । अन्या वो अन्यामवत्वन्याऽन्यस्या उपावत । ताः सर्वा ओषधयः संविदाना इदं मे प्रावता वचः । उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते । धनꣳ सनिष्यन्तीनामात्मानं तव पूरुष । अति विश्वाः परिष्ठाः स्तेन इव व्रजमक्रमुः । ओषधयः प्राचुच्यवुर्यत्किं च तनुवाꣳ रपः । याः ( ३ ) त आतस्थुरात्मानं या आविविशुः परुःपरुः । तास्ते यक्ष्मं वि बाधन्तामुग्रो मध्यमशीरिव । साकं यक्ष्म प्र पत

श्येनेनं किकिदीविनां । साकं वातंस्य ध्राज्यां साकं नंश्य निहाकंया । अश्वावतीꣳ सोमवती-मूर्जयंन्तीमुदोंजसम् । आ विंत्सि सर्वा ओषं-धीरस्मा अंरिष्टतांतये । याः फलिनीर्या अंफला अंपुष्पा याश्चं पुष्पिणींः । बृहस्पतिं-प्रसूतास्ता नों मुञ्चन्त्वꣳहंसः । याः (४) ओषंधयः सोमंराज्ञीः प्रविंष्टाः पृथिवीमनु । तासां त्वमंस्युत्तमा प्र णों जीवातंवे सुव । अवपतंन्तीरवदन्दिव ओषंधयः परिं । यं जीव-मश्नवांमहै न स रिंष्याति पूरुंषः । याश्चेदमुं-पशृण्वन्ति याश्चं दूरं परांगताः । इह संगत्य ताः सर्वा अस्मै सं दंत्त भेषजम् । मा वों रिषत्खनिता यस्मैं चाहं खनांमि वः । द्विप-च्चतुंष्पदस्माकꣳ सर्वंमस्त्वनांतुरम् । ओषंधयः सं वंदन्ते सोमेंन सह राज्ञां । यस्मैं करोतिं ब्राह्मणस्तꣳ रांजन्पारयामसि (५) ॥

( रपंः पतत्रिणीर्या अꣳहंसो याः खनांमि वोऽष्टादंश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

(आहवनीयचयनार्थौषधिवापाभिधानम्)

(अथ चतुर्थाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः ।)

---

याः । जाताः । ओष॑धयः । देवेभ्य॑ः । त्रियुग-
मिति॑ त्रि-युगम् । पुरा । मन्दा॑मि । बभ्रूणा॑म् ।
अहम् । शतम् । धामा॑नि । सप्त । च । शतम् ।
वः । अम्ब । धामा॑नि । सहस्र॑म् । उत । वः ।
रुह॑ः । अथ॑ । शतक्रत्व इति॑ शत-क्रत्वः । यूयम् ।
इमम् । मे । अगदम् । कृत । पुष्पा॑वतीरिति पुष्प॑-
वतीः । प्रसूव॑तीरिति॑ प्र-सूव॑तीः । फलिनी॑ः ।
अफलाः । उत । अश्वा॑ः । इव । सजित्व॑रीरिति॑ स-
जित्व॑रीः । वीरुध॑ः । पारयिष्णव॑ः । ओष॑धीः ।
इति॑ । मातरः । तत् । वः । देवीः । उपेति॑ । ब्रुवे ।
रपाꣳसि । विघ्नतीरिति॑ वि-घ्नतीः । इत । रप॑ः
(१) । चातय॑मानाः । अश्वत्थे । वः । निषद॑न-
मिति॑ नि-सद॑नम् । पर्णे । वः । वसतिः । कृता ।
गोभाज इति॑ गो-भाज॑ः । इत् । किल॑ । असथ ।
यत् । सनव॑थ । पूरु॑षम् । यत् । अहम् । वाजय॑न् ।
इमाः । ओष॑धीः । हस्ते॑ । आदध इत्या॑-दधे ।
आत्मा । यक्ष्म॑स्य । नश्यति । पुरा । जीवगृभ इति॑
जीव-गृभ॑ः । यथा । यत् । ओष॑धयः । संगच्छ॑न्त
इति॑ सं-गच्छ॑न्ते । राजा॑नः । समि॑ताविति सम्-

इतौ । इव । विप्रः । सः । उच्यते । भिषक् । रक्षो-
हेति रक्षः—हा । अमीवचातन इत्यमीव—चातनः ।
निष्कृतिरिति निः—कृतिः । नाम । वः । माता ।
अथ । यूयम् । स्थ । संकृतीरिति सं—कृतीः । सराः ।
पतत्रिणीः ( २ ) । स्थन । यत् । आमयति ।
निरिति । कृत । अन्या । वः । अन्याम् । अवतु ।
अन्या । अन्यस्याः । उपेति । अवत । ताः । सर्वाः ।
ओषधयः । संविदाना इति सं—विदानाः । इदम् ।
मे । प्रेति । अवत । वचः । उदिति । शुष्माः । ओष-
धीनाम् । गावः । गोष्ठादिति गो—स्थात् । इव ।
ईरते । धनम् । सनिष्यन्तीनाम् । आत्मानम् । तव ।
पूरुष । अतीति । विश्वाः । परिष्ठा इति परि—स्थाः ।
स्तेनः । इव । व्रजम् । अक्रमुः । ओषधयः । प्रेति ।
अचुच्यवुः । यत् । किम् । च । तनुवाम् । रपः ।
याः ( ३ ) । ते । आतस्थुरित्या—तस्थुः । आत्मा-
नम् । याः । आविविशुरित्या—विविशुः । परुःपरु-
रिति परुः—परुः । ताः । ते । यक्ष्मम् । वीति ।
बाधन्ताम् । उग्रः । मध्यमशीरिति मध्यम—शीः ।
इव । साकम् । यक्ष्म । प्रेति । पत । श्येनेन ।
किकिदीविना । साकम् । वातस्य । ध्राज्या ।

साकम्। नश्य। निहाकयेति नि—हाकया। अश्वावतीमित्यश्व—वतीम्। सोमवतीमिति सोम—वतीम्। ऊर्जयन्तीम्। उदोजसमित्युत्—ओजसम्। एति। विरिसि। सर्वाः। ओषधीः। अस्मै। अरिष्टतातय इत्यरिष्ट—तातये। याः। फलिनीः। याः। अफलाः। अपुष्पाः। याः। च। पुष्पिणीः। बृहस्पतिप्रसूता इति बृहस्पति—प्रसूताः। ताः। नः। मुञ्चन्तु। अꣳहसः। याः (४)। ओषधयः। सोमराज्ञीरिति सोम—राज्ञीः। प्रविष्टा इति प्र—विष्टाः। पृथिवीम्। अनु। तासाम्। त्वम्। असि। उत्तमेत्युत्—तमा। प्रेति। नः। जीवातवे। सुव। अवपतन्तीरित्यव—पतन्तीः। अवदन्। दिवः। ओषधयः। परि। यम्। जीवम्। अश्नवामहै। न। सः। रिष्याति। पूरुषः। याः। च। इदम्। उपशृण्वन्तीत्युप—शृण्वन्ति। याः। च। दूरम्। परागता इति परा—गताः। इह। संगत्येति सं—गत्य। ताः। सर्वाः। अस्मै। समिति। दत्त। भेषजम्। मा। वः। रिषत्। खनिता। यस्मै। च। अहम्। खनामि। वः। द्विपदिति द्वि—पत्। चतुष्पदिति चतुः—पत्। अस्माकम्। सर्वम्। अस्तु। अनातुर-

मित्यना—तुरम् । ओषधयः । समितिं । वदन्ते । सोमेन । सह । राज्ञा । यस्मै । करोति । ब्राह्मणः । तम् । राजन् । पारयामसि ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ चतुर्थकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः । )

---

पञ्चमेऽनुवाकेऽग्निक्षेत्रकर्षणमुक्तम् । अथ षष्ठ ओषधिवापो विधीयते। कल्पः—" या जाता ओषधय इति चतुर्दशभिरोषधीर्वपति " इति । तत्र प्रथमामाह--

या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा ।
मन्दामि बभ्रूणामहꣳ शतं धामानि सप्त च ।, इति।

युगशब्दः कालवाची । त्रियुगं वर्षाः शरद्वसन्त इति कालत्रयमुद्दिश्य पुरा सृष्ट्यादौ देवेभ्यः सकाशाद्या ओषधय उत्पन्ना बभ्रूणां प्राणिभरणसमर्थानां परिपाकेन(ण) पिङ्गलवर्णानां वा तासामोषधीनां शतं धामानि शतसंख्याका-ज्ञातिभेदान्सप्त च विशेषाकारेण ग्राम्यानारण्यांश्च सप्त धान्यभेदानवेक्ष्य मन्दामि हृष्यामि ॥

अथ द्वितीयामाह--

शतं वो अम्ब धामानि सहस्रमुत वो रुहः । अथा
शतक्रत्वो यूयमिमं मे अगदं कृत ।, इति।

हेऽम्ब मातृस्थानीया ओषधयो वो युष्माकं धामानि जातिभेदाः क्षेत्राणि वा शतं सन्ति । उतापि च वो युष्माकं रुहः प्ररोहा अङ्कुराश्च सहस्रं सन्ति । शतं सहस्रमित्याभ्यामपरिमितत्वमुपलक्ष्यते । अथैवं बहुभेदोपेतत्वे सति शत-संख्याकाः क्रतवो याभिर्युष्माभिर्निष्पाद्यन्ते तादृश्यः शतक्रत्वो यूयं मे मदी-यमिमं यजमानमगदं कृत क्षुत्पिपासादिरोगरहितं कुरुत ॥

अथ तृतीयामाह--

---

१ ख. च. 'धीर्निवप' । २ ख. च. 'हुविधोपे' ।

(आहवनीयचयनार्थौषधिवापाभिधानम्)

पुष्पावतीः प्रसूवतीः फलिनीरफला उत ।
अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः।,इति।

अत्रौषधयो नानाविधैर्विशेषणैः प्रशस्यन्ते। पुष्पावतीः काश्चिदोषधयः पुष्पमात्रपर्यवसायिन्यो नतु फलन्ति। प्रसूवतीरन्या ओषधयः पुष्पपूर्वकफलोत्पत्तिस्थायिन्यः। फलिनीरपराः काश्चिदोषधयः पुष्पं विना केवलेन फलेन युक्ताः। उतापि चाफला अन्याः काश्चिदोषधयः फलेन तद्धेतुपुष्पेण च विरहिताः। तदेतत्सर्वं लोकसिद्ध्यनुसारेणोदाहरणीयम्। वीरुधः काश्चिदोषधयो लतारूपाः, पारयिष्णवः फलपाकान्तत्वं परित्यज्य पारं बहुसंवत्सरावसानं प्राप्तुं शीलं यासां तास्तथाविधाः। तद्यथा नागवल्लीप्रभृतय एताः सर्वा ओषधयोऽश्वा इव सजित्वरीः। यथाऽश्वा युद्धे बहवः सह शीघ्रं गत्वा जयशीला भवन्ति एवमोषधयोऽपि बह्व्यः सहोत्पन्नाः फलपर्यन्तलक्षणजयशीला भवन्ति॥

अथ चतुर्थीमाह—

ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे। रपा-
ꣳसि विघ्नतीरित रपश्चातयमानाः।, इति।

हे मातरो मातृसमाना देवीर्देव्यः। इतिशब्दोऽत्र हेत्वर्थे वर्तते। यस्मादोषधीर्यूयमोषधयस्तत्तस्माद्वो युष्मानुपब्रुवे प्रार्थये। ओषो दाहः फलपाको धीयते स्थाप्यते यासु ता ओषधयः। अतो युष्मान्प्रति प्रार्थनमुचितमित्यर्थः। कथं प्रार्थनमिति तदुच्यते—रपांसि विघ्नतीः पापानि विनाशयन्त्यो रपश्चातयमानाः पापफलं दुःखमपि विनाशयन्त्य इत प्राप्नुत॥

अथ पञ्चमीमाह—

अश्वत्थे वो निषदनं पर्णे वो वसतिः कृता।
गोभाज इत्किलासथ यत्सनवथ पूरुषम्।,इति।

हे ओषधिदेवता वो युष्माकमश्वत्थे निषदनं पर्णे पलाशवृक्षे वो युष्माकं वसतिः कृता निवासकारणं गृहं कृतम्। देवताधिष्ठितत्वादेव लोकेऽश्वत्थवृक्षः प्रदक्षिणनमस्कारादिभिः पूज्यते। पलाशवृक्षश्चेध्मादिरूपेण कर्मसाधनं संपन्नः। ईदृश्योऽपि यूयं गोभाज इद्भवदीयस्थावररूपेण भूमिभाज एव भूत्वाऽसथ किल स्थिता इत्येतल्लोके प्रसिद्धम्। तत्किमर्थमिति तदुच्यते—यद्यस्मा-

---

१ ख. च. 'सिद्धानु'। २ च. 'क्षिणान'।

त्कारणात्पूरुषं मनुष्यं सनवथान्नदानेन पोषयथ तस्मादेवं स्थावररूपात्र-स्थानमित्यर्थः ॥

अथ षष्ठीमाह—

यदहं वाजयन्निमा ओषधीर्हस्त आ दधे। आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा। , इति।

यद्यदाऽहं वाजयन्नन्नमिच्छन्निमा ओषधीर्हस्त आदधामि तदानीमेव यक्ष्मस्य क्षुधादिरोगस्याऽऽत्मा स्वरूपं पुरा नश्यति भोजनात्प्रागेव नष्टसदृशो भवति। तत्र दृष्टान्तः—यथा लोके जीवगृभो धीवरैर्जीवस्य शशादेर्ग्रहणात्पुरा भीतः शशः कर्णाभ्यां नेत्रे पिधाय भूमिसंश्लिष्टो मृत इव तिष्ठति तद्वत् ॥

अथ सप्तमीमाह—

यदोषधयः संगच्छन्ते राजानः समिताविव।
विप्रः स उच्यते भिषग्रक्षोहाऽमीवचातनः।, इति।

यद्यदौषधयः सर्वाः संगच्छन्ते फलदानाय क्षेत्रसंगता भवन्ति, तत्र दृष्टान्तः—राजानः समिताविव, यथा युद्धे प्रतिपक्षिणः सेनां जेतुं परस्परमनुकूला राजानः संगच्छन्ते तद्वत्, तदानीं संगतास्वोषधीषु विप्रो मेधावी रसवीर्यभावनाभिज्ञो यः पुरुषः स भिषगुच्यते क्षुधादिरोगचिकित्सक इत्यभिधीयते। कथं भिषक्त्वमिति तदुच्यते—रक्षोहा पक्वाभिरेताभिः पुरोडाशं राक्षोघ्नं कृत्वा रक्षसां हन्ता तदुपद्रवरूपं रोगं विनाशयति । अमीवचातन ओषधिजन्यपथ्यादिभिरमीवान्रोगांश्चातयति विनाशयतीत्यमीवचातनः ॥

अथाष्टमीमाह—

निष्कृतिर्नाम वो माताऽथा यूयं स्थ संकृतीः।
सराः पतत्रिणीः स्थन यदामयति निष्कृत।, इति।

हे ओषधयो वो युष्माकं निष्कृतिर्नाम क्षुधादिविनाशनमेव माता मातृवदुत्पत्तिनिमित्तं क्षुदादिकं निवारयितुमेवं हि भवतीनामुत्पत्तिः। अथैवं सति यूयं संकृतीः स्थ सम्यक्स्वकार्ये क्षमा भवत। सराः क्षुदादीनामपवारयित्र्यः पतत्रिणीः पतत्रं पत्रं तस्मात्प्रत्यागमनं तेनाऽऽगमनेनोपेताः स्थन भवत। यत्क्षुदादिकमामयति रोगवद्बाधते तन्निष्कृत विनाशयत ॥

---

१ ख. घ. ङ. च. °गं निवारय°। २ ख. च. °व भ°। ३ ख. च. क्षुधादिविनाशयि°। ४ ख. च. °मने°।

अथ नवमीमाह—

अन्या वो अन्यामवत्वन्याऽन्यस्या उपावत। ताः सर्वा ओषधयः संविदाना इदं मे प्रावता वचः।, इति।

हे ओषधयो वो युष्माकं मध्येऽन्या·काचिदोषधिव्यक्तिरन्यामितरामोषधिव्यक्तिमवतु रक्षतु। तथा रक्षिता साऽन्याऽप्यन्यस्या रक्षिकाया उपावत समीपमागत्य तामप्यवतु। संभूयकारित्वात्परस्पररक्षकत्वमुचितम्। तथाविधाः सर्वा हे ओषधयः संविदानाः परस्परमैकमत्यं गता इदं मे मदीयं वचो वाक्यं प्रार्थनारूपं प्रावत प्रकर्षेण रक्षत॥

अथ दशमीमाह—

उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते। धनꣳ सनिष्यन्तीनामात्मानं तव पूरुष।, इति।

ओषधीनां शुष्मास्तदुपभोगजन्या बलविशेषा उदीरत उद्गच्छन्ति। तत्र दृष्टान्तः—गावो गोष्ठादिव, यथा गावो निवासस्थानाद्गृहादरण्यदेशं प्रत्युद्गच्छन्ति तद्वत्। कीदृशीनामोषधीनां, पूरुष तवाऽऽत्मानं धनं सनिष्यन्तीनां हे यजमान त्वदीयं शरीरं धनमिव दातुमिच्छन्तीनां, यथा धनं दास्यन्ति एवमोषधयोऽपि त्वदीयशरीराकारेण परिणताः शरीरं दास्यन्तीत्यर्थः॥

अथैकादशीमाह—

अति विश्वाः परिष्ठाः स्तेन इव व्रजमक्रमुः। ओषधयः प्राचुच्यवुर्यत्किं च तनुवाꣳ रपः।, इति।

परिष्ठाः शरीरस्योपरि स्थिता उदरमध्ये प्रविष्टा विश्वाः सर्वा ओषधयोऽत्यजीर्णादिदोषमतिलङ्घ्याक्रमुः क्रान्ता देहे व्याप्ता इत्यर्थः। तत्र दृष्टान्तः—स्तेन इव व्रजं, यथा रात्रौ गुप्तचोरो गोष्ठं प्रविश्य गामपहर्तुं सावधानो गोशालायां(लां) सर्वतो व्याप्नोति तद्वत्। तनुवां शरीराणां संबन्धि यत्किं च रपो ज्वरशिरोव्याधिगुल्मातिसारादिरूपं पापफलं यत्किंचिदस्ति तत्सर्वमोषधयः प्राचुच्यवुर्विनाशितवत्यः॥

अथ द्वादशीमाह—

यास्त आतस्थुरात्मानं या आवि-

विशुः परुःपरुः । तास्ते यक्ष्मं वि
बाधन्तामुग्रो मध्यमशीरिव ।, इति ।

हे यजमान ते तव्राऽऽत्मानं शरीरं या ओषधय आतस्थुराक्रम्य तिष्ठन्ति, या ओषधयः परुःपरुराविविशू रसरूपेण तत्तत्पर्व प्रविष्टवत्यस्ताः सर्वास्ते तव यक्ष्मं रोगं विबाधन्तां विशेषेण नाशयन्तु । तत्र दृष्टान्तः—मध्यमशीरिव, मध्यमेन स्वकीयपरकीयपक्षपातरहितेन शास्त्रीयमार्गेण शेते वर्तत इति मध्यमशीः, तादृशो राजा दुष्टान्प्रत्युग्रो भूत्वा यथा विनाशयति तद्वत् ॥

अथ त्रयोदशीमाह—

साकं यक्ष्म प्र पत श्येनेन किकिदीविना । साकं
वातस्य ध्राज्या साकं नश्य निहाकया ।, इति ।

श्लेष्मावरुद्धकण्ठजन्यध्वनेरनुकरणार्थोऽयं किकिशब्दस्तेन किकिना ध्वनिविशेषेण दीव्यति व्यवहरतीति रोगविशेषः किकिदीविः । स च श्लेष्मजन्यः श्येनवत्तीव्रतरत्वात्पित्तजन्यो रोगः श्येनः । हे यक्ष्म राजयक्ष्मादिरोग त्वं पित्तजन्येन श्लेष्मजन्येन च रोगेण साकं प्रपत प्रकर्षेण नष्टो भव । तथा वातस्य ध्राज्या वातरोगस्य गत्या व्याप्त्या साकं नश्य नष्टो भव । तथा यया पीडया निहतोऽस्मि हा कष्टमिति शब्दं करोमि सा निहाका तया सह नष्टो भव ॥

अथ चतुर्दशीमाह—

अश्वावतीꣳ सोमवतीमूर्जयन्तीमुदोजसम् । आ
वित्सि सर्वा ओषधीरस्मा अरिष्टतातये ।, इति ।

काचिदोषधिजातिरश्वावती, अश्वा अस्यां सन्तीत्यश्वावती, ओषधिसमृद्धौ सत्यां धनद्वारेणाश्वा लभ्यन्त इत्यर्थः । अन्या काचिदोषधिजातिः सोमवती सोमयागोऽस्यामस्तीति सोमवती, धान्यसमृद्धौ सत्यां सोमयागः कर्तुं शक्यत इत्यर्थः । अपरोर्जयन्ती, ऊर्जं बलं प्राणचेष्टां वा करोतीत्यर्थः । अन्या जातिरुदोजाः, उत्कृष्टमोजोऽष्टमधातुरूपं यस्याः सोदोजाः, अन्नद्वारेण शरीरधातून्पोषयतीत्यर्थः । ताः सर्वा ओषधीरहमावित्सि लब्धवानस्मि । किमर्थम् । अस्मा अरिष्टतातये । अरिष्टस्य तातिररिष्टतातिः । अस्य यजमानस्य हिंसाराहित्यायेत्यर्थः ॥

तदेवमोषधिवापार्था ऋचश्चतुर्दशाऽऽम्नाताः । अथात्रैव विकल्पिताः षड्च आम्नायन्ते ।

(आहवनीयचयनार्थौषधिवापाभिधानम्)

तत्र प्रथमामाह—

या: फलिनीर्या अफला अपुष्पा
याश्च पुष्पिणी:। बृहस्पतिप्रसू-
तास्ता नो मुञ्चन्त्वꣳहस:।, इति।

या ओषधय: फलयुक्ता या: फलरहिता याश्च पुष्परहिता याश्च पुष्पयुक्तास्ता: सर्वा बृहस्पतिप्रसूता: सत्यो नोऽस्मानंहस: पापान्मोचयन्तु॥

अथ द्वितीयामाह—

या ओषधय: सोमराज्ञी: प्रविष्टा: पृथिवीमनु।
तासां त्वमस्युत्तमा प्र णो जीवातवे सुव।, इति।

सोमो राजा यासां ता: सोमराज्ञ्य[1]स्तादृश्यो या ओषधय: पृथिवीमनु प्रविष्टास्तासां मध्य इदानीमुप्यमाने हे ओषधे त्वमुत्तमाऽसि। अतो नोऽस्माञ्जीवातवे जीवनौषधाय प्रसुव प्रकर्षेण प्रेरय॥

अथ तृतीयामाह—

अवपतन्तीरवदन्दिव ओषधय: परि। यं
जीवमश्नवामहै न स रिष्याति पूरुष:।, इति।

द्युलोकात्पतन्तो वृष्टिबिन्दव ओषधिरूपेणोत्पद्यन्ते। तथा चाग्निहोत्रब्राह्मणे समाम्नायते—"यावन्त: स्तोका अवापद्यन्त। तावतीरोषधयोऽजायन्त।" इति। अत्रापि दिव: परि स्वर्गस्योपरितनप्रदेशादवपतन्तीरधस्ताद्भूमौ पतन्त्य ओषधयोऽवदन्नेतद्वचनमुक्तवत्य:। कीदृशं वचनमिति तदुच्यते—यं जीवमश्नवामहै व्याप्नुम: स पूरुषो न रिष्याति नैव विनश्यति॥

अथ चतुर्थीमाह—

याश्चेदमुपशृण्वन्ति याश्च दूरं परागता:। इह
संगत्य ता: सर्वा अस्मै सं दत्त भेषजम्।, इति।

याश्चौषधिदेवता इदं मदीयं प्रार्थनमुपशृण्वन्ति, याश्चान्या ओषधिदेवता दूरं यथा भवति तथा परागता: सत्य ईषच्छृण्वन्ति ता: सर्वा ओषधिदेवता इह कर्मणि संगता भूत्वाऽस्मै यजमानाय भेषजं संदत्त क्षुदादिरोगचिकित्सां सम्यक्कुरुत॥

अथ पञ्चमीमाह—

---

१ ख. च. °राज्ञीस्ता°।

मा वो रिषत्खनिता यस्मै चाहं खनामि वः ।
द्विपच्चतुष्पदस्माकꣳ सर्वमस्त्वनातुरम् ।, इति ।

हे ओषधयो वो युष्माकं खनिता चिकित्सायै युष्मदीयं मूलं ग्रहीतुं खननस्य कर्ता मा रिषन्मा विनश्यतु । अहं च यस्मै रुग्णाय चिकित्सार्थं खनामि युष्मन्मूलं ग्रहीतुं खननं करोमि, सोऽपि मा विनश्यतु । किं बहुनाऽस्माकं संबन्धि यद्द्विपच्चतुष्पद्वा प्राणिजातं युष्मदुपजीवति तत्सर्वमनातुरं रोगरहितमस्तु ॥

अथ षष्ठीमाह—

ओषधयः सं वदन्ते सोमेन सह राज्ञा । यस्मै
करोति ब्राह्मणस्तꣳ राजन्पारयामसि ॥, इति ॥

ओषधय ओषधिदेवताः स्वकीयेन स्वामिना सोमेन राज्ञा सह संवादं कुर्वन्ति, कथं संवाद इति तदुच्यते—यस्मै रुग्णाय चिकित्सामस्मदीयमूलादिना ब्राह्मणः करोति, हे राजंस्तमातुरं वयं पारयामसि व्याधेरुत्तारयामः ॥

एतैर्मन्त्रैः साध्यमोषधिवापं विधत्ते—

" ओषधीर्वपति ब्रह्मणाऽन्नमव रुन्धेऽर्केऽर्कश्चीयते " [ सं० का० ५ प्र० २ अ० ९ ] इति ।

ब्रह्मणौषधिवापहेतुभूतमन्त्रसामर्थ्येनान्नं व्याप्नोति । किंचैवं सत्यर्केऽर्चनीये स्थानेऽर्कोऽर्चनीयोऽग्निश्चितो भवति ॥

मन्त्रसंख्यां विधत्ते—

" चतुर्दशभिर्वपति सप्त ग्राम्या ओषधयः सप्ताऽऽरण्या उभयीषामवरुद्ध्या अन्नस्यान्नस्य वपत्यन्नस्यान्नस्यावरुद्ध्यै " [ सं० का० ५ प्र० २ अ० ९ ] इति ।

तिलमाषव्रीहियवाः प्रियङ्ग्वणवो गोधूमाश्चेति सप्त ग्राम्या ओषधयः । वेणुश्यामाकनीवारजर्तिला गवीधुका मर्कटका गार्मुताश्चेति सप्ताऽऽरण्या ओषधयः । नानाविधस्यान्नस्य बीजवापेन नानाविधमन्नमाप्नोति ॥

यदुक्तं सूत्रकारेण—" सप्त ग्राम्याः कृष्टे सप्ताऽऽरण्या अकृष्टे " इति, तत्र ग्राम्याणां देशविशेषं विधत्ते—

"कृष्टे वपति कृष्टे ह्योषधयः प्रतितिष्ठन्ति" [सं०का०५प्र०२अ०५] इति ।

कृष्टे देशे वपति ग्राम्या इति शेषः । मूलानां सर्वतः प्रसरणे दृढावस्थानं प्रतिष्ठा ॥

( आहवनीयचयनार्थौषधिवापाभिधानम् )

एकैकस्यां सीतायां मूलमारभ्याग्रपर्यन्तमनुगतं वपनं विधत्ते—

" अनुसीतं वपति प्रजात्यै " [ सं० का० ५ प्र० २ अ० ५ ] इति ।

प्रभूतत्वेनोत्पत्तिः प्रजातिः ॥

सर्वास्वपि सीतासु बीजावापं विधत्ते—

" द्वादशसु सीतासु वपति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मा अन्नं पचति " [ सं० का० ५ प्र० २ अ० ५ ] इति ।

यदुक्तं सूत्रकारेण—" यामोषधिं नाधिगच्छेत्तस्याः स्थाने यवान्मधुमिश्रान्वपेदुप्ता मेऽसीति वा मनसा ध्यायेदधिगतायां यः प्रथम इध्म आगच्छेत्तस्मिन्नेनामुपसंनह्येद्वे वनस्पतीनां फलग्रहयस्तानिध्म उपसंनह्य प्रोक्षेत् " इति, तदिदं वनस्पतिप्रोक्षणं विधत्ते—

" यदग्निचिदनवरुद्धस्याश्नीयादवरुद्धेन व्यृध्येत ये वनस्पतीनां फलग्रहयस्तानिध्मेऽपि प्रोक्षेदनवरुद्धस्यावरुद्ध्यै " [ सं० का० ५ प्र० २ अ० ५ ] इति ।

यद्ययमग्निचित्पुरुषोऽनवरुद्धस्य सीतास्वनुप्तस्य द्रव्यस्यान्नमश्नीयात्तदानीमवरुद्धेन सीतासूप्तेन धान्येनापि वियुक्तो भवेत् । अतोऽत्रानुप्तस्याप्युप्तत्वसिद्धये वनस्पतीनां मध्ये ये पुष्पमन्तरेण फलं गृह्णन्त्युदुम्बरादयस्तानप्यादायेध्मेन सह संनह्य प्रोक्षणं कुर्यात् । ततः सर्वमपि भक्ष्यजातमस्यावरुद्धमेव भवति ॥

अत्र विनियोगसंग्रहः—

" या जा ग्राम्यास्तथाऽऽरण्याः कृष्टाकृष्टभुवोर्वपेत् ।
चतुर्दशभिरन्यास्तु षडत्रैव विकल्पिताः ॥ १ ॥

अथ मीमांसा ।

दशमाध्यायस्य पञ्चमपादे चिन्तितम्—

धूनने वपने चाग्नौ सप्त चोक्ताश्चतुर्दश ।
किमाद्यारम्भनियमः किं वाऽऽरम्भो निजेच्छया ॥
कपालवत्क्रमः प्राप्तः केचित्प्रकरणोदिताः ।
व्यर्थाः स्युस्तेन मन्त्राणामारम्भोऽत्र विकल्पितः ॥

अग्निचयने मन्त्रा आधूननार्था आवपनार्थाश्च बहवः पठिताः । प्रयोगे तु तदेकदेशसंख्याऽभिहिता " सप्तभिराधूनोति, चतुर्दशभिरावपति " इति । तत्र प्रथमाधिकरणोक्तकपालसामिधेनीन्यायेन प्रथमपठितस्यैव मन्त्रस्योपक्रमः प्राप्नोति, तदयुक्तम् । कुतः । यथोक्तसंख्यातिरिक्तानां प्रकरणप-

ठितानां मन्त्राणां वैयर्थ्यप्रसङ्गात् । तस्मात्प्रकरणेन क्रमं बाधित्वा निजेच्छयैव प्रथममन्यं वोपक्रम्य विहितसंख्या पूरणीया ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय- तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ चतुर्थाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः । )

---

मा नो॑ हिꣳसीज्ज॒नि॒ता यः पृ॑थि॒व्या यो वा॒ दिव॑ꣳ स॒त्यध॑र्मा ज॒जान॑ । यश्चा॒पश्च॒न्द्रा बृ॒ह॒तीर्ज॒जान॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम । अ॒भ्याव॑र्तस्व पृथिवि य॒ज्ञेन॒ पय॑सा स॒ह । व॒पां ते॑ अ॒ग्निरि॑षि॒तोऽव॑ सर्पतु । अग्ने॒ यत्ते॑ शु॒क्रं यच्च॒न्द्रं यत्पू॒तं यद्य॒ज्ञिय॑म् । तद्दे॒वेभ्यो॑ भरा- मसि । इ॒षमू॒र्जम॒हमि॒त आ ( १ ) द॒द ऋ॒त- स्य॒ धाम्नो॑ अ॒मृत॑स्य॒ योनेः॑ । आ नो॒ गोषु॑ वि॒शत्वोष॑धीषु॒ जहा॑मि से॒दिमनि॑राम॒मीवा॑म् । अग्ने॒ तव॒ श्रवो॒ वयो॒ महि॑ भ्राजन्त्य॒र्चयो॑ विभावसो । बृह॑द्भानो॒ शव॑सा॒ वाज॑मु॒क्थ्यं॑ दधा॑सि दा॒शुषे॑ कवे । इ॒र॒ज्यन्न॑ग्ने प्रथयस्व ज॒न्तुभि॑र॒स्मे रायो॑ अमर्त्य । स द॑र्श॒तस्य॒ वपु॑षो॒ वि रा॑जसि पृ॒णक्षि॑ सान॒सिꣳ र॒यिम् । ऊर्जो॑ नपा॒ज्जात॑वेदः सु॒श॒स्तिभि॒र्मन्द॑स्व ( २ ) धी-

---

१ ख. ॑मतो मध्यमतोऽन्ततो वो॑ ।

( आहवनीयचयनार्थलोष्टक्षेपाद्यभिधानम् )

तिभिर्हितः । त्वे इषः सं दधुर्भूरिरेतसश्चित्रो-
तयो वामजाताः । पावकवर्चाः शुक्रवर्चा अनू-
नवर्चा उदियर्षि भानुना । पुत्रः पितरा विच-
रन्नुपावस्युभे पृणक्षि रोदसी । ऋतावानं महिषं
विश्वचर्षणिमग्निꣳ सुम्नाय दधिरे पुरो जनाः ।
श्रुत्कर्णꣳ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा
युगा । निष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तꣳ
राधसे महे । रातिं भृगूणामुशिजं कविक्रतुं
पृणक्षि सानसिम् ( ३ ) रयिम् । चितः स्थ
परिचितं ऊर्ध्वचितः श्रयध्वं तया देवतयाऽ-
ङ्गिरस्वद्ध्रुवाः सीदत । आ प्यायस्व समेतु ते
विश्वतः सोम वृष्णियम् । भवा वाजस्य संगथे ।
सं ते पयाꣳसि समु यन्तु वाजाः सं वृष्णि-
यान्यभिमातिषाहः । आप्यायमानो अमृताय
सोम दिवि श्रवाꣳस्युत्तमानि धिष्व ( ४ ) ॥

( आ मन्दस्व सानसिमेकान्नचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके
द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ चतुर्थाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः । )

---

मा । नः । हिꣳसीत् । जनिता । यः । पृथि-

व्याः । यः । वा । दिवम् । सत्यधर्मेति सत्य—धर्मा । जजान । यः । च । अपः । चन्द्राः । बृहतीः । जजान । कस्मै । देवाय । हविषा । विधेम । अभ्यावर्तस्वेत्यभि—आवर्तस्व । पृथिवि । यज्ञेन । पयसा । सह । वपाम् । ते । अग्निः । इषितः । अवेति । सर्पतु । अग्ने । यत् । ते । शुक्रम् । यत् । चन्द्रम् । यत् । पूतम् । यत् । यज्ञियम् । तत् । देवेभ्यः । भरामसि । इषम् । ऊर्जम् । अहम् । इतः । एति ( १ ) । ददे । ऋतस्य । धाम्नः । अमृतस्य । योनेः । एति । नः । गोषु । विशतु । एति । ओषधीषु । जहामि । सेदिम् । अनिराम् । अमीवाम् । अग्ने । तव । श्रवः । वयः । महि । भ्राजन्ति । अर्चयः । विभावसो इति विभा—वसो । बृहद्भानो इति बृहत्—भानो । शवसा । वाजम् । उक्थ्यम् । दधासि । दाशुषे । कवे । इरज्यन् । अग्ने । प्रथयस्व । जन्तुभिरिति जन्तु—भिः । अस्मे इति । रायः । अमर्त्य । सः । दर्शतस्य । वपुषः । वीति । राजसी । पृणक्षि । सानसिम् । रयिम् । ऊर्जः । नपात् । जातवेद इति जात—वेदः । सुशस्तिभिरिति सुशस्ति—भिः । मन्दस्व ( २ ) ।

धीतिभिरिति धीति–भिः । हितः । त्वे इति । इषः । समिति । दधुः । भूरिरेतस इति भूरि–रेतसः । चित्रोतय इति चित्र–ऊतयः । वामजाता इति वाम–जाताः । पावकवर्चा इति पावक–वर्चाः । शुक्रवर्चा इति शुक्र–वर्चाः । अनूनवर्चा इत्यनून–वर्चाः । उदिति । इयर्षि । भानुना । पुत्रः । पितरा । विचरन्निति वि–चरन् । उपेति । अवसि । उभे इति । पृणक्षि । रोदसी इति । ऋतावानमित्यृत–वानम् । महिषम् । विश्वचर्षणिमिति विश्व–चर्षणिम् । अग्निम् । सुम्नाय । दधिरे । पुरः । जनाः । श्रुत्कर्णमिति श्रुत्–कर्णम् । सप्रथस्तममिति सप्रथः–तमम् । त्वा । गिरा । दैव्यम् । मानुषा । युगा । निष्कर्तारमिति निः–कर्तारम् । अध्वरस्य । प्रचेतसमिति प्र–चेतसम् । क्षयन्तम् । राधसे । महे । रातिम् । भृगूणाम् । उशिजम् । कविक्रतुमिति कवि–क्रतुम् । पृणक्षि । सानसिम् ( ३ ) । रयिम् । चितः । स्थ । परिचित इति परि–चितः । ऊर्ध्वचित इत्यूर्ध्व–चितः । श्रयध्वम् । तया । देवतया । अङ्गिरस्वत् । ध्रुवाः । सीदत । एति । प्यायस्व । समिति । एतु ।

ते । विश्वतः । सोम । वृष्णियम् । भव । वाजस्य । संगथ इति सं—गथे । समिति । ते । पयांसि । समिति । उ । यन्तु । वाजाः । समिति । वृष्णियानि । अभिमातिषाह इत्यभिमाति—साहः । आप्यायमान इत्या—प्यायमानः । अमृताय । सोम । दिवि । श्रवांसि । उत्तमानीत्युत्—तमानि । धिष्व (४) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

(अथ चतुर्थकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः ।)

---

षष्ठेऽनुवाक ओषधिवापोऽभिहितः । अथ सप्तमे लोष्टक्षेपादिकमभिधीयते । कल्पः—"मा नो हिंसीज्जनिता यः पृथिव्या इति चतसृभिर्दिग्भ्यो लोष्टान्त्समस्यति येऽन्तर्विधाद्बहिर्विधमापन्ना भवन्ति" इति ।
कर्षणे ये लोष्टाः परिमितक्षेत्राद्बहिः पतन्ति तान्पुनरन्तः पातयेदित्यर्थः ॥
तत्र प्रथमामाह—

मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवंं सत्यधर्मा जजान । यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ।, इति ।

यः प्रजापतिः पृथिव्या जनितोत्पादको यो वा प्रजापतिः सत्यधर्माऽवितथधारणशक्तिः सन्दिवं जजानोत्पादयामास । पुनरपि यः प्रजापतिश्चन्द्रा आह्लादकारिणीर्बृहतीर्बहुला अपो जजानोत्पादयामास, तादृशः प्रजापतिर्नोऽस्मान्मा हिंसीत् । तादृशाय कस्मै प्रजापतये हविषा विधेम परिचरेम ॥
अथ द्वितीयामाह—

( आहवनीयचयनार्थलोष्टक्षेपाद्यभिधानम् )

अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह ।
वपां ते अग्निरिषितोऽव सर्पतु ।, इति ।

हे पृथिवि यज्ञेनानुष्ठातव्येन पयसा च तत्फलभूतेन सहाभ्यावर्तस्वास्मदाभिमुख्येनाऽऽगच्छ । इषित इच्छावानग्निस्ते वपां त्वदीयवपासदृशमिमं प्रदेशमवसर्पतु प्राप्नोतु ॥

अथ तृतीयामाह—

अग्ने यत्ते शुक्रं यच्चन्द्रं यत्पूतं यद्य-
ज्ञियम् । तद्देवेभ्यो भरामसि ।, इति ।

हेऽग्ने ते त्वदीयं यदङ्गं शुक्रं दीप्तिमत्, यच्चान्यदङ्गं चन्द्रमाह्लादकरं, यदप्यन्यदङ्गं पूतं शुद्धं, यदप्यन्यदङ्गं यज्ञियं यज्ञार्हं, तत्सर्वं लोष्टरूपं देवेभ्यो देवानामर्थे भरामसि संपादयामः ॥

अथ चतुर्थीमाह—

इषमूर्जमहमित आ दद ऋतस्य धाम्नो
अमृतस्य योनेः । आ नो गोषु विशत्वौष-
धीषु जहामि सेदिमनिराममीवाम् ।, इति ।

ऋतस्य यज्ञस्य धाम्नः स्थानभूतादमृतस्य योनेः कारणभूतादितो देशादिषमन्नरूपमूर्जं रसरूपं लोष्टमाददे स्वी करोमि । स लोष्टो नोऽस्मदीयेषु गोष्वाविशत्वागत्य प्रविशतु । तथौषधीष्वाविशतु । सीदन्त्यत्रेति सेदिर्भूमि[स्ता]मनिराममन्नरहिताममीवां रोगयुक्तां जहामि परित्यजामि ॥

एतैर्मन्त्रैः साध्यं लोष्टानां क्षेत्रमध्ये स्थापनं विधत्ते—

"दिग्भ्यो लोष्टान्त्समस्यति दिशामेव वीर्यमवरुध्य दिशां वीर्येऽग्निं चिनुते" [ सं० का० ५ प्र० २ अ० ५ ] इति ।

कर्षणावसरे ये लोष्टा वेणुना विमितादग्निक्षेत्राद्बहिर्दिक्षु पतितास्ताभ्यो दिग्भ्यस्ताँल्लोष्टानानीय क्षेत्रे संयोजयेत् । तथा सति दिशां सामर्थ्यमस्मिन्क्षेत्रेऽवरुध्य तस्मिन्सामर्थ्येऽग्निं चितवान्भवति ॥

चतुर्थमन्त्रे कंचिद्विशेषं विधत्ते—

"यं द्विष्याद्यत्र स स्यात्तस्यै दिशो लोष्टमा हरेदिषमूर्जमहमित आ दद

---

१ ख. च. 'निरां सस्यर' ।

इतीषमेवोर्जं तस्यै दिशोऽव रुन्धे क्षोधुको भवति यस्तस्यां दिशि भवति" [ सं० का० ५ प्र०२ अ० ५ ] इति ।

अयमग्निचित्यं पुरुषं द्विष्यात्स पुरुषो यस्यां दिश्यवतिष्ठेत तस्या दिशो लोष्टमिषमूर्जमिति मन्त्रेणाऽऽहरेत् । तथा सति तदीयमन्नं रसं च स्वी करोति । स्वीकृते सति तस्यां दिशि यो द्वेष्यो भवति वर्तते स द्वेष्यः क्षोधुकः क्षुधां प्राप्तोऽन्नरहितो भवति ॥

यदुक्तं सूत्रकारेण—"उत्तरवेदिमुपवपति यावानग्निर्व्याघारणान्तं कृत्वा" इति, तदेतद्विधत्ते—

"उत्तरवेदिमुप वपत्युत्तरवेद्याᳪं ह्यग्निश्चीयतेऽथो पशवो वा उत्तरवेदिः पशूनेवाव रुन्धेऽथो यज्ञपरुषोऽनन्तरित्यै" [ सं०का० ५ प्र० २ अ० ५ ] इति ।

प्राकृतेन प्रकारेणोत्तरवेदिं कुर्यात् । तस्यामुत्तरवेद्यां पश्चादग्निश्चीयते[2] । अपि चोत्तरवेद्याः समीपगतेषु यूपेषु पशुबन्धात्पशव एवोत्तरवेदिः पशूनां प्राप्तये भवति । अपि[3] च प्रकृतावुत्तरवेदिरूपं यज्ञस्य परुः पर्व तस्यान्तरायो मा भूदित्युत्तरवेदिः कर्तव्या ॥

कल्पः—" अग्ने तव श्रवो वय इति षड्भिः सिकता न्युप्य " इति ।

तत्र प्रथमामाह—

अग्ने तव श्रवो वयो महि भ्राजन्त्यर्चयो
विभावसो । बृहद्भानो शवसा वाजमु-
क्थ्यं दधासि दाशुषे कवे ।, इति ।

वीयते प्राणिभिरश्यत इति वयोऽन्नम् । हेऽग्ने तव श्रवस्त्वदीयत्वेन श्रूयमाणं वयोऽन्नं महि महदस्ति । विभा दीप्तिरेव वसु धनं यस्यासौ विभावसुः । हे विभावसोऽर्चयस्तव दीप्तयो भ्राजन्ति दीप्यन्ते । बृहन्तो भानवो यस्यासौ बृहद्भानुः । कविर्विद्वान्यजमानाभिप्रायाभिज्ञः । तादृश हेऽग्ने दाशुषे हविर्दत्तवते यजमानायोक्थ्यं शस्त्राद्युपेतयज्ञयोग्यं वाजमन्नं शवसा त्वदीयेन बलेन दधासि ॥

अथ द्वितीयामाह—

इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो
अमर्त्य । स दर्शतस्य वपुषो वि रा-
जसि पृणक्षि सानसिᳪं रयिम् ।, इति ।

---

१ ख. ङ. च. °णान्तां कृ° । २ ख. च. °दिः । उत्तरवेदिः प° । ३ ख. च. अथो अपि ।

( आहवनीयचयनार्थलोष्टक्षेपाद्यभिधानम् )

हेऽमर्त्य मरणरहिताग्ने जन्तुभिः पुरोडाशादिहविःप्रदैः प्राणिभिरिज्यन्दीप्यमानः सन्नस्मे अस्मासु रायो धनानि प्रथयस्व विस्तारय । स दर्शतस्य वपुषो दर्शनीयस्य चित्याग्निरूपस्य शरीरस्य मध्ये विराजसि विशेषेण दीप्यसे। सानसिं बहुविधदानार्हं रयिं धनं पृणक्षि अस्मदर्थं पूरय ॥

अथ तृतीयामाह—

ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व
धीतिभिर्हितः । त्वे इषः सं दधुर्भूरिरेतसश्चित्रोतयो वामजाताः ।, इति ।

ऊर्जोऽन्नस्य नपादविनाशयिता, तादृश भो जातवेदो धीतिभिर्हितो दीप्तिभिर्युक्तः सन्सुशस्तिभिर्मन्दस्व शोभनस्तुतिभिर्हृष्यस्व । भूरिरेतसः प्रभूतसारा इषोऽन्नरूपा आहुतीस्त्वे त्वयि संदधुर्यजमानाः संपादितवन्तः । कीदृशा यजमानाः, चित्रोतयो विचित्रास्त्वया कृता ऊतयो रक्षा येषां ते चित्रोतयो वामजाता *वननीये संभजनीये देशे कुले चोत्पन्नाः ॥

अथ चतुर्थीमाह—

पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना । पुत्रः पितरा विचरन्नुपावस्युभे पृणक्षि रोदसी ।, इति ।

पावकवर्चाः शोधकदीप्तिः । शुक्रवर्चा निर्मलदीप्तिः । अनूनवर्चाः संपूर्णदीप्तिः । ईदृशस्त्वं भानुना भासोदियर्षि उत्कर्षं गच्छसि । उभे रोदसी द्यावापृथिव्यौ विचरन्नुपावसि समीपमागत्य रक्षसि, पृणक्षि च तयोः संपूर्तिमपि करोषि । परिचरणे दृष्टान्तः—पुत्रः पितरा, यथा लोके शास्त्रीयमार्गेणानुशिष्टः पुत्रः पितरौ परिचरति तद्वत् ॥

अथ पञ्चमीमाह—

ऋतावानं महिषं विश्वचर्षणिमग्निँ सुम्नाय दधिरे पुरो जनाः । श्रुत्कर्णँ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ।, इति ।

मानुषा जना मनुष्यजातियुक्ता जन्तव ऋत्विग्यजमानाः पुरः[1] पूर्वस्मि-

* ख पुस्तके ' वमनीये ' इति पाठो भवितुं युक्त इति टिप्पणी ।

1 क. घ. ङ. च. पुरा ।

न्काले युगा गिरा योग्यया स्तुतिरूपया वाचा सुम्नाय सुखार्थमग्निमत्र दधिरे स्थापितवन्तः । कीदृशमग्निम् । ऋतावानं सत्यवन्तं, महिषं महान्तं, विश्व(श्वे) चर्षणयो मनुष्याः परिचारकत्वेन यस्य सन्ति सोऽयं विश्वचर्षणिः [तं], श्रुत्कर्ण शृण्वत्कर्णं, यद्विज्ञाप्यते तत्सद्य एव कर्णेन श्रुत्वा संपादयतीत्यर्थः । सप्रथस्त- ममतिशयेन प्रथासहितं कीर्तिमन्तम् । तादृशं त्वामग्निं दैव्यं देवेभ्यो हितं दधिर इत्यन्वयः ॥

अथ षष्ठीमाह—

निष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तꣳ
राधसे महे । रातिं भृगूणामुशिजं कवि-
क्रतुं पृणक्षि सानसिꣳ रयिम् ।, इति ।

हेऽग्ने त्वं यजमानं रयिं पृणक्षि संपृक्तं कृणोपि प्रापयसीत्यर्थः । कीदृशं यजमानम् । अध्वरस्य निष्कर्तारं यज्ञस्य निष्पादकम् । प्रचेतसं प्रकृष्टचित्तयुक्तं श्रद्धालुमित्यर्थः । महे राधसे महते हविर्लक्षणायान्नाय क्षयन्तं हविर्दातुमिह निवसन्तमित्यर्थः । रातिं दातारं, भृगूणां महर्षीणां तपस्विनां मध्य उशिजं कमनीयमत्यन्तं तपोयुक्तमित्यर्थः । कविक्रतुं कवीनां विदुषामिव क्रतुः कर्मानुष्ठानं यस्यासौ कविक्रतुस्तं, सर्वमपि कर्तव्यं सम्यग्ज्ञात्वैवानुतिष्ठती- (न्तमि)त्यर्थः । सानसिशब्दो यजमानविशेषणं धनविशेषणं वा । यजमानपक्षे दानशीलमित्यर्थः । धनपक्षे संभजनीयमित्यर्थः ॥

एतान्मन्त्रान्विनियुङ्क्ते—

" अग्ने तव श्रवो वय इति सिकता नि वपत्येतद्वा अग्नेर्वैश्वानरस्य सूक्तꣳ सूक्तेनैव वैश्वानरमव रुन्धे " [ सं० का० ५ प्र० २ अ० ६ ] इति ।

एतत्षडृचात्मकं वैश्वानरस्य सर्वमनुष्यप्रियस्याग्नेः संबन्धि सूक्तम् । अत एतेन सिकतानिवापे सति वैश्वानररूपमग्निं प्राप्नोति ॥

सूक्तगतमन्त्रसंख्यां विधत्ते—

" षड्भिर्नि वपति षड्वा ऋतवः संवत्सरः संवत्सरोऽग्निर्वैश्वानरः साक्षा- देव वैश्वानरमव रुन्धे " [ सं० का० ५ प्र० २ अ० ६ ] इति ।

संवत्सरमुख्यं भूत्वेत्यादौ संवत्सरधारणसंबन्धादग्नेः संवत्सररूपत्वम् । ऋतुसंवत्सराव्यवधानेन वैश्वानरं साक्षादेव सर्वथैव प्राप्नोति ॥

सूक्तगतास्वृक्षु परस्परविलक्षणं यच्छन्दस्तत्प्रशंसति—

---

१ क. घ. ङ. 'मनु द' । २ ख. ङ. च. करोपि ।

( आहवनीयचयनार्थलोष्टक्षेपाद्यभिधानम् )

" समुद्रं वै नामैतच्छन्दः समुद्रमनु प्रजाः प्र जायन्ते यदेतेन सिकता नि वपति प्रजानां प्रजननाय " [ सं० का० ५ प्र० २ अ० ६ ] इति।

यथा समुद्रो बहुल एवमत्रत्यच्छन्दोऽपि बहुविधत्वात्समुद्रमित्युच्यते। तथा हि—प्रथमा विष्टारपङ्क्तिर्मध्यमयोः पादयोरेकादशाक्षरत्वात्। द्वितीया पदपङ्क्ति-रयुक्पादयोर्द्वादशाक्षरत्वात्। यथा द्वितीया तथा तृतीया। यथा प्रथमा तथा चतुर्थी। उपरिष्टाज्ज्योतिः पञ्चमी चतुर्थपादस्याष्टाक्षरत्वात्। तथा षष्ठी। * एवं बहुविधत्वाच्छन्दसः समुद्रत्वम्। लोके हि समुद्रमनुसृत्य प्रजा उत्पद्यन्ते। समुद्रो बहुलस्तथा प्रजा अपि बहुविधाः। तथा सति समुद्रसदृशेन च्छन्दसा सिकतानिवापः प्रजानामुत्पत्त्यै संपद्यते॥

कल्पः—" चितः स्थ परिचित इत्यपरिमिताभिः शर्कराभिराहवनीयचि-तेरायतनं परिश्रयति" इति।

पाठस्तु—

चितः स्थ परिचित ऊर्ध्वचितः श्रयध्वं
तया देवतयाऽङ्गिरस्वद्ध्रुवाः सीदत।, इति।

चीयन्ते भूमौ प्रक्षिप्यन्त इति चितः शर्कराः। हे शर्करा यूयं चितः स्थ भूमौ प्रक्षिप्ताः स्थ, परिचितः परितः प्रक्षिप्ताः स्थ, ऊर्ध्वचित उपरि प्रक्षिप्ताः स्थ। तादृश्यो यूयं श्रयध्वमिमां चितिं सेवध्वम्। युष्माकं मध्ये यस्याः शर्कराया या देवता तया सार्धं यूयं ध्रुवाः स्थिराः सत्यः सीदतेह तिष्ठत। तत्र दृष्टान्तः—अङ्गिरस्वत्, यथाऽङ्गिरसां चयने ध्रुवाः सीदन्ति तद्वत्॥

अनेन मन्त्रेण साध्यं शर्करास्थापनं विधत्ते—

---

* अत्र ख. पुस्तके 'एष च संदर्भो न पिङ्गलसूत्रतद्वृत्त्योः संवादी, तत्र हि तृतीया-ध्याये 'विस्तारपङ्क्तिरन्तः। ४२।' 'पदपङ्क्तिः पञ्च। ४६।' 'उपरिष्टाज्ज्योतिरन्तेन। ५४।' इति सूत्रत्रयेण, 'यदा जागतौ ( १२ अ० ) पादौ मध्ये भवतः, आद्यन्तयो श्च गायत्रौ ( ८ अ० ) तदा विस्तारपङ्क्तिर्नाम। पञ्चका इत्यनुवर्तते, यदा पञ्चाक्षरा पञ्च पादा भवन्ति तदा पदप-ङ्क्तिर्नाम च्छन्दः। यदा चत्वारो गायत्राः पादा भवन्ति, अन्ते च त्रैष्टुभः ( ११ अ० ) तदोप-रिष्टाज्ज्योतिर्नाम त्रिष्टुब्भवति। तथा जगतीत्यनुवर्तनीयं, तेन, अन्तेन जागतेन शेषैश्च गायत्रै-श्चतुर्भिरुपरिष्टाज्ज्योतिर्नाम जगती भवति। इति तद्वृत्त्या चान्यथैव लक्षणानि प्रदर्शितानि। एवं द्वितीयातृतीययोः प्रथमाचतुर्थ्योः पञ्चमीषष्ठ्योश्च परस्परं विलक्षणाक्षरसंख्याकतया तुल्यताभिधा-नमपि न सम्यगिव प्रतिभातीत्यवधेयम्।' इति टिप्पणिका।

---

१ ख. 'ङ्क्तिरयोत्तमपाद'।

" इन्द्रो वृत्राय वज्रं प्राहरत्स त्रेधा व्यभवत्स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयं येऽन्तःशरा अशीर्यन्त ताः शर्करा अभवन्तच्छर्कराणाꣳ शर्करत्वं वज्रो वै शर्कराः पशुरग्निर्यच्छर्कराभिरग्निं परिमिनोति वज्रेणैवास्मै पशून्परि गृह्णाति तस्माद्वज्रेण पशवः परिगृहीतास्तस्मात्स्थेयानस्थेयसो नोप हरते " [ सं० का० ५ प्र० २ अ० ६ ] इति ।

इन्द्रेण प्रहितो वज्रोऽत्यन्तकठिनं वृत्रशरीरं प्राप्य त्रिधा भग्नोऽभवत् । तेषु त्रिषु भागेषु स्फ्य एको भागो रथोऽपरो भागो यूपोऽन्यः । तदा वज्रस्यान्तः शीर्णा अवयवा भूमौ पतिताः । ता भूमिगताः शर्करा अत्यन्तं दृढाः क्षुद्रपाषाणा अभवन् । शरैः क्रियन्ते निष्पाद्यन्त इति व्युत्पत्त्या शर्करा इति नाम संपन्नम् । अतो वज्र एव शर्कराः । अग्निस्तु पशुसाधनत्वात्पशुस्वरूपः । अतोऽग्निप्रदेशे शर्कराभिः परिश्रयेत् । तथा सति वज्रेणैव साधनेन यजमानार्थं पशून्परिगृह्णाति । यस्मादेवं तस्माल्लोकेऽपि वज्रसमानेन करेण पाशादिना वा पशवः परिगृहीता भवन्ति । यस्मादत्राग्नेर्दार्ढ्याय शर्करापेक्षा नतु शर्कराणामग्न्यपेक्षा तस्माल्लोकेऽपि स्थेयान्स्थिरतरोऽतिप्रबलः पुरुषः कश्चिदपि अस्थेयसोऽत्यन्तमस्थिरान्दुर्बलान्पुरुषान्नोपहरते नैवोपाश्रयति ॥

शर्करासु काम्यां[1] संख्यां विधत्ते—

" त्रिसप्ताभिः पशुकामस्य परि मिनुयात्सप्त वै शीर्षण्याः प्राणाः प्राणाः पशवः प्राणैरेवास्मै पशूनव रुन्धे " [ सं० का० ५ प्र० २ अ० ६ ] इति ।

त्रीणि सप्तकानि यासां शर्कराणां तास्त्रिसप्ताः, ताभिरेकविंशतिसंख्याकाभिरित्यर्थः । परिमिनुयात्परि[2]मित्य स्थापयेत् । सप्तसंख्यया परिच्छिन्नाः शिरोवस्थिताश्छि ( ताच्छि ) द्रगताः प्राणाः स्मर्यन्ते । तैश्च प्राणैस्तद्यु ( र्यु )क्ताः प्राणाः पशवः । तथा सति सप्तसंख्यया प्राणैरेव युक्तान्पशून्प्राप्नोति ॥

अथान्यां काम्यां संख्यां विधत्ते—

" त्रिणवाभिर्भ्रातृव्यवतस्त्रिवृतमेव वज्रꣳ संभृत्य भ्रातृव्याय प्र हरति स्तृत्यै " [ सं० का० ५ प्र० २ अ० ६ ] इति ।

त्रीणि नवकानि यासां तास्त्रिणवाः सप्तविंशतिसंख्याका इत्यर्थः । त्रिणवसंख्योपेतस्त्रिवृत्स्तोमः स्मर्यते । तमेव त्रिवृत्स्तोमं वज्रत्वेन संपाद्य भ्रातृव्यस्य हिंसायै प्रहरति ॥

पक्षान्तरं विधत्ते—

---

१ ख. च. 'म्यांसं वि' । २ ख. च. 'रितः स्था' ।

( आहवनीयचयनार्थलोष्टक्षेपाद्यभिधानम् )

" अपरिमिताभिः परि मिनुयादपरिमितस्यावरुद्ध्यै " [ सं० का० ५ प्र० २ अ० ६ ] इति।

अथान्वयव्यतिरेकाभ्यां परिश्रयणं दृढी करोति—

" यं कामयेतापशुः स्यादित्यपरिमित्य तस्य शर्कराः सिकता व्यूहेदपरिगृहीत एवास्य विषूचीनꣳ रेतः परा सिञ्चत्यपशुरेव भवति यं कामयेत पशुमान्त्स्यादिति परिमित्य तस्य शर्कराः सिकता व्यूहेत्परिगृहीत एवास्मै समीचीनꣳ रेतः सिञ्चति पशुमानेव भवति " [सं० का० ५ प्र० २अ० ६] इति।

पूर्वन्युप्तायाः सिकताया व्यूहनं विधास्यति। यजमानस्य पशुराहित्यं कामयमानोऽध्वर्युः परितः शर्करास्थापनमकृत्वैव सिकताप्रसारणं कुर्यात्। तथा सति परिश्रयणाभावादपरिगृहीत एव स्थाने यजमानस्य रेतो विविधं यथा गच्छति तथा विनाशयति। ततोऽयमपशुरेव भवति। सोऽयं व्यतिरेकः, एतस्माद्विपरीतोऽन्वयः। तस्मात्पशुलाभाय शर्करापरिश्रयणपूर्वकमेव सिकताव्यूहनं कर्तव्यमिति तात्पर्यार्थः॥

कल्पः—" आ प्यायस्व समेतु त इति सिकता व्यूहत्युत्तरया त्रिष्टुभा राजन्यस्य " इति।

तत्र प्रथममन्त्रमाह—

आ प्यायस्व समेतु ते विश्वतः सोम
वृष्णियम्। भवा वाजस्य संगथे।, इति।

हे सोम त्वमाप्यायस्व सर्वतो वर्धयस्व। ते तव वृष्णियं रेतो विश्वतः सर्वस्माद्वृष्णियादाहारात्समेतु संप्राप्नोतु। वाजस्यान्नस्य संगथे संगमने त्वं निमित्तं भव॥

अथोत्तरां त्रिष्टुभमाह—

सं ते पयाꣳसि समु यन्तु वाजाः सं वृष्णिया-
न्यभिमातिषाहः। आप्यायमानो अमृताय
सोम दिवि श्रवाꣳस्युत्तमानि धिष्व॥, इति॥

हे सोम ते तव पयांसि पातव्यानि क्षीरादीनि समु (सं)यन्तु संप्राप्नुवन्तु। तथा वाजा अन्नान्यपि संयन्तु। वृष्णियानि रेतांस्यपि संयन्तु। कीदृशस्य तव, अभिमातिषाहः, अभिमातिं पाप्मानं सहते तिरस्करोतीत्यभिमातिषाट्तस्य। क्षीरादिसंपत्तौ सत्यां त्वमाप्यायमानो वर्धयमानोऽमृताय यजमान-

१ ख. च. 'र्धमा'।

स्यामृतत्वाय देवताभावाय दिवि द्युलोके श्रवांसि श्रोतुं प्रियाण्युत्तमानि विचित्राण्यन्नानि धिष्व धारय संपादयेत्यर्थः ॥

तदेतदृग्द्वयं सामान्याकारेण विनियुङ्क्ते—

" सौम्या व्यूहति सोमो वै रेतोधा रेत एव तद्दधाति " [ सं० का० ५ प्र० २ अ० ६ ] इति ।

सोमो देवता यस्यामृचि प्रतीयते सेयमृक्सौमी । विश्वतः सोमेत्याद्यायामृच्यसौ प्रतीयते । अमृताय सोमेत्युत्तरस्यामृचि प्रतीयते । तया सौम्या पूर्वं न्युप्ताः सिकता विविधं प्रसारयेत् । तथा सति सोमस्य रेतोधारकत्वात्तन्मन्त्रनिष्पाद्यव्यूहनेन यजमानो रेतो धारयति ॥

मन्त्रद्वयस्य पुरुषभेदेन व्यवस्थां विधत्ते—

" गायत्रिया ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्यः " [ सं० का० ५ प्र० २ अ० ६ ] इति ।

आ प्यायस्वेति गायत्री । सं त इति त्रिष्टुप् ॥

अत्र विनियोगसंग्रहः—

माचतुर्भिः क्षिपेल्लोष्टानग्नेषट्केन वालुकाः ।
चित आहवनीयस्य परिक्षिपति शर्कराः[2] ॥ १ ॥
आ प्या विप्रस्य सिकता व्यूहेत्सं ते पयांस्यथ ।
क्षत्रियस्य भवेद्व्यूह इति मन्त्रास्त्रयोदश ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

(अथ चतुर्थाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ।)

---

अभ्यंस्थाद्विश्वाः पृतंना अरांतीस्तदग्निरांह तदु सोमं आह । बृहस्पतिः सविता तन्मं आह पूषा माऽधात्सुकृतस्यं लोके । यदक्रंन्दः प्रथमं जायंमान उद्यन्त्संमुद्रादुत वा

---

१ ख. च. दर्शयति । २ ख. च. °रिश्रयति ।

(आहवनीयचयनार्थरुक्माद्युपधानाभिधानम्)

पुरीषात् । श्येनस्य पक्षा हरिणस्य बाहू उप-
स्तुतं जनिम तत्ते अर्वन् । अपां पृष्ठमसि यो-
निरग्नेः समुद्रमभितः पिन्वमानम् । वर्धमानं
महः (१) आ च पुष्करं दिवो मात्रया
वरिणा प्रथस्व । ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि
सीमतः सुरुचो वेन आवः । स बुध्निया उपमा
अस्य विष्ठाः सतश्च योनिमसतश्च विवः ।
हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक
आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै
देवाय हविषा विधेम । द्रप्सश्चस्कन्द पृथिवी-
मनु (२) द्यामिमं च योनिमनु यश्च पूर्वः ।
तृतीयं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु
सप्त होत्राः । नमो अस्तु सर्पेभ्यो ये के च
पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः
सर्पेभ्यो नमः । येऽदो रोचने दिवो ये वा
सूर्यस्य रश्मिषु । येषामप्सु सदः कृतं तेभ्यः
सर्पेभ्यो नमः । या इषवो यातुधानानां ये वा
वनस्पतीꣳरनु । ये वाऽवटेषु शेरते तेभ्यः
सर्पेभ्यो नमः (३) ॥

( म॒हो॑ऽनु॒ं या॑तु॒धाना॑नामेका॑दश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ चतुर्थाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

अ॒भीति॑ । अ॒स्था॒त् । विश्वा॑ः । पृत॑नाः । अरा॑तीः । तत् । अ॒ग्निः । आ॒ह॒ । तत् । उ॒ । सोम॑ः । आ॒ह॒ । बृ॒ह॒स्पति॑ः । स॒वि॒ता । तत् । मे॒ । आ॒ह॒ । पू॒षा । मा॒ । अ॒धा॒त् । सु॒कृ॒तस्येति॑ सु—कृ॒तस्य॑ । लो॒के । यत् । अक्र॑न्दः । प्र॒थ॒मम् । जाय॑मानः । उ॒द्यन्नित्यु॑त्—यन् । स॒मु॒द्रात् । उ॒त । वा॒ । पुरी॑षात् । श्ये॒नस्य॑ । प॒क्षा । ह॒रि॒णस्य॑ । बा॒हू इति॑ । उप॑स्तु॒तमित्युप॑—स्तु॒तम् । जनि॑म । तत् । ते॒ । अ॒र्व॒न् । अ॒पाम् । पृ॒ष्ठम् । अ॒सि॒ । योनि॑ः । अ॒ग्नेः । स॒मु॒द्रम् । अ॒भित॑ः । पिन्व॑मानम् । वर्ध॑मानम् । म॒हः ( १ ) । एति॑ । च॒ । पुष्क॑रम् । दि॒वः । मात्र॑या । व॒रि॒णा । प्र॒थ॒स्व॒ । ब्रह्म॑ । ज॒ज्ञा॒नम् । प्र॒थ॒मम् । पु॒रस्ता॑त् । वीति॑ । सी॒म॒तः । सु॒रुच॒ इति॑ सु—रुच॑ः । वे॒नः । आ॒वः॒ । सः । बु॒ध्नियाः॑ । उ॒प॒मा इत्यु॑प—माः । अ॒स्य । वि॒ष्ठा इति॑ वि—स्थाः । स॒तः । च॒ । योनि॑म् ।

असतः। च। विवः। हिरण्यगर्भ इति हिरण्य—गर्भः। समिति। अवर्तत। अग्रे। भूतस्य। जातः। पतिः। एकः। आसीत्। सः। दाधार। पृथिवीम्। द्याम्। उत। इमाम्। कस्मै। देवाय। हविषा। विधेम। द्रप्सः। चस्कन्द। पृथिवीम्। अन्विति (२)। द्याम्। इमम्। च। योनिम्। अन्विति। यः। च। पूर्वः। तृतीयम्। योनिम्। अन्विति। संचरन्तमिति सं—चरन्तम्। द्रप्सम्। जुहोमि। अन्विति। सप्त। होत्राः। नमः। अस्तु। सर्पेभ्यः। ये। के। च। पृथिवीम्। अनु। ये। अन्तरिक्षे। ये। दिवि। तेभ्यः। सर्पेभ्यः। नमः। ये। अदः। रोचने। दिवः। ये। वा। सूर्यस्य। रश्मिषु। येषाम्। अप्स्वित्यप्—सु। सदः। कृतम्। तेभ्यः। सर्पेभ्यः। नमः। याः। इषवः। यातुधानानामिति यातु—धानानाम्। ये। वा। वनस्पतीन्। अनु। ये। वा। अवटेषु। शेरते। तेभ्यः। सर्पेभ्यः। नमः (३)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः॥ ८॥

---

(अथ चतुर्थकाण्डे द्वितीयप्रपाठकेऽष्टमोऽनुवाकः।)

---

सप्तमे लोष्टसमसनादिकमुक्तम्। अथाष्टमे रुक्माद्युपधानं वक्तव्यम्। तत्राऽऽदौ तावदश्वाक्रमणमुच्यते।

कल्पः—" प्राञ्चमश्वमभ्यस्थाद्विश्वा इति दक्षिणेन पदा दर्भस्तम्बमाक्रमय्य " इति ।

पाठस्तु—

अभ्यस्थाद्विश्वाः पृतना अरातीस्तदग्निराह तदु सोम आह । बृहस्पतिः सविता तन्म आह पूषा माऽधात्सुकृतस्य लोके । , इति ।

अयमश्वो विश्वाः सर्वाः पृतनाः प्रतिपक्षसेना अरातीर्दातव्यस्यादातृरूपा अभ्यस्थात्पादेनाभिक्रम्य तिष्ठतु । तदभिक्रमणमग्निराहानुमोदताम् । सोमोऽपि तदाह तदनुमोदताम् । बृहस्पतिर्मे मदर्थं तदाह तदनुमन्यताम् । तथा सविताऽपि तदनुमन्यताम् । पूषा सुकृतस्य लोके फलभूते स्वर्गे माऽधान्मां स्थापयतु ॥

कल्पः—" प्रदक्षिणमावर्तयित्वा(र्त्य) यदक्रन्द इति पुनरेवाऽऽक्रमयति " इति ।

पाठस्तु—

यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् । श्येनस्य पक्षा हरिणस्य बाहू उपस्तुतं जनिम तत्ते अर्वन् । , इति ।

हेऽर्वन्यद्यस्मात्कारणाज्जायमान उत्पद्यमान एव प्रथममादावक्रन्दः क्रन्दितवानसि अहो अग्न्यादीनामहं साधनमिति महान्तं शब्दमकरोस्तत्तस्मात्कारणाज्जनिमोपस्तुतं ते तव जन्म समीचीनमिति सर्वैरपि स्तुतमासीत् । जायमानत्वमेव विशदी क्रियते—समुद्रादुद्यन्समुद्रोपलक्षितादुदकात्त्वमुत्पद्यमानः, " अप्सु योनिर्वा अश्वः " इति श्रुतेः । उत वा पुरीषात्पुरुषात्पुंस्त्वशक्तिसंपन्नान्महतोऽश्वादुत्पद्यमानः । जन्मन उपस्तुतत्वे दृष्टान्तोऽयमुच्यते—श्येनस्य पक्षा हरिणस्य बाहू, उपस्तुतशब्दोऽत्राध्याहर्तव्यः । यथा श्येनाख्यस्य पक्षिणः पक्षौ शीघ्रोत्पतनहेतुत्वात्सर्वैरुपस्तुतौ, यथा वा हरिणस्य मृगस्य बाहू पादौ शीघ्रगमनहेतुत्वादुपस्तुतौ तद्वदित्यर्थः ॥

उक्तमन्त्रसाध्यमश्वाक्रमणं विधत्ते—

" शंयुं बार्हस्पत्यं मेधो नोपानमत्सोऽग्निं प्राविशत्सोऽग्नेः कृष्णो रूपं

---

१ ख. च. इत्यश्वस्य द° । २ ख. च. मम । ३ ख. च. °षात्पुं° ।

(आहवनीयचयनार्थरुक्माद्युपधानाभिधानम्)

कृत्वोदायत सोऽश्वं प्राविशत्सोऽश्वस्यावान्तरशफोऽभवद्यदश्वमाक्रमयति य एव मेधोऽश्वं प्राविशत्तमेवाव रुन्धे" [ सं० का० ५ प्र० २ अ० ६ ] इति।

पुरा कदाचिच्छंयुनामानं बृहस्पतिपुत्रं केनापि निमित्तेन मेधो यज्ञपुरुषो न प्राप्तवान्। स पुनः शंयुनाऽन्विष्यमाणोऽन्तर्धानादग्निं प्राविशत् । तत्राप्यन्वेषणाय शंयावागते सति स यज्ञः कृष्णमृगो भूत्वा तदीयं रूपं साकल्येन कृत्वाऽग्नेः सकाशादुदायतोदगच्छत् । उद्गत्य च सोऽश्वं प्राविशत्। प्रविश्य चाश्वसंबन्धिनः प्रौढशफस्य मध्ये योऽयमवान्तरशफस्तद्रूपोऽभवत् । अतोऽश्वमाक्रमयेत्। तथा सति यो यज्ञोऽश्वं प्राविशत्तमेव प्राप्नोति ॥

प्रकारान्तरेणाऽऽक्रमणं प्रशंसति—

"प्रजापतिनाऽग्निश्चेतव्य इत्याहुः प्राजापत्योऽश्वो यदश्वमाक्रमयति प्रजापतिनैवाग्निं चिनुते" [ सं० का० ५ प्र० २ अ० ६ ] इति।

अयमग्निः प्रजापतिना चेतुं योग्य इत्यभिज्ञा आहुः। अश्वस्य प्राजापत्यत्वात्तदाक्रमणे सति प्रजापतिनैव चितो भवति ॥

कल्पः—"अपां पृष्ठमसीत्यश्वस्य पदे पुष्करपर्णमुत्तानमुपधाय" इति।

पाठस्तु—

अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः
पिन्वमानम्। वर्धमानं मह आ च पुष्करं
दिवो मात्रया वरिणा प्रथस्व।, इति।

हे पुष्करपर्ण त्वमपां पृष्ठमसि पृष्ठवदुपरिभागवर्त्यसि। तथाऽग्नेर्योनिरसि। "त्वामग्ने पुष्करादध्यथर्वा निरमन्थत" इति मन्त्रवर्णात्। तथा समुद्रमभितः पिन्वमानं समुद्रसमानस्य तटाकजलस्य प्रीतिकरं, वर्धमानमप्सूत्पद्य दिने दिने वृद्धियुक्तं, महो निर्लेपत्वाद्युक्त्या पूजनीयं, पुष्करमग्निनिष्पादनद्वारा पुष्टिकरम्। तादृशं त्वं मात्रया परिमाणेन दिवो वरिणाऽऽकाशादप्याधिक्येनाऽऽसमन्तात्प्रथस्व विस्तृतं भव ॥

अनेन मन्त्रेण साध्यं पद्मपत्रोपधानं विधत्ते—

"पुष्करपर्णमुप दधाति योनिर्वा अग्नेः पुष्करपर्णꣳ सयोनिमेवाग्निं चिनुते" [ सं० का० ५ प्र० २ अ० ६ ] इति ॥

तत्र मन्त्रं विनियुङ्क्ते—

१ ख. च. 'र्धानमग्निं। २ ख. च. 'त्। ततोऽ'। ३ ख. च. 'पदधाति' इ'।

"अपां पृष्ठमसीत्युप दधात्यपां वा एतत्पृष्ठं यत्पुष्करपर्णꣳ रूपेणैवैनदुप दधाति" [ सं० का० ५ प्र० २ अ० ६ ] इति।

रूपेणैव विद्यमानार्थवाचित्वादनुरूपेणैव मन्त्रेणैनत्पुष्करपर्णमुपहितवान्भवति ॥

कल्पः—"ब्रह्म जज्ञानमिति पुष्करपर्ण उपरिष्टान्निर्बाधं रुक्ममुपधाय" इति।

पाठस्तु—

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो
वेन आवः। स बुध्निया उपमा अस्य
विष्ठाः सतश्च योनिमसतश्च विवः।, इति।

प्रथमं जज्ञानमादावुत्पन्नमिदं रुक्मस्वरूपं ब्रह्म परिवृढमत्यन्तं महदित्यर्थः। तस्य रुक्मस्य दृष्टान्तत्वेन सूर्यः प्रपञ्च्यते—पुरस्तात्पूर्वस्यां दिश्यवस्थितो वेनः कमनीयः सूर्यः सीमतः सर्वस्यां सीम्नि सुरुचः शोभनरश्मीन्विशेषेणाऽऽवरावृणोत्। अस्य रुक्मस्योपमानभूता विष्ठा विशेषेणावस्थिता बुध्निया बुध्ने मूले पृथिवीरूपे भवाः पदार्थाः। तानपि स वेनो विवर्विवृतवान्प्रकाशितवानित्यर्थः। सतश्च विद्यमानस्य घटपटादेर्योनिं कारणं मृदादिरूपमसतश्चाविद्यमानस्य नरविषाणादेः कारणं मनुष्यमूर्धादिकमपि विवृतवान्। तथाविधेन सूर्येण सदृशोऽयं रुक्मः प्रकाशत इति तात्पर्यार्थः ॥

तमिमं मन्त्रं विनियुङ्क्ते—

"ब्रह्म जज्ञानमिति रुक्ममुप दधाति ब्रह्ममुखा वै प्रजापतिः प्रजा असृजत ब्रह्ममुखा एव तत्प्रजा यजमानः सृजते" [ सं० का० ५ प्र० २ अ० ७ ] इति।

ब्रह्म ब्राह्मणजातिर्मुखमुपक्रमो यासां प्रजानां ता ब्रह्ममुखाः ॥

अस्मिन्मन्त्रे ब्रह्मपदाभिधेयस्य प्रथमोत्पत्तिवर्णने तात्पर्यं दर्शयति—

"ब्रह्म जज्ञानमित्याह तस्माद्ब्राह्मणो मुख्यः" [ सं० का० ५ प्र० २ अ० ७ ] इति।

यस्मात्क्षत्रियादेर्जन्मप्राथम्यमनुपन्यस्य ब्रह्मशब्दार्थस्यैव प्रथमजन्मोपन्यस्यते तस्माल्लोकेऽपि ब्रह्मशब्दार्थो ब्राह्मण एव मुख्यः ॥

एतद्वेदनं प्रशंसति—

---

१ ख. च. °रश्मिविशे°।

( आहवनीयचयनार्थरुक्माद्युपधानाभिधानम् )

" मुख्यो भवति य एवं वेद " [ सं० का० ५ प्र० २ अ० ७ ] इति ॥

रुक्मोपधानं प्रशंसति—

" ब्रह्मवादिनो वदन्ति न पृथिव्यां नान्तरिक्षे न दिव्यग्निश्चेतव्य इति यत्पृथिव्यां चिन्वीत पृथिवीꣳ शुचाऽर्पयेन्नौषधयो न वनस्पतयः प्र जायेरन्यद-न्तरिक्षे चिन्वीतान्तरिक्षꣳ शुचाऽर्पयेन्न वयाꣳसि प्र जायेरन्यद्दिवि चिन्वीत दिवꣳ शुचाऽर्पयेन्न पर्जन्यो वर्षेद्रुक्ममुप दधात्यमृतं वै हिरण्यममृत एवाग्निं चिनुते प्रजात्यै " [ सं० का० ५ प्र० २ अ० ७ ] इति।

शुचाऽर्पयेत्संतापेन योजयेत्। तस्मिन्संतापे सति लोकत्रये दोषास्तद्व्यावृत्तये वह्नेराधारत्वेन रुक्ममुपदध्यात्। हिरण्यस्याग्निसंपर्केऽपि विनाशाभावात्तस्मि-न्नमृते हिरण्येऽग्निं चितवान्भवति। अयमेव रुक्मोपधानविधिरिति यदि स्वी क्रियेत तदानीमेतदनुवादेन पूर्वो मन्त्रमात्रविधिः। यदि तु स एव विशि-ष्टविधिस्तदानीमर्थवादसंबन्धाय स एवानूद्यत इति द्रष्टव्यम् ॥

कल्पः—" हिरण्यगर्भः समवर्तताग्र इति तस्मिन्हिरण्मयं पुरुषं प्राचीन-मुत्तानं दक्षिणेनाऽऽतृण्णं प्राङ्मुखं उपधाय " इति।

पाठस्तु—

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम। , इति।

हिरण्ये ब्रह्माण्डरूपे गर्भरूपेणावस्थितः प्रजापतिर्हिरण्यगर्भः। स च भूतस्य प्राणिजातस्याग्रे समवर्तत प्राणिजातोत्पत्तेः पूर्वं स्वयं शरीरधारी बभूव। स च जात उत्पन्नमात्र एक एवोत्पत्स्यमानस्य सर्वस्य जगतः पति-रासीत्। अत एव पृथिवीं द्यां विस्तीर्णां दिवं दाधार धृतवान्। उतापि चेमां भूमिं दाधार। तादृशाय कस्मै प्रजापतिदेवाय हविषा विधेम परिचरेम ॥

एतन्मन्त्रसाध्यं हिरण्मयपुरुषोपधानं विधत्ते—

" हिरण्मयं पुरुषमुप दधाति यजमानलोकस्य विधृत्यै " [ सं० का० ५ प्र० २ अ० ७ ] इति।

यजमानलोकस्य, लोकः स्थानं तस्य धारणमनेनोपधानेन भवति ॥

देशविशेषं विधत्ते—

---

१ ख. च. °धानं विदधातीति। २ क. घ. ङ. °खमुप°।

“ यदिष्टकाया आतृण्णमनूपदध्यात्पशूनां च यजमानस्य च प्राणमपि दध्याद्दक्षिणतः प्राञ्चमुप दधाति दाधार यजमानलोकं न पशूनां च यजमानस्य च प्राणमपि दधात्यथो खल्विष्टकाया आतृण्णमनूप दधाति प्राणानामुत्सृष्ट्यै ” [ सं० का० ५ प्र० २ अ० ७ ] इति ।

इष्टका रुक्मरूपा तस्या आतृण्णं गलबन्धनसूत्रार्थं छिद्रं, यदि तच्छिद्रमनूपदध्यात्, अस्य च्छिद्रस्य पिधानेन पशूनां यजमानस्य च प्राणः पिहितो भवेत्, प्राणसंचारच्छिद्रस्य पिहितत्वेन श्वासो न निर्गच्छेदित्यर्थः । तस्माच्च दोषपरिहाराय पश्चिमदिग्भागे[1] तच्छिद्रं[2]मुपेक्ष्य रुक्मरूपाया इष्टकाया दक्षिणस्यां दिशि प्राक्शिरसं पुरुषमवस्थापयेत् । एवं च सत्याहवनीयस्य दक्षिणदेशरूपो यो यजमानस्य लोकः स विधृतो भवति । तच्छिद्रस्यानावृतत्वाद्यजमानस्य पशूनां च प्राणोऽप्यनावृतो भवति । अथो खल्विति पक्षान्तरोपन्यासः । रुक्मरूपाया इष्टकायाश्छिद्रम[3]नूपलक्ष्यैव पुरुषमुपदध्यात् । सति हि च्छिद्रे प्राणानामुत्सर्गः संचारो[4] भवति ॥

कल्पः—“ द्रप्सश्चस्कन्देति पुरुषमभिमृश्य ” इति ।

पाठस्तु—

द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनि-
मनु यश्च पूर्वः । तृतीयं योनिमनु सं-
चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः । , इति ।

द्रव्यान्तरसंघट्टनेन स्फुटितो हिरण्मयपुरुषस्यावयवलेशो द्रप्सः । स च पृथिवीमनु चस्कन्द पृथिव्यां पतित इत्यर्थः । स च द्रप्सो हुतः सन्स्थानत्रयेऽनुसंचरति द्युलोकेऽन्तरिक्षलोके भूलोके च ॥

तदेतदभिप्रेत्य स्मर्यते—

“ अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठति ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ ” इति ।

सोऽयमर्थो द्यामित्यादिनाऽभिधीयते । द्यामिमं च योनिमनु अन्तरिक्षरूपमिमं स्थानमनुसंचरति । यश्च पूर्वो यो हि पृथिवीमनु चस्कन्देति पूर्वोक्तः स्थानविशेषस्तमप्यनुसंचरति । तृतीयं योनिं द्युलोकरूपमादित्यस्थानमनुसंचरति । तमिमं त्रिषु स्थानेष्वनुसंचरन्तं द्रप्सं जुहोमि मनसा हुतामिव भावयामि

---

१ क. घ. ङ. °गे दक्षिणोदग्वा त° । २ क. घ. ङ. °द्रसामीप्यमु° । ३ ख. घ. ङ. च °मनुप° । ४ क. घ. ङ. °रोऽपि भ° ।

(आहवनीयचयनार्थरुक्माद्युपधानाभिधानम्)

कुत्र होम इति तदुच्यते—सप्त होत्रा इति। यस्यां दिशि द्रप्सः पतितस्तद्व्यतिरिक्ता होमयोग्या याः सप्त दिशः सन्ति तासामनुक्रमेण जुहोमि। यथाऽयं द्रप्सो हुत आदित्यादिस्थानत्रयेषु संचरन्नुपकरोति तथा भावयामीत्यर्थः॥

तमिमं मन्त्रं विनियुङ्क्ते—

"द्रप्सश्चस्कन्देत्यभि मृशति होत्रास्वेवैनं प्रति ष्ठापयति" [सं० का० ५ प्र० २ अ० ७] इति।

होत्रासु होतृमैत्रावरुणादिषु सप्तसु अथवा द्रप्सस्कन्दनदिग्व्यतिरिक्तासु होमयोग्यासु सप्तसु दिक्षु॥

कल्पः—"नमो अस्तु सर्पेभ्य इति तिसृभिरभिमन्त्र्य" इति।

तत्र प्रथमामाह—

नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये
अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः।, इति।

ये केचित्सर्पाः पृथिवीमनुगतास्तेभ्यः सर्पेभ्यो नमोऽस्तु। अन्तरिक्षे यक्षगन्धर्वादिलोके वर्तमाना ये सर्पा ये च दिवि द्युलोके वर्तमाना राहुप्रभृतयस्तेभ्यः सर्पेभ्यो नमोऽस्तु॥

अथ द्वितीयामाह—

येऽदो रोचने दिवो ये वा सूर्यस्य रश्मिषु।
येषामप्सु सदः कृतं तेभ्यः सर्पेभ्यो नमः।, इति।

दिवोऽन्तरिक्षस्य रोचने भासकेऽदोऽमुष्मिन्सूर्यस्य मण्डले ये सर्पा वसन्ति, ये चान्ये सूर्यस्य रश्मिष्वस्माभिरदृश्यमाना वर्तन्ते, येषामन्येषां सर्पाणामप्सु जलमध्ये सदः स्थानं कृतं, तेभ्यः सर्पेभ्यः कृत्स्नेभ्यो नमोऽस्तु॥

अथ तृतीयामाह—

या इषवो यातुधानानां ये वा वनस्पतीꣳरनु।
ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः॥, इति॥

याः सर्पजातयो यातुधानानां रक्षसामिषवो बाणरूपा वर्तन्ते, ये चान्ये वनस्पतींश्चन्दनादिवृक्षाननुवेष्ट्यावस्थिताः, ये चान्येऽवटेषु बिलेषु शेरते, तेभ्यः सर्पेभ्यो नमोऽस्तु। एते मन्त्राः स्पष्टार्थत्वेन ब्राह्मण उपेक्षिताः॥

यथा पुष्करपर्णरुक्महिरण्मयपुरुषोखाना(णा)ममृन्मयेष्टकानामुपधानं विहितं तथैव स्रुचोरमृन्मयेष्टकयोरुपधानं विधत्ते—

" स्रुचावुप दधाति " [ सं० का० ५ प्र० २ अ० ७ ] इति ॥

तयोः स्रुचोर्विशेषणं दर्शयति—

" आज्यस्य पूर्णां कार्ष्मर्यमयीं दध्नः पूर्णामौदुम्बरीम् " [ सं० का० ५ प्र० २ अ० ७ ] इति ।

श्रीपर्णाख्यो वृक्षविशेषः कार्ष्मर्यस्तेन निर्मिता काचित्स्रुक्कार्ष्मर्यमयी, सा चाऽऽज्येन पूर्णा । उदुम्बरेण निर्मिता काचित्, सा च दध्ना पूर्णा । एतद्गुणविशिष्टयोः स्रुचोरुपधानस्य विधानान्न वाक्यभेदः शङ्कनीयः ॥

ते च विशिष्टे स्रुचौ लोकद्वयरूपेण प्रशंसति—

" इयं वै कार्ष्मर्यमय्यसावौदुम्बरीमे एवोप धत्ते " [ सं० का० ५ प्र० २ अ० ७ ] इति ॥

इष्टकान्तरोपधानवत्समन्त्रत्वस्य शङ्कां लौकिकवाक्यं वा निवारयितुं विधत्ते—

" तूष्णीमुप दधाति न हीमे यजुषाऽऽप्तुमर्हति " [ सं० का० ५ प्र० २ अ० ७ ] इति ।

यस्मादाम्नातो मन्त्रो नास्ति तस्माद्यजुषा मन्त्रेणैते उपधातुं नार्हति ॥

तयोर्दिग्विशेषं विधत्ते—

" दक्षिणां कार्ष्मर्यमयीमुत्तरामौदुम्बरीं तस्मादस्या असावुत्तरा " [ सं० का० ५ प्र० २ अ० ७ ] इति ।

यस्माद्द्युलोकरूपौदुम्बरी स्रुगुत्तरस्यां दिश्युपहिता तस्माल्लोकेऽप्यसौ द्यौरस्याः पृथिव्या उत्तरोर्ध्वभाविनी । स च दिग्विशेषः सूत्रकारेण स्पष्टमभिहितः—" आज्यस्य पूर्णां कार्ष्मर्यमयीं दक्षिणेन पुरुषम् " इति, " दध्नः पूर्णामौदुम्बरीमुत्तरेण पुरुषम् " इति च ॥

प्रकारान्तरेण स्रुग्विशेषं प्रशंसति—

" आज्यस्य पूर्णां कार्ष्मर्यमयीं वज्रो वा आज्यं वज्रः कार्ष्मर्यो वज्रेणैव यज्ञस्य दक्षिणतो रक्षाꣳस्यप हन्ति दध्नः पूर्णामौदुम्बरीं पशवो वै दध्यूर्गुदुम्बरः पशुष्वेवोर्जं दधाति " [ सं० का० ५ प्र० २ अ० ७ ] इति ।

आज्यस्य वज्रत्वं तानूनप्त्रब्राह्मणे समाम्नातं—" घृतं खलु वै देवा वज्रं कृत्वा सोममघ्नन् " इति । कार्ष्मर्यस्य रक्षोपघातहेतुत्वाद्वज्रत्वम् । तदप्यातिथ्याब्राह्मणे समाम्नातं " ते कार्ष्मर्यमयान्परिधीनकुर्वत तैर्वै ते रक्षाꣳस्यपाघ्नत " इति ॥

---

१ ख. °षमुपदधाति द° । २ ख. °ति । प्र° । ३ ख. °तिथ्यत्रा° ।

( आहवनीयचयनार्थरुक्माद्युपधानाभिधानम् )

स्रुचोर्दध्याज्यपूर्णत्वं प्रशंसति—

"पूर्णे उप दधाति पूर्णे एवैनममुष्मिँल्लोक उप तिष्ठेते" [ सं० का० ५ प्र० २ अ० ७ इति ॥

स्रुगुपधानं प्रशंसति—

" विराज्यग्निश्चेतव्य इत्याहुः स्रुग्वै विराड्यत्स्रुचावुप दधाति विराज्येवाग्निं चिनुते " [ सं० का० ५ प्र० २ अ० ७ ] इति।

विविधे राजमाने प्रदेशे चेतव्योऽग्निरित्यभिज्ञा आहुः। स्रुक्चाऽऽज्यादिपूर्णत्वाद्विशेषेण राजते, तस्मात्तत्र चयनाय स्रुचावुपदध्यात् ॥

पाशुकोत्तरवेदिवद्रुक्मस्योपरि व्याघारणं विधत्ते—

" यज्ञमुखेयज्ञमुखे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति यज्ञमुखꣳ रुक्मो यद्रुक्मं व्याघारयति यज्ञमुखादेव रक्षाꣳस्यप हन्ति " [ सं० का० ५ प्र० २ अ० ७ ] इति।

यज्ञसंबन्धिन एकैकस्याङ्गस्यानुष्ठानं यज्ञमुखम्। अतो रुक्मोपधानस्यापि यज्ञमुखत्वात्तत्र प्राप्तानां रक्षसामुपघाताय व्याघारयेत् ॥

कृणुष्व पाज इति पञ्चभिरिति ये मन्त्राः सूत्रकारेणोदाहृतास्तानत्र विनियुङ्क्ते—

" पञ्चभिर्व्याघारयति पाङ्क्तो यज्ञो यावानेव यज्ञस्तस्माद्रक्षाꣳस्यप हन्ति " [ सं० का० ५ प्र० २ अ० ७ ] इति।

धानादिहविर्भिः पञ्चभिर्यज्ञस्य पाङ्क्तत्वम् ॥

सूत्रकारेण ' दक्षिणमꣳसमुत्तराꣳ श्रोणिं दक्षिणाꣳ श्रोणिमुत्तरमꣳसं मध्यमिति ' इति पाशुकोत्तरवेदिव्याघारणे येयं वक्रीतिरुक्ता तामत्र विधत्ते—

" अक्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै " [ सं० का० ५ प्र० २ अ० ७ ] इति।

अक्ष्णया वक्ररीत्या। अत एवाऽऽघारस्य विविधत्वाद्व्याघारणमित्युच्यते। तस्मादाघारणे वक्रक्रमस्तस्मात्पशवो गमनकाले स्वकीयाङ्गानि वक्ररीत्या प्रहरन्ति प्रवर्तयन्ति, पुरोवर्तिनं दक्षिणं पादं पुरतः प्रक्षिप्य पाश्चात्त्यं वामपादं पुरतः प्रवर्तयन्ति। तस्मात्प्रतिष्ठायै तदिदं वक्रत्वं संपद्यते ॥

अत्र विनियोगसंग्रहः—

> अभ्यश्वं क्रमयेद्दर्भे यदावृत्तिः प्रदक्षिणम्।
> अपां दध्यात्पद्मपत्रं ब्रह्म रुक्मोपधानकम् ॥ १ ॥

हिर स्वर्णमयं दध्याद्द्रप्सस्तस्याभिमर्शनम् ।
नमस्त्रिभिर्मन्त्रयेत मन्त्रा अत्र नवेरिताः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठकेऽ-
ष्टमोऽनुवाकः ॥ ८ ॥

---

(अथ चतुर्थाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः ।)

---

ध्रुवाऽसि धरुणाऽस्तृता विश्वकर्मणा सुकृ-
ता । मा त्वा समुद्र उद्वधीन्मा सुपर्णो व्यथ-
माना पृथिवीं दृंꣳह । प्रजापतिस्त्वा सादयतु
पृथिव्याः पृष्ठे व्यचस्वतीं प्रथस्वतीं प्रथोऽसि
पृथिव्यसि भूरसि भूमिरस्यदितिरसि विश्वधाया
विश्वस्य भुवनस्य धर्त्री पृथिवीं यच्छ पृथिवीं
दृंꣳह पृथिवीं मा हिंꣳसीर्विश्वस्मै प्राणायापानाय
व्यानायोदानाय प्रतिष्ठायै ( १ ) चरित्रायाग्नि-
ग्निस्त्वाऽभि पातु मह्या स्वस्त्या छर्दिषा शंत-
मेन तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद । काण्डा-
त्काण्डात्प्ररोहन्ती परुषःपरुषः परि । एवा
नो दूर्वे प्र तनु सहस्रेण शतेन च । या शतेन
प्रतनोषि सहस्रेण विरोहसि । तस्यास्ते देवी-
ष्टके विधेम हविषा वयम् । अषाढाऽसि सह-
माना सहस्वारातीः सहस्वारातीयतः सहस्व

पृतना॑ः सह॑स्व पृत॒न्य॒तः । स॒हस्र॑वीर्या (२) असि॒ सा मा॑ जिन्व । मधु॒ वाता॑ ऋताय॒ते मधु॑ क्षरन्ति॒ सिन्ध॑वः । माध्वी॑र्नः स॒न्त्वोष॑धीः । मधु॒ नक्त॑मु॒तोषसि॒ मधु॑म॒त्पार्थि॑व॒ꣳ रजः॑ । मधु॒ द्यौर॑स्तु नः पि॒ता । मधु॑मान्नो॒ वन॒स्पति॒र्मधु॑मा॒ꣳ अस्तु॒ सूर्यः॑ । माध्वी॒र्गावो॑ भवन्तु नः । म॒ही द्यौः पृ॑थि॒वी च॑ न इ॒मं य॒ज्ञं मि॑मिक्षताम् । पि॒पृ॒तां नो॒ भरी॑मभिः । तद्विष्णोः॑ प॒रमम् (३) प॒दꣳ सदा॑ पश्यन्ति सू॒रयः॑ । दि॒वीव॒ चक्षु॒रात॑तम् । ध्रु॒वाऽसि॑ पृथि॒वि सह॑स्व पृत॒न्य॒तः । स्यू॒ता दे॒वेभि॑र॒मृते॒नाऽगाः॑ । यास्ते॑ अग्ने॒ सूर्ये॒ रुच॑ उ॒द्यतो॒ दिव॑मात॒न्वन्ति॑ र॒श्मिभिः॑ । ताभि॒ः सर्वा॑भी रु॒चे जना॑य नस्कृधि । या वो॑ देवा॒ः सूर्ये॒ रुचो॒ गोष्वश्वे॑षु॒ या रुच॑ः । इन्द्रा॑ग्नी॒ ताभि॒ः सर्वा॑भी॒ रुच॑ नो धत्त बृहस्पते । वि॒राट् (४) ज्योति॑रधारयत्स॒म्राड्ज्योति॑रधारयत्स्व॒राड्ज्योति॑रधारयत् । अग्ने॑ यु॒क्ष्वा हि ये तवाश्वा॑सो देव सा॒धवः॑ । अरं॒ वह॑न्त्या॒शवः॑ । यु॒क्ष्वा हि दे॑व॒हूत॑मा॒ꣳ अश्वा॑ꣳ अग्ने॒ र॒थीरि॑व । नि होता॑ पू॒र्व्यः सदः॑ । द्र॒प्सश्च॑स्कन्द पृथि॒वीम॒नु द्यामि॒मं

च योनिमनु यश्च पूर्वः। तृतीयं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त ( ५ ) होत्राः । अभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्यं च । अग्निर्ज्योतिषा ज्योतिष्मान्रुक्मो वर्चसा वर्चस्वान् । ऋचे त्वा रुचे त्वा समित्स्रवन्ति सरितो न धेनाः । अन्तर्हृदा मनसा पूयमानाः । घृतस्य धारा अभि चाकशीमि । हिरण्ययो वेतसो मध्य आसाम् । तस्मिन्त्सुपर्णो मधुकृत्कुलायी भजन्नास्ते मधु देवताभ्यः । तस्याऽऽसते हरयः सप्त तीरे स्वधां दुहाना अमृतस्य धाराम् ॥ ६ ॥

( प्रतिष्ठायै सहस्रवीर्या परमं विराट्सप्त तीरे चत्वारि च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ चतुर्थाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः । )

---

ध्रुवा । असि । धरुणा । अस्तृता । विश्वकर्मणेति विश्व—कर्मणा । सुकृतेति सु—कृता । मा । त्वा । समुद्रः । उदिति । वधीत् । मा । सुपर्ण इति सु—पर्णः । अव्यथमाना । पृथिवीम् । दृंह ।

( स्वयमातृण्णादीष्टकोपधानाभिधानम् )

प्रजापतिरिति प्रजा—पतिः । त्वा । सादयतु । पृथिव्याः । पृष्ठे । व्यचस्वतीम् । प्रथस्वतीम् । प्रथः । असि । पृथिवी । असि । भूः । असि । भूमिः । असि । अदितिः । असि । विश्वधाया इति विश्व—धायाः । विश्वस्य । भुवनस्य । धर्त्री । पृथिवीम् । यच्छ । पृथिवीम् । दृꣳह । पृथिवीम् । मा । हिꣳसीः । विश्वस्मै । प्राणायेति प्र—अनाय । अपानायेत्यप—अनाय । व्यानायेति वि—अनाय । उदानायेत्युत्—अनाय । प्रतिष्ठाया इति प्रति—स्थायै ( १ )। चरित्राय । अग्निः । त्वा । अभीति । पातु । मह्या । स्वस्त्या । छर्दिषा । शंतमेनेति शं—तमेन । तया । देवतया । अङ्गिरस्वत् । ध्रुवा । सीद । काण्डात्काण्डादिति काण्डात्—काण्डात् । प्ररोहन्तीति प्र—रोहन्ती । परुषःपरुष इति परुषः—परुषः । परि । एव । नः । दूर्वे । प्रेति । तनु । सहस्रेण । शतेन । च । या । शतेन । प्रतनोषीति प्र—तनोषि । सहस्रेण । विरोहसीति वि—रोहसि । तस्याः । ते । देवि । इष्टके । विधेम । हविषा । वयम् । अषाढा । असि । सहमाना । सहस्व । अरातीः । सहस्व । अरातीयतः । सहस्व । पृतनाः ।

सहस्व । पृतन्यतः । सहस्रवीर्येति सहस्र—वीर्या(२)।
असि । सा । मा । जिन्व । मधु । वाताः । ऋता-
यत इत्यृत—यते । मधु । क्षरन्ति । सिन्धवः ।
माध्वीः । नः । सन्तु । ओषधीः । मधु । नक्तम् ।
उत । उषसि । मधुमदिति मधु—मत् । पार्थिवम् ।
रजः । मधु । द्यौः । अस्तु । नः । पिता । मधुमा-
निति मधु—मान् । नः । वनस्पतिः । मधुमानिति
मधु—मान् । अस्तु । सूर्यः । माध्वीः । गावः ।
भवन्तु । नः । मही । द्यौः । पृथिवी । च । नः ।
इमम् । यज्ञम् । मिमिक्षताम् । पिपृताम् । नः ।
भरीमभिरिति भरीम—भिः । तत् । विष्णोः । पर-
मम् ( ३ ) । पदम् । सदा । पश्यन्ति । सूरयः ।
दिवि । इव । चक्षुः । आततमित्या—ततम् । ध्रुवा ।
असि । पृथिवि । सहस्व । पृतन्यतः । स्यूता । देवे-
भिः । अमृतेन । एति । अगाः । याः । ते । अग्ने ।
सूर्ये । रुचः । उद्यत इत्युत्—यतः । दिवम् । आत-
न्वन्तीत्या—तन्वन्ति । रश्मिभिरिति रश्मि—भिः ।
ताभिः । सर्वाभिः । रुचे । जनाय । नः । कृधि ।
याः । वः । देवाः । सूर्ये । रुचः । गोषु । अश्वेषु ।
याः । रुचः । इन्द्राग्नी इतीन्द्र—अग्नी । ताभिः ।

(स्वयमातृण्णादीष्टकोपधानाभिधानम्)

सर्वाभिः। रुचम्। नः। धत्त। बृहस्पते। विराडिति वि—राट् (४)। ज्योतिः। अधारयत्। सम्राडिति सम्—राट्। ज्योतिः। अधारयत्। स्वराडिति स्व—राट्। ज्योतिः। अधारयत्। अग्ने। युक्ष्व। हि। ये। तव। अश्वासः। देव। साधवः। अरम्। वहन्ति। आशवः। युक्ष्व। हि। देवहूतमानिति देव—हूतमान्। अश्वान्। अग्ने। रथीः। इव। नीति। होता। पूर्व्यः। सदः। द्रप्सः। चस्कन्द। पृथिवीम्। अन्विति। द्याम्। इमम्। च। योनिम्। अन्विति। यः। च। पूर्वः। तृतीयम्। योनिम्। अन्विति। संचरन्तमिति सं—चरन्तम्। द्रप्सम्। जुहोमि। अन्विति। सप्त (५)। होत्राः। अभूत्। इदम्। विश्वस्य। भुवनस्य। वाजिनम्। अग्नेः। वैश्वानरस्य। च। अग्निः। ज्योतिषा। ज्योतिष्मान्। रुक्मः। वर्चसा। वर्चस्वान्। ऋचे। त्वा। रुचे। त्वा। समिति। इत्। स्रवन्ति। सरितः। न। धेनाः। अन्तः। हृदा। मनसा। पूयमानाः। घृतस्य। धाराः। अभीति। चाकशीमि। हिरण्ययः। वेतसः। मध्ये। आसाम्। तस्मिन्। सुपर्ण इति सु—पर्णः। मधु-

कृदिति मधु—कृत् । कुलायी । भजन् । आस्ते । मधु । देवताभ्यः । तस्य । आसते । हरयः । सप्त । तीरे । स्वधामिति स्व—धाम् । दुहानाः । अमृतस्य । धाराम् ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ चतुर्थकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः । )

---

अष्टमेऽनुवाके पुष्करपर्णाद्यमृन्मयेष्टकोपधानमुक्तम् । अथ नवमे स्वयमातृण्णादीष्टकोपधानमुच्यते ।

कल्पः—" ध्रुवाऽसि धरुणाऽस्तृतेति स्वयमातृण्णामभिमृश्याश्वेनोपघ्राप्य च प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठ इत्यविदुषा ब्राह्मणेन सह मध्येऽग्नेरुपदधाति " इति ।

तत्राभिमर्शनमन्त्रपाठस्तु—

ध्रुवाऽसि धरुणाऽस्तृता विश्वकर्मणा
सुकृता । मा त्वा समुद्र उद्वधीन्मा
सुपर्णो व्यथमाना पृथिवीं दृꣳह ।, इति ।

हे स्वयमातृण्णे त्वं ध्रुवा स्थिराऽसि । कीदृशी, धरुणा भूमिरूपेण विश्वस्य धारयित्री, अत एवास्तृता केनाप्यहिंसिता, विश्वकर्मणा जगत्कर्त्रा सुकृता सुष्ठु निर्मिता । समुद्रस्त्वां मोद्वधीत्स्वोदरमध्ये निमज्जनलक्षणं वधं मा कार्षीत् । सुपर्णः पक्षिराजोऽपि सर्पोद्धरणवेलायां त्वामादाय मोद्वधीद्दूरे परित्यागलक्षणं वधं मा कार्षीत् । एवं सत्यव्यथमाना भयरहिता त्वं पृथिवीमिमां दृंह दृढां कुरु ॥

उपधानमन्त्रपाठस्तु—

प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठे व्यचस्वतीं प्रथस्वतीं प्रथोऽसि पृथिव्यसि भूरसि

( स्वयमातृण्णादीष्टकोपधानाभिधानम् )

भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्रायाग्निस्त्वाऽभि पातु मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ।, इति।

हे स्वयमातृण्णे प्रजापतिस्त्वामस्मिन्प्रदेशे पृथिव्या उपरि सादयतु। कीदृशीं त्वां, व्यचस्वतीं विस्तारयुक्तां प्रथस्वतीं पृथुलाम्। किं च प्रथोऽसि अस्याश्चितेः[1] प्रथनं विस्ताररूपमसि। त्वया हि चितिविस्तारो भवति। पृथिव्यामुत्पन्नत्वात्पृथिव्यसि, भूरसि सुखानां भावयित्र्यसि, भूमिरसि मृन्मयपृथिव्यभिमानिभूमिदेवताऽसि, अदितिरसि अखण्डनीयाऽसि। विश्वधाया विश्वस्य पोषयित्र्यसि। तथा विश्वस्य भुवनस्य सर्वस्य लोकस्य धर्त्री धारयित्र्यसि। तादृशी त्वं पृथिवीं यच्छ नियतां कुरु। पृथिवीं दृंह दृढां कुरु। पृथिवीं मा हिंसीः पृथिव्या हिंसां मा कुरु। विश्वस्मै सर्वस्मै प्राणापानव्यानोदानाख्यवायुवृत्तिलाभाय, प्रतिष्ठायै स्वगृहस्थितिलाभाय, चरित्राय शास्त्रीयाचरणलाभाय। प्राणिनामेतस्य सर्वस्य सिद्ध्यर्थमयमग्निस्त्वामभितः पातु। केन रक्षणमिति तदुच्यते—मह्या स्वस्त्या महत्या योगक्षेमसंपत्त्या शंतमेन च्छर्दिषाऽत्यन्तसुखकारिणा दीप्तिविशेषेण। तत्र स्वामिभूता या देवता तयाऽनुगृहीता त्वं ध्रुवा स्थिरा सती सीदेहोपविश। अङ्गिरस्वत्, अङ्गिरसां चयनानुष्ठाने यथा त्वं ध्रुवा स्थिरा तद्वत्॥

एतन्मन्त्रसाध्यमुपधानं विधत्ते—

"स्वयमातृण्णामुप दधातीयं वै स्वयमातृण्णेमामेवोप धत्ते" [सं० का० ५ प्र० २ अ० ८] इति।

शर्कराख्यानां (णां) क्षुद्रपाषाणानां मध्ये पुरुषप्रयत्नमन्तरेण या स्वत एव च्छिद्रयुक्ता सेयं शर्करा स्वयमातृण्णा, तामत्रोपदध्यात्। सा च स्वयमातृण्णा पृथिवीजन्यत्वात्पृथिव्येव। अतः पृथिवीमेवोपधत्ते॥

तस्याः स्वयमातृण्णाया अश्वोपघ्रापणं विधत्ते—

---

[1] ख. च. चितेर्विस्ता°।

" अश्वमुप घ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते " [ सं० का० ५ प्र० २ अ० ८ ] इति ॥

अन्तरस्या इष्टकायाः स्वतः सिद्धं छिद्रं प्रशंसति—

" प्रथमेष्टकोपधीयमाना पशूनां च यजमानस्य च प्राणमपि दधाति स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्या अथो सुवर्गस्य लोकस्यानुख्यात्यै " [ सं० का० ५ प्र० २ अ० ८ ] इति ।

पुष्करपर्णादिषूपधेयत्वसाम्येनेष्टकात्वमुपचरितम् । स्वयमातृण्णा तु यद्यपि पुरुषैरनिर्मिता तथाऽपि तस्या इष्टकात्वं मुख्यमित्यभिप्रेत्य मुख्यास्विष्टकास्वस्याः प्राथम्यमुच्यते । प्रथमेष्टकोपधीयमाना सती पशूनां यजमानस्य च श्वासं निरुध्या(न्ध्या)त् । अतः श्वासस्य निर्गमनाय स्वतःसिद्धच्छिद्रयुक्ता कार्या । अथो अपि च सच्छिद्रत्वे सत्यावरणाभावात्स्वर्गलोकोऽपि प्रकाशितो भवति ॥

यदुक्तं सूत्रकारेण—" अविदुषा ब्राह्मणेन सह मध्येऽग्नेरुपदधाति " इति, तदेतद्विधत्ते—

" अग्नावग्निश्चेतव्य इत्याहुरेष वा अग्निर्वैश्वानरो यद्ब्राह्मणस्तस्मै प्रथमामिष्टकां यजुष्कृतां प्र यच्छेत्तां ब्राह्मणश्चोप दध्यातामग्नावेव तदग्निं चिनुते" [ सं० का० ५ प्र० २ अ० ८ ] इति ।

अग्निमेवाऽऽधारं कृत्वा तस्मिन्नग्नावेवायमग्निश्चेतव्य इत्यभिज्ञा आहुः । तस्य क उपाय इति तदुच्यते—योऽयं ब्राह्मणः स एवाऽऽधारभूतो वैश्वानरनामकोऽग्निः । अग्नेर्ब्राह्मणाभिमानिदेवत्वाद्ब्राह्मणस्याग्नित्वम् । अतोऽग्निरूपस्य ब्राह्मणस्य हस्ते मन्त्रसंस्कृतां स्वयमातृण्णां दद्यात् । ततः स ब्राह्मणोऽध्वर्युश्च मिलित्वा तामुपदध्यातां, तावतां[2]ऽग्नावेवाग्निश्चितो भवति ॥

अथ यदुक्तं सूत्रकारेण " अविद्वान्ब्राह्मणो वरं ददात्येकं द्वौ त्रीन्वा " इति, तदेतद्विधत्ते—

" ईश्वरो वा एष आर्तिमार्तोर्योऽविद्वानिष्टकामुपदधाति त्रीन्वरान्दद्यात्त्रयो वै प्राणाः प्राणानाᳪं स्पृत्यै द्वावेव देयौ द्वौ हि प्राणावेक एव देय एको हि प्राणः " [ सं० का० ५ प्र० ५ अ० ८ ] इति ।

यः स्वयमविद्वान्सन्निष्टकामुपदधाति स्वयमातृण्णां स एष आर्तिमा[र्तुं] समर्थो भवति । अतस्तत्परिहारायाध्वर्यवे वरदानं कुर्यात् । वरशब्देन श्रेष्ठत्वाद्गौरुच्यते । त्रीन्द्वावेक इति पक्षा विकल्पिताः । प्राणोऽपानो व्यान इति

---

१ ख. च. 'ताऽभि' । २ ख. च. 'ति । य' ।

(स्वयमातृण्णादीष्टकोपधानाभिधानम्)

त्रित्वं, व्यानमन्तर्भाव्य प्राणापानाविति द्वित्वम्, अपानमन्तर्भाव्य प्राण इत्येकत्वम् ॥

कल्पः—"काण्डात्काण्डात्प्ररोहन्तीतिद्वाभ्यां दूर्वेष्टकाम्" इति । उपदध्यादित्यनुवर्तते ।

तत्र प्रथमामाह—

काण्डात्काण्डात्प्ररोहन्ती परुषःपरुषः परि ।
एवा नो दूर्वे प्र तनु सहस्रेण शतेन च ।, इति ।

काण्डशब्दः स्तम्बवाची । परुःशब्दः पर्ववाची । यावन्तः काण्डाः स्तम्बाः सन्ति तत्रैकैकस्मात्स्तम्बात्प्रकर्षेण दूर्वोत्पद्यते । एकस्मिन्नपि स्तम्बे यावन्ति परूंषि पर्वाणि सन्ति तेष्वेकैकस्य पर्वणः परितः प्रकर्षेण दूर्वोत्पद्यते । हे दूर्वे त्वं तत्तत्काण्डोत्थत्वात्तत्तत्पर्वणि प्रकर्षेणोत्पद्यमाना वर्तसे । एवा, एवमनेन प्रकारेण नोऽस्मदर्थं शतसंख्याकेन सहस्रसंख्याकेन च त्वदीयभेदेन त्वत्स्वरूपं प्रतनु प्रकर्षेण विस्तृतं कुरु ॥

अथ द्वितीयामाह—

या शतेन प्रतनोषि सहस्रेण विरोहसि । तस्यास्ते देवीष्टके विधेम हविषा वयम् ।, इति ।

हे दूर्वे या त्वं शतसंख्याकेन स्वरूपेण प्रतनोषि अत्यन्तं विस्तारयसि । तथा सहस्रसंख्याकेनाऽऽकारेण विरोहसि विविधमुत्पद्यसे । हे इष्टके देवि तस्यास्ते वयं हविषा विधेम परिचरेम ॥

एतन्मन्त्रद्वयसाध्यमुपधानं विधत्ते—

"पशुर्वा एष यदग्निर्न खलु वै पशव आयवसे रमन्ते दूर्वेष्टकामुप दधाति पशूनां धृत्यै" [सं० का० ५ प्र० २ अ० ८] इति ।

पशुप्राप्तिहेतुत्वादग्नेः पशुत्वम् । ईषदर्थवाच्याङ् । यवसशब्दो घासवाची । अल्पघासे प्रदेशे पशवो नैव रमन्ते । अतः पशूनां धारणाय घासरूपां दूर्वेष्टकामुपदध्यात् । तस्याश्च स्वरूपं सूत्रकारेणोक्तं—"सलोष्टं हरितं दूर्वास्तम्बमप्रच्छिन्नाग्रम्" इति ॥

मन्त्रद्वयं प्रशंसति—

"द्वाभ्यां प्रतिष्ठित्यै" [सं० का० ५ प्र० २ अ० ८] इति ॥

प्रथममन्त्रस्य प्रथमपादार्थः प्रसिद्ध इति दर्शयति—

"काण्डात्काण्डात्प्ररोहन्तीत्याह काण्डेनकाण्डेन ह्येषा प्रतितिष्ठति" [सं० का० ५ प्र० २ अ० ८] इति ॥

द्वितीयेऽर्धे सहस्रशब्दतात्पर्यं दर्शयति—

"एवा नो दूर्वे प्र तनु सहस्रेण शतेन चेत्याह साहस्रः प्रजापतिः प्रजापते राप्त्यै" [ सं० का० ५ प्र० २ अ० ८ इति ।

सहस्रसंख्याकप्राण्युत्पादकत्वात्प्रजापतेः साहस्रत्वम् ॥

कल्पः—"अषाढाऽसीति द्वाभ्यामषाढामुपरिष्टाल्लक्ष्माणम्" इति । उपदध्यादिति शेषः ।

तत्र प्रथमामाह—

अषाढाऽसि सहमाना सहस्वा-
रातीः सहस्वारातीयतः , इति ।

उखानिर्माणकाल एव येयमिष्टका निर्मिता सेयमषाढा । तथा च सूत्रकारेणोक्तम्—"य उखां करोति सोऽषाढामेतस्या एव मृदस्तूष्णीं चतुरस्रां त्र्यालिखितामिष्टकाम्" इति । हे इष्टके त्वमषाढा केनाप्यपरिभूता सहमाना विरोधिनः परिभवन्त्यसि । येऽस्मभ्यं दातव्यं न प्रयच्छन्ति तथाविधानरातीञ्शत्रून्सहस्व परिभव । ये तु पूर्वमरातयो न भवन्तीतः परमरातित्वमिच्छन्ति तानप्यरातीञ्शत्रून्सहस्व परिभव ॥

अथ द्वितीयामाह—

सहस्व पृतनाः सहस्व पृतन्यतः । सह-
स्रवीर्याऽसि सा मा जिन्व । , इति ।

हे इष्टके पृतना वैरिसेनाः सहस्व परिभव । ये तु पूर्वं सेनारहिता अपि वैरिण इतः परं सेनामिच्छन्ति तानपि पृतन्यतो वैरिणः सहस्व परिभव । सहस्रसंख्याकं वीर्यं सामर्थ्यं यस्याः सा सहस्रवीर्याऽसि । सा तादृशी त्वं मा मां जिन्व प्रीणय ॥

अन्वयव्यतिरेकाभ्यामषाढायाः स्थापनप्रकारविशेषं विधत्ते—

"देवलक्ष्मं वै त्र्यालिखिता तामुत्तरलक्ष्माणं देवा उपादधताधरलक्ष्माणमसुरा यं कामयेत वसीयान्त्स्यादित्युत्तरलक्ष्माणं तस्योप दध्याद्वसीयानेव भवति यं कामयेत पापीयान्त्स्यादित्यधरलक्ष्माणं तस्योप दध्यादसुरयोनिमेवैनमनु परा भावयति पापीयान्भवति" [ सं० का० ५ प्र० २ अ० ८ ] इति ।

यस्यामार्द्रायामिष्टकायां त्रिपुण्ड्रवद्रेखात्रयं क्रियते सेयं त्र्यालिखिता । तत्त्र्यालिखितत्वं देवानां चिह्नम् । ततो देवास्तामषाढामूर्ध्वदेशवर्तिचिह्नयुक्तामुपादधत । असुरास्त्वधोदेशवर्तिचिह्नयुक्तामुपादधत । तस्माद्देववद्धनसमृद्ध्य-

र्थमूर्ध्वभाविचिह्नयुक्तामेवोपदध्यात्। सोऽयमन्वयः। असुरवदधोमुखचिह्नयुक्तत्वे सत्येनं यजमानमसुरजात्यनुसारिणं कृत्वा पराभूतं करोति॥

अथ देवचिह्नं विधत्ते—

"त्र्यालिखिता भवतीमे वै लोकास्त्र्यालिखितैभ्य एव लोकेभ्यो भ्रातृव्यमन्तरेति" [ सं० का० ५ प्र० २ अ० ८ ] इति।

तिसृभिरङ्गुलिभिरालिखिता त्र्यालिखिता, तथाविधां कुर्यात्। तथा सति त्रित्वसामान्याल्लोकत्रयरूपा भवति। तेन लोकत्रयाद्भ्रातृव्यो निःसारितो भवति॥

कल्पः—"मधु वाता ऋतायत इति तिसृभिर्दध्ना मधुमिश्रेण कूर्ममभ्यज्य" इति।

तत्र प्रथमामाह—

मधु वाता ऋतायते मधु क्षरन्ति
सिन्धवः। माध्वीर्नः सन्त्वोषधीः।,इति।

ऋतं यज्ञमात्मन इच्छतीत्यृतायन्, तस्मै यजमानाय वाता वायवो मधु क्षरन्ति मधुरं रसं स्रावयन्ति। सिन्धवः समुद्राश्च मधुरं रसं स्रावयन्ति। ओषधीरोषधयोऽपि नोऽस्मदर्थं माध्वीर्मधुररसोपेताः सन्तु॥

अथ द्वितीयामाह—

मधु नक्तमुतोषसि मधुमत्पार्थिवꣳ
रजः। मधु द्यौरस्तु नः पिता।,इति।

नक्तं रात्रौ मध्वस्माकमस्तु। उतापि चोषसि प्रभाते मध्वस्तु। तथा यत्पार्थिवं रजस्तत्सर्वं मधुमन्माधुर्यरसोपेतमस्तु। नोऽस्माकं पिता पितृस्थानीया द्यौर्मध्वस्तु मधुररसोपेताऽस्तु॥

अथ तृतीयामाह—

मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु
सूर्यः। माध्वीर्गावो भवन्तु नः।,इति।

वनस्पतिरश्वत्थादिर्नोऽस्मदर्थं मधुमानस्तु माधुर्यरसोपेतोऽस्तु। सूर्योऽपि मधुमान्संतापराहित्यलक्षणमाधुर्यरसोपेतोऽस्तु। तथा गावो नोऽस्मदर्थं माध्वीर्मधुरक्षीरोपेता भवन्तु॥

---

१ ख. च. 'साम्याल्लो°'।

कल्पः—" मही द्यौः पृथिवी च न इति पुरस्तात्स्वयमातृण्णायाः प्रत्यञ्चं जीवन्तं कूर्मं प्राङ्मुखं उपदधाति " इति।

पाठस्तु—

मही द्यौः पृथिवी च न इमं यज्ञं मिमि-
क्षताम्। पिपृतां नो भरीमभिः।, इति।

मही द्यौर्येयं महती द्यौः पृथिवी च द्यावापृथिवी ते उभे नोऽस्मदीयमिमं यज्ञं मिमिक्षतां फलवृष्ट्या सेक्तुमिच्छताम्। भरीमभिर्भरणशक्तिभिर्नोऽस्मान्पिपृतां पूरयेताम्॥

एतन्मन्त्रसाध्यमुपधानं विधत्ते—

" अङ्गिरसः सुवर्गं लोकं यतः पुरोडाशः कूर्मो भूत्वाऽनु प्रासर्पद्यत्कूर्ममुपदधाति यथा क्षेत्रविदञ्जसा नयत्येवमेवैनं कूर्मः सुवर्गं लोकमञ्जसा नयति " [ सं० का० ५ प्र० २ अ० ८ ] इति।

अङ्गिरसो महर्षयो यदा स्वर्गं लोकं गतास्तदा ताननु कूर्मोऽप्यन्वग-( प्यग ) च्छत्। अतः स्वर्गमार्गाभिज्ञः कूर्मः क्षेत्रज्ञ इव सम्यङ्नेतुं शक्त इति तमत्रोपदध्यात्॥

प्रकारान्तरेण कूर्मोपधानं प्रशंसति—

" मेधो वा एष पशूनां यत्कूर्मो यत्कूर्ममुपदधाति स्वमेव मेधं पश्यन्तः पशव उप तिष्ठन्ते " [ सं० का० ५ प्र० २ अ० ८ ] इति।

योऽयं कूर्मः स एष पशूनां मेधो यज्ञवत्प्राप्तिहेतुः। अतः कूर्मोपधानेन तं कूर्मं पशवः स्वहेतुभूतयज्ञत्वेन पश्यन्तो यजमानगृहे प्राप्ता भवन्ति॥

उपधेयस्य कूर्मस्य जीवनोपेतत्वगुणं विधत्ते—

" श्मशानं वा एतत्क्रियते यन्मृतानां पशूनाꣳ शीर्षाण्युपधीयन्ते यज्जीवन्तं कूर्ममुपदधाति तेनाश्मशानचिद्वास्तव्यो वा एष यत्कूर्मः " [ सं० का० ५ प्र० २ अ० ८ ] इति।

मृतानां पशूनामश्वर्षभवृष्णिबस्तानां शिरांस्युपधेयानीत्युपरिष्टाद्वक्ष्यति तदेतत्स्थानं श्मशानमेव कृतं भवति। जीवकूर्मोपधानेनायं यजमानोऽश्मशानचिद्भवति। किंच यः कूर्मोऽस्ति स एष वास्तव्यो निवासयोग्यः कूर्मपृष्ठे भूमेरवस्थितत्वात्, ततोऽपि कूर्मोपधानमित्यर्थः॥

---

१ क. घ. ङ. °खमुप°। २ ख. च. °ष्ट्यादि से°। ३ ख. च. °श्वर्षभ°। ४ ख. च. तत एत°। ५ ख. च. °मानः श्म°। ६ ख. च. 'चिन्न भव'।

( स्वयमातृण्णादीष्टकोपधानाभिधानम् )

उपधानात्पूर्वमभ्यञ्जनं विधत्ते—

" मधु वाता ऋतायत इति दध्ना मधुमिश्रेणाभ्यनक्ति स्वदयत्येवैनम् " [ सं० का० ५ प्र० २ अ० ८ ] इति।

अभ्यञ्जनेनैनं कूर्मं स्वादू करोति ॥

अभ्यञ्जनसाधनद्रव्यद्वयं प्रशंसति—

" ग्राम्यं वा एतदन्नं यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेणाभ्यनक्त्युभयस्यावरुद्ध्यै " [ सं० का० ५ प्र० २ अ० ८ इति।

उभयस्य ग्राम्यस्याऽऽरण्यस्य च भोग्यजातस्य ॥

कूर्मोपधानमन्त्रे द्यौः पृथिवी चेतिशब्दद्वयस्य तात्पर्यं दर्शयति—

" मही द्यौः पृथिवी च न इत्याहाऽऽभ्यामेवैनमुभयतः परि गृह्णाति " [ सं० का० ५ प्र० २ अ० ८ ] इति ॥

स्वयमातृण्णायाः पूर्वदेशं कूर्मस्य विधत्ते—

" प्राञ्चमुप दधाति सुवर्गस्य लोकस्य समष्ट्यै " [ सं० का० ५ प्र० २ अ० ८ ] इति।

प्राञ्चं प्राग्देशवर्तिनम्। स्वर्गलोकोऽपि प्राग्देशवर्ती ॥

तस्मिन्प्राग्देशे कूर्मस्य प्रत्यङ्मुखत्वं विधत्ते—

" पुरस्तात्प्रत्यञ्चमुप दधाति तस्मात्पुरस्तात्प्रत्यञ्चः पशवो मेधमुप तिष्ठन्ते " [ सं० का० ५ प्र० २ अ० ८ ] इति।

स्वयमातृण्णायाः पुरस्तादुपधेयः कूर्मस्तं पूर्वं प्रत्यङ्मुखमुपदध्यात्। यस्मादेवं तस्मादाहवनीयस्य पुरस्ताद्यूपे बद्धाः पशवः प्रत्यङ्मुखा यज्ञं सेवन्ते ॥

यदुक्तं सूत्रकारेण—" प्रादेशमात्रं चतुःस्रक्त्यौदुम्बरमुलूखलमुत्तरेऽंसे प्रयुनक्ति सर्वौषधस्य पूरयित्वाऽवहत्य परापूयेदं विष्णुर्वि चक्रम इति मध्येऽग्नेरुपदधाति " इति, तदिदं विधत्ते—

" यो वा अपनाभिमग्निं चिनुते यजमानस्य नाभिमनु प्र विशति स एनमीश्वरो हिꣳसितोरुलूखलमुप दधात्येषा वा अग्नेर्नाभिः सनाभिमेवाग्निं चिनुतेऽहिꣳसायै " [ सं० का० ५ प्र० २ अ० ८ ] इति।

नाभिरहितत्वेन चीयमानोऽग्निर्यजमानस्य नाभिं प्रविश्य हिंसितुं प्रभवति। अतो नाभिस्थानीयमुलूखलमुपदध्यात्। तथा सति सनाभित्वेनास्य हिंसा न भवति ॥

---

१ क. घ. ङ. 'धनं द्र' ।

उलूखलस्य प्रकृतिद्रव्यं विधत्ते—

" औदुम्बरं भवत्यूर्ग्वा उदुम्बर ऊर्जमेवाव रुन्धे " [ सं० का० ५ प्र० २ अ० ८ ] इति ॥

देशविशेषं विधत्ते—

" मध्यत उप दधाति मध्यत एवास्मा ऊर्जं दधाति तस्मान्मध्यत ऊर्जा भुञ्जते " [ सं० का० ५ प्र० २ अ० ८ ] इति ॥

हस्तेनाभिनीयोलूखलस्य प्रादेशपरिमाणं विधत्ते—

" इयद्भवति प्रजापतिना यज्ञमुखेन संमितम् " [ सं० का० ५ प्र० २ अ० ८ इति ॥

उपधानात्पूर्वभाविनं सर्वौषधावघातं विधत्ते—

" अव हन्त्यन्नमेवाकः " [ सं० का० ५ प्र० २ अ० ८ ] इति ॥

अन्यत्राऽऽम्नातामिदं विष्णुरिति मन्त्रमुलूखलोपधाने विनियुङ्क्ते—

" वैष्णव्यर्चोप दधाति विष्णुर्वै यज्ञो वैष्णवा वनस्पतयो यज्ञ एव यज्ञं प्रति ष्ठापयति " [ सं० का० ५ प्र० २ अ० ८ ] इति ॥

कल्पः—" तद्विष्णोः परमं पदमिति मुसलम् " इति ।

पाठस्तु—

तद्विष्णोः परमं पदꣳ सदा पश्यन्ति
सूरयः । दिवीव चक्षुराततम् ।, इति ।

सूरयो विद्वांसो वेदान्तपारं गता विष्णोस्तत्परमं पदं सदा पश्यन्ति । कीदृशं, दिव्याकाशे निरावरणे चक्षुरिवाऽऽततं व्याप्तम् । तादृशस्य विष्णोरनुग्रहात् । वैष्णववनस्पतिकार्यं मुसलमुपदधातीत्यर्थः । एतन्मन्त्रसाध्यमुसलोपधानविधित्वेनापि पूर्वोदाहृतं वैष्णव्यर्चेत्यादिब्राह्मणं योजनीयम् ॥

कल्पः—" ध्रुवाऽसि पृथिवीति मध्येऽग्नेरुपदधाति " इति । तत्र प्रकृतत्वादुखामित्यनुवर्तते ।

पाठस्तु—

ध्रुवाऽसि पृथिवि सहस्व पृतन्यतः ।
स्यूता देवेभिरमृतेनाऽगाः ।, इति ।

हे पृथिवि पृथिवीकार्यतया तत्स्वरूपे हे उखे त्वं ध्रुवाऽसि पृतन्यतः सह-

( स्वयमातृण्णादीष्टकोपधानाभिधानम् )

ग्रामं कर्तुमिच्छतः शत्रून्सहस्वाभिभव । देवेभिर्देवैरमृतेन स्यूताऽमृतसमानेन घृतेन पूरिता सत्यागा आगच्छः ॥

एतन्मन्त्रसाध्यमुखोपधानं विधत्ते—

“ एषां वा एतल्लोकानां ज्योतिः संभृतं यदुखा यदुखामुपदधात्येभ्य एव लोकेभ्यो ज्योतिरव रुन्धे ” [ सं० का० ५ प्र० २ अ० ९ ] इति ।

उखारूपं यद्वस्त्वस्ति तदिदमेषां पृथिव्यादीनां लोकानां संबन्धि ज्योतिर्भवति । अतस्तत्संपादनायोखामुपदध्यात् ॥

देशविशेषं विधत्ते—

“ मध्यत उप दधाति मध्यत एवास्मै ज्योतिर्दधाति तस्मान्मध्यतो ज्योतिरुपाऽऽस्महे ” [ सं० का० ५ प्र० २ अ०९ ] इति ।

मध्यत उदरमध्ये जठराग्निरूपं ज्योतिरुपास्महे प्रतिदिनमनुभवामः ॥

उपधेयाया उखायाः सिकतापूरणं विधत्ते—

“सिकताभिः पूरयत्येतद्वा अग्नेर्वैश्वानरस्य रूपꣳ रूपेणैव वैश्वानरमव रुन्धे” [ सं० का० ५ प्र० २ अ० ९ ] इति ॥

अन्वयव्यतिरेकाभ्यां पूरणं प्रशंसति—

“ यं कामयेत क्षोधुकः स्यादित्यूनां तस्योप दध्यात्क्षोधुक एव भवति यं कामयेतानुपदस्यदन्नमद्यादिति पूर्णां तस्योप दध्यादनुपदस्यदेवान्नमत्ति ” [सं० का० ५ प्र० २ अ० ९ ] इति ।

सिकताभिः पूरिताया ईषन्न्यूनाया उखाया उपधाने सति क्षोधुकोऽन्नरहितः क्षुधाशीलो भवति । सोऽयं व्यतिरेकः । सिकतापूर्णाया उपधाने त्वनुपदस्यदेवाक्षीयमाणमेवान्नमत्ति । सोऽयमन्वयः ॥

कल्पः—“प्रबाहुगिष्टकायां हिरण्यशकलावध्यू(ध्यु)ह्य यास्ते अग्ने[2] सूर्ये रुच इति द्वाभ्यां वामभृतम् ” इति ।

तत्र प्रथमामाह—

यास्ते अग्ने सूर्ये रुच उद्यतो दिव-
मातन्वन्ति रश्मिभिः । ताभिः
सर्वाभी रुचे जनाय नस्कृधि।,इति ।

हेऽग्ने सूर्ये सूर्यमण्डल उद्यत उदयं गच्छतस्ते तव रुचो दीप्तयो रश्मिभी रश्मिस्वरूपेण दिवमातन्वन्ति सर्वतो व्याप्नुवन्ति । रात्रौ या अग्नेर्दीप्तयस्ता

---

१ ख. च. आगच्छ । २ ख. च. ग्ने या वो देवाः सू ।

एव सूर्योदयकाले सूर्यरश्मयो भवन्ति। एतच्चाग्निहोत्रब्राह्मणे समाम्नातम्— " उद्यन्तं वावाऽऽदित्यमग्निरनुसमारोहति " इति । ताभिः सर्वाभिर्दीप्तिभिर्नोऽस्मदीयाय जनाय यजमानाय प्रकाशं कुरु ॥

अथ द्वितीयामाह—

या वो देवाः सूर्ये रुचो गोष्वश्वेषु
या रुचः । इन्द्राग्नी ताभिः सर्वाभी
रुचं नो धत्त बृहस्पते ।, इति ।

हे देवा वो युष्माकं संबन्धिन्यः सूर्यमण्डले वर्तमाना या रुचो दीप्तयः सन्ति । तथा गोष्वश्वेषु च या दीप्तयः सन्ति । हे इन्द्राग्नी हे बृहस्पते त्रयोऽपि यूयं [ ताभिः सर्वाभिः ] नोऽस्मदर्थं रुचं धत्त प्रकाशं संपादयत । एतन्मन्त्रसाध्यं वामभृदाख्याया इष्टकाया उपधानमौपानुवाक्यकाण्डे द्रष्टव्यम् ॥

कल्पः—" विराड्ज्योतिरिति तिस्रो रेतःसिचः " इति ।

पाठस्तु—

विराड्ज्योतिरधारयत्सम्राड्ज्योतिरधा-
रयत्स्वराड्ज्योतिरधारयत् ।, इति ।

विशेषेण राजत इति विराट्, एवंविधा रेतःसिगाख्या प्रथमेष्टकाऽस्मदनुग्रहार्थं ज्योतिरधारयत् । सम्यग्राजत इति सम्राट्, तादृशी द्वितीया रेतःसिगिष्टका । स्वयमेव राजत इति स्वराट्, तादृशी तृतीया रेतःसिगिष्टका ॥

कल्पः—" अग्ने युक्ष्वा हि ये तव युक्ष्वा हि देवहूतमानिति द्वाभ्यामुखायां हुत्वा " इति ।

तत्र प्रथमामाह—

अग्ने युक्ष्वा हि ये तवाश्वासो देव
साधवः । अरं वहन्त्याशवः ।, इति ।

हेऽग्ने देव तव संबन्धिनो येऽश्वासो ये केचिदश्वाः साधवो दान्ताः सन्त आशवः शीघ्रगामिनो(णो) भूत्वाऽरमलं वहन्ति सुष्ठु वहन्तीत्यर्थः । तानश्वान्युक्ष्व योजय ॥

अथ द्वितीयामाह—

( स्वयमातृण्णादीष्टकोपधानाभिधानम् )

युक्ष्वा हि देवहूतमा॑ऽ अश्वा॑ऽ अग्ने रथीरिव । नि होता पूर्व्यः सदः ।, इति ।

हेऽग्ने त्वं देवहूतमान्देवानामतिशयेनाऽऽह्वातॄन्युक्ष्व योजय । हिशब्दः प्रसिद्धार्थवाची । प्रसिद्धेऽस्मिन्कर्मणीत्यर्थः । योजने दृष्टान्तः—रथीरश्वानिवेति । रथस्वामी यथाऽश्वान्योजयति तद्वत् । किंच त्वं पूर्व्यः पुरातनो होता होमोत्पादको भूत्वा निषदोऽस्मिन्यागस्थाने निषीद । वामभृन्मन्त्रयोरिव रेतःसिञ्चत्राणां होममन्त्रयोश्च ब्राह्मणमौपानुवाक्यकाण्डे द्रष्टव्यम् ॥

कल्पः—"पुरुषशिरसि हिरण्यशल्कान्प्रत्यस्यति द्रप्सश्चस्कन्देत्यास्येऽभूदिदं विश्वस्य भुवनस्येति वर्चे त्वेति दक्षिणेऽक्षिगोलके रुचे त्वेति सव्ये द्युते त्वेति कर्णयोर्भासे त्वेति दक्षिणस्यां नासिकायां ज्योतिषे त्वेत्युत्तरस्याम्" इति ।

उदाहृतेषु मन्त्रेषु प्रथमामृचमाह—

द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः । तृतीयं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ।, इति ।

द्रव्यान्तरसंघट्टनेन स्फुटितो हिरण्यशल्को द्रप्सः । पृथिवीमनु चस्कन्द पृथिव्यां पतित इत्यर्थः । स च द्रप्सो हुतः सन्स्थानत्रयेऽनुसंचरति द्युलोकेऽन्तरिक्षलोके भूलोके च । तदेतदभिप्रेत्य स्मर्यते—

" अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ " इति ॥

सोऽयमर्थो द्यामित्यादिनाऽभिधीयते । द्यामिमं च योनिमनु अन्तरिक्षरूपमिदं स्थानमनु संचरति । यश्च पूर्वः, योऽपि पृथिवीमनु चस्कन्देति पूर्वोक्तस्थानविशेषस्तमप्यनु संचरति । तृतीयं योनिं द्युलोकरूपमादित्यस्थानमनु संचरति । तमिमं त्रिषु स्थानेष्वनुसंचरन्तं द्रप्सं जुहोमि मनसा हुतमिव भावयामि । कुत्र होम इति तदुच्यते—अनु सप्त होत्रा इति । यस्यां दिशि द्रप्सः पतितस्तद्व्यतिरिक्ता होमयोग्याः सप्त दिशो याः सन्ति तासु अनुक्रमेण जुहोमि । यथाऽयं द्रप्सो हुत आदित्यादिस्थानत्रयेषु संचरन्नुपकरोति तथा भावयामीत्यर्थः ॥

अथ विकल्पितां द्वितीयामृचमाह—

---

१ ख. च. 'शकलान्प्र' । २ ख. च. 'शकलो द्र' । ३ ख. पूरित । च. परित ।

अभूदिदं विश्वस्य भुवनस्य वाजिनमग्ने-
र्वैश्वानरस्य च । अग्निर्ज्योतिषा ज्योति-
ष्मान्रुक्मो वर्चसा वर्चस्वान् ।, इति ।

इदं हिरण्यं विश्वस्य भुवनस्य भूतजातस्य वाजिनमन्नमभूत् । तथा वैश्वानरस्य च विश्वेषां नराणां स्वामिनोऽग्नेश्चान्नमभूत् । अयमग्निर्हिरण्येन ज्योतिषा स्वयं ज्योतिष्मानभूत् । तथा रुक्मो रोचमानोऽग्निर्वर्चसा हिरण्यकान्त्या वर्चस्वान्स्वयमपि कान्तिमानभूत् । अत्र बाह्यप्रभा ज्योतिः, शरीरगतकान्तिर्वर्च इति ॥

ऋचे त्वा रुचे त्वा—

ऋचे त्वा रुचे त्वेति यजुर्द्वयम् । हे हिरण्यशकल येयमृक्स्तोत्ररूपा तदर्थं त्वां दक्षिणाक्षिगोलके प्रत्यस्यामि । तथा हे हिरण्यशकल याऽसौ रुग्दीप्तिस्तदर्थं त्वां वामाक्षिगोलके प्रत्यस्यामि ॥

एतैर्मन्त्रैर्यस्यावयवेषु हिरण्यशकलानि प्रत्यस्यन्ते तस्य पुरुषशीर्षस्योपधानं विधत्ते—

" सहस्रं वै प्रति पुरुषः पशूनां यच्छति सहस्रमन्ये पशवो मध्ये पुरुषशीर्षमुप दधाति सवीर्यत्वाय " [ सं० का० ५ प्र० २ अ० ९ ] इति ।

अत्र हि पुरुषशीर्षाश्वर्षभवृष्णिबस्तानां शिरांस्युपधेयानि । तेषां मध्ये यः पुरुषः स एक एव पशूनां सहस्रं यजमानाय प्रयच्छति । अन्ये त्वश्वर्षभवृष्णिबस्ताश्चत्वारः पशवो मिलित्वा पशूनां सहस्रं प्रयच्छन्ति । तथा सत्यश्वादिभ्यः पुरुषस्यातिप्रशस्तत्वात्तदीयं शिरो मध्य उपदध्यात् । तच्चोपधानं वीर्यसाहित्याय संपद्यते ॥

तस्य पुरुषशीर्षस्योखासमीपदेशं विधत्ते—

" उखायामपि दधाति प्रतिष्ठामेवैनद्गमयति " [ सं० का० ५ प्र० २ अ० ९ ] इति ।

उखायामुखासमीपे ॥

तस्य पुरुषशीर्षस्याऽऽस्यादिच्छिद्रेषु हिरण्यशकलप्रक्षेपं विधत्ते—

" व्यृद्धं वा एतत्प्राणैरमेध्यं यत्पुरुषशीर्षममृतं खलु वै प्राणा अमृतꣳ हिरण्यं प्राणेषु हिरण्यशल्कान्प्रत्यस्यति प्रतिष्ठामेवैनद्गमयित्वा प्राणैः समर्धयति " [ सं० का० ५ प्र० २ अ० ९ ] इति ।

---

१ ख. च. °तू । बाह्यगतप्र° ।

( स्वयमातृण्णादीष्टकोपधानाभिधानम् )

तदेतत्पुरुषस्य शिरः प्राणैर्वियुक्तत्वाद्यज्ञानर्हं, प्राणास्तु मरणहीनत्वादमृतमित्युच्यन्ते। लोके हि प्राणवियोगे सति शरीरस्यैव मरणं न तु प्राणानाम्। हिरण्यं चाग्निसंयोगे सति विनाशाभावादमृतम्। अतः प्राणसंचारस्थानेष्वास्यादिषु हिरण्यशकलान्प्रक्षिपेत्। तथा सत्युखायां प्रतिष्ठापितं शिरः प्राणैः समृद्धं भवति॥

कल्पः—"समित्स्रवन्तीति शृतातङ्क्येन दध्ना मधुमिश्रेण पुरुषशिरः पूरयति" इति।

पाठस्तु—

समित्स्रवन्ति सरितो न धेनाः। अन्तर्हृदा मनसा पूयमानाः। घृतस्य धारा अभि चाकशीमि। हिरण्ययो वेतसो मध्य आसाम्।, इति।

धेनाः पानयोग्या दधिमध्ववयवाः समित्स्रवन्ति सम्यक्प्रवहन्त्येव। तत्र दृष्टान्तः—सरितो न सरित इव, यथा नद्यः प्रवहन्ति तद्वत्। ते चान्तः शरीरस्याभ्यन्तरे हृदा मनसा हृदयपुण्डरीकवर्तिनाऽन्तःकरणेन पूयमानाः शोध्यमाना दधिमध्ववयवा घृतस्य धाराः संपद्यन्ते। ताश्च धारा अभिचाकशीमि अभितः प्रकाशयामि अनुभवामीत्यर्थः। आसां घृतधाराणां मध्ये हिरण्ययः सुवर्णमय इव तेजोरूपः पुरुषस्य मूर्धा वेतसो जलप्रवाहमध्यगतवेतसवृक्ष इवावभासते॥

एतन्मन्त्रसाध्यं पूरणं विधत्ते—

"दध्ना मधुमिश्रेण पूरयति मधव्योऽसानीति" [ सं० का० ५ प्र० २ अ० ९ ] इति।

अहं मधव्योऽसानि मधुर[1]रसभोगयोग्यो भवानीत्यनेनाभिप्रायेणैतत्पुरुषशिरो मधुयुक्तेन दध्ना पूरयेत्॥

तस्य दध्नो गुणविशेषं विधत्ते—

"शृतातङ्क्येन मेध्यत्वाय" [ सं० का० ५ प्र० २ अ० ९ ] इति।

द्विविधं दधि, तत्रैकं रजतप्रक्षेपादिना स्वयमेव घनी भवति, अन्यत्तु [2]पक्वक्षीरा[3]दातञ्चनेन निष्पद्यते। [4]तत्र क्षीरातञ्चनाभ्यां निष्पन्नं यागयोग्यम्। तस्मात्तादृशेनैव पूरयेत्॥

---

१ क. घ. ङ. °रभो°। २ क. घ. ङ. पक्वं सदा°। ३ ख. °रायात°। ४ क. घ. ङ. तच्च शृतक्षी°।

तदिदं दधिमधुद्वयं प्रशंसति—

“ ग्राम्यं वा एतदन्नं यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेण पूरयत्युभयस्या· वरुद्ध्यै ” [ सं० का० ५ प्र० २ अ० ९ ] इति ॥

कल्पः—“ तस्मिन्त्सुपर्णो मधुकृत्कुलायीति पुरुषशिर आदाय ” इति ।

पाठस्तु—

तस्मिन्त्सुपर्णो मधुकृत्कुलायी भजन्नास्ते मधु देवताभ्यः । तस्याऽऽसते हरयः सप्त तीरे स्वधां दुहाना अमृतस्य धाराम् ॥ , इति ॥

तस्मिन्वेतसस्थानीये पुरुषशिरसि मधुकृत्कश्चिन्मधुकर आस्ते । कीदृशः, सुपर्णः शोभनपक्षोपेतः कुलायी कुलायो मधुकराणां निवासस्थानं सोऽस्या· स्तीति कुलायी । किं कुर्वन्, देवताभ्यो देवतार्थं मधु भजन्संपादयन् । तस्य पुरुषशिरसस्तीरे समीपे हरयो मधुहरणशीलाः सप्तच्छिद्रवर्तित्वेन सप्तसं· ख्याका मधुकरा आसते । किं कुर्वन्तः, स्वधां स्वधाकारोपलक्षितभोग्यवस्तु- रूपाममृतस्य मधुनो धारां दुहानाः स्रावयन्तस्ते । पुरुषशिरसि प्राणसमृद्धि- संपादनाय हिरण्यशकलप्रक्षेपः पूर्वमभिहितः । प्राणेषु समृद्धेषु सत्सु चेतनं जीवात्मानमासाद्य मधुकररूपत्वं संपाद्य तेन पुरुषशिरः प्रशस्यते । यथा लोके मधुकरः कस्मिंश्चिद्वृक्षे स्वनिवासाय कुलायं कृत्वा मधु संपादयति, तत्र मध्वर्थं यदपा( प )रं कुलायं कृतं तस्य च्छिद्ररूपासु नाडीषु क्षुद्रा मधुकराः स्वस्वशक्त्यनुसारेण मधु संपादयन्तो वर्तन्ते तद्वत् । तदेतत्सर्वमत्र रूपककल्प· नया संपादितम् । इत्थं प्रशस्तमिदं पुरुषशिरोऽनेन मन्त्रेण स्त्री कुर्यात् । यत्पूर्वं विहितं पुरुषशीर्षमुपदधातीति तदेतदुपधानं कर्तुमिदं पुरुषशीर्षादानं द्रष्टव्यम् ॥

अत्र विनियोगसंग्रहः—

ध्रुवेति स्वयमातृण्णां स्पृशेत्प्रेति दधाति ताम् ।
काण्डाद्दूर्वेष्टकां द्वाभ्यामषाढां मधु वा त्रिभिः ॥ १ ॥
अनक्ति मधुमिश्रेण दध्ना कूर्मं महीत्यतः ।
कूर्मं दधाति तद्विष्णोर्मुसलं हि ध्रुवेत्युखाम् ॥ २ ॥

---

१ ख. ° दपूर्वं कु° । घ. ङ. °दपूर्वं त° । २ घ. ङ. रूपं कल्प° । ३ ख. च. °कल्प° । ४ ख. च. °धुमत्रिभिः । ५ ख. च. °हीति च । कू° ।

( पशुशीर्षोपधानाभिधानम् )

यास्ते वामभृतं द्वाभ्यां विराड्भूतःसिचास्त्रिभिः।
अग्ने द्वाभ्यामुखाहोमो द्रप्सः पुरुषशीर्षके ॥ ३ ॥
आस्ये स्वर्णं क्षिपेत्तत्र मन्त्रोऽभूदिति वा भवेत्।
ऋचे रुचे द्वयादक्ष्णोः सुवर्णशकले क्षिपेत् ॥ ४ ॥
समिद्ध्या च मधुना पूरयेन्नरशीर्षकम्।
तस्मिंस्तच्छिर आदत्ते पञ्चविंशतिरीरिताः ॥ ५ ॥

अथ मीमांसा ।

तृतीयाध्यायस्याष्टमे पादे द्वितीयाधिकरणे चिन्तितम्—

इष्टकावरदानं किं स्वामिनः स्यादुतर्त्विजः।
स्वामिनः पूर्ववन्नैवमध्वर्योर्वचनादिदम् ॥

"य एतामिष्टकामुपदध्यात्स त्रीन्वरान्दद्यात्" इत्यत्राध्वर्योर्गोत्रयदानं वाचनिकम्। नह्यस्ति वचनस्यातिभारः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके
नवमोऽनुवाकः ॥ ९ ॥

---

(अथ चतुर्थाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः।)

---

आदित्यं गर्भं पयसा समञ्जन्त्सहस्रस्य प्रतिमां विश्वरूपम्। परिवृङ्ग्धि हरसा माऽभि मृक्षः शतायुषं कृणुहि चीयमानः। इमं मा हिंसीर्द्विपादं पशूनाꣳ सहस्राक्ष मेध आ चीयमानः। मयुमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद। वातस्य ध्राजिं वरुणस्य नाभिमश्वं जज्ञानꣳ सरिरस्य मध्ये। शिशुं नदीनाꣳ हरिमद्रिबुद्धमग्ने मा हिंसीः

---

१ ख. च. द्वयोरक्ष्णोः।

( १ ) परमे व्योमन् । इमं मा हिंसीरेकशफं पशूनां कनिक्रदं वाजिनं वाजिनेषु । गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद । अजस्रमिन्दुमरुषं भुरण्युमग्निमीडे पूर्वचित्तौ नमोभिः । स पर्वभिर्ऋतुशः कल्पमानो गां मा हिंसीरदितिं विराजम् । इमं समुद्रं शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये । घृतं दुहानामदितिं जनायाग्ने मा ( २ ) हिंसीः परमे व्योमन् । गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद । वरूत्रिं त्वष्टुर्वरुणस्य नाभिमविं जज्ञानां रजसः परस्मात् । महीं साहस्रीमसुरस्य मायामग्ने मा हिंसीः परमे व्योमन् । इमामूर्णायुं वरुणस्य मायां त्वचं पशूनां द्विपदां चतुष्पदाम् । त्वष्टुः प्रजानां प्रथमं जनित्रमग्ने मा हिंसीः परमे व्योमन् । उष्ट्रमारण्यमनु ( ३ ) ते दिशामि तेन चिन्वानस्तनुवो नि षीद । यो अग्निरग्नेस्तपसोऽधि जातः शोचात्पृथिव्या उत वा दिवस्परि । येन प्रजा विश्वकर्मा व्यानट्तमग्ने हेडः परि ते वृणक्तु ।

अजा ह्यग्नेरजनिष्ट गर्भात्सा वा अपश्यज्जनितारमग्रे। तया रोहमायन्नुप मेध्यासस्तया देवा देवतामग्रं आयन्। शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद (४)॥

(अग्ने मा हिंसीरग्ने मोष्ट्रमारण्यमनु शरभं नव च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः॥ १०॥

---

(अथ चतुर्थाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः।)

---

आदित्यम्। गर्भम्। पयसा। समञ्जन्निति सम्—अञ्जन्। सहस्रस्य। प्रतिमामिति प्रति—माम्। विश्वरूपमिति विश्व—रूपम्। परीति। वृङ्ग्धि। हरसा। मा। अभीति। मृक्षः। शतायुषमिति शत—आयुषम्। कृणुहि। चीयमानः। इमम्। मा। हिंसीः। द्विपादमिति द्वि—पादम्। पशूनाम्। सहस्राक्षेति सहस्र—अक्ष। मेधे। एति। चीयमानः। मयुम्। आरण्यम्। अन्विति। ते। दिशामि। तेन। चिन्वानः। तनुवः। नीति। सीद। वातस्य। ध्राजिम्। वरुणस्य। नाभिम्। अश्वम्। जज्ञानम्। सरिरस्य। मध्ये। शिशुम्। नदीनाम्। हरिम्। अद्रिबुद्धमित्यद्रि—बुद्धम्। अग्ने। मा। हिंसीः(१)।

परमे । व्योमन्निति वि—ओमन् । इमम् । मा । हिꣳसीः । एकशफमित्येक—शफम् । पशूनाम् । कनिक्रदम् । वाजिनम् । वाजिनेषु । गौरम् । आरण्यम् । अन्विति । ते । दिशामि । तेन । चिन्वानः । तनुवः । नीति । सीद । अजस्रम् । इन्दुम् । अरुषम् । भुरण्युम् । अग्निम् । ईडे । पूर्वचित्ताविति पूर्व—चित्तौ । नमोभिरिति नमः—भिः । सः । पर्वभिरिति पर्व—भिः । ऋतुश इत्यृतु—शः । कल्पमानः । गाम् । मा । हिꣳसीः । अदितिम् । विराजमिति वि—राजम् । इमम् । समुद्रम् । शतधारमिति शत—धारम् । उत्सम् । व्यच्यमानमिति वि—अच्यमानम् । भुवनस्य । मध्ये । घृतम् । दुहानाम् । अदितिम् । जनाय । अग्ने । मा (२) । हिꣳसीः । परमे । व्योमन्निति वि—ओमन् । गवयम् । आरण्यम् । अन्विति । ते । दिशामि । तेन । चिन्वानः । तनुवः । नीति । सीद । वरूत्रिम् । त्वष्टुः । वरुणस्य । नाभिम् । अविम् । जज्ञानाम् । रजसः । परस्मात् । महीम् । साहस्रीम् । असुरस्य । मायाम् । अग्ने । मा । हिꣳसीः । परमे । व्योमन्निति वि—ओमन् । इमाम् । ऊर्णायुम् । वरुणस्य ।

मायाम्। त्वचम्। पशूनाम्। द्विपदामिति द्वि—पदाम्। चतुष्पदामिति चतुः—पदाम्। त्वष्टुः। प्रजानामिति प्र—जानाम्। प्रथमम्। जनित्रम्। अग्ने। मा। हिंसीः। परमे। व्योमन्निति वि—ओमन्। उष्ट्रम्। आरण्यम्। अन्विति (३)। ते। दिशामि। तेन। चिन्वानः। तनुवः। नीति। सीद। यः। अग्निः। अग्नेः। तपसः। अधीति। जातः। शोचात्। पृथिव्याः। उत। वा। दिवः। परि। येन। प्रजा इति प्र—जाः। विश्वकर्मेति विश्व—कर्मा। व्यानडिति वि—आनट्। तम्। अग्ने। हेडः। परीति। ते। वृणक्तु। अजा। हि। अग्नेः। अजनिष्ट। गर्भात्। सा। वै। अपश्यत्। जनितारम्। अग्ने। तया। रोहम्। आयन्। उपेति। मेध्यासः। तया। देवाः। देवताम्। अग्रे। आयन्। शरभम्। आरण्यम्। अन्विति। ते। दिशामि। तेन। चिन्वानः। तनुवः। नीति। सीद (४)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ चतुर्थकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः । )

---

नवमेऽनुवाके स्वयमातृण्णाद्युपधानमुक्तम् । दशमे पशुशीर्षोपधानं वक्तव्यम् ।

कल्पः—" आदित्यं गर्भमित्युखायां पुरस्ताच्चु(च्चि)बुकं प्राचीनमुत्तानं प्राङ्मुखं उपधाय " इति । पुरुषशिर इत्यनुवर्तते ॥

पाठस्तु—

आदित्यं गर्भं पयसा समञ्जन्त्सहस्रस्य प्रतिमां विश्वरूपम् । परि वृङ्ग्धि हरसा माऽभि मृक्षः शतायुषं कृणुहि चीयमानः । , इति ।

हेऽग्ने त्वं चीयमानः सन्नादित्यं गर्भमदितिदेवतायाः संबन्धि तत्कार्यरूपं गर्भसदृशमिदं पुरुषशीर्षं परिवृङ्ग्धि परितो वर्जितं कुरु । हरसा तेजसा त्वदीयज्वालारूपेण माऽभिमृक्षोऽभिमर्शनं स्पर्शं मा कुरु, ज्वालया सर्वं दहन्नप्येतत्पुरुषशीर्षं मा दहेत्यर्थः । अनेन दाहाभावेन तं गर्भं यजमानं वा शतायुषं कृणुहि कुरु । कीदृशं गर्भं, सहस्रस्य प्रतिमां पशुसहस्रेण तुल्यं सदृशम् । अत एव ब्राह्मणेऽभिहितम्—" सहस्रं वै प्रति पुरुषः पशूनां यच्छति सहस्रमन्ये पशवो मध्ये पुरुषशीर्षमुप दधाति सवीर्यत्वाय " इति ॥

कल्पः—" पशुशीर्षाण्युपदधाति यं कामयेतापशुः स्यादिति विषूचीनानि तस्येत्युक्तं वातस्य ध्राजिमिति पुरस्तात्प्रतीचीनमश्वस्याजस्रमिन्दुमिति पश्चात्प्राचीनमृषभस्य वरूत्रिं त्वष्टुरिति दक्षिणत उदीचीनं वृष्णेयों अग्निरग्नेरित्युत्तरतो दक्षिणं बस्तस्य तान्यन्यवायेनोत्सर्गैरुपतिष्ठत इमं मा हिꣳसीर्द्विपादमिति पुरुषस्येमं मा हिꣳसीरेकशफमित्यश्वस्येमꣳ समुद्रमित्यृषभस्येमामूर्णायुमिति वृष्णेरजा ह्यग्नेरिति बस्तस्य " इति ।

तत्तन्मूर्धोपधानमन्त्रेभ्योऽनन्तरमेवाऽऽम्नातास्तत्तदुपस्थानमन्त्रा अनु ते दिशामीत्युत्सर्गलिङ्गत्वादुत्सर्गा इत्युच्यन्ते । तैस्तैर्मन्त्रैस्तत्तच्छिरस उपस्थानं कुर्यात् ।

तत्र पुरुषशीर्षस्योपस्थानमन्त्रमाह—

इमं मा हिꣳसीर्द्विपादं पशूनाꣳ सहस्राक्ष मेध

---

१ घ. ङ. 'खमुप' । २ क. घ. ङ. 'क्षिणा ब' ।

(पशुशीर्षोपधानाभिधानम्)

आ चीयमानः। मयुमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद।, इति।

हे सहस्राक्ष सहस्रसंख्याकज्वालारूपचक्षुर्युक्त (*हे मेध यज्ञनिष्पादक,) आचीयमानः सर्वतः पशुमूर्धभिरुपचयं प्राप्नुवानः पशूनां ग्राम्याणामारण्यानां च मध्य इमं पुरुषमूर्धरूपं द्विपादं ग्राम्यपशुं मा हिंसीर्दाहरूपां हिंसां मा कार्षीः। यदि तव भक्ष्यापेक्षा तर्हि ते तव भक्षणायेममारण्यं मयुं कृष्णमृगमनुदिशामि पुरुषशीर्षमनु त्वद्भक्ष्यत्वेनातिसृजामि[2]। तेन मयुभक्षणेन ज्वालारूपास्तनुवस्त्वदीयतनूश्चिन्वानः पोषयन्निह निषीद॥

अथाश्वशिरस उपधानमन्त्रमाह—

वातस्य ध्राजिं वरुणस्य नाभिमश्वं जज्ञानꣳ सरिरस्य मध्ये। शिशुं नदीनाꣳ हरिमद्रिबुद्धमग्ने मा हिꣳसीः परमे व्योमन्।, इति।

हेऽग्नेऽश्वं मा हिंसीर्ज्वालया मा दह। विविधरोगेभ्यो रक्षणमदाहः। सहस्रमश्वस्य रोगाः सन्ति, तेभ्यः सर्वेभ्यः पालनमित्यर्थः। तच्च परममुत्कृष्टं, रक्षितस्याश्वस्य पुनरुपद्रवकथा[3] यथा न जायते तथा रक्षणं रक्षणस्य परमत्वं, तादृशे परमे व्योमन्ननेनमश्वं स्थापयेति शेषः। कीदृशमश्वं, वातस्य ध्राजिं वायोर्गतिस्वरूपं वायुवच्छीघ्रगतिमित्यर्थः[4]। वरुणस्य नाभिम्, अपामधिपतेर्वरुणस्य नाभिस्थानीयं, यथा स्वोदरमध्यवर्तिनी नाभिर्वस्त्रप्रावरणादिना पाल्यते तद्वदत्यन्तप्रियत्वाद्वरुणेन पालनीयमित्यर्थः। अत एव प्रियत्वमभिप्रेत्य "प्रजापतिर्वरुणायाश्वमनयत्" इत्याम्नायते। अश्वमेधकाण्डेऽपि "वारुणो वा अश्वः" इत्याम्नातम्। सरिरस्य मध्ये जज्ञानं समुद्रजलस्य मध्ये वडवारूपेणोत्पन्नम्। अत एवाप्सुयोनिर्वा अश्व इत्यन्यत्र श्रुतम्। नदीनां शिशुम्। यदा[5] नदीनां पतिः समुद्रः पूर्वोक्तन्यायेन पिता तदा[6] नदीनां मातृत्वाद्यं तच्छिशुः। हरिमुपर्यारूढस्य पुरुषस्य हर्तारं नेतारम्। अद्रिबुद्धं मार्गमध्ये खुरैश्चूर्णीकृता येऽद्रयः क्षुद्रपाषाणास्तैर्बुद्धं, तादृशान्पाषाणान्दृष्ट्वा मार्गेऽस्मिन्नश्वो गत इति बोद्धुं शक्यते॥

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने 'मेधे यज्ञे' इति भवितुं युक्तम्।

---

१ ख. च. 'नानुसृ'। २ ख. च. 'न्निषी'। ३ घ. ङ. 'द्रवः कदा न'। ४ ख. 'र्थः। तथा व'। ५ ख. यथा। ६ ख. तथा।

अथाश्वशिरस उपस्थानमन्त्रमाह—

इमं मा हिꣳसीरेकशफं पशूनां कनिक्रदं वाजिनं वाजिनेषु । गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद।, इति ।

पशूनां चतुष्पदां मध्य एकशफमिममश्वं मा हिंसीः । कीदृशमश्वं, कनिक्रदं हेषाशब्दरूपेणात्यन्तक्रन्दनेनोपेतं, वाजिनेषु वाजिनं शीघ्रगतियुक्तेषु प्राणिष्वत्यन्तशीघ्रगतियुक्तम् । गौरः सिंहः । शेषं पूर्ववत् ॥

अथ ऋषभशिरस उपधानमन्त्रमाह—

अजस्रमिन्दुमरुषं भुरण्युमग्निमीडे पूर्वचित्तौ नमोभिः । स पर्वभिर्ऋतुशः कल्पमानो गां मा हिꣳसीरदितिं विराजम् ।, इति ।

पूर्वेषां महर्षीणां चित्तिर्बुद्धिस्तत्र[1] पूज्यत्वेन वर्तमानमिति शेषः । तैर्ध्येयमेतमग्निं नमोभिर्नमस्कारैर्युक्तोऽहमीडे स्तौमि । कीदृशमग्निम्[2] । अजस्रमिन्दुं निरन्तरं परमैश्वर्योपेतम् । अरुःशब्दो मर्मवाची । अरुषं मर्मसंघातं भुरण्युं भरन्तं[3] पालयन्तम् । यथा यजमानस्य मर्माणि वैरिणो नोद्घाटयन्ति तथा कुर्वन्तमित्यर्थः । सोऽग्निरादित्यरूपेण स्थित्वा पर्वभिरमावास्यादिभिस्तिथिभिर्ऋतुशस्तस्मिंस्तस्मिन्नृतौ कल्पमानः कर्माणि संपादयन्वर्तते । तादृश हेऽग्ने मामृषभमूर्धानमेतं मा हिंसीः । कीदृशं गाम्, अदितिमखण्डनीयं विराजं विशेषेण राजमानम् ॥

अथर्षभशिरस उपस्थानमन्त्रमाह—

इमꣳ समुद्रꣳ शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये । घृतं दुहानामदितिं जनायाग्ने मा हिꣳसीः परमे व्योमन् । गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद।,इति ।

हेऽग्ने जनाय यजमानार्थमिमं गामृषभमूर्धानं मा हिंसीः, किंतु परमे व्योमन्नुत्तमे विविधरक्षणे स्थितं कुरु । कीदृशम्, इमं समुद्रं सम्यगुन्नतं, शत-

---

१ घ. ङ. 'त्र व' । २ घ. ङ. 'मेधा' । ३ ख. च. 'न्तं पोषय' ।

( पशुशीर्षोपधानाभिधानम् )

धारं स्वजातीयधेनुद्वारा शतसंख्याकक्षीरधारोपेतम् । अत एवोत्सं जलप्रवाहसदृशं, भुवनस्य मध्ये व्यच्यमानं विद्यमानं सेव्यमानं वा, घृतं दुहानां[2] स्वजातीयधेनुक्षीरादिद्वारा घृतदोहनयुक्तम्[1], अदितिमखण्डनीयम् । गवयो गोसदृश आरण्यो मृगविशेषः । शेषं पूर्ववत् ॥

अथ वृष्णिशिरस उपधानमन्त्रमाह—

वरूत्रिं त्वष्टुर्वरुणस्य नाभिमविं जज्ञानाꣳ रजसः परस्मात् । महीꣳ साहस्रीमसुरस्य मायामग्ने मा हिꣳसीः परमे व्योमन् ।, इति ।

हेऽग्नेऽविं वृष्णिशिरो मा हिंसीः । कीदृशीमविं, त्वष्टुर्वरूत्रिं रूपाणां निर्माता यस्त्वष्टा तस्यानुग्रहाद्वरणीयरूपयुक्तां, वरुणस्य नाभिम[3]निष्टनिवारकस्याग्नेर्नाभिस्थानीयां, परस्माद्रजसो जज्ञानामुत्कृष्टाञ्[4]जगद्रञ्जनात्प्रजापत्युरस उत्पन्नाम् । सप्तमकाण्ड उरसो बाहुभ्यामित्यादिवाक्येऽविः पशूनामिति श्रुतम् । महीं महतीं साहस्रीं सहस्रमूल्यामसुरस्य मायां सुवर्भानोरसुरस्य संबन्धित्वेन निर्मिताम् । अत एव द्वितीयकाण्डे सुवर्भानुरित्यादिवा[5]क्येनाभिहिता ॥

वृष्णिशिरस उपस्थानमन्त्रमाह—

इमामूर्णायुं वरुणस्य मायां त्वचं पशूनां द्विपदां चतुष्पदाम् । त्वष्टुः प्रजानां प्रथमं जनित्रमग्ने मा हिꣳसीः परमे व्योमन् । उष्ट्रमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद ।, इति ।

हेऽग्न इमामूर्णायुमविं वृष्णिशिरोरूपां मा हिंसीः । कीदृशीं, वरुणस्य मायामनिष्टनिवारकस्याग्नेः संबन्धित्वेन निर्मितां, द्विपदां मनुष्याणां चतुष्पदां गवादीनां च त्वचं त्वक्सदृशीम् । यथा त्वचा शरीरमावृतं तथा द्विपादो मनुष्याः शीतनिवारणायाविजन्येन कम्बलेनाऽऽच्छादिता भवन्ति । चतुष्पादोऽप्यश्वा बलीवर्दाश्च भारवाहने मार्दवाय पृष्ठे कम्बलेनाऽऽच्छादिता भवन्ति । तथा त्वष्टुः प्रजापतेः सकाशादुत्पद्यमानानां प्रजानां मध्ये प्रथमं

१ ख. च. 'युक्ताम् । २ ख. च. 'नीयाम् । ३ ख. च. 'मरिष्टं' । ४ क. घ. ङ. 'ष्टात्प्रयोजकत्वाज्ज' । ५ घ. ङ. 'क्ये साऽभि' ।

जनित्रं प्रधानत्वेनोत्पन्नम् । प्राधान्यं च वीर्यवत्त्वात् । वीर्यवत्त्वं च बाहु-जन्यानां सर्वेषामाम्नातं ' तस्मात्ते वीर्यावन्तो वीर्याद्ध्यसृज्यन्त ' इति । उष्ट्रः प्रसिद्धः ॥

अथ बस्तशिरस उपधानमन्त्रमाह—

**यो अग्निरग्नेस्तपसोऽधि जातः शोचात्पृथिव्या उत वा दिवस्परि । येन प्रजा विश्वकर्मा व्यानट्तमग्ने हेडः परि ते वृणक्तु ।, इति ।**

अत्र पञ्चम्यन्तोऽग्निशब्दोऽग्रणीत्वयोगेन प्रजापतिवाची । तस्य च सृष्टि-संकल्परूपं यत्तपस्तस्मात्तपसो योऽयमग्निर्व्यवहारहेतुर्जातः । तपोयुक्तादग्नि-र्जात इत्येतद्धोतृब्राह्मणे समाम्नातम्—" तद्भूयोऽतप्यत । तस्मात्तेपानादग्नि-रजायत " इति । प्रजापतेस्तपसोऽधि जातो योऽग्निः पृथिव्याः परि भूमेरु-परि शोचाच्छोचति तपतीत्यर्थः । उत वा दिवस्परि अपि च स्वर्गस्योपरि शोचति । किंच येन बस्तरूपेण विश्वकर्मा जगत्स्रष्टा प्रजापतिर्व्यानड्विविधाः प्रजाः पशून्व्याप्तवान् । बस्तस्य प्रजापशुसृष्टिसाधनत्वं काम्यपशुकाण्डे समा-म्नातम्—" ततोऽजस्तूपरः समभवत्त९ स्वायै देवताया आलभत ततो वै स प्रजाः पशूनसृजत " इति । हेऽग्ने तपसो योऽधिजातस्तथाविध तव हेडः कोपो येन बस्तेन विश्वकर्मा ससर्ज तं बस्तं परिवृणक्तु परिवर्जितं करोतु मा विनाशयत्वित्यर्थः ॥

तस्यैव बस्तशिरस उपस्थानमन्त्रमाह—

**अजा ह्यग्नेरजनिष्ट गर्भात्सा वा अपश्यज्जनितारमग्रे । तया रोहमायन्नुप मेध्यासस्तया देवा देवतामग्र आयन् । शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद॥, इति ॥**

हि यस्मादियमजाऽग्नेर्गर्भादुदरादजनिष्ट । अत एवाऽऽम्नातम्—" स आत्मनो वपामुदक्खिदत्तामग्नौ प्रागृह्णात्ततोऽजस्तूपरः समभवत् " इति । सैवाग्नेः प्रजापतेश्चोत्पन्ना जनितारं स्वोत्पादकं प्रजापतिमपश्यदुत्पत्त्यनन्तर-मेव दृष्टवती । यस्मादेवमजा प्रशस्ता तस्मात्तयाऽजया मेध्यासो यागयोग्या यजमानारोहं स्वर्गमुपायन्सामीप्येनैव प्राप्ता विलम्बमन्तरेणैव प्राप्ता इत्यर्थः । किंचेदानीं वर्तमाना देवा अग्रे पूर्वस्मिञ्जन्मनि तयैवाजया कर्माण्यनुष्ठाय

देवतामायन्देवत्वं प्राप्ताः। ईदृश(शो ऽ)स्य वस्तशिरसो महिमेति तात्पर्यार्थः। शरभः सिंहघाती क्रूरमृगः॥

उक्तैर्मन्त्रैः साध्यं शीर्षोपधानं विधत्ते—

"पशुशीर्षाण्युप दधाति पशवो वै पशुशीर्षाणि पशूनेवाव रुन्धे" [सं० का० ५ प्र० २ अ० ९] इति॥

अन्वयव्यतिरेकाभ्यां पशुशीर्षाणां पुरुषशीर्षाभिमुख्यं विधत्ते—

"यं कामयेतापशुः स्यादिति विषूचीनानि तस्योप दध्याद्विषूच एवा-स्मात्पशून्दधात्यपशुरेव भवति यं कामयेत पशुमान्त्स्यादिति समीचीनानि तस्योप दध्यात्समीच एवास्मै पशून्दधाति पशुमानेव भवति" [सं० का० ५ प्र० २ अ० ९] इति।

विषूचीनानि बहुमुखानि पुरुषशिरः प्रति विमुखानीत्यर्थः। सोऽयं व्यतिरेकः। समीचीनानि पुरुषशिरः प्रत्यभिमुखानीत्यर्थः। सोऽयमन्वयः॥

सामान्येन विहितं पुनर्विशेषाकारेण विधत्ते—

"पुरस्तात्प्रतीचीनमश्वस्योप दधाति पश्चात्प्राचीनमृषभस्यापशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वानेवास्मै समीचो दधाति" [सं० का० ५ प्र० २ अ० ९] इति।

अश्वशिरः पूर्वस्यां दिशि प्रत्यङ्मुख उपदध्यात्। ऋषभशिरः प्रतीच्यां दिशि प्राङ्मुख उपदध्यात्। गोभ्योऽश्वेभ्यश्च येऽन्ये पशवस्ते जातितः पशु-त्वेऽप्यप्रशस्तत्वादपशव एव। तस्मात्प्रशस्तयोर्गवाश्वशिरसोराभिमुख्योपधानेन यजमानार्थं सर्वान्पशूनभिमुखानेव करोति॥

अथोपस्थानमन्त्रेष्वारण्यानामनुदेशनस्य तात्पर्यं दर्शयति—

"एतावन्तो वै पशवो द्विपादश्च चतुष्पादश्च तान्वा एतदग्नौ प्र दधाति यत्पशुशीर्षाण्युपदधात्यमुमारण्यमनु ते दिशामीत्याह ग्राम्येभ्य एव पशुभ्य आरण्यान्पशूञ्छुचमनूत्सृजति तस्मात्समावत्पशूनां प्रजायमानानामारण्याः पशवः कनीयाꣳसः शुचा ह्यृताः" [सं० का० ५ प्र० २ अ० ९] इति।

ये द्विपादो मनुष्यादयो येऽपि गवादयश्चतुष्पादा एतावन्त एव लोके विद्यमानाः पशवः। एवं सति पुरुषशीर्षस्य पशुशीर्षाणां चोपधानेन तान्स-र्वानग्नौ प्रक्षिपति। अतस्तत्परिहारायाऽऽरण्यपशूनामनुदेशनम्। तेन चानुदे-शनेन ग्राम्येभ्यः पशुभ्योऽपकृष्याऽऽरण्यान्पशून्प्रति शुचं वह्नितापं प्रेरयति। हि यस्माच्छुचा वह्नितापेनाऽऽरण्याः पशव ऋताः प्राप्तास्तस्माद्ग्राम्यैः पशुभिरुत्पत्तिसाम्येऽपि ते कनीयांसो मूल्यानर्हाः॥

यदुक्तं सूत्रकारेण—" नमो अस्तु सर्पेभ्य इति दक्षिणेंऽसे सर्पशिर उप दध्याद्विपूचीनं पशुशीर्षैरपि वा यजुरेव वदेन्नोपदध्यात् " इति, तत्रोपधानं विधत्ते—

" सर्पशीर्षमुप दधाति यैव सर्पे त्विषिस्तामेवाव रुन्धे " [ सं० का० ५ प्र० २ अ० ९ ] इति।

त्विषिर्दीप्तिः ॥

मन्त्रपाठमात्रं विधत्ते—

"यत्समीचीनं पशुशीर्षैरुपदध्याद्ग्राम्यान्पशून्दꣳशुकाः स्युर्यद्विपूचीनमारण्यान्यजुरेव वदेदव तां त्विषिꣳ रुन्धे या सर्पे न ग्राम्यान्पशून्हिनस्ति नाऽऽरण्यान् " [ सं० का०५ प्र० २ अ० ९ ] इति।

सर्पशीर्षस्य संमुखत्वे विमुखत्वे च भावसद्भावात्प्रकारान्तरासंभवाच्च तदुपधानं परित्यज्य मन्त्रमेव पठेत् । तदा मन्त्रपाठेन सर्पत्विषिरपि प्राप्यते संमुखविमुखत्वयोरभावाद्दोषद्वयमपि नास्ति ॥

तमिमं केवलमन्त्रपक्षमुपेक्ष्योपधानपक्षस्यैव प्राप्तिप्रतिप्रसवं विधत्ते—

" अथो खल्पधेयमेव यदुपदधाति तेन तां त्विषिमव रुन्धे या सर्पे यद्यजुर्वदति तेन शान्तम् " [ सं० का० ५ प्र० २ अ० ९ ] इति।

सर्पे या त्विषिस्तामुपधानेन लभते। मन्त्रपाठेन सर्पशिरसः शान्तत्वाद्दंशनमपि न भवति ॥

अत्र विनियोगसंग्रहः—

आखुखायां शिरो धत्त इममित्युपतिष्ठते।
वाताश्वस्य शिरः प्राच्यां दध्यादिमं जपेत्तथा ॥ १ ॥
अजर्षभशिरः पश्चादिममित्यनुमन्त्रणम्।
वरू दक्षिणतो वृष्णिशिरस्तन्मन्त्रणं त्विमाम् ॥ २ ॥
य उदीच्यां बस्तशिरस्तन्मन्त्रणमजेत्यतः।
दशमे त्वनुवाकेऽस्मिन्दश मन्त्रा उदीरिताः ॥ ३ ॥

अथ मीमांसा।

प्रथमाध्यायस्य चतुर्थपादे षोडशाधिकरणे चिन्तितम्—

पशवोऽन्ये गवाश्वेभ्योऽपशवो वा इति श्रुतम्।
अजादिष्वपशुत्वं यद्गुणवादोऽथ वा स्तुतिः ॥
स्तुत्यभावाद्गुणस्तेषु पशुकार्यनिषेधनम्।
अशक्यत्वान्निषेधस्य घटाद्यर्थाभिधायिना ॥

१ ख. च. 'न्तरसं'। २ ख. च. 'त्वभिम'।

( याज्यानुवाक्याभिधानम् )

पशवोऽपशुशब्देन प्राशस्त्याभावसाम्यतः ।
लक्ष्यास्तत्र निमित्तं तु प्रशंसैव गवाश्वयोः ॥

इदमाम्नायते—" अपशवो वा अन्ये गोअश्वेभ्यः पशवः " इति । तत्राजादिषु श्रूयमाणं यदपशुत्वं तस्यार्थवादत्वं न संभवति । पशुत्वमात्रनिषेधेन स्तुतेरप्रतिभानात् । ततः पशुकार्यनिषेधरूपो गुणोऽभिधीयत इति चेत् । मैवम् । अजादिपशुविधिवैयर्थ्यप्रसङ्गेन निषेद्धुमशक्यत्वात् । अपशुशब्दः पशुव्यतिरिक्तं घटादिपदार्थमभिदधाति । तस्मिन्घटादौ गवाश्ववत्प्राशस्त्यं नास्ति । सोऽयं प्राशस्त्याभावोऽजादिषु पशुष्वस्तीत्यनेनाभिप्रायेण पशव एव सन्तोऽप्यजादयो घटादिसाम्यादपशुशब्देन लक्ष्यन्ते । पूर्वत्र यजमानकार्यसिद्धिराग्नेये मुखजत्वमादित्यवत्तेजस्वित्वं च यजमानादिशब्दानां प्रस्तराद्यर्थेषु प्रवृत्तिनिमित्तम् । तत्प्रवृत्तिफलं प्रस्तरादिप्रशंसा । इह त्वपशुशब्दस्याजादिषु प्रवृत्तौ गवाश्वयोः प्रशंसैव निमित्तं फलं च । द्विप्रकारा हि प्रशंसा—वस्तुनि विद्यमानगुणोत्कर्ष एकः प्रकारः, स्तावकेन शब्देन संपादितो गुणोत्कर्षोऽपरः प्रकारः । गवाश्वयोरजादिभ्य उत्कर्षो लोकसिद्धो यः सोऽत्र निमित्तम् । अजादयः स्वभावतः पशवोऽपि सन्तो गवाश्वौ प्रत्यपशवः संपन्नाः । ईदृशो गवाश्वयोर्महिमेति स्तुतिः फलम् । तस्मात् " अपशवो वा अन्ये " इत्ययमर्थवादः । अयमेव न्याय उदाहरणान्तरे योजनीयः । " अयज्ञो वा एष योऽसामा " इत्येकमुदाहरणम् । " असत्रं वा एतद्यदच्छन्दोमम् " इत्यपरमुदाहरणम् । अग्निहोत्रदर्शपूर्णमासादिर्यज्ञोऽपि सामहीनत्वादयज्ञो भवति । ईदृशः साम्नो महिमा । छन्दोमशब्देन चतुर्विंशश्चतुश्चत्वारिंशोऽष्टाचत्वारिंश इत्येते त्रयः स्तोमा उच्यन्ते । अक्षरसंख्यासाम्येन गायत्रीत्रिष्टुब्जगतीछन्दोभिर्मीयमानत्वात् । तेषां च विष्टुतिः सामब्राह्मणे द्रष्टव्या । अतः सत्रमपि चतुर्दशरात्रादिकं छन्दोमरहितत्वादसत्रं भवति । ईदृशश्छन्दोमानां महिमेत्येवं स्तावकत्वादर्थवादत्वम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके
दशमोऽनुवाकः ॥ १० ॥

---

(अथ चतुर्थाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः ।)

---

इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः ।

---

१ ख. घ. ङ. च. स्वतः ।

तद्वां चेति प्र वीर्यम् । श्नथंद्वृत्रमुत संनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात् । इरज्यन्ता वसव्यस्य भूरेः सहस्तमा सहसा वाजयन्ता । प्र चर्षणिभ्यः पृतना हवेषु प्र पृथिव्या रिरिचाथे दिवश्च । प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनाऽत्यन्या । मरुतो यस्य हि ( १ ) क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः । यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनाम् । मरुतः शृणुता हवम् । श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः । ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः । अव ते हेड उदुत्तमम् । कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता (२) । को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् । आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात् । अग्ने नयाऽऽदेवानाꣳ शं नो भवन्तु वाजेवाजे । अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे । गर्भे सञ्जायसे

पुनः। वृषा सोम द्युमाꣳ असि वृषा देव वृषव्रतः। वृषा धर्माणि दधिषे। इमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने (३)॥

(हि वृता म एकादश च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः॥ ११॥

---

विष्णोर्दिवस्पर्यन्नपतेऽपेत समितं या जाता मा नोऽभ्यस्थाद्ध्रुवाऽसि धरुणाऽऽदित्यं गर्भमिन्द्राग्नी रोचनैकादश॥ ११॥

विष्णोरस्मिन्हव्येति त्वाऽहं धीतिभिर्होत्रा अष्टाचत्वारिꣳशत्॥ ४८॥

हरिः ॐ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके द्वितीयः प्रपाठकः॥ २॥

---

(अथ चतुर्थाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः।)

---

इन्द्राग्नी इतीन्द्र—अग्नी। रोचना। दिवः। परीति। वाजेषु। भूषथः। तत्। वाम्। चेति। प्रेति। वीर्यम्। श्नथत्। वृत्रम्। उत। सनोति। वाजम्। इन्द्रा। यः। अग्नी इति। सहुरी इति स—हुरी। सपर्यात्। इरज्यन्ता। वसव्यस्य। भूरेः। सहस्तमेति सहः—तमा। सहसा। वाजयन्तेति वाज—यन्ता। प्रेति। चर्षणिभ्य इति चर्ष-

णि—भ्यः । पृतना । हवेषु । प्रेति । पृथिव्याः । रिरिचाथे इति । दिवः । च । प्रेति । सिन्धुभ्य इति सिन्धु—भ्यः । प्रेति । गिरिभ्य इति गिरि—भ्यः । महित्वेति महि—त्वा । प्रेति । इन्द्राग्नी इतीन्द्र—अग्नी । विश्वा । भुवना । अतीति । अन्या । मरुतः । यस्य । हि ( १ ) । क्षये । पाथ । दिवः । विमहस इति वि—महसः । सः । सुगोपातम इति सुगोप—तमः । जनः । यज्ञैः । वा । यज्ञवाहस इति यज्ञ—वाहसः । विप्रस्य । वा । मतीनाम् । मरुतः । शृणुत । हवम् । श्रियसे । कम् । भानुभिरिति भानु—भिः । समिति । मिमिक्षिरे । ते । रश्मिभिरिति रश्मि—भिः । ते । ऋक्वभिरित्यृक्व—भिः । सुखादय इति सु—खादयः । ते । वाशीमन्त इति वाशी—मन्तः । इष्मिणः । अभीरवः । विद्रे । प्रियस्य । मारुतस्य । धाम्नः । अवेति । ते । हेडः । उदिति । उत्तममित्युत्—तमम् । कया । नः । चित्रः । एति । भुवत् । ऊती । सदावृध इति सदा—वृधः । सखा । कया । शचिष्ठया । वृता ( २ ) । कः । अद्य । युङ्क्ते । धुरि । गाः । ऋतस्य । शिमीवतः । भामिनः । दुर्हृणायूनिति दुः—हृणायून् । आसन्निषूनित्यासन्—

इषून्। हृत्स्वस इति हृत्सु—असः। मयोभूनिति मयः—भून्। यः। एषाम्। भृत्याम्। ऋणधत्। सः। जीवात्। अग्ने। नय। एति। देवानाम्। शम्। नः। भवन्तु। वाजेवाज इति वाजे—वाजे। अप्स्वित्यप्—सु। अग्ने। सधिः। तव। सः। ओषधीः। अन्विति। रुध्यसे। गर्भे। सन्। जायसे। पुनः। वृषा। सोम। द्युमानिति द्यु—मान्। असि। वृषा। देव। वृषव्रत इति वृष—व्रतः। वृषा। धर्माणि। दधिषे। इमम्। मे। वरुण। तत्। त्वा। यामि। त्वम्। नः। अग्ने। सः। त्वम्। नः। अग्ने (३)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः॥ ११॥

---

हरिः ॐ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके द्वितीयः प्रपाठकः॥ २॥

---

(अथ चतुर्थकाण्डे द्वितीयप्रपाठक एकादशोऽनुवाकः।)

---

दशमेऽनुवाके पशुशिरसामुपधानमुक्तम्। अथैकादशे याज्यानुवाक्या उच्यन्ते।

चातुर्मास्येषु वरुणप्रघासाख्यं यद्द्वितीयं पर्व तस्मिन्हवींषि चत्वार्याम्नाता-

नि—" ऐन्द्राग्नमेकादशकपालं मारुतीमामिक्षां वारुणीमामिक्षां कायमेककपालम् " इति । तत्रैन्द्राग्नस्य पुरोनुवाक्यामाह—

इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः ।
तद्वां चेति प्र वीर्यम् ।, इति ।

दिवो द्युलोकस्य रोचना भासकौ हे इन्द्राग्नी वाजेषु हविर्लक्षणेष्वन्नेषु परिभूषथः परितः प्राप्नुतो भागमिति शेषः । तत्तस्मात्कारणाद्वां युवयोर्वीर्यं सामर्थ्यं प्रचेति प्रकर्षेणाज्ञायि लोके सर्वैर्ज्ञातमित्यर्थः ॥

तत्रैव याज्यामाह—

श्नथद्वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी
सहुरी सपर्यात् । इरज्यन्ता वसव्यस्य
भूरेः सहस्तमा सहसा वाजयन्ता ।, इति ।

यो यजमान इन्द्राग्नी सपर्यात्परिचरति । कीदृशाविन्द्राग्नी, सहुरी सपत्नानाहानौ । स यजमानो वृत्रं वैरिणं श्नथद्विनाशयति । उतापि च वाजमन्नं सनोति सर्वेभ्यः प्रयच्छति । पुनरपि भूरेर्बहुलस्य वसव्यस्येरज्यन्ता, ईश्वरत्वं प्राप्तवन्तौ, सहसा स्वकीयेन बलेन सहस्तमाऽतिशयेन सोढारौ परबलस्याभिभवितारावित्यर्थः । वाजयन्ता वाजमन्नमात्मन इच्छन्तौ ॥

तत्रैव विकल्पितां याज्यामाह—

प्र चर्षणिभ्यः पृतना हवेषु प्र पृथिव्या रिरि-
चाथे दिवश्च । प्र सिन्धुभ्यः प्र गिरिभ्यो
महित्वा प्रेन्द्राग्नी विश्वा भुवनाऽत्यन्या ।, इति ।

हे इन्द्राग्नी पृतना सङ्ग्रामेषु हवेषु हविःस्वीकारार्थेष्वाह्वानेषु च चर्षणिभ्यो मनुष्येभ्यः प्ररिरिचाथे प्ररिक्तावतिरिक्तौ भवथः । सर्वानपि मनुष्यानतिरिच्य वर्तेथे इत्यर्थः । तथा पृथिव्या दिवश्च प्ररिरिचाथे तदुभयमतिरिच्य वर्तेथे । तथा सिन्धुभ्यः प्ररिरिचाथे । तथा गिरिभ्यः पर्वतेभ्यः प्ररिरिचाथे । किं बहुना, अत्यन्याऽत्यन्तमितराणि विश्वा भुवना सर्वाणि भुवनानि महित्वा स्वकीयेन महिम्ना युवां प्ररिरिचाथे अतिरिच्य वर्तेथे ॥

अथ मारुत्या आमिक्षायाः पुरोनुवाक्यामाह—

मरुतो यस्य हि क्षये पाथा दिवो विम-
हसः । स सुगोपातमो जनः ।, इति ।

( याज्यानुवाक्याभिधानम् )

हे मरुतो दिवो द्युलोकादागता यूयं यस्य यजमानस्य क्षये गृहे पाथ रक्षां कुरुथ। कीदृशा मरुतः, विमहसो विशिष्टं महस्तेजो येषां ते विमहसः। स जनस्तादृशो यजमानः सुगोपातमोऽतिशयेन रक्षको भवतु॥

तत्रैव विकल्पितामन्[2]यां पुरोनुवाक्यामाह—

यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मती-
नाम्। मरुतः शृणुता हवम् ।, इति।

यज्ञवाहसो यज्ञस्य वोढारो हे मरुतो यज्ञैर्वा निमित्तभूतैर्हवं मदीयमाह्वानं शृणुत। अथवा विप्रस्य यजमानस्य मतीनां चित्तवृत्तीनामनुग्रहाय मदीयमाह्वानं शृणुत॥

तत्रैव याज्यामाह—

श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभि-
स्त ऋक्वभिः सुखादयः। ते वाशीमन्त इष्मिणो
अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः।, इति।

हे(ते) मरुतः पुरोवातरूपाः सन्तः कं श्रियसे प्राणिभिराश्रयितुं भानुभिर्भासकै रश्मिभिः सूर्यरश्मिभिः सहिताः संमिमिक्षिरे मेघवृष्ट्या भूमिं सम्यक्सेक्तुमिच्छन्ति। ते मरुत ऋक्वभिर्याज्यापुरोनुवाक्यारूपाभिर्ऋग्भिः स्तुताः सन्तः सुखादयः शोभनं हविः खादितवन्तः। ततस्ते मरुतो वाशीमन्त उत्साह[3]जनितघोषरूपबहुविधशब्दवन्तः, इष्मिणः स्वगृहान्प्रति गतवन्[4]तः, अभीरवः स्वकार्यस्य निष्पन्नत्वेन विघ्नकारिभ्योऽसुरेभ्यो भयरहिताः, प्रियस्य मारुतस्य धाम्नो मरुतां संबन्धि यत्प्रियं स्थानं तद्विद्रे लब्धवन्तः॥

अथ वारुणीमामिक्षामित्येतस्य याज्यानुवाक्ययोः प्रतीके दर्शयति—

अव ते हेड उदुत्तमम्।, इति।

अव ते हेड इति पुरोनुवाक्या। उदुत्तममिति याज्या। एतच्चोभयं वैश्वानरो न ऊत्येत्यस्मिन्ननुवाके व्याख्यातम्॥

अथ कायमेककपालमित्यस्य पुरोनुवाक्यामाह—

कया नश्चित्र आ भुवदूती सदावृधः
सखा। कया शचिष्ठया वृता।, इति।

कस्य प्रजापतेः संबन्धिनीत्यस्मिन्नर्थे स्त्रीलिङ्गः केतिशब्दो वर्तते। ऊति-

---

१ ख. घ. ङ. च. भवति। २ ख. च. 'मनु'। ३ ख. च. 'हप्रयुक्तघो'। ४ ख. च. गमित'।

शब्दो रक्षणवाची। कयोत्या प्रजापतिसंबन्धिना रक्षणेन चित्र आभुवद्विचित्रोऽयं यज्ञो नोऽस्मान्प्रत्यागतः। कीदृशो यज्ञः, सदावृधः सर्वदा वर्धमानः, सखा सखिवत्प्रियतमः। स च यज्ञः कया प्रजापतिसंबन्धिन्या शचिष्ठयाऽतिशयितया शक्त्या वृता युक्त इत्यर्थः॥

तत्रैव याज्यामाह—

को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून्। आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात्। , इति।

कः प्रजापतिरद्यास्मिन्दिन ऋतस्य धुरि यज्ञस्याग्रभागे यज्ञप्रवृत्तिवेलायामित्यर्थः। गा वाग्विशेषानस्मदीयस्तुतिरूपान्युङ्क्ते स्वचित्ते योजयति। कीदृशान्वाग्विशेषान्, शिमीवतः कर्मयुक्तानेतत्कर्मयोग्यानित्यर्थः। भामिनः स्वार्थावभासकान्। दुर्हृणायून्दुःखहरणशीलान्। आसन्निषूनस्मदीयमास्यं मुखमिष्यन्ति गच्छन्तीत्यासन्निषवस्तान्। हृत्स्वसो हृत्सु स्तुत्यानां हृदयेषु सन्ति तिष्ठन्तीति हृत्स्वसस्तान्हृदयंगमानतिप्रियानित्यर्थः। मयोभून्सुखस्य भावयितॄन्। यो यजमान एषां वाग्विशेषाणां भृत्यां भरणक्रियामृणधद्वर्धयति पुनः पुनः स्तौतीत्यर्थः। स यजमानो जीवाच्चिरं जीवति॥

अथ स्विष्टकृतो[3] याज्यानुवाक्ययोः प्रतीके दर्शयति—

अग्ने नयाऽऽ देवानाम् , इति।

अग्ने नय सुपथेति पुरोनुवाक्या। आ देवानामपि पन्थामिति याज्या। तच्चोभयमुभा वामिन्द्राग्नी इत्यनुवाके व्याख्यातम्॥

अथाऽऽमिक्षानिष्पादिनो वाजिनहविषो याज्यानुवाक्ययोः प्रतीके दर्शयति—

शं नो भवन्तु वाजेवाजे।, इति।

शं नो भवन्तु वाजिनो हवेष्विति पुरोनुवाक्या। वाजेवाजेऽवत वाजिन इति याज्या। एतच्चोभयं देवस्याहं सवितुरित्यनुवाके व्याख्यातम्॥

अथावभृथे प्रथमाज्यभागस्य पुरोनुवाक्यामाह—

अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे। गर्भे सञ्जायसे पुनः।, इति।

---

१ ख. घ. ङ. च. 'ज्ञस्य भारे य'। २ ख. घ. ङ. च. 'तः शर्भे'। ३ क. घ. ङ. 'कृतःसंयाज्ययोः।

( याज्यानुवाक्याभिधानम् )

हेऽग्ने ते तव सधिः सहो बलमप्सु वर्तते। स त्वमोषधीरनुरुध्यसे व्रीहि-यवाद्योषधीरनुसरसि, जाठराग्निरूपेण तत्स्वीकारात् । अरण्योर्गर्भे स्थितः सन्पुनः पुनर्जायसे ॥

अथ द्वितीयाज्यभागस्य पुरोनुवाक्यामाह—

वृषा सोम द्युमाꣳ असि वृषा देव
वृषव्रतः। वृषा धर्माणि दधिषे।, इति।

हे सोम त्वं वृषा कामानां वर्षयिताऽसि। द्युमान्दीप्तिमांश्चासि। हे देव यस्मात्त्वं वृषा वर्षयिता तस्मात्त्वं वृषव्रतो वर्षणनिमित्तं व्रतं कर्म यस्य स वृष-व्रतः। किंच यस्मात्त्वं वृषा वर्षयिता तस्माद्धर्माणि पुण्यानि दधिषे। हे सोम त्वं वृषा धारयिताऽसि ॥

अथ वारुणस्य याज्यानुवाक्ययोः प्रतीके दर्शयति—

इमं मे वरुण तत्त्वा यामि, इति।

इमं मे वरुण श्रुधीति पुरोनुवाक्या। तत्त्वा यामि ब्रह्मणा वन्दमान इति याज्या। एतच्चोभयमिन्द्रं वो विश्वतस्परीन्द्रं नर इत्यनुवाके व्याख्यातम् ॥

अथाग्निवारुणस्विष्टकृतः संयाज्ययोः प्रतीके दर्शयति—

त्वं नो अग्ने स त्वं नो अग्ने ॥, इति ॥

त्वं नो अग्ने वरुणस्येति पुरोनुवाक्या। स त्वं नो अग्नेऽवमो भवोतीति याज्या। एतच्चोभयमायुष्ट आयुर्दा अग्न इत्यस्मिन्ननुवाके व्याख्यातम् ॥

अत्र विनियोगसंग्रहः—

वारुणाख्यप्रघासेषु याज्या अन्त्यानुवाकगाः।
इद्राग्नी तिस्र ऐन्द्राग्ने मारुते तु मरुत्त्रयम् ॥ १ ॥
अवोदु वारुणे यागे कया को काययागके।
अग्न आ देव(वा) संयाज्ये शं नो वाजे तु वाजिने ॥ २ ॥
अप्सुद्वयं चावभृथेऽनुवाक्ये आज्यभागयोः।
इमं तत्त्वा प्रधानस्य प्रोक्ते त्वं स त्वमित्यमू ॥
संयाज्ये इति मन्त्रास्तु विंशतिः समुदीरिताः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठक
एकादशोऽनुवाकः ॥ ११ ॥

---

१ घ. ङ. 'ता द्यु'।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे द्वितीयः प्रपाठकः ॥ २ ॥

---

(अथ चतुर्थाष्टके तृतीयः प्रपाठकः ।)

---

(तत्र प्रथमोऽनुवाकः ।)

---

हरिः ॐ ।

अपां त्वेमन्त्सादयाम्यपां त्वोद्मन्त्सादयाम्यपां त्वा भस्मन्त्सादयाम्यपां त्वा ज्योतिषि सादयाम्यपां त्वाऽयने सादयाम्यर्णवे सदने सीद समुद्रे सदने सीद सलिले सदने सीदापां क्षये सीदापाꣳ सधिषि सीदापां त्वा सदने सादयाम्यपां त्वा सधस्थे सादयाम्यपां त्वा पुरीषे सादयाम्यपां त्वा योनौ सादयाम्यपां त्वा पाथसि सादयामि गायत्री छन्दस्त्रिष्टुप्छन्दो जगती छन्दोऽनुष्टुप्छन्दः पङ्क्तिश्छन्दः ( १ ) ॥

(योनौ पञ्चदश च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

(अथ चतुर्थाष्टके तृतीयः प्रपाठकः।)

---

(तत्र प्रथमोऽनुवाकः।)

---

हरिः ॐ।

अपाम्। त्वा। एमंन्। सादयामि। अपाम्। त्वा। ओद्मंन्। सादयामि। अपाम्। त्वा। भस्मंन्। सादयामि। अपाम्। त्वा। ज्योतिंषि। सादयामि। अपाम्। त्वा। अयंने। सादयामि। अर्णवे। सदंने। सीद। समुद्रे। सदंने। सीद। सलिले। सदंने। सीद। अपाम्। क्षये। सीद। अपाम्। सधिंषि। सीद। अपाम्। त्वा। सदंने। सादयामि। अपाम्। त्वा। सधस्थ इतिं सध—स्थे। सादयामि। अपाम्। त्वा। पुरींषे। सादयामि। अपाम्। त्वा। योनौं। सादयामि। अपाम्। त्वा। पाथंसि। सादयामि। गायत्री। छन्दंः। त्रिष्टुप्। छन्दंः। जगंती। छन्दंः। अनुष्टुबित्यंनु—स्तुप्। छन्दंः। पङ्क्तिः। छन्दंः (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके तृतीयप्रपाठके प्रथमोऽनुवाकः॥१॥

---

( अथ चतुर्थकाण्डे तृतीयः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रपाठके द्वितीये हि चितिक्षेत्रं निरूपितम् ।
वाच्यास्तृतीयके पञ्च चितयोऽत्र त्रयोदश ॥ २ ॥
अनुवाकास्त्रिभिर्द्वाभ्यां तथा द्वाभ्यां चतुष्टयात् ।
एकेन चितयो याज्या इत्यर्था अनुवाकगाः ॥ ३ ॥

तत्र प्रथमेऽनुवाके प्रथमचितिगता अपस्याभिधाना इष्टका उच्यन्ते ।

कल्पः—" अपस्या उपदधात्यपां त्वेमन्त्सादयामीति पञ्च पुरस्तात्प्रतीचीरर्णवे सदने सीदेति पञ्च दक्षिणत उदीचीरपां त्वा सदने सादयामीति पञ्च पश्चात्प्राचीर्गायत्री छन्द इति पञ्चोत्तरतो दक्षिणा" इति ।

तत्र प्रथमपञ्चकमन्त्रानाह—

**अपां त्वेमन्त्सादयाम्यपां त्वोद्मन्त्सादयाम्यपां त्वा भस्मन्त्सादयाम्यपां त्वा ज्योतिषि सादयाम्यपां त्वाऽयने सादयामि,** इति ।

हे इष्टके त्वा त्वामपामेमञ्जलसंबन्धिनि प्रवाहादिगमनप्रकारे सादयामि स्थापयामि । एवमुत्तरत्रापि योज्यम् । ओद्मन्वीचीतरङ्गादिरूप उन्दने भस्मन्भासके शुक्लरूपे ज्योतिषि प्रकाशनैर्मल्य इत्यर्थः । अयने नदीकूपाद्याधारे ॥

अथ द्वितीयेष्टकापञ्चकमन्त्रानाह—

**अर्णवे सदने सीद समुद्रे सदने सीद सलिले सदने सीदापां क्षये सीदापाᳪं साधिषि सीद,** इति ।

अर्णवशब्देन सादृश्यात्प्रौढतटाकाद्युपलक्ष्यते । तच्चापां सदनं, तस्मिन्स्थाने हे इष्टके सीदोपविश । समुद्रः प्रसिद्धः । सलिलशब्देनानिर्धारितविशेषो जलमात्राधार उपलक्षितः । क्षीयन्ते शुष्यन्त्यापोऽत्रेति शुष्कतटाकादिः क्षयः । जलेन सह मेघे धीयते स्थाप्यत इति सधीर्वर्षोपलादिः ॥

अथ तृतीयपञ्चकमन्त्रानाह—

**अपां त्वा सदने सादयाम्यपां त्वा सधस्थे**

---

१ ख. च. °न्धिप्र° । २ ख. च. उदके ।

(प्रथमचितिगतापस्याभिधानेष्टकाभिधानम्)

सादयाम्यपां त्वा पुरीषे सादयाम्यपां त्वा योनौ
सादयाम्यपां त्वा पाथसि सादयामि, इति।

हे इष्टके त्वामपां सदने स्थाने नद्यादौ सादयामि। अद्भिः सह विद्युदादयो यत्र मेघे तिष्ठन्ति सोऽयं मेघः सधस्थः। पुरीषशब्देन नद्यादिगताः सिकता उच्यन्ते। योनिशब्देन जलकारणभूतोऽग्निरुच्यते। "अग्नेरापः" इति श्रुतेः। पीयते जलं जीमूतैरत्रेति पाथः समुद्रः॥

अथ चतुर्थपञ्चकमन्त्रानाह—

गायत्री छन्दस्त्रिष्टुप्छन्दो जगती छन्दोऽ-
नुष्टुप्छन्दः पङ्क्तिश्छन्दः॥, इति॥

हे इष्टके त्वं गायत्र्याख्यच्छन्दोरूपाऽसि। एवमितरत्रापि॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

"पशुर्वा एष यदग्निर्योनिः खलु वा एषा पशोर्विक्रियते यत्प्राचीनमैष्टकाद्यजुः क्रियते रेतोऽपस्या अपस्या उप दधाति योनावेव रेतो दधाति" [सं० का० ५ प्र० २ अ० १०] इति।

योऽयमग्निः स एष पशुप्राप्तिहेतुत्वात्पशुरेव। इष्टकोपधानात्पूर्वं यदङ्गजातमनुष्ठीयते तेन पशोरेषा योनिरेव विकृता भवति। यथा लोक ऋतुकाले विकृता योनी रेतोधारणमपेक्षते तद्वदित्यर्थः। अब्लिङ्गगतैर्मन्त्रैरुपधेया इष्टका अपस्याः। ताश्च रेतःस्थानीयाः। अतस्ता उपदध्यात्। तदुपधानेन योनावेव रेतो धारितं भवति॥

सामान्येन विहितं विशेषाकारेण पुनर्विधत्ते—

"पञ्चोप दधाति पाङ्क्ताः पशवः पशूनेवास्मै प्र जनयति" [सं० का० ५ प्र० २ अ० १०] इति।

अत्र पुरस्तादित्यध्याहर्तव्यम्। पूर्वस्यां दिशि पञ्चेष्टका उपदध्यात्। सपुच्छैः पादैः पञ्चभिर्योगात्पशवः पाङ्क्ताः॥

अथ द्वितीयपञ्चकस्य देशं विधत्ते—

"पञ्च दक्षिणतो वज्रो वा अपस्या वज्रेणैव यज्ञस्य दक्षिणतो रक्षाꣳस्यप हन्ति" [सं० का० ५ प्र० २ अ० १०] इति।

वज्रवद्वैरिनिवारणसमर्थत्वादपस्यानां वज्रत्वम्॥

अथ तृतीयपञ्चकस्य देशं विधत्ते—

---

१ क. घ. ङ. 'रेवावि'।

" पञ्च पश्चात्प्राचीरुप दधाति पश्चाद्वै प्राचीनꣳ रेतो धीयते पश्चादेवास्मै प्राचीनꣳ रेतो दधाति " [ सं० का० ५ प्र० २ अ० १० ] इति।

प्राचीः प्राङ्मुखाः। लोके हि पश्चिमायां दिश्यवस्थितेन प्राङ्मुखेन पुरुषेण रेतः प्राचीनं संमुखमेव गर्भाशये स्थाप्यते। अतो यजमानार्थमपि तथा कृतं भवति॥

पूर्वपश्चिमयोरिष्टकाः सह प्रशंसति—

" पञ्च पुरस्तात्प्रतीचीरुप दधाति पञ्च पश्चात्प्राचीस्तस्मात्प्राचीनꣳ रेतो धीयते प्रतीचीः प्रजा जायन्ते " [ सं० का० ५ प्र० २ अ० १० ] इति।

प्रतीचीः प्रत्यगपवर्गाः। प्राच्यां प्रथमामाधाय ततः पश्चिमायां द्वितीयां ततोऽपि पश्चिमायां तृतीयेत्येषा रीतिः। प्राचीरित्यत्र तद्विपरीता रीतिः। लोकेऽपि पुरो योन्यभिमुखत्वेन रेतःस्थापनं, तद्विपर्ययेण प्रजननम्॥

चतुर्थपञ्चकस्य देशं विधत्ते—

" पञ्चोत्तरतश्छन्दस्याः पशवो वै छन्दस्याः पशूनेव प्रजातान्त्स्वमायतनमभि पर्यूहते " [ सं० का० ५ प्र० २ अ० १० ] इति।

पूर्वोपधानेन प्रजातान्पशूननेनोपधानेन स्वस्थानं प्रापयति॥

देशविशेषान्विधाय समुदायाकारेण प्रशंसति—

" इयं वा अग्नेरतिदाहादबिभेत्सैता अपस्या अपश्यत्ता उपाधत्त ततो वा इमां नात्यदहद्यदपस्या उपदधात्यस्या अनतिदाहाय " [ सं० का० ५ प्र० २ अ० १० ] इति।

अपां शान्तत्वादपस्याभिरतिदाहस्य परिहारः॥

पुनः प्रकारान्तरेण प्रशंसति—

" उवाच हेयमददित्स ब्रह्मणाऽन्नं यस्यैता उपधीयान्तै य उ चैना एवं वेद " [ सं० का० ५ प्र० २ अ० १० ] इति।

यस्य यजमानस्यैता अपस्या उपधीयन्ते, योऽपि विद्वानेता ( ना ) अपस्या उक्तप्रकारेण जानाति, स यजमानः स च वेदिता ब्रह्मणा मुख्यया त्रय्याऽन्नमददिदन्नमत्त्येवमिदं वाक्यमियं पृथिव्युवाच ह। तस्मादपस्याः प्रशस्ता इति तात्पर्यार्थः॥

अत्र विनियोगसंग्रहः—

अपामपस्या दिक्ष्वेता उपधेयास्तु विंशतिः॥ १॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके
प्रथमोऽनुवाकः॥ १॥

( अथ चतुर्थाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः । )

---

अयं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्रियै गायत्रं गायत्रादुपाꣳशुरुपाꣳशोस्त्रिवृत्त्रिवृतो रथंतरꣳ रथंतराद्वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्योऽयं दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणं ग्रीष्मो मानसस्त्रिष्टुग्ग्रैष्मी त्रिष्टुभं ऐडमैडादन्तर्यामोऽन्तर्यामात्पञ्चदशः पञ्चदशाद्बृहद्बृहतो भरद्वाज ऋषिः प्रजापतिगृहीतया त्वया मनः ( १ ) गृह्णामि प्रजाभ्योऽयं पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाणि चाक्षुषाणि जगती वार्षी जगत्या ऋक्षममृक्षमाच्छुक्रः शुक्रात्सप्तदशः सप्तदशाद्वैरूपं वैरूपाद्विश्वामित्र ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्य इदमुत्तरात्सुवस्तस्य श्रोत्रꣳ सौवꣳ शरच्छ्रौत्र्यनुष्टुप्छारद्यनुष्टुभः स्वारꣳ स्वारान्मन्थी मन्थिन एकविꣳश एकविꣳशाद्वैराजं वैराजाज्जमदग्निर्ऋषिः प्रजापतिगृहीतया ( २ ) त्वया श्रोत्रं गृह्णामि प्रजाभ्य इयमुपरि मति-

स्तस्यै वाङ्माती हेमन्तो वांच्यायनः पङ्क्तिः हैमन्ती पङ्क्त्यै निधनंवन्निधनंवत आग्रयण आंग्रयणात्त्रिंणवत्रयस्त्रिꣳशौ त्रिणवत्रयस्त्रिꣳशाभ्याꣳ शाक्वररैवते शाक्वररैवताभ्यां विश्वकर्मर्षिः प्रजापंतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः ( ३ ) ॥

( त्वया मनो जमदग्निर्ऋषिः प्रजापंतिगृहीतया त्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ चतुर्थाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः । )

---

अयम् । पुरः । भुवंः । तस्यं । प्राण इतिं प्र—अनः । भौवायनः । वसन्तः । प्राणायनः । गायत्री । वासन्ती । गायत्रियै । गायत्रम् । गायत्रात् । उपाꣳशुरित्युंप—अꣳशुः । उपाꣳशोरित्युंप—अꣳशोः । त्रिवृदितिं त्रि—वृत् । त्रिवृत इतिं त्रि—वृतः । रथंतरमितिं रथं—तरम् । रथंतरादितिं रथं—तरात् । वसिष्ठः । ऋषिः । प्रजापंतिगृहीतयेतिं प्रजापंति—गृहीतया । त्वया । प्राणमितिं प्र—अनम् । गृह्णामि । प्रजाभ्य इतिं प्र—जाभ्यंः । अयम् । दक्षिणा । विश्वकर्मेतिं विश्व—कर्मा । तस्यं । मनंः । वैश्वकर्म-

( प्राणभृदिष्टकाभिधानम् )

णमिति वैश्व—कर्मणम्। ग्रीष्मः। मानसः। त्रिष्टुक्। ग्रैष्मी। त्रिष्टुभः। ऐडम्। ऐडात्। अन्तर्याम इत्यन्तः—यामः। अन्तर्यामादित्यन्तः—यामात्। पञ्चदश इति पञ्च—दशः। पञ्चदशादिति पञ्च—दशात्। बृहत्। बृहतः। भरद्वाजः। ऋषिः। प्रजापतिगृहीतयेति प्रजापति—गृहीतया। त्वया। मनः (१)। गृह्णामि। प्रजाभ्य इति प्र—जाभ्यः। अयम्। पश्चात्। विश्वव्यचा इति विश्व—व्यचाः। तस्य। चक्षुः। वैश्वव्यचसमिति वैश्व—व्यचसम्। वर्षाणि। चाक्षुषाणि। जगती। वार्षी। जगत्याः। ऋक्षमम्। ऋक्षमात्। शुक्रः। शुक्रात्। सप्तदश इति सप्त—दशः। सप्तदशादिति सप्त—दशात्। वैरूपम्। वैरूपात्। विश्वामित्र इति विश्व—मित्रः। ऋषिः। प्रजापतिगृहीतयेति प्रजापति—गृहीतया। त्वया। चक्षुः। गृह्णामि। प्रजाभ्य इति प्र—जाभ्यः। इदम्। उत्तरादित्युत्—तरात्। सुवः। तस्य। श्रोत्रम्। सौवम्। शरत्। श्रौत्री। अनुष्टुबित्यनु—स्तुप्। शारदी। अनुष्टुभ इत्यनु-स्तुभः। स्वारम्। स्वारात्। मन्थी। मन्थिनः। एकविꣳश इत्येक—विꣳशः। एकविꣳशादित्येक—विꣳशात्। वैराजम्। वैराजात्।

जमदग्निः । ऋषिः । प्रजापतिगृहीतयेति प्रजापति—गृहीतया ( २ ) । त्वया । श्रोत्रम् । गृह्णामि । प्रजाभ्य इति प्र—जाभ्यः । इयम् । उपरि । मतिः । तस्यै । वाक् । माती । हेमन्तः । वाच्यायनः । पङ्क्तिः । हैमन्ती । पङ्क्त्यै । निधनवदिति निधन—वत् । निधनवत इति निधन—वतः । आग्रयणः । आग्रयणात् । त्रिणवत्रयस्त्रिंशाविति त्रिणव—त्रयस्त्रिंशौ । त्रिणवत्रयस्त्रिंशाभ्यामिति त्रिणव—त्रयस्त्रिंशाभ्याम् । शाक्वररैवते इति शाक्वर—रैवते । शाक्वररैवताभ्यामिति शाक्वर—रैवताभ्याम् । विश्वकर्मेति विश्व—कर्मा । ऋषिः । प्रजापतिगृहीतयेति प्रजापति—गृहीतया । त्वया । वाचम् । गृह्णामि । प्रजाभ्य इति प्र—जाभ्यः ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ चतुर्थकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः । )

---

प्रथमेऽनुवाकेऽपस्या उक्ताः । अथ द्वितीये प्राणभृत उच्यन्ते ।

कल्पः—" अयं पुरो भुव इति पञ्चाशतं प्राणभृतो दशदश प्रतिदिशमक्ष्णया दश मध्येऽन्तरा [ मन्तरा ] मुपधाय " इति ।

तत्र पूर्वस्यां दिश्युपधेयानां दशेष्टकानां मन्त्रमाह—

अयं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः

( प्राणभृदिष्टकाभिधानम् )

प्राणायनो गायत्री वासन्ती गायत्रियै गायत्रं गायत्रादुपाꣳशुरुपाꣳशोस्त्रिवृत्त्रिवृतो रथंतरꣳ रथंतराद्वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यः, इति।

भवत्यस्माज्जगदिति भुवः। भुवःशब्दः प्रजापतिमाचष्टे। पुरः पूर्वस्यां दिशि अयं भुवो वर्तत इति शेषः। हे इष्टके तद्रूपाऽसीत्यभिप्रायः। एवमुत्तरेष्वपि वाक्येषु योज्यम्। तस्य भुवःशब्दाभिधेयस्य प्रजापतेः संबन्धी प्राणः। अत एवापत्यत्वमुपचर्य भौवायन इत्युच्यते। तस्य च प्राणस्य श्वासवृत्तिरूपस्यापत्यत्वेनोपचरितः प्राणायनो वसन्त ऋतुः। तस्य च वसन्तस्य संबन्धिनी वासन्ती गायत्री। तस्याश्छन्दोरूपाया गायत्र्याः संबन्धि गायत्रं साम। तस्माच्च गायत्रसाम्न उत्पन्न इवोपांशुग्रहः। तस्माच्चोपांशुग्रहादुत्पन्न इव त्रिवृत्स्तोमः। तस्माच्च त्रिवृत्स्तोमादुत्पन्नमिव रथंतरं साम। तस्माद्रथंतरसाम्न उत्पन्न इव वसिष्ठाख्य ऋषिः। हे इष्टके यथोक्तप्रकारेण प्रजापतिप्राणवसन्तादिरूपोपचारेण प्रजापतिगृहीतया त्वया प्रजाभ्यः सर्वासां प्रजानां प्राणं गृह्णामि प्रजानां प्राणसिद्धये त्वामुपदधामीत्यर्थः। यद्यप्ययमेकवाक्यत्वादेक एव मन्त्रस्तथाऽपि प्रतीष्टकमावृत्त्या दश मन्त्राः संपद्यन्ते॥

अथ दक्षिणस्यां दिश्युपधेयानामिष्टकानां मन्त्रमाह—

अयं दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणं ग्रीष्मो मानसस्त्रिष्टुग्ग्रैष्मी त्रिष्टुभ ऐडमैडादन्तर्यामोऽन्तर्यामात्पञ्चदशः पञ्चदशाद्बृहद्बृहतो भरद्वाज ऋषिः प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्यः, इति।

विश्वानि कर्माणि जगद्व्यापाररूपाणि यस्यासौ विश्वकर्मा प्रजापतिः। दक्षिणा दक्षिणस्यां दिशि योऽयं विश्वकर्मा हे इष्टके तद्रूपा त्वमसि। प्राणवसन्तादिपरम्परेव मनोग्रीष्मादिपरम्परा व्याख्येया। ऐडमिति सामविशेषः॥

अथ पश्चिमायां दिश्युपधेयानामिष्टकानां मन्त्रमाह—

अयं पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाणि चाक्षुषाणि जगती वार्षी जगत्या

ऋक्षममृक्षमाच्छुक्रः शुक्रात्सप्तदशः सप्तद-
शाद्वैरूपं वैरूपाद्विश्वामित्र ऋषिः प्रजापति-
गृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः, इति ।

विश्वं सर्वं जगद्व्यचति व्याप्नोतीति विश्वव्यचाः प्रजापतिः । शेषं पूर्ववद्योजनीयम् । वर्षाणि वर्षर्तुः । ऋक्षममिति सामविशेषः ॥

अथोत्तरस्यां दिश्युपधेयानामिष्टकानां मन्त्रमाह—

इदमुत्तरात्सुवस्तस्य श्रोत्रꣳ सौवꣳ शरच्छ्रौ-
त्र्यनुष्टुप्छारद्यनुष्टुभः स्वारꣳ स्वारान्मन्थी
मन्थिन एकविꣳश एकविꣳशाद्वैराजं
वैराजाज्जमदग्निर्ऋषिः प्रजापतिगृहीतया
त्वया श्रोत्रं गृह्णामि प्रजाभ्यः , इति ।

सौति सर्वं जगत्प्रेरयतीति सुवःशब्दः प्रजापतिवाची । उत्तरस्यां दिशि यदिदं सुवः प्रजापतिशरीरं हे इष्टके त्वं तद्रूपाऽसीति योज्यम् । स्वारमिति सामविशेषः । शेषं पूर्ववद्योज्यम् ॥

अथ मध्यदेश उपधेयानामिष्टकानां मन्त्रमाह—

इयमुपरि मतिस्तस्यै वाङ्माती हेमन्तो
वाच्यायनः पङ्क्तिर्हैमन्ती पङ्क्त्यै निध-
नवन्निधनवत आग्रयण आग्रयणात्त्रिणवत्र-
यस्त्रिꣳशौ त्रिणवत्रयस्त्रिꣳशाभ्याꣳ शाक्वरै-
वते शाक्वररैवताभ्यां विश्वकर्मर्षिः प्रजापति-
गृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः॥, इति ॥

मन्यते कृत्स्नं जगज्जानातीति मतिः प्रजापतिः । ऊर्ध्वायां दिशि येयं मतिः प्रजापतितनुर्हे इष्टके तद्रूपा त्वमसि । मतिनाम्नः प्रजापतेरपत्यरूपा यो वाक्सा माती । वाचोऽपत्यं वाच्यायनः । निधनवदिति सामविशेषः । तत्रैकैकस्मिन्मन्त्रे प्रजापतिरिन्द्रियमृतुश्छन्दः सामविशेषो ग्रहः स्तोमः पृष्ठस्तोत्रं सामर्षिरिति नवानामेतेषां पदार्थानां यद्यपि लोकप्रसिद्धो जन्यजनकभावो नास्ति तथाऽपि मन्त्रार्थत्वेन मनसा भावयितुमिदमुक्तमित्यविरोधः ॥

( प्राणभृदिष्टकाभिधानम् )

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

" प्राणभृत उप दधाति रेतस्येव प्राणान्दधाति तस्माद्वदन्प्राणन्पश्यञ्शृण्वन्पशुर्जायते " [ सं० का० ५ प्र० २ अ० १० ] इति।

पूर्वं रेतोरूपा अपस्या उपहिताः। तत ऊर्ध्वं प्राणभृतामुपधानेन रेतसि प्राणान्स्थापयति। यस्मादेवं गर्भाशये सिक्ते रेतसि प्राणाः स्थाप्यन्ते तस्माद्रेतःकार्यः पशुर्वदनादिभिर्वागादिव्यापारैर्युक्तो जायते॥

सामान्येन विहितं पुनर्विशेषाकारेण विधत्ते—

" अयं पुरो भुव इति पुरस्तादुप दधाति प्राणमेवैताभिर्दाधारायं दक्षिणा विश्वकर्मेति दक्षिणतो मन एवैताभिर्दाधारायं पश्चाद्विश्वव्यचा इति पश्चाच्चक्षुरेवैताभिर्दाधारेदमुत्तरात्सुवरित्युत्तरतः श्रोत्रमेवैताभिर्दाधारेयमुपरि मतिरित्युपरिष्टाद्वाचमेवैताभिर्दाधार " [ सं० का० ५ प्र० २ अ० १० ] इति।

तत्तदिष्टकोपधानेन चित्यस्याग्नेर्यजमानस्य वा प्राणादयो धृता भवन्ति॥

एकैकस्यां दिश्युपधेयानामिष्टकानां संख्यां विधत्ते—

" दशदशोप दधाति सवीर्यत्वाय " [ सं० का० ५ प्र० २ अ० १० ] इति।

एकैकं मन्त्रं दशकृत्व आवर्त्य दशेष्टका उपदध्यात्। तथा सति चितेः सवीर्यत्वदार्ढ्यं भवति॥

अत्रोपधाने वक्रत्वं विधत्ते—

" अक्ष्णयोप दधाति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै " [ सं० का० ५ प्र० २ अ० १० ] इति।

प्रतीच्यामुपक्रम्य प्राच्यामवसाने सत्यार्जवं भवति। नैर्ऋत्यामुपक्रम्यैशान्यां समापनं वक्रत्वम्। एवमितरत्रापि। तदिदमक्ष्णयेत्यनेनोच्यते। पशवोऽपि दक्षिणं पुरोवर्तिनं पादं प्रचाल्य पाश्चात्त्यं वामाङ्गवर्तिपादं प्रचालयन्ति। एवं पशूनां पादचालनेन वक्रत्वम्॥

तत्तद्दिग्विशिष्टा इष्टकास्तत्तन्मन्त्रगतान्वसिष्ठादीनृषींश्च प्रशंसति—

" याः प्राचीस्ताभिर्वसिष्ठ आर्ध्नोद्या दक्षिणास्ताभिर्भरद्वाजो याः प्रतीचीस्ताभिर्विश्वामित्रो या उदीचीस्ताभिर्जमदग्निर्या ऊर्ध्वास्ताभिर्विश्वकर्मा " [ सं० का० ५ प्र० २ अ० १० ] इति।

स्पष्टम्॥

---

१ ख. च. ॰ति। तत्रो॰।

एतद्वेदनं प्रशंसति—

" य एवमेतासामृद्धिं वेदर्ध्नोत्येव य आसामेवं बन्धुतां वेद बन्धुमान्भवति य आसामेवं क्लृप्तिं वेद कल्पतेऽस्मै य आसामेवमायतनं वेदाऽऽयतनवान्भवति य आसामेवं प्रतिष्ठां वेद प्रत्येव तिष्ठति " [ सं० का० ५ प्र० २ अ० १० ] इति ।

ऋद्धिः समृद्धिहेतुत्वं, बन्धूनां समूहो बन्धुता दशानां समूहाकार इत्यर्थः । क्लृप्तिर्वक्र[त्व]कल्पना । आयतनं प्रागादिदेशविशेषः । प्रतिष्ठा तत्र स्थापनम् ॥

अत्र विनियोगसंग्रहः—

अयं प्राणभृतो दध्यात्पञ्चाशत्पञ्चमन्त्रकैः[1] ( तं तु पञ्चभिः ) ॥ १ ॥

अथ मीमांसा ।

प्रथमाध्यायस्य चतुर्थपादेऽष्टादशाधिकरणे चिन्तितम्—

स्तृष्टिवत्प्राणभृत्तत्र सादृश्यं लिङ्गभूमतः ।
अत्रैकमन्त्रगोलिङ्गसमवायो विशिष्यते ॥

" प्राणभृत उपदधाति " इत्यत्रापि स्तृष्टिन्यायेन मन्त्रविधिरिति पूर्वः पक्षः । लिङ्गप्रकरणप्राप्तमन्त्रानुवादेनेष्टकोपधाने विधिः । " रेतस्येव प्राणान्दधाति " इत्यस्य वक्ष्यमाणार्थवादस्योपपत्तये प्राणभृच्छब्देन मन्त्रानुवादः । पूर्वत्र द्वितीयादिमन्त्रेषु स्तृष्टिलिङ्गानां बाहुल्यम् । इह तु प्रथममन्त्र एव प्राणभृल्लिङ्गमाम्नायते—" अयं पुरो भुवस्तस्य प्राणो भौवायनः " इति । एकस्यैव मन्त्रस्य प्राणभृत्त्वेऽपि च्छत्रिणो गच्छन्तीतिवत्तत्सहचरिताः सर्वे मन्त्राः प्राणभृच्छब्देन लक्ष्यन्ते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके
द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ चतुर्थाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः । )

---

प्राचीं दिशां वसन्त ऋतूनामग्निर्देवता ब्रह्म द्रविणं त्रिवृत्स्तोमः स उ पञ्चदशवर्तनिस्त्र्यविर्वयः कृतमयानां पुरोवातो वातः सानग

---

१ क. घ. ङ. 'शतसमम' ।

ऋषिर्दक्षिणा दिशां ग्रीष्म ऋतूनामिन्द्रो देवता क्षत्रं द्रविणं पञ्चदशः स्तोमः स उं सप्तदशवंर्तनिर्दित्यवाड्वयस्त्रेताऽयानां दक्षिणाद्वातो वातः सनातन ऋषिः प्रतीची दिशां वर्षा ऋतूनां विश्वे देवा देवता विट् ( १ ) द्रविणः सप्तदशः स्तोमः स उं एकविंशवर्तनिस्त्रिवत्सो वयो द्वापरोऽयानां पश्चाद्वातो वातोऽहभून ऋषिरुदीची दिशाः शरदृतूनां मित्रावरुणौ देवता पुष्टं द्रविणमेकविंशः स्तोमः स उं त्रिणववर्तनिस्तुर्यवाड्वयं आस्कन्दोऽयानामुत्तराद्वातो वातः प्रत्न ऋषिरूर्ध्वा दिशाः हेमन्तशिशिरावृतूनां बृहस्पतिर्देवता वर्चो द्रविणं त्रिणवः स्तोमः स उं त्रयस्त्रिंशवर्तनिः पष्ठवाह्वयोऽभिभूरयानां विष्वग्वातो वातः सुपर्ण ऋषिः पितरः पितामहाः परेऽवरे ते नः पान्तु ते नोऽवन्त्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याम् ( २ ) ॥

( विट्पष्ठवाह्वयोऽष्टाविंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ चतुर्थाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः । )

---

प्राची । दिशाम् । वसन्तः । ऋतूनाम् । अग्निः । देवता । ब्रह्म । द्रविणम् । त्रिवृदिति त्रि-वृत् । स्तोमः । सः । उ । पञ्चदशवर्तनिरिति पञ्च-दश—वर्तनिः । त्र्यविरिति त्रि—अविः । वयः । कृतम् । अयानाम् । पुरोवात इति पुरः—वातः । वातः । सानगः । ऋषिः । दक्षिणा । दिशाम् । ग्रीष्मः । ऋतूनाम् । इन्द्रः । देवता । क्षत्रम् । द्रविणम् । पञ्चदश इति पञ्च—दशः । स्तोमः । सः । उ । सप्तदशवर्तनिरिति सप्तदश—वर्तनिः । दित्यवाडिति दित्य—वाट् । वयः । त्रेता । अयानाम् । दक्षिणाद्वात इति दक्षिणात्—वातः । वातः । सनातन इति सना—तनः । ऋषिः । प्रतीची । दिशाम् । वर्षाः । ऋतूनाम् । विश्वे । देवाः । देवता । विट् (१)। द्रविणम् । सप्तदश इति सप्त—दशः । स्तोमः । सः । उ । एकविंशवर्तनिरित्येकविंश—वर्तनिः । त्रिवत्स इति त्रि—वत्सः । वयः । द्वापरः । अयानाम् । पश्चाद्वात इति पश्चात्—वातः । वातः । अहभूनः । ऋषिः । उदीची । दिशाम् । शरत् । ऋतूनाम् । मित्रावरुणाविति मित्रा—वरुणौ । देवता । पुष्टम् ।

द्रविणम् । एकविंश इत्येक—विंशः । स्तोमः । सः । उ । त्रिणववर्तनिरिति त्रिणव—वर्तनिः । तुर्यवाडिति तुर्य—वाट् । वयः । आस्कन्द इत्या—स्कन्दः । अयानाम् । उत्तराद्वात इत्युत्तराव्—वातः । वातः । प्रत्नः । ऋषिः । ऊर्ध्वा । दिशाम् । हेमन्तशिशिराविति हेमन्त—शिशिरौ । ऋतूनाम् । बृहस्पतिः । देवता । वर्चः । द्रविणम् । त्रिणव इति त्रि—नवः । स्तोमः । सः । उ । त्रयस्त्रिंशवर्तनिरिति त्रयस्त्रिंश—वर्तनिः । पष्ठवादिति पष्ठ—वाव् । वयः । अभिभूरित्यभि—भूः । अयानाम् । विष्वग्वात इति विष्वक्—वातः । वातः । सुपर्ण इति सु—पर्णः । ऋषिः । पितरः । पितामहाः । परे । अवरे । ते । नः । पान्तु । ते । नः । अवन्तु । अस्मिन् । ब्रह्मन् । अस्मिन् । क्षत्रे । अस्याम् । आशिषीत्या—शिषि । अस्याम् । पुरोधायामिति पुरः—धायाम् । अस्मिन् । कर्मन् । अस्याम् । देवहूत्यामिति देव—हूत्याम् ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

———

( अथ चतुर्थकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः । )

---

द्वितीयेऽनुवाके प्राणभृत इष्टका उक्ताः । अथ तृतीयेऽपानभृत उच्यन्ते । कल्पः—" वाह्यां बाह्यां प्राची दिशामिति पञ्चाशतमपानभृतो यथा प्राणभृतः " इति ।

तत्र प्राच्यां दिश्युपधेयानामिष्टकानां मन्त्रमाह—

प्राची दिशां वसन्त ऋतूनामग्निर्देवता ब्रह्म द्रविणं त्रिवृत्स्तोमः स उ पञ्चदशवर्तनिस्त्र्यविर्वयः कृतमयानां पुरोवातो वातः सानग ऋषिः, इति ।

हे इष्टके दिशां मध्ये या प्राची सा त्वमसि । ऋतूनां मध्ये यो वसन्तस्तद्रूपाऽसि । देवतानां मध्ये योऽग्निस्तद्रूपाऽसि । स्वकीयत्वेन संपादनीयानां द्रविणानां मध्ये विशिष्टब्राह्मण्यरूपं यद्धनं तद्रूपा त्वमसि । स्तोमानां मध्ये त्रिवृन्नामको यः स्तोमस्तद्रूपा त्वमसि । स उ सोऽपि त्रिवृत्स्तोमः पञ्चदशवर्तनिः पञ्चदशस्तोमस्य प्रवर्तकः । वहिष्पवमानस्तोत्रे त्रिवृत्स्तोमप्रवृत्तौ सत्यां तत ऊर्ध्वभाविष्वाज्यस्तोत्रेषु पञ्चदश स्तोमाः प्रवर्तन्ते, तत्प्रवर्तकशक्तिरूपा त्वमसि । वयसां मध्ये सार्धसंवत्सररूपं यद्वयस्तद्रूपा त्वमसि । त्र्यविशब्दः सार्धसंवत्सरमुपलक्षयति । तथा हि—अविजातौ प्रायेण गर्भधारणमारभ्य षष्ठे मास्येव शिशुर्जायते, त्रिसंख्याका अविजन्मकाला यस्य वयसस्तद्वयस्त्र्यविशब्देनोच्यते । अयानां युगानां मध्ये यत्कृतयुगं तद्रूपा त्वमसि । वायूनां मध्ये पुरोवाताख्यो यो वायुस्तद्रूपा त्वमसि । ऋषीणां मध्ये यः सानगाख्य ऋषिस्तद्रूपा त्वमसि ॥

अथ दक्षिणस्यां दिश्युपधेयानां मन्त्रमाह—

दक्षिणा दिशां ग्रीष्म ऋतूनामिन्द्रो देवता क्षत्रं द्रविणं पञ्चदशः स्तोमः स उ सप्तदशवर्तनिर्दित्यवाड्वयस्त्रेताऽयानां दक्षिणाद्वातो वातः सनातन ऋषिः, इति ।

माध्यंदिनेसवने पञ्चदशस्तोममनुष्ठाय तत ऊर्ध्वभाविषु पृष्ठस्तोत्रेषु सप्त-

---

१ ख. च. °ह्यां प्रा° । २ ख. च. °र्तनश° । ३ घ. ङ. °करू° । ४ क. घ. ङ. °नपवमाने ।

( अपानभृदिष्टकाभिधानम् )

दशः स्तोमोऽनुष्ठातव्यः। तथा च स एव पञ्चदशः स्तोमः सप्तदशस्तोमं प्रवर्तयति, तत्र या प्रवर्तनशक्तिः सा त्वमसि। वयसां मध्ये द्विसंवत्सरवयोरूपाऽसि। दित्यवाट्शब्देन संवत्सरद्वयमुपलक्ष्यते। तथा हि—दित्यं पुरुषं बालं वहतीति दित्यवाडजादिभेदेषु यः कश्चिदवान्तरजातिरेडकः। स च संवत्सरद्वयेन पुंवालं वहतीति दित्यवाट्शब्दः संवत्सरद्वयोपलक्षकः। दितिः खण्डनं भाण्डभङ्गादिचापलं तदर्हतीति दित्यः पुंवाल इत्यर्थः। दक्षिणादित्यव्ययं तु दक्षिणस्यां दिशीत्यमुमर्थं ब्रूते। यो वायुर्दक्षिणस्यां वाति स दक्षिणाद्वातः। तेन वातविशेषणेन विशेष्यो यो वायुस्तद्रूपा त्वमसि। शेषं पूर्ववत्॥

प्रतीच्यां दिश्युपधेयानामिष्टकानां मन्त्रमाह—

प्रतीची दिशां वर्षा ऋतूनां विश्वे देवा
देवता विड्द्रविणꣳ सप्तदशः स्तोमः स
उवेकविꣳशवर्तनिस्त्रिवत्सो वयो द्वापरोऽ-
यानां पश्चाद्वातो वातोऽहभून ऋषिः, इति।

त्रयो वत्सा वत्सरा यस्यासौ त्रिवत्सो वर्षत्रयं तत्परिमितं यद्वयस्तद्रूपा त्वमसि। अयन्ति गच्छन्ति तत्तत्कालानुसारेण वर्तन्ते प्राणिनोऽत्रेत्यया युगरूपाः कालविशेषाः, तेषां मध्ये यो द्वापरस्तद्रूपा त्वमसि। पश्चिमायां दिशि यो वायुर्वाति तस्य पश्चाद्वात इति संज्ञा। एतत्संज्ञको यो वातविशेषस्तद्रूपा त्वमसि। अहभून इति कस्यचिद्दषेर्नामधेयम्॥

उदीच्यां दिश्युपधेयानामिष्टकानां मन्त्रमाह—

उदीची दिशाꣳ शरदृतूनां मित्रावरुणौ
देवता पुष्टं द्रविणमेकविꣳशः स्तोमः स उ
त्रिणववर्तनिस्तुर्यवाड्वय आस्कन्दोऽया-
नामुत्तराद्वातो वातः प्रत्न ऋषिः, इति।

पुष्टशब्दः परिचर्यया वर्णत्रयपोषकत्वाच्छूद्रजातिमाचष्टे। अत एव वाजसनेयिनः समामनन्ति—"स शौद्रं वर्णमसृजत्पूषणम्" इति। तुर्यं चतुर्थं चतुर्थसंवत्सरोपक्रमं वहतीति तुर्यवाट्, सार्धत्रिसंवत्सररूपं यद्वयस्तद्रूपा त्वमसि। आ समन्तात्स्कन्दनं धर्मस्य शोषणं यस्मिन्कलौ सोऽयमास्कन्दः। प्रत्न इति कस्यचिदृषेर्नाम॥

मध्यदेश उपधेयानामिष्टकानां मन्त्रमाह—

ऊर्ध्वा दिशाꣳ हेमन्तशिशिरावृतूनां बृहस्पतिर्देवता वर्चो द्रविणं त्रिणवः स्तोमः स उ त्रयस्त्रिꣳशवर्तनिः पष्ठवाद्वयोऽभिभूरयानां विष्वग्वातो वातः सुपर्ण ऋषिः, इति।

वर्चो वर्चस्वान्, चतुर्ष्वपि वर्णेषु यो बलवांस्तद्रूपं धनं त्वमसि। पष्ठे पृष्ठे भारं वहतीति पष्ठवाट्, स एव दकारान्तशब्देनोच्यते। चतुर्थे वर्षे संपूर्णे सति प्रायेण बलीवर्दो भारं वहति। अतो वर्षचतुष्टयरूपं यद्वयस्तद्रूपा त्वमसि। कृत्स्नं धर्ममभिभवतीत्यभिभूः कलियुगावसानकालस्तद्रूपा त्वमसि। नानादिक्षु सांकर्येण संचरन्वायुर्विष्वग्वातसंज्ञकः, तथाविधो यो वायुस्तद्रूपा त्वमसि। सुपर्ण इति कस्यचिदृषेर्नामधेयम्॥

सर्वेष्वेतेषु पञ्चसु मन्त्रेष्वनुषञ्जनीयं शेषमाह—

पितरः पितामहाः परेऽवरे ते नः पान्तु ते नोऽवन्त्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याम्॥, इति॥

हे पितरो हे पितामहा हे परे प्रपितामहादयो हेऽवरे भ्रातृपुत्रादय ईदृशा ये भवन्तः सन्ति ते भवन्तो नोऽस्मान्कर्मानुष्ठानाय पान्तु पालयन्तु। किं च ते भवन्तो नोऽस्मान्पालनसिद्ध्यर्थमवन्तु। अस्मिन्ब्रह्मन्नस्यां ब्राह्मणजातौ, अस्मिन्क्षत्रेऽस्यां क्षत्रियजातौ, अस्यामाशिष्येतस्यां कामनायाम्, अस्यां पुरोधायामेतस्यां राजपौरोहित्यवृत्तौ, अस्मिन्कर्मन्नस्मिंश्चयनरूपे कर्मणि, अस्यां देवहूत्यामेतस्यां देवताह्वानरूपायां क्रियायां च निमित्तभूतायां सत्यां, हे इष्टके त्वामुपदधामीति शेषः॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

“ प्राणभृत उपधाय संयत उप दधाति प्राणानेवास्मिन्धित्वा संयद्भिः सं यच्छति तत्संयताꣳ संयत्त्वमथो प्राण एवापानं दधाति तस्मात्प्राणापानौ संचरतः ” [ सं० का० ५ प्र० २ अ० १० ] इति।

अन्तर्देशे प्राणभृदाख्याः पूर्वोक्ता इष्टका उपधाय बहिर्देशे संयदाख्या

( अपानभृदिष्टकाभिधानम् )

इमा अपानभृत इष्टका उपदध्यात्। तथा सत्यग्नौ प्राणान्स्थापयित्वा संयदाख्याभिरिष्टकाभिः संयच्छति दृढी करोति । अतः संयच्छत्येताभिरिति व्युत्पत्त्या संयन्नाम संपन्नम्। अपि च बहिःसंचाररूपे प्राणे पुनरन्तःसंचाररूपमपानं स्थापयति। तस्माल्लोकेऽपि प्राणापानौ संभूय संचरतः॥

प्राणभृद्भ्यो विपरीतप्रकारं विधत्ते—

"विषूचीरुप दधाति तस्माद्विष्वञ्चौ प्राणापानौ" [सं० का० ५ प्र० २ अ० १०] इति।

यस्मात्प्राणभृतामपानभृतां चान्योन्यविपर्ययक्रमस्तस्माल्लोकेऽपि प्राणापानावन्योन्यविपरीतस्वरूपौ। बहिर्गतिः प्राणोऽन्तर्गतिरपानः॥

संयतामासामुपधानं प्रशंसति—

"यद्वा अग्नेरसंयतमसुवर्ग्यमस्य तत्सुवर्ग्योऽग्निर्यत्संयत उपदधाति समेवैनं यच्छति सुवर्ग्यमेवाकः" [सं० का० ५ प्र० २ अ० १०] इति।

अग्नेः संबन्धि यदङ्गं सम्यङ्न नियमितं तदङ्गं स्वर्गहितं न भवति, अग्निस्तु स्वर्गहितोऽस्माकमपेक्षितः, तस्मादग्निं स्वर्ग्यं कर्तुं संयत उपदध्यात्॥

प्रथममन्त्रे कस्यचिदंशस्य तात्पर्यमाह—

"त्र्यविर्वयः कृतमयानामित्याह वयोभिरेवायानव रुन्धेऽयैर्वया ꣳसि" [सं० का० ५ प्र० २ अ० १०] इति।

सार्धसंवत्सरादिरूपैर्वयोविशेषैरयाभिधेयानि कृतादियुगानि प्राप्नोति। तैश्च युगैस्तान्वयोविशेषान्प्राप्नोति। नहि वयोविशेषमन्तरेण जन्महीनस्य कृतादियुगैः संबन्धोऽस्ति, नापि कृतादियुगरूपस्य कालस्याभावे कश्चिद्वयोविशेषः संभवति। महाप्रलये युगराहित्येन जन्मरहितानां वयोविशेषाद्यदर्शनात्। तस्मादन्योन्यसापेक्षयोर्वयोयुगयोरुभयोरप्यत्रोपादानम्॥

पञ्चस्वपि मन्त्रेषु पुरोवातो दक्षिणाद्वात इत्यादीन्वायुविशेषान्प्रशंसति—

"सर्वतो वायुमतीर्भवन्ति तस्मादयꣳ सर्वतः पवते" [सं० का० ५ प्र० अ० १०] इति।

यस्मादेता इष्टकाः सर्वा अपि वायुशब्दोपेतैर्मन्त्रैरुपधेयास्तस्मादयं लोकेऽपि वायुः सर्वासु दिक्षु संचरति॥

अत्र विनियोगसंग्रहः—

---

१ ख. च. 'पान इति विपर्ययः। सं'। २ क. 'तासु'।

प्राचीत्यपानभृत्संयदितिनामद्वयान्विताः ।
पञ्चाशत्पूर्ववद्दिक्षु मध्ये चोपदधाति ताः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके
तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ चतुर्थाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः । )

---

ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवाऽसि ध्रुवां योनिमा सीद साध्या । उख्यस्य केतुं प्रथमं पुरस्ताद॒श्विनाऽध्वर्यू सादयतामिह त्वा । स्वे दक्षे दक्षपितेह सीद देवत्रा पृथिवी बृहती रराणा । स्वासस्था तनुवा सं विशस्व पितेवैधि सूनव आ सुशेवाऽश्विनाऽध्वर्यू सादयतामिह त्वा । कुलायिनी वसुमती वयोधा रयिं नो वर्ध बहुलꣳ सुवीरम् ( १ ) । अपामतिं दुर्मतिं बाधमाना रायस्पोषे यज्ञपतिमाभजन्ती सुवर्धेहि यजमानाय पोषमश्विनाऽध्वर्यू सादयतामिह त्वा । अग्नेः पुरीषमसि देवयानी तां त्वा विश्वे अभि गृणन्तु देवाः । स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणाऽऽ यजस्वाश्विनाऽध्वर्यू सादयतामिह त्वा । दिवो मूर्धाऽसि पृथिव्या नाभिर्विष्टम्भनी दिशामधिपत्नी भुव-

नानाम् (२)। ऊर्मिर्द्रप्सो अपामसि विश्वकर्मा त ऋषिरश्विनाऽध्वर्यू सादयतामिह त्वा। सजूर्ऋतुभिः सजूर्विधाभिः सजूर्वसुभिः सजू रुद्रैः सजूरादित्यैः सजूर्विश्वैर्देवैः सजूर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाऽध्वर्यू सादयतामिह त्वा। प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्म उर्व्या वि भाहि श्रोत्रं मे श्लोकयापस्पिन्वौषधीर्जिन्व द्विपात्पाहि चतुष्पादव दिवो वृष्टिमेरय (३)॥

(सुवीरं भुवनानामुर्व्या सप्तदश च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

(अथ चतुर्थाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः।)

---

ध्रुवक्षितिरिति ध्रुव—क्षितिः। ध्रुवयोनिरिति ध्रुव—योनिः। ध्रुवा। असि। ध्रुवाम्। योनिम्। एति। सीद। साध्या। उख्यस्य। केतुम्। प्रथमम्। पुरस्तात्। अश्विना। अध्वर्यू इति। सादयताम्। इह। त्वा। स्वे। दक्षे। दक्षपितेति दक्ष—पिता। इह। सीद। देवत्रेति देव—त्रा। पृथिवी। बृहती। रराणा। स्वासस्थेति सु—आसस्था। तनुवा। समिति।

विशस्व । पिता । इव । एधि । सूनवे । एति । सुशेवेति सु—शेवा । अश्विना । अध्वर्यू इति । सादयताम् । इह । त्वा । कुलायिनी । वसुमतीति वसु—मती । वयोधा इति वयः—धाः । रयिम् । नः । वर्ध । बहुलम् । सुवीरमिति सु—वीरम् (१)। अपेति । अमतिम् । दुर्मतिमिति दुः—मतिम् । बाधमाना । रायः । पोषे । यज्ञपतिमिति यज्ञ—पतिम् । आभजन्तीत्या—भजन्ती । सुवः । धेहि । यजमानाय । पोषम् । अश्विना । अध्वर्यू इति । सादयताम् । इह । त्वा । अग्नेः । पुरीषम् । असि । देवयानीति देव—यानी । ताम् । त्वा । विश्वे । अभीति । गृणन्तु । देवाः । स्तोमपृष्ठेति स्तोम—पृष्ठा । घृतवतीति घृत—वती । इह । सीद । प्रजावदिति प्रजा—वत् । अस्मे इति । द्रविणा । एति । यजस्व । अश्विना । अध्वर्यू इति । सादयताम् । इह । त्वा । दिवः । मूर्धा । असि । पृथिव्याः । नाभिः । विष्टम्भनीति वि—स्तम्भनी । दिशाम् । अधिपत्नीत्यधि—पत्नी । भुवनानाम् (२)। ऊर्मिः । द्रप्सः । अपाम् । असि । विश्वकर्मेति विश्व—कर्मा । ते । ऋषिः । अश्विना । अध्वर्यू इति । सादय-

ताम् । इह । त्वा । सजूरिति स—जूः । ऋतुभिरित्यृतु—भिः । सजूरिति स—जूः । विधाभिरिति वि—धाभिः । सजूरिति स—जूः । वसुभिरिति वसु—भिः । सजूरिति स—जूः । रुद्रैः । सजूरिति स—जूः । आदित्यैः । सजूरिति स—जूः । विश्वैः । देवैः । सजूरिति स—जूः । देवैः । सजूरिति स—जूः । देवैः । वयोनाधैरिति वयः—नाधैः । अग्नये । त्वा । वैश्वानराय । अश्विना । अध्वर्यू इति । सादयताम् । इह । त्वा । प्राणमिति प्र—अनम् । मे । पाहि । अपानमित्यप—अनम् । मे । पाहि । व्यानमिति वि—अनम् । मे । पाहि । चक्षुः । मे । उर्व्या । वीति । भाहि । श्रोत्रम् । मे । श्लोकय । अपः । पिन्व । ओषधीः । जिन्व । द्विपादिति द्वि—पात् । पाहि । चतुष्पादिति चतुः—पात् । अव । दिवः । वृष्टिम् । एति । ईरय ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ चतुर्थकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः । )

---

तृतीयेऽनुवाकेऽपानभृदाख्या इष्टका उक्ताः । तावता प्रथमा चितिः समाप्ता। अथ चतुर्थानुवाके द्वितीयस्यां चितावाश्विन्याख्या इष्टका अभिधीयन्ते।

कल्पः—" श्वोभूते पौर्वाह्णिकीभ्यां प्रचर्य द्वितीयां चितिं चिनोति ध्रुव क्षितिरिति पञ्चाऽऽश्विनीरुपदधाति " इति ।

तत्र प्रथमामाह—

ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवाऽसि ध्रुवां योनिमा सीद साध्या । उख्यस्य केतुं प्रथमं पुरस्तादश्विनाऽध्वर्यू सादयतामिह त्वा । , इति ।

ध्रुवा स्थिरा क्षितिर्निवासभूमिर्यस्या इष्टकायाः सा ध्रुवक्षितिः । यस्यां भूमाविष्टका निवसन्ति तस्या भूमेश्चाञ्चल्याभावात्स्थैर्यं द्रष्टव्यम् । ध्रुवा विनाशरहिता योनिरुत्पत्तिहेतुर्मृद्रूपा यस्या इष्टकायाः सा ध्रुवयोनिः । हे इष्टके तादृशी त्वं स्वरूपतोऽपि ध्रुवाऽसि । अर्भकपालादिभिः संयोज्य निर्मितत्वाद्ध्रुवत्वम् । साध्याऽस्माभिः साधनीयोपधातव्या त्वं ध्रुवां योनिं स्थिरमग्निक्षेत्ररूपं स्थानमासीदाऽऽगत्योपविश । तदेव स्थानं विशिष्यते—उख्यस्योखायां स्थितस्याग्नेः केतुं ज्ञापकं प्रथममिष्टकोपधानात्पूर्वमेव निष्पन्नम् । अतो हे इष्टक इहास्मिन्नग्निक्षेत्रे पुरस्तात्पूर्वस्यां दिशि देवानामध्वर्यू उभावश्विनौ त्वां सादयतां स्थापयताम् ॥

अथ द्वितीयामाह—

स्वे दक्षे दक्षपितेह सीद देवत्रा पृथिवी बृहती रराणा । स्वासस्था तनुवा सं विशस्व पितेवैधि सूनव आ सुशेवाऽश्विनाऽध्वर्यू सादयतामिह त्वा । , इति ।

हे इष्टके स्वस्थाने निषीद । तत्र दृष्टान्तः—दक्षपितेति लुप्तोपमा । यथा दक्षपिता दक्षाणां व्यवहारकुशलानां पुत्राणां गृहे पिता निषीदति तद्वत् । देवत्रा देवेषु मध्ये तनुवा स्वकीयेन शरीरेण संविशस्व सम्यगवस्थिता भव । कीदृशी पृथिवी, मृत्कार्यत्वेन भूमिस्वरूपा बृहती प्रौढा रराणा निरुपद्रवत्वाद्रममाणा स्वासस्था सुखकरेऽस्मिन्स्थाने स्थिता । हे इष्टक आसुशेवा सर्वतः सुखेन सेवितुं शक्यैधि भव । क इव, सूनवे पितेव । यथा पुत्राय पिता सुखेन सेव्यो भवति तद्वत् । अश्विनेत्यादि पूर्ववत् ॥

अथ तृतीयामाह—

कुलायिनी वसुमती वयोधा रयिं नो वर्ध बहु-

ळꣳ सुवीरम् । अपामतिं दुर्मतिं बाधमाना रायस्पोषे यज्ञपतिमाभजन्ती सुवर्धेहि यजमानाय पोषमश्विनाऽध्वर्यू सादयतामिह त्वा ।, इति ।

हे इष्टके त्वं कुलायिनी निवासस्थानवती वसुमती धनवती धनप्रदेत्यर्थः । वयोधा दीर्घायुष्यस्यं संपादिका सती नोऽस्मदर्थं बहुलं रयिं प्रभूतं धनं सुवीरं शोभनं पुत्रं च वर्ध संपादय । अमतिं प्रज्ञामान्द्यं दुर्मतिं पापबुद्धिं चापबाधमाना निःशेषेण विनाशयन्ती रायस्पोषे धनपुष्टौ यज्ञपतिमाभजन्ती सर्वतः प्रापयन्ती सुवः स्वर्गलोके यजमानाय यजमानार्थं पोषं पुष्टिं धेहि संपादय । अश्विनेत्यादि पूर्ववत् ॥

अथ चतुर्थीमाह—

अग्नेः पुरीषमसि देवयानी तां त्वा विश्वे अभि गृणन्तु देवाः । स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणाऽऽ यजस्वाश्विनाऽध्वर्यू सादयतामिह त्वा । , इति ।

हे इष्टके देवयानी देवान्प्राप्नुवती त्वमग्नेः पुरीषमसि चित्यस्याग्नेः पूरकं वस्त्वसि । तां तादृशीं त्वां विश्वे देवाः सर्वेऽपि देवा अभिगृणन्तु सर्वतः कीर्तयन्तु । स्तोमपृष्ठा सर्वस्तोमैर्युक्तानि पृष्ठस्तोत्राणि यस्याः सा स्तोमपृष्ठा । पृष्ठैरुपतिष्ठत इति वक्ष्यति । घृतवती होष्यमाणघृतसंयुक्ता सतीहास्मिन्सधस्थे सीद तिष्ठ । अस्मे अस्मभ्यं प्रजावत्पुत्रपौत्रादियुक्तं द्रविणा धनमायजस्व सर्वतो देहि । अश्विनेत्यादि पूर्ववत् ॥

अथ पञ्चमीमाह—

दिवो मूर्धाऽसि पृथिव्या नाभिर्विष्टम्भनी दिशामधिपत्नी भुवनानाम् । उर्मिर्द्रप्सो अपामसि विश्वकर्मा त ऋषिरश्विनाऽध्वर्यू सादयतामिह त्वा । , इति ।

हे इष्टके त्वं सर्वात्मिकाऽसि । कथमिति तदुच्यते—दिवो मूर्धाऽसि द्युलोकस्य शिरःस्थानीय आदित्योऽसि । पृथिव्या नाभिर्भूमेर्नाभिस्थानीयो मेर्वादिरसि । दिशां विष्टम्भनी प्राच्यादीनां दिशां विविधसांकर्येण स्तम्भयन्ती

व्यवस्थापयन्ती । तथा भुवनानां सर्वेषामधिपत्न्याधिक्येन पालयित्री । तथाऽपां य ऊर्मिर्द्रप्सश्च तदुभयरूपाऽसि । विश्वकर्मा प्रजापतिरेव ते तत्र ऋषिर्द्रष्टा । अश्विनेत्यादि पूर्ववत् ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

" उत्सन्नयज्ञो वा एष यदग्निः किं वाऽहैतस्य क्रियते किं वा न यद्वै यज्ञस्य क्रियमाणस्यान्तर्यन्ति पूयति वा अस्य तदाश्विनीरुप दधात्यश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोति " [ सं० का० ५ प्र० ३ अ० १ ] इति ।

योऽयं चीयमानोऽग्निः स एष उत्सन्नयज्ञ एव । अस्मिन्नग्नावनुष्ठेयानामतिबहुलत्वात्सर्वथाऽपि प्रमादादिना क्वचित्किंचिदङ्गमुत्सन्नं भवत्येव । एतस्याग्नेः संबन्धि किं नामाङ्गमनुष्ठितं किं नानुष्ठितमिति को ज्ञातुं शक्नोति । अहशब्दो निषेधार्थः, सर्वथा ज्ञातुं न शक्नोत्येव । तथा सत्यनुष्ठीयमानस्य यज्ञस्य यदङ्गमन्तर्यन्त्यन्तरितं कुर्वन्ति अस्य यज्ञस्यैतदङ्गं पूयत्येव नश्यत्येव । तत्तस्मादन्तरायदोषपरिहारार्थमाश्विनीरिष्टका उपदध्यात् । अश्विदेवयुक्तैर्मन्त्रैरुपधेया इष्टका आश्विन्यः । तदुपधानेन देवभिषग्भ्यामस्मै यज्ञायौषधं करोति ॥

संख्यां विधत्ते—

" पञ्चोप दधाति पाङ्क्तो यज्ञो यावानेव यज्ञस्तस्मै भेषजं करोति " [ सं० का० ५ प्र० ३ अ० १ ] इति ।

कल्पः—" सजूर्ऋतुभिरिति पञ्चर्तव्या आश्विनीरनूपधाय " इति ।

पाठस्तु—

सजूर्ऋतुभिः सजूर्विधाभिः सजूर्वसुभिः सजू रुद्रैः सजूरादित्यैः सजूर्विश्वैर्देवैः सजूर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाऽध्वर्यू सादयतामिह त्वा । , इति ।

हे इष्टके त्वमृतुभिर्वसन्तादिभिः सजूः समानप्रीतिरसि, वसन्तादीनां यादृशी प्रीतिस्तादृशी तवेत्यर्थः । एवमुत्तरत्रापि सजूःशब्दो योज्यः । विविधं जगद्दधति पोषयन्तीति ब्रह्मादयो विधास्तैर्विधाभिः । वसवो रुद्रा आदित्या विश्वे देवा देवाश्च प्रसिद्धास्तैरेतैः पञ्चविधैः पञ्चधा मन्त्रभेदः । पूर्वोत्तरभागौ सर्वत्रानुषज्येते । विधाभिरित्यन्तः पूर्वो भागः । सजूर्देवैर्वयोनाधैरित्याद्युत्तरो

(द्वितीयचितावाश्विन्याख्येष्टकाभिधानम्)

भागः। एतस्मिन्भागे पूर्वोक्ताः सर्वेऽपि समानदेवशब्दाभिधेयाः। ते च सर्वे देवा वयोनाधा आयुष्प्रदा इत्यर्थः। तादृशैर्देवैः समानप्रीतिस्त्वं वैश्वानरायाग्नये सर्वपुरुषाणां हितकारिवह्न्यर्थं त्वामुपदधामीति शेषः। मयोपहितां त्वां देवानामध्वर्यू अश्विनाविह क्षेत्रे स्थापयताम् ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

" ऋतव्या उप दधात्यृतूनां क्लृप्त्यै " [ सं० का० ५ प्र० ३ अ० १ ] इति।

वसन्तादीनामृतूनां स्वस्वव्यापारसामर्थ्यायैतदुपधानम् ॥

इष्टकासंख्यां विधत्ते—

" पञ्चोप दधाति पञ्च वा ऋतवो यावन्त एवर्तवस्तान्कल्पयति " [ सं० का० ५ प्र० ३ अ० १ इति।

हेमन्तशिशिरयोः समासेनर्तूनां पञ्चत्वम्। कल्पयति स्वस्वोचितव्यवहारक्षमान्करोति ॥

मन्त्राणामाद्यन्तानुषङ्गौ[1] विधत्ते—

" समानप्रभृतयो भवन्ति समानोदर्कास्तस्मात्समाना ऋतवः " [ सं० का० ५ प्र० ३ अ० १ ] इति।

सजूर्ऋतुभिः सजूर्विधाभिरित्ययमुपक्रमो भागः प्रभृतिः। समानप्रभृतयः समानोपक्रमाः सर्वे[2] मन्त्रा इत्यर्थः। सजूर्देवैर्वयोनाधैरित्याद्यवसानमुदर्कः। सोऽपि सर्वेषां मन्त्राणां समानः। यस्मान्मन्त्राः समानास्तस्माल्लोकेऽपि मासद्वयात्मकत्वेन सर्वेऽप्यृतवः समानाः ॥

मन्त्रेषु समानमंशमुक्त्वा भेदकमंशं दर्शयति—

" एकेन पदेन व्यावर्तन्ते तस्मादृतवो व्यावर्तन्ते " [ सं० का० ५ प्र० ३ अ० १ ] इति।

वसुभिरित्येकं पदं, तेनेतरेभ्यो मन्त्रेभ्य आद्यमन्त्रो व्यावर्तते। एवं रुद्रादित्यादिभि[3]र्व्यावृत्तिर्योजनीया। यस्मादत्रोपक्रमावसानसाम्ये पदमात्रेण व्यावृत्तिस्तस्माल्लोके मासद्वयात्मकत्वसाम्येऽपि वसन्तग्रीष्मादिपदभेदेन[4] ऋतूनां परस्परं व्यावृत्तिः ॥

कल्पः—" प्राणं मे पाहीति पञ्च प्राणभृत ऋतव्या अनूपधाय " इति।

पाठस्तु—

## प्राणं मे पाह्यपानं मे पाहि

१ क. 'पङ्गं वि'। २ घ. ङ. पञ्च। ३ घ. ङ. 'दिव्याद्व'। ४ क. घ. ङ. 'न व्या'।

व्यानं मे पाहि चक्षुर्म उर्व्या
वि भाहि श्रोत्रं मे श्लोकय , इति ।

हे इष्टके मे मदीयं प्राणं पाहि पालय । एवमुत्तरत्रापि । उर्व्या विशालया दृष्ट्या विभाहि विशेषेण प्रकाशय दर्शनसमर्थं कुर्वित्यर्थः । श्लोकय शब्दसंघाते शक्तं कुरु बहुविधवेदशास्त्रश्रवणसमर्थं कुर्वित्यर्थः ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

" प्राणभृत उप दधात्यृतुष्वेव प्राणान्दधाति तस्मात्समानाः सन्त ऋतवो न जीर्यन्त्यथो प्र जनयत्येवैनान् " [ सं० का० ५ प्र० ३ अ० १ ] इति ।

ऋतव्योपधानादूर्ध्वं प्राणभृत उपधाने सत्यृतुष्वेव प्राणान्स्थापयति । यस्मादेषु स्थापिताः प्राणास्तस्मात्पुनः पुनरावृत्तावप्यृतवः समाना एव दृश्यन्ते न तु जीर्णा भवन्ति । अपि च प्राणस्थापनादेता(ना)नृतून्पुनः पुनरुत्पादयत्येव ॥

ऋतव्याभ्य उत्तरभाविनीः प्राणभृतः प्रकारान्तरेण प्रशंसति—

" एष वै वायुर्यत्प्राणो यदृतव्या उपधाय प्राणभृत उपदधाति तस्मात्सर्वानृतूननु वायुरा वरीवर्ति [ सं० का० ५ प्र० ३ अ० १ ] इति ।

योऽयं प्राणः स एष वायुरेव । तथा सत्यृतव्यानामूर्ध्वं प्राणभृतामुपधानेन सर्वानप्यृतूननुसृत्य वायुः पुनः पुनरावर्तते ॥

कल्पः—" अपस्पिन्वेति पश्चापस्या अनुपरिहारम् " इति ।

पाठस्तु—

अपस्पिन्वौषधीर्जिन्व द्विपात्पाहि चतु-
ष्पादव दिवो वृष्टिमेरय ॥, इति ॥

हे इष्टके त्वमपो जलानि पिन्व प्रीणय । ओषधीश्च जिन्व प्रीणय । द्विपान्मनुष्यशरीरं पाहि पालय । चतुष्पात्पशुशरीरमत्र रक्ष । दिवः सकाशाद्वृष्टिमेरयाऽऽ समन्तात्प्रवर्तय ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

" वृष्टिसनीरुप दधाति वृष्टिमेवाव रुन्धे " [ सं० का० ५ प्र० ३ अ० १ ] इति ।

वृष्टिसनीर्वृष्टिप्रदानेनैतन्नामिका इष्टकाः ॥

तत्र प्रकारविशेषं विधत्ते—

---

१ ख. च. °धीरपि जि° ।

( वयस्याख्येष्टकाभिधानम् )

" यदेकधोपदध्यादेकमृतुं वर्षेदनुपरिहारꣳ सादयति तस्मात्सर्वानृतून्वर्षति " [ सं० का० ५ प्र० ३ अ० १ ] इति ।

पञ्चानामेकप्रयत्नोपधाने सत्येकस्मिन्नेवर्तौ वृष्टिर्भवेन्नेतरेष्वप्यृतुषु । अतस्तत्परिहारायानुक्रमेण परितो हृत्वा स्थापयेत् । प्राचीमुपधाय प्रदक्षिणमिष्टकामावर्त्य दक्षिणामुपदध्यात् ।

पुनरपीष्टकाहस्तः प्रदक्षिणीकृत्य पश्चिमामुपदध्यादित्येवं योजनीयम् । तथा सति सर्वानप्यृतून्प्रति वृष्टिर्भवति ॥

प्राणभृतां वृष्टिसनीनां च पूर्वोत्तरभावं प्रशंसति—

" यत्प्राणभृत उपधाय वृष्टिसनीरुपदधाति तस्माद्वायुप्रच्युता दिवो वृष्टिरीर्ते " [ सं० का० ५ प्र० ३ अ० १ ] इति ।

यस्मात्प्राणभृतः पूर्वभाविन्यो वृष्टिसनयः पश्चाद्भाविन्यस्तस्माल्लोकेऽपि दिवः सकाशात्पूर्वं वायुना प्रेरिता वृष्टिः पश्चात्प्रवर्तते ॥

अत्र विनियोगसंग्रहः—

द्वितीयस्यां चितौ पञ्च ध्रुवेत्याद्याश्विनीस्तथा ।
पञ्चर्तव्याः सजूर्मन्त्रैराद्यन्तावनुषङ्गकौ ॥ १ ॥
वसुरुद्रादित्यविश्वैर्देवैर्मन्त्रभिदा भवेत् ।
प्राणं प्राणभृतः पञ्च ह्यपोऽपस्याश्च पञ्च हि ॥
ता एव वृष्टिसन्याख्याः प्रोक्ता मन्त्रास्तु विंशतिः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ चतुर्थाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः । )

---

त्र्यविर्वयस्त्रिष्टुप्छन्दो दित्यवाड्वयो विराट्छन्दः पञ्चाविर्वयो गायत्री छन्दस्त्रिवत्सो वय उष्णिहा छन्दस्तुर्यवाड्वयोऽनुष्टुप्छन्दः पष्ठवाद्वयो बृहती छन्द उक्षा वयः सतोबृहती छन्द ऋषभो वयः ककुच्छन्दो धेनुर्वयो जगती

छन्दोऽनड्वान्वयः पङ्क्तिश्छन्दो बस्तो वयो विवलं छन्दो वृष्णिर्वयो विशालं छन्दः पुरुषो वयस्तन्द्रं छन्दो व्याघ्रो वयोऽनाधृष्टं छन्दः सिꣳहो वयश्छदिश्छन्दो विष्टम्भो वयोऽधिपतिश्छन्दः क्षत्रं वयो मयन्दं छन्दो विश्वकर्मा वयः परमेष्ठी छन्दो मूर्धा वयः प्रजापतिश्छन्दः ( १ ) ॥

( पुरुषो वयः षड्विꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ चतुर्थाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः । )

---

त्र्यविरिति त्रि—अविः । वयः । त्रिष्टुप् । छन्दः । दित्यवाडिति दित्य—वाट् । वयः । विराडिति वि—राट् । छन्दः । पञ्चाविरिति पञ्च—अविः । वयः । गायत्री । छन्दः । त्रिवत्स इति त्रि—वत्सः । वयः । उष्णिहा । छन्दः । तुर्यवाडिति तुर्य—वाट् । वयः । अनुष्टुबित्यनु—स्तुप् । छन्दः । पष्ठवादिति पष्ठ—वाट् । वयः । बृहती । छन्दः । उक्षा । वयः । सतोबृहतीति सतः—बृहती । छन्दः । ऋषभः । वयः । ककुत् । छन्दः । धेनुः । वयः । जगती । छन्दः ।

(वयस्याख्येष्टकाभिधानम्)

अनड्वान्। वयः। पङ्क्तिः। छन्दः। बस्तः। वयः। विवलमितिं वि—वलम्। छन्दः। वृष्णिः। वयः। विशालमितिं वि—शालम्। छन्दः। पुरुषः। वयः। तन्द्रम्। छन्दः। व्याघ्रः। वयः। अनाधृष्टमित्यना—धृष्टम्। छन्दः। सिंहः। वयः। छदिः। छन्दः। विष्टम्भ इतिं वि—स्तम्भः। वयः। अधिंपतिरित्यधिं—पतिः। छन्दः। क्षत्रम्। वयः। मयन्दम्। छन्दः। विश्वकर्मेतिं विश्व—कर्मा। वयः। परमेष्ठी। छन्दः। मूर्धा। वयः। प्रजापतिरितिं प्रजा—पतिः। छन्दः (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

(अथ चतुर्थकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः।)

---

चतुर्थानुवाक आश्विन्यादीष्टका उक्ताः। अथ पञ्चमे वयस्याख्या इष्टका उच्यन्ते।

कल्पः—"त्र्यविर्वय इति पञ्च दक्षिणस्यां श्रोण्यां पष्ठवाद्वय इति पञ्चोत्तरस्यां बस्तो वय इति दक्षिणेंऽसे वृष्णिर्वय इत्युत्तरे व्याघ्रो वय इति दक्षिणे पक्षे सिंहो वय इत्युत्तर एतद्वा विपरीतं पुरुषो वय इति मध्ये विष्टम्भो वय इति चतस्रो वयस्याः पुरस्तात्प्रतीचीः" इति।

पाठस्तु—

त्र्यविर्वयस्त्रिष्टुप्छन्दो दित्यवाड्वयो विराट्छन्दः पञ्चाविर्वयो गायत्री छन्दस्त्रिवत्सो वय उष्णिहा छन्दस्तुर्यवाड्वयोऽनुष्टुप्छन्दः पष्ठ-

वाड्वयो बृहती छन्द उक्षा वयः सतोबृहती छन्द ऋषभो वयः ककुच्छन्दो धेनुर्वयो जगती छन्दोऽनड्वान्वयः पङ्क्तिश्छन्दो बस्तो वयो विवलं छन्दो वृष्णिर्वयो विशालं छन्दः पुरुषो वयस्तन्द्रं छन्दो व्याघ्रो वयोऽनाधृष्टं छन्दः सिꣳहो वयश्छदिश्छन्दो विष्टम्भो वयोऽधिपतिश्छन्दः क्षत्रं वयो मयन्दं छन्दो विश्वकर्मा वयः परमेष्ठी छन्दो मूर्धा वयः प्रजापतिश्छन्दः॥,इति॥

अविशब्दः पूर्वोक्तरीत्या मासषट्कमुपलक्षयति । ततः सार्धसंवत्सरपरिमितः कालरूयाविरित्युच्यते । हे इष्टके तथाविधं यद्वयस्तद्रूपाऽसि । त्रिष्टुप्चतुश्चत्वारिंशदक्षरा, तादृशं छन्दस्त्वमासि । एवं सर्वत्र योज्यम् । दित्यवाड्द्विवत्सरपरिमितम् । पञ्चाविः सार्धद्विवत्सरपरिमितम् । त्रिवत्सो वत्सरत्रयपरिमितम् । तुर्यवाट्सार्धसंवत्सरत्रयपरिमितम् । पष्ठवात्संवत्सरचतुष्टयपरिमितम् । उक्षा सार्धसंवत्सरचतुष्टयपरिमितम् । तावति हि काले गौः सेक्ता भवति । एवमृषभादिशब्दास्तत्तत्प्रसिद्धार्थद्वारेण तत्तदर्थसंबन्धिवयोविशेषार्थत्वेनोन्नेयाः । विवलविशालादिशब्दा लोकप्रसिद्धच्छन्दांस्यनभिदधाना अपि शतपथब्राह्मणादिप्रसिद्धच्छन्दोविशेषवाचिन इति द्रष्टव्यम् । विश्वकर्मशब्दः प्रजापतिवाची । तत्सांनिध्याद्विष्टम्भक्षत्रमूर्धशब्दाश्च तदीयमेकदेशविशेषमाचक्षते । तत्र विश्वकर्मशब्देन प्रजापत्यायुःपरिमितः काल उपलक्ष्यते । विष्टम्भशब्देन जगद्धारणवाचिनैकस्याः सृष्टेः स्थितिकाल उपलक्ष्यते । क्षत्रशब्दो बलवाची । ततो यावता कालेनोत्पन्नं ब्राह्मण्यं प्रबलं भवति तावान्कालः क्षत्रशब्देनोपलक्ष्यते । मूर्धशब्दो द्युलोकरूपं विराजो मूर्धानमाचष्टे । तेन द्युलोकस्य यावान्कालस्तावान्कालो लक्ष्यते । नानाविधवयोरूपा नानाविधच्छन्दोरूपा च त्वमसीति तात्पर्यार्थः ॥

एतैर्मन्त्रैरुपधेया वयस्याख्या इष्टकास्तासां पूर्वानुवाकावसाने पठिताभिरपस्याभिः सह पौर्वापर्यं निश्चेतुं प्रस्तौति—

“पशवो वै वयस्या नानामनसः खलु वै पशवो नानाव्रतास्तेऽप एवाभि समनसः” [ सं० का० ५ प्र० ३ अ० १ ] इति ।

१ क. घ. ङ. 'ची । या' ।

( वयस्याख्येष्टकाभिधानम् )

वयस्यानां पशुप्राप्तिहेतुत्वात्तद्रूपत्वम् । पशवश्च नानाविधरुचियुक्ताः । य(एक)स्मै पशवे यादृशं तृणादिकं रोचते तादृशमेवान्यस्मा अपि रोचत इति नास्ति नियमः । एकेनाऽऽघ्राय परित्यक्तस्यापि तृणस्यान्येन भक्षणदर्शनात् । अतो नानामनस्कत्वम् । ततो नानाव्रता भिन्नकर्माणः । एकः पशुर्लाङ्गलं वहतेऽपरः शकटमन्यस्तु पृष्ठभारम् । एवं विविधरुचयो विविधव्यापारा अपि पशवोऽपोऽभिलक्ष्य सर्वेऽपि समानमनस्का एव । मध्याह्नकाले युगपदुदकपानदर्शनात् ॥

तत्रान्वयव्यतिरेकाभ्यां वयस्यानामुत्तरभावित्वं विधत्ते—

" यं कामयेतापशुः स्यादिति वयस्यास्तस्योपधायापस्या उप दध्यादसंज्ञानमेवास्मै पशुभिः करोत्यपशुरेव भवति यं कामयेत पशुमान्त्स्यादित्यपस्यास्तस्योपधाय वयस्या उप दध्यात्संज्ञानमेवास्मै पशुभिः करोति पशुमानेव भवति " [ सं० का० ५ प्र० ३ अ० १ ] इति ।

वयःशब्दोपेतैस्त्र्यविर्वयस्त्रिष्टुप्छन्द इत्यादिभिर्मन्त्रैरुपधेया इष्टका वयस्याः । अप्शब्दोपेतैरपस्पिन्वेत्यादिभिर्मन्त्रैरुपधेया इष्टका अपस्याः । तत्रापस्यानामुत्तरभावित्वे ताभिरितरासां पशुरूपाणामभिभूतत्वादस्य यजमानस्य पशुभिरसंज्ञानं करोति, पशुनिमित्तकं संज्ञानमकृतं भवति । अतः पशूनामवज्ञातत्वात्पशुरहितो भवति । पशुरूपाणां वयस्यानामुत्तरभावित्वे पुनरनभिभूतत्वादस्य यजमानस्य पशुभिः संज्ञानं करोति, पशुनिमित्तकं संज्ञानं कृतं भवति । अवज्ञाविपरीत आदरः संज्ञानम् । तेनायं पशुमान्भवत्येव । तस्मादपस्याः पूर्वभाविन्यो वयस्या उत्तरभाविन्य इत्यर्थः ॥

विष्टम्भो वय इत्यादिभिर्मन्त्रैरुपधेयानां प्रा॑ग्देशं विधत्ते—

" चतस्रः पुरस्तादुप दधाति तस्माच्चत्वारि चक्षुषो रूपाणि द्वे शुक्ले द्वे कृष्णे" [ सं० का० ५ प्र० ३ अ० १ ] इति ।

चक्षुरिन्द्रियसंबन्धिनोर्द्वयोर्गोलकयोर्मध्ये प्रौढे द्वे शुक्लमण्डले, तयोर्मध्ये द्वे कृष्णमण्डले इत्येवं रूपचतुष्टयम् ॥

तेषु चतुर्षु मन्त्रेष्वन्तिममन्त्रे यो मूर्धशब्दस्तं प्रशंसति—

" मूर्धन्वतीर्भवन्ति तस्मात्पुरस्तान्मूर्धा " [ सं० का० ५ प्र० ३ अ० १ ] इति ।

मूर्धन्शब्दोपेतैर्मन्त्रैरुपधेया इष्टका मूर्धन्वत्यः । यस्मात्पूर्वस्यां दिश्युपधेया

---

१ ख. च. 'हति अप' । २ ख. च. प्रदेशं ।

मूर्धन्शब्दोपेतमन्त्रसाध्यास्तस्मात्पक्ष्याकारेण चीयमानस्याग्नेरपि मूर्धा पूर्वस्यां दिशि भवति ॥

त्र्यविर्वय इत्यादिमन्त्रपञ्चकेन पष्ठवाड्वय इत्यादिमन्त्रपञ्चकेन चोपधेयाना-मिष्टकानां देशविशेषं विधत्ते—

"पञ्च दक्षिणायाꣳ श्रोण्यामुप दधाति पञ्चोत्तरस्यां तस्मात्पश्चाद्वर्षीयान्पुरस्तात्प्रवणः पशुः" [ सं० का० ५ प्र० ३ अ० १ ] इति।

यस्मादत्र श्रोण्योर्बहव इष्टकास्तस्मात्पशोरपि श्रोणितः पूर्वभागो निम्नः ॥

अथ मन्त्रद्वयेनोपधेययोर्विशेषौ विधत्ते—

"बस्तो वय इति दक्षिणेऽꣳस उप दधाति वृष्णिर्वय इत्युत्तरेऽꣳसावेव प्रति दधाति" [ सं० का० ५ प्र० ३ अ० १ ] इति।

उत्तरे, अंस उपदधातीत्यनुवर्तते । तेनोपधानद्वयेनाग्नेरंसावेव संपादयति ॥

अन्येन मन्त्रद्वयेनोपधेययोर्देशविशेषौ विधत्ते—

"व्याघ्रो वय इति दक्षिणे पक्ष उप दधाति सिꣳहो वय इत्युत्तरे पक्षयोरेव वीर्यं दधाति" [ सं० का० ५ प्र० ३ अ० १ ] इति।

उत्तरे, पक्ष उपदधातीत्यनुवर्तते। व्याघ्रसिंहयोरधिकवीर्योपेतत्वादनेनोपधानद्वयेन पक्षयोर्वीर्यं स्थापयत्येव ॥

अन्येन मन्त्रेणोपधेयाया इष्टकायाः स्थानं विधत्ते—

"पुरुषो वय इति मध्ये तस्मात्पुरुषः पशूनामधिपतिः" [ सं० का० ५ प्र० ३ अ० १ ] इति।

यस्मान्मध्यदेश उपधानमन्त्रे पुरुषशब्दोऽस्ति तस्माल्लोके पुरुषः पशूनां स्वामी भवति। इतरास्तु वयस्याः पशव इत्युक्तम् ॥

अत्र विनियोगसंग्रहः—

त्रियविस्तु ( त्र्यविर्वयो ) वयस्याख्या दध्यादेकोनविंशतिः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

१ घ. ङ. 'मन्त्रार्थसा'। २ ख. च. 'स्मात्प्रकृत्याका'।

( तृतीयचितौ स्वयमातृण्णादीष्टकाभिधानम् )

( अथ चतुर्थाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः । )

---

इन्द्राग्नी अव्यंथमानामिष्टकां दृꣳहतं युवम्। पृष्ठेन द्यावापृथिवी अन्तरिक्षं च वि बाधताम्। विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीं भास्वतीꣳ सूरिमतीमा या द्यां भास्या पृथिवीमोर्वन्तरिक्षमन्तरिक्षं यच्छान्तरिक्षं दृꣳहान्तरिक्षं मा हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय वायुस्त्वाऽभि पातु मह्या स्वस्त्या छर्दिषा ( १ ) शंतमेन तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद। राड्यसि प्राची दिग्विराडसि दक्षिणा दिक्सम्राडसि प्रतीची दिक्स्वराडस्युदीची दिगधिपत्न्यसि बृहती दिगायुर्मे पाहि प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्मे पाहि श्रोत्रं मे पाहि मनो मे जिन्व वाचं मे पिन्वाऽऽत्मानं मे पाहि ज्योतिर्मे यच्छ ( २ )॥

( छर्दिषा पिन्व षट्च। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ चतुर्थाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः । )

---

इन्द्राग्नी इतीन्द्रं—अग्नी । अव्यंथमानाम् । इष्टंकाम् । दृꣳहतम् । युवम् । पृष्ठेनं । द्यावांपृथिवी इति द्यावां—पृथिवी । अन्तरिक्षम् । च । वीतिं । बाधताम् । विश्वकर्मेतिं विश्व—कर्मा । त्वा । सादयतु । अन्तरिक्षस्य । पृष्ठे । व्यचंस्वतीम् । प्रथंस्वतीम् । भास्वंतीम् । सूरिमतीमितिं सूरि—मतीम् । एतिं । या । द्याम् । भासिं । एतिं । पृथिवीम् । एतिं । उरु । अन्तरिक्षम् । अन्तरिक्षम् । यच्छ । अन्तरिक्षम् । दृꣳह । अन्तरिक्षम् । मा । हिꣳसीः । विश्वंस्मै । प्राणायेतिं प्र—अनाय । अपानायेत्यंप—अनाय । व्यानायेतिं वि—अनाय । उदानायेत्युंत्—अनाय । प्रतिष्ठाया इतिं प्रति—स्थायै । चरित्राय । वायुः । त्वा । अभीतिं । पातु । मह्या । स्वस्त्या । छर्दिषा ( १ ) । शंतमेनेति शं—तमेन । तयां । देवतंया । अङ्गिरस्वत् । ध्रुवा । सीद । राज्ञीं । असि । प्राचीं । दिक् । विराडितिं वि—राट् । असि । दक्षिणा । दिक् । सम्राडितिं सम्—राट् । असि । प्रतीचीं । दिक् । स्वराडितिं स्व—राट् । असि । उदींची । दिक् । अधिं-

पत्नीत्यधि—पत्नी । असि । बृहती । दिक् । आयुः । मे । पाहि । प्राणमिति प्र—अनम् । मे । पाहि । अपानमित्यप—अनम् । मे । पाहि । व्यानमिति वि—अनम् । मे । पाहि । चक्षुः । मे । पाहि । श्रोत्रम् । मे । पाहि । मनः । मे । जिन्व । वाचम् । मे । पिन्व । आत्मानम् । मे । पाहि । ज्योतिः । मे । यच्छ (२) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

(अथ चतुर्थकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः ।)

---

पञ्चमेऽनुवाके वयस्याख्या इष्टका उक्ताः । तावता द्वितीयचितिः समाप्ता । अथ षष्ठे तृतीयस्यां चितौ स्वयमातृण्णाद्या उच्यन्ते ।

कल्पः—श्वोभूते पौर्वाह्णिकीभ्यां प्रचर्य तृतीयां चितिं चिनोतीन्द्राग्नी अव्यथमानामिति स्वयमातृण्णामभिमृश्याश्वेनोपघ्राप्य" इति ।

पाठस्तु—

इन्द्राग्नी अव्यथमानामिष्टकां दृꣳहतं युवम् । पृष्ठेन द्यावापृथिवी अन्तरिक्षं च वि बाधताम् ।, इति ।

हे इन्द्राग्नी युवं युवामव्यथमानां भङ्गरहितां स्वयमातृण्णाख्यामिष्टकां दृंहतं दृढां कुरुतम् । इयं चेष्टका स्वकीयेनोपरिभागेन(ण) लोकत्रयं विबाधतां बाधमानेव व्याप्नोत्वित्यर्थः ॥

कल्पः—"विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठ इत्यविदुषा ब्राह्मणेन सह मध्येऽग्नेरुपदधाति" इति ।

पाठस्तु—

विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यच-
स्वतीं प्रथस्वतीं भास्वतीꣳ सूरिमतीमा या
द्यां भास्या पृथिवीमोर्वन्तरिक्षमन्त-
रिक्षं यच्छान्तरिक्षं दृꣳहान्तरिक्षं मा
हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायोदा-
नाय प्रतिष्ठायै चरित्राय वायुस्त्वाऽभि पातु
मह्या स्वस्त्या छर्दिषा शंतमेन तया
देवतयाऽङ्गिरस्वद्ध्रुवा सीद । , इति।

विश्वानि कर्माणि यस्यासौ विश्वकर्मा प्रजापतिः। हे स्वयमातृण्णे प्रजा-पतिस्त्वामन्तरिक्षस्य पृष्ठ उपरि सादयतु। कीदृशीं, व्यचस्वतीं व्यक्तियुक्तां प्रथस्वतीं विस्तारयुक्तां भास्वतीं भायुक्तां सूरिमतीं विद्वद्भिर्ऋत्विग्भिर्युक्तां, तां येयं स्वयमातृण्णा त्वं द्युलोकमाभासि सर्वतः प्रकाशयसि। तथा पृथि-वीमाभासि। उरु विस्तीर्णमन्तरिक्षं चाऽऽभासि। तादृशी त्वमन्तरिक्ष-मिदं यच्छ गन्धर्वाप्सरोगणादिधारकतया नियमय। तथाऽन्तरिक्षं दृंह परोप-द्रवराहित्येन दृढीं कुरु। त्वमपि तदन्तरिक्षं मा हिंसीः। विश्वस्मै सर्वस्मै प्राणापानव्यानोदानाख्यवायुवृत्तिलाभाय, प्रतिष्ठायै स्वगृहे प्रतिष्ठालाभाय चरित्राय शास्त्रीयाचरणाय, प्राणिनामेतस्य सर्वस्य सिद्ध्यर्थमयं वायुस्त्वाम-भितः पातु। केन रक्षणमिति तदुच्यते—मह्या स्वस्त्या महत्या योगक्षेमसं-पत्त्या शंतमेन च्छर्दिषा सुखकारिणा दीप्तिविशेषेण। तव स्वामिभूता या देवता तयाऽनुगृहीता ध्रुवा स्थिरा सती सीदेहोपविश। अङ्गिरस्वदङ्गिरसां चयनानुष्ठाने यथा ध्रुवा स्थिरा तद्वत् ॥

एतन्मन्त्रद्वयसाध्यमभिमर्शनपूर्वकमुपधानं विधत्ते—

" इन्द्राग्नी अव्यथमानामिति स्वयमातृण्णामुप दधातीन्द्राग्निभ्यां वा इमौ लोकौ विधृतावनयोर्लोकयोर्विधृत्यै " [ सं० का० ५ प्र० ३ अ० २ ] इति।

यस्मादिन्द्राग्निभ्यां लोकद्वयं विधृतं तस्मादत्रापि लोकद्वयधारणायेन्द्राग्नी इति मन्त्रः प्रयुज्यते ॥

प्रकारान्तरेणेन्द्राग्नी मन्त्रगतौ प्रशंसति—

" अधृतेव वा एषा यन्मध्यमा चितिरन्तरिक्षमिव वा एषेन्द्राग्नी इत्य-न्द्राग्नी वै देवानामोजोभृतावोजसैवैनामन्तरिक्षे चिनुते धृत्यै " [ सं० का० ५ प्र० ३ अ० २ ] इति।

(तृतीयचितौ स्वयमातृण्णादीष्टकाभिधानम्)

अधस्ताच्चितिद्वयं पूर्वमुक्तमुपरितनं तु चितिद्वयं वक्ष्यते । तस्मादियं तृतीया चितिर्मध्यमा । सा च भूमिस्पर्शाभावात्केनाप्यधृता वर्तते । अतोऽन्तरिक्षसदृशी । अतस्तस्याश्चितेर्धृतिसिद्ध्यर्थमिन्द्राग्नी इति मन्त्रं पठेत् । देवानां मध्ये ताविन्द्राग्नी बलधारिणौ । तद्बलेनैवैनामन्तरिक्षे भूमिस्पर्शमन्तरेण चिनुते । भूमिस्पर्शाभावेऽपि तद्बलेन चितत्वाद्धृता भवति ॥

पूर्वं विहितां स्वयमातृण्णामनूद्य प्रशंसति--

" स्वयमातृण्णामुप दधात्यन्तरिक्षं वै स्वयमातृण्णाऽन्तरिक्षमेवोप धत्ते " [ सं० का० ५ प्र० ३ अ० २ ] इति ।

भूमिस्पर्शाभावादन्तरिक्षसादृश्यम् । यदा स्वयमुपधानविधिस्तदानीमेतद्[1]-नुवादेन पूर्वोक्तो मन्त्रविनियोगो द्रष्टव्यः ॥

उपधानात्प्राचीनमश्वोपघ्रापणं विधत्ते—

" अश्वमुप घ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते " [ सं० का० ५ प्र० ३ अ० २ ] इति ॥

इष्टकागतं छिद्रं प्रशंसति—

" स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्या अथो सुवर्गस्य लोकस्यानुख्यात्यै " [ सं० का० ५ प्र० ३ अ० २ इति ।

सति हि च्छिद्रे श्वासोऽनुपरुद्धः सन्निर्गच्छति । आवरणाभावात्स्वर्गोऽपि द्रष्टुं शक्यते ॥

कल्पः—" राज्ञ्यसि प्राची दिगिति पञ्च दिश्याः प्रतिदिशमेकां मध्ये " इति ।

पाठस्तु—

राज्ञ्यसि प्राची दिग्विराडसि दक्षिणा
दिक्सम्राडसि प्रतीची दिक्स्वराडस्यु-
दीची दिगधिपत्न्यसि बृहती दिक्,इति ।

हे इष्टके त्वं राज्ञी राजमाना दीप्यमाना सती प्राची दिगसि पूर्वदिग्रूपाऽसि । विराड्विविधं राजमाना दक्षिणा दिगसि सम्राट्सम्यग्राजमाना प्रतीची दिगसि । स्वराट्स्वयमेव राजमानोदीची दिगसि । अधिकं पातीत्यधिपत्नी, तादृशी त्वं बृहती प्रौढोर्ध्वा दिगसि ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

---

1 ख. च. °मेव त° ।

विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीं भास्वतीꣳ सूरिमतीमा या द्यां भास्या पृथिवीमोर्वन्तरिक्षमन्तरिक्षं यच्छान्तरिक्षं दृꣳहान्तरिक्षं मा हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय वायुस्त्वाऽभि पातु मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद । , इति।

विश्वानि कर्माणि यस्यासौ विश्वकर्मा प्रजापतिः। हे स्वयमातृण्णे प्रजापतिस्त्वामन्तरिक्षस्य पृष्ठ उपरि सादयतु। कीदृशीं, व्यचस्वतीं व्यक्तियुक्तां प्रथस्वतीं विस्तारयुक्तां भास्वतीं भायुक्तां सूरिमतीं विद्वद्भिर्ऋत्विग्भिर्युक्तां, तां येयं स्वयमातृण्णा त्वं द्युलोकमाभासि सर्वतः प्रकाशयसि। तथा पृथिवीमाभासि। उरु विस्तीर्णमन्तरिक्षं चाऽऽभासि। तादृशी त्वमन्तरिक्षमिदं यच्छ गन्धर्वाप्सरोगणादिधारकतया नियमय। तथाऽन्तरिक्षं दृंह परोपद्रवराहित्येन दृढी कुरु। त्वमपि तदन्तरिक्षं मा हिंसीः। विश्वस्मै सर्वस्मै प्राणापानव्यानोदानाख्यवायुवृत्तिलाभाय, प्रतिष्ठायै स्वगृहे प्रतिष्ठालाभाय, चरित्राय शास्त्रीयाचरणाय, प्राणिनामेतस्य सर्वस्य सिद्ध्यर्थमयं वायुस्त्वामभितः पातु। केन रक्षणमिति तदुच्यते—मह्या स्वस्त्या महत्या योगक्षेमसंपत्त्या शंतमेन च्छर्दिषा सुखकारिणा दीप्तिविशेषेण। तत्र स्वामिभूता या देवता तयाऽनुगृहीता ध्रुवा स्थिरा सती सीदेहोपविश। अङ्गिरस्वदङ्गिरसां चयनानुष्ठाने यथा ध्रुवा स्थिरा तद्वत्॥

एतन्मन्त्रद्वयसाध्यमभिमर्शनपूर्वकमुपधानं विधत्ते—

"इन्द्राग्नी अव्यथमानामिति स्वयमातृण्णामुप दधातीन्द्राग्निभ्यां वा इमौ लोकौ विधृतावनयोर्लोकयोर्विधृत्यै" [ सं० का० ५ प्र० ३ अ० २ ] इति।

यस्मादिन्द्राग्निभ्यां लोकद्वयं विधृतं तस्मादत्रापि लोकद्वयधारणायेन्द्राग्नी इति मन्त्रः प्रयुज्यते॥

प्रकारान्तरेणेन्द्राग्नी मन्त्रगतौ प्रशंसति—

"अधृतेव वा एषा यन्मध्यमा चितिरन्तरिक्षमिव वा एषेन्द्राग्नी इत्याहेन्द्राग्नी वै देवानामोजोभृतावोजसैवैनामन्तरिक्षे चिनुते धृत्यै" [ सं० का० ५ प्र० ३ अ० २ ] इति।

( तृतीयचितौ स्वयमातृण्णादीष्टकाभिधानम् )

अधस्ताच्चितिद्वयं पूर्वमुक्तमुपरितनं तु चितिद्वयं वक्ष्यते। तस्मादियं तृतीया चितिर्मध्यमा। सा च भूमिस्पर्शाभावात्केनाप्यधृता वर्तते। अतोऽन्तारिक्षसदृशी। अतस्तस्याश्चितेर्धृतिसिद्ध्यर्थमिन्द्राग्नी इति मन्त्रं पठेत्। देवानां मध्ये ताविन्द्राग्नी बलधारिणौ। तद्बलेनैवैनामन्तरिक्षे भूमिस्पर्शमन्तरेण चिनुते। भूमिस्पर्शाभावेऽपि तद्बलेन चितत्वाद्धृता भवति॥

पूर्वं विहितां स्वयमातृण्णामनूद्य प्रशंसति--

"स्वयमातृण्णामुप दधात्यन्तरिक्षं वै स्वयमातृण्णाऽन्तरिक्षमेवोप धत्ते" [सं० का० ५ प्र० ३ अ० २] इति।

भूमिस्पर्शाभावादन्तरिक्षसादृश्यम्। यदा स्वयमुपधानविधिस्तदानीमेतद्[1]-नुवादेन पूर्वोक्तो मन्त्रविनियोगो द्रष्टव्यः॥

उपधानात्प्राचीनमश्वोपघ्रापणं विधत्ते—

"अश्वमुप घ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते" [सं० का० ५ प्र० ३ अ० २] इति॥

इष्टकागतं छिद्रं प्रशंसति—

"स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्या अथो सुवर्गस्य लोकस्यानुख्यात्यै" [सं० का० ५ प्र० ३ अ० २ इति।

सति हि च्छिद्रे श्वासोऽनुपरुद्धः सन्निर्गच्छति। आवरणाभावात्स्वर्गोऽपि द्रष्टुं शक्यते॥

कल्पः—"राज्ञ्यसि प्राची दिगिति पञ्च दिश्याः प्रतिदिशमेकां मध्ये" इति।

पाठस्तु—

राज्ञ्यसि प्राची दिग्विराडसि दक्षिणा दिक्सम्राडसि प्रतीची दिक्स्वराडस्युदीची दिगधिपत्न्यसि बृहती दिक्,इति।

हे इष्टके त्वं राज्ञी राजमाना दीप्यमाना सती प्राची दिगसि पूर्वदिग्रूपाऽसि। विराड्विविधं राजमाना दक्षिणा दिगसि सम्राट्सम्यग्राजमाना प्रतीची दिगसि। स्वराट्स्वयमेव राजमानोदीची दिगसि। अधिकं पातीत्यधिपत्नी, तादृशी त्वं बृहती प्रौढोर्ध्वा दिगसि॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

---

१ ख. च. °मेव त°।

" देवानां वै सुवर्गं लोकं यतां दिशः समव्लीयन्त त एता दिश्या अपश्यन्ता उपादधत ताभिर्वै ते दिशोऽदृꣳहन्यद्दिश्या उपदधाति दिशां विधृत्यै " [ सं० का० ५ प्र० ३ अ० २ ] इति ।

देवाः पुरा भूमौ स्थिताः कदाचित्स्वर्गं लोकं गताः । तत्र गच्छतां देवानां संबन्धिन्यो या भूमिष्ठा दिशस्ताः समव्लीयन्त रक्षकाभावात्सम्यग्विशीर्णाः । दिग्वर्तिनां प्राणिनामस्वास्थ्यमेव दिशां विशरणम् । ते देवा विचार्य दिशां धारणसमर्था एता दिश्या नामेष्टका अपश्यन् । दिक्शब्दोपेतैर्मन्त्रैरुपधेया इष्टका दिश्याः । तदुपधानाद्देवानामिव यजमानस्यापि दिशो दृढा भवन्ति ॥

कल्पः—" आयुर्मे पाहीति दश प्राणभृतः पुरस्तादुपधाय " इति ।

पाठस्तु—

आयुर्मे पाहि प्राणं मे पाह्यपानं मे पाहि
व्यानं मे पाहि चक्षुर्मे पाहि श्रोत्रं मे
पाहि मनो मे जिन्व वाचं मे पिन्वाऽऽ-
त्मानं मे पाहि ज्योतिर्मे यच्छ ॥, इति ॥

हे इष्टके मे मदीयमायुः पाहि रक्ष । एवमुत्तरत्रापि योज्यम् । जिन्व प्रीणय । आत्मानं जीवस्वरूपम् । ज्योतिर्यच्छ देहि ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

" दश प्राणभृतः पुरस्तादुप दधाति नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेव पुरस्ताद्धत्ते तस्मात्पुरस्तात्प्राणाः " [ सं० का० ५ प्र० ३ अ० २] इति ।

प्राणशब्दोपेतान्मन्त्रानुपधानकाले बिभ्रतीति प्राणभृतः । शिरसि सप्त च्छिद्राणि अधस्तादुभे तेषु च्छिद्रेषु संचरन्तः प्राणा नवसंख्याकाः । नाभिर्दशमी छिद्ररूपा । अतस्तत्रत्यप्राणेन सह दश प्राणान्पूर्वस्यां दिश्युपधत्ते । यस्मादेते पूर्वस्यां दिश्युपहितास्तस्माल्लोकेऽपि प्राङ्मुखस्य पुरुषस्य श्वासदृष्टिप्रसारादयः पूर्वस्यामेव दिशि भवन्ति ॥

चरममन्त्रे ज्योतिःशब्दं प्रशंसति—

" ज्योतिष्मतीमुत्तमामुप दधाति तस्मात्प्राणानां वाग्ज्योतिरुत्तमा " [ सं० का० ५ प्र० ३ अ० २ ] इति ।

ज्योतिःशब्दयुक्तेन मन्त्रेणोपधातव्येष्टका ज्योतिष्मती । यस्मात्सा चरमा तस्माल्लोकेऽपि स्वार्थप्रकाशकत्वेन ज्योतीरूपा वाक्सर्वेषामिन्द्रियाणामुत्तमा भवति ॥

(बृहत्याख्येष्टकाभिधानम्)

संख्यां प्रशंसति—

"दशोप दधाति दशाक्षरा विराड्विराट्छन्दसां ज्योतिर्ज्योतिरेव पुरस्ताद्धत्ते तस्मात्पुरस्ताज्ज्योतिरुपास्महे" [सं० का० ५ प्र० ३ अ० २] इति।

दीप्तिवाचिना राजतिधातुजन्येन निर्दिश्यमानत्वादियं विराट्छन्दसां मध्ये ज्योतिः। तथा सति तादृग्दशानां पूर्वदिश्युपधानेन ज्योतिरेव तत्र धारितं भवति। यस्मात्पूर्वस्यां दिशि ज्योतिर्धृतं तस्माद्वयं प्रातःसंध्याकाले पूर्वस्यां दिशि ज्योतिर्मण्डलमुपास्महे॥

अत्र विनियोगसंग्रहः—

तृतीयस्यां चिताविन्द्रा स्वयमातृण्णकां स्पृशेत्।
विश्वेत्युपदधात्येनां राज्ञी दिश्यास्तु पञ्चभिः॥
आयुर्दश प्राणभृतो मन्त्राः सप्तदशेरिताः॥ १॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके
षष्ठोऽनुवाकः॥ ६॥

---

(अथ चतुर्थाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः।)

---

मा छन्दः॑ प्र॒मा छन्दः॑ प्रति॒मा छन्दो॑ऽस्री॒विश्छ॒न्दः॑ प॒ङ्क्तिश्छन्द॑ उ॒ष्णिहा॒ छन्दो॑ बृह॒ती छन्दो॑ऽनु॒ष्टुप्छन्दो॑ वि॒राट्छन्दो॑ गाय॒त्री छन्द॑स्त्रि॒ष्टुप्छन्दो॒ जग॑ती॒ छन्दः॑ पृ॒थि॒वी छन्दो॒ऽन्तरि॑क्षं॒ छन्दो॒ द्यौश्छन्दः॒ समा॒श्छन्दो॒ नक्ष॑त्राणि॒ छन्दो॒ मन॒श्छन्दो॒ वाक्छन्दः॑ कृ॒षिश्छन्दो॒ हिर॑ण्यं॒ छन्दो॒ गौश्छन्दो॒ऽजा छन्दो॒ऽश्व॒श्छन्दः॑। अ॒ग्निर्दे॒वता॑ (१) वातो॑ दे॒वता॒ सूर्यो॑ दे॒वता॑ च॒न्द्रमा॑ दे॒वता॒ वस॑वो दे॒वता॑ रु॒द्रा दे॒वता॑ऽऽदि॒त्या दे॒वता॒

---

१ घ. ङ. °ति दशा°।

विश्वे देवा देवता मरुतो देवता बृहस्पतिर्देव-
तेन्द्रो देवता वरुणो देवता मूर्धाऽसि राड्ध्रु-
वाऽसि धरुणा यन्त्र्यसि यमित्रीषे त्वोर्जे त्वा
कृष्यै त्वा क्षेमाय त्वा यन्त्री राड्ध्रुवाऽसि
धरणी धर्त्र्यसि धरित्र्यायुषे त्वा वर्चसे त्वौजसे
त्वा बलाय त्वा ( २ ) ॥

( देवताऽऽयुषे त्वा षट्चं । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके
तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ चतुर्थाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः । )

---

मा । छन्दः । प्रमेति प्र—मा । छन्दः । प्रति-
मेति प्रति—मा । छन्दः । अस्रीविः । छन्दः ।
पङ्क्तिः । छन्दः । उष्णिहा । छन्दः । बृहती ।
छन्दः । अनुष्टुबित्यनु—स्तुप् । छन्दः । विराडिति
वि—राट् । छन्दः । गायत्री । छन्दः । त्रिष्टुप् ।
छन्दः । जगती । छन्दः । पृथिवी । छन्दः । अन्त-
रिक्षम् । छन्दः । द्यौः । छन्दः । समाः । छन्दः ।
नक्षत्राणि । छन्दः । मनः । छन्दः । वाक् । छन्दः ।
कृषिः । छन्दः । हिरण्यम् । छन्दः । गौः । छन्दः ।
अजा । छन्दः । अश्वः । छन्दः । अग्निः । देवता

( बृहत्याख्येष्टकाभिधानम् )

(१)। वातः। देवता। सूर्यः। देवता। चन्द्रमाः। देवता। वसवः। देवता। रुद्राः। देवता। आदित्याः। देवता। विश्वे। देवाः। देवता। मरुतः। देवता। बृहस्पतिः। देवता। इन्द्रः। देवता। वरुणः। देवता। मूर्धा। असि। राट्। ध्रुवा। असि। धरुणा। यन्त्री। असि। यमित्री। इषे। त्वा। ऊर्जे। त्वा। कृष्यै। त्वा। क्षेमाय। त्वा। यन्त्री। राट्। ध्रुवा। असि। धरणी। धर्त्री। असि। धरित्री। आयुषे। त्वा। वर्चसे। त्वा। ओजसे। त्वा। बलाय। त्वा (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ चतुर्थकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः । )

---

षष्ठेऽनुवाके स्वयमातृण्णाद्या इष्टका उक्ताः । अथ सप्तमे बृहत्याख्या इष्टका उच्यन्ते ।

कल्पः—“ षट्त्रिंशतं बृहतीर्मा छन्द इति द्वादश दक्षिणतः पृथिवी छन्द इति द्वादश पश्चादग्निर्देवतेति द्वादशोत्तरतः ” इति ।

पाठस्तु—

मा छन्दः प्रमा छन्दः प्रतिमा छन्दोऽस्त्रीविश्छन्दः पङ्क्तिश्छन्द उष्णिहा छन्दो बृहती छन्दोऽनुष्टुप्छन्दो विराट्छन्दो गायत्री छन्दस्त्रिष्टुप्छन्दो जगती छन्दः पृथिवी छन्दो-

न्तरिक्षं छन्दो द्यौश्छन्दः समाश्छन्दो नक्ष-
त्राणि छन्दो मनश्छन्दो वाक्छन्दः कृषिश्छन्दो
हिरण्यं छन्दो गौश्छन्दोऽजा छन्दोऽश्वश्छन्दः।
अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा
देवता वसवो देवता रुद्रा देवताऽऽदित्या
देवता विश्वे देवा देवता मरुतो देवता
बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता, इति।

अत्र माप्रमाप्रतिमास्त्रीवि(व्यादि)शब्दाभिधेयाश्छन्दोविशेषाः। केचिद्वेदे प्रसिद्धाः केचिल्लोकेष्वपि प्रसिद्धाः। हे इष्टके त्वं मानामकच्छन्दोरूपाऽसि। प्रमानामकच्छन्दोरूपाऽसि। एवं सर्वत्र योज्यम्। अग्न्यादीनां तु देवतात्वं प्रसिद्धम्। हे इष्टके त्वमग्निदेवतारूपाऽसि। एवमुत्तरत्रापि योज्यम्॥

एतैर्मन्त्रैरिष्टकोपधानं विधातुं प्रस्तौति—

“छन्दाꣳसि पशुष्वाजिमयुस्तान्बृहत्युदजयत्तस्माद्बार्हताः पशव उच्यन्ते” [सं० का० ५ प्र० ३ अ० २] इति।

पुरा कदाचिद्गायत्र्यादिच्छन्दोदेवताः परस्परं मात्सर्येण कांचिदाजिं मर्यादां प्राप्ताः। अहमेवाऽऽदौ पशून्स्वी करिष्यामीति प्रतिज्ञा मर्यादा। तदानीं बृहत्याख्या छन्दोदेवता देवतान्तराण्युल्लङ्घ्य स्वयमेवाजयत्। अतस्तदीयनाम्ना पशवो बार्हता इत्येवं प्रसिद्धिं गताः। यथा बृहती छन्दसां मध्ये प्रशस्ता, एवं बृहत्याख्या इष्टका अपि प्रशस्ता इति तात्पर्यार्थः॥

ता एता इष्टका दिग्विशेषेषु विधत्ते—

“मा छन्द इति दक्षिणत उप दधाति तस्माद्दक्षिणावृतो मासाः पृथिवी छन्द इति पश्चात्प्रतिष्ठित्या अग्निर्देवतेत्युत्तरत ओजो वा अग्निरोज एवोत्तरतो धत्ते तस्मादुत्तरतोभिप्रयायी जयति” [सं०का० ५ प्र० ३ अ० २] इति।

माशब्देन मासा उच्यन्ते[३]। दक्षिणदिग्विधानेन दक्षिणादिवृत्तिः, सूर्यस्य गोलकप्रदक्षिणावृत्त्या निष्पाद्यमानत्वाच्चैत्रादिमासा दक्षिणावृतः। पश्चिमदिश्युपधेयानामिष्टकानां मन्त्रेष्वादौ पृथिवीशब्दः पठितः। पृथिवी च सर्वस्य जगतः प्रतिष्ठा। तस्मात्तदुपधानं प्रतिष्ठित्यै भवति। उदीच्यां दिश्युपधेया-

१ ख. च. °न्दादयश्छ°। २ क. घ. ङ. °णादेः सू°। ३ क. च. निष्पद्य°।

नामिष्टकानां मन्त्रादावग्निशब्दः पठितः । अग्निश्च दाहकशक्तियुक्तत्वादोज इत्युच्यते। तस्मादोज एवोदीच्यामुपहितं भवति । यस्मादुदीच्यामग्न्यादिदेवताशक्तिरूपमोजस्तिष्ठति तस्मादुत्तराभिमुखत्वेन प्रयाणं कुर्वंस्तीर्थयात्रादिजन्यपुण्योपेतत्वात्परलोकं जयति ॥

मन्त्रपाठप्राप्तामिष्टकासंख्यां प्रशंसति—

" षट्त्रिꣳशतꣳ सं पद्यन्ते षट्त्रिꣳशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशूनव रुन्धे बृहती छन्दसाꣳ स्वाराज्यं परीयाय यस्यैता उपधीयन्ते गच्छति स्वाराज्यम् " [ सं० का० ५ प्र० ३ अ० २ ] इति।

बृहत्या जितत्वात्पशूनां बार्हतत्वं, जेतृत्वादेव बृहत्याः स्वाराज्यमपि ॥

कल्पः—" मूर्धाऽसि राडिति सप्त वालखिल्याः पुरस्तात्प्रतीचीर्यन्त्री राडिति सप्त पश्चात्प्राचीः " इति।

पाठस्तु—

मूर्धाऽसि राड्ध्रुवाऽसि धरुणा यन्त्र्यसि यमित्रीषे त्वोर्जे त्वा कृष्यै त्वा क्षेमाय त्वा यन्त्री राड्ध्रुवाऽसि धरणी धर्त्र्यसि धरित्र्यायुषे त्वा वर्चसे त्वौजसे त्वा बलाय त्वा ॥, इति ॥

हे इष्टके त्वं मूर्धा मूर्धवदुत्तमा राड्राजमाना चासि। हे इष्टके त्वं ध्रुवा स्थिरा धरुणा धारणहेतुश्चासि। हे इष्टके त्वं यन्त्री स्वयमपि नियता यमित्री सर्वेषां नियमनकारिणी चासि। हे इष्टक इषेऽन्नाय त्वा त्वाम्, उपदधामीति शेषः। ऊर्जे बलाय त्वामुपदधामि। कृष्यै सस्यनिष्पत्तये त्वामुपदधामि। क्षेमाय संपादितस्य धनस्य रक्षणाय त्वामुपदधामि । एतैः सप्तभिर्मन्त्रैः पुरस्तादुपधेयाः। हे इष्टके त्वं यन्त्री नियमोपेता राड्राजमाना चासि । तथा ध्रुवा स्थिरा धरणी धारणहेतुश्चासि। धर्त्री धारणं कुर्वती धरित्री भूमिरूपा चासि। आयुष आयुर्वृद्ध्यर्थं त्वामुपदधामि। वर्चसे कान्त्यर्थं त्वामुपदधामि। ओजःशब्दप्रधातुवृद्ध्यर्थं त्वामुपदधामि । बलाय तेजःकार्यार्थं त्वामुपदधामि । एतैः सप्तभिर्मन्त्रैः पश्चिमायां दिश्युपधानम् ॥

तैरेतैरुभयविधमन्त्रैः साध्यमुपधानं विधत्ते—

" सप्त वालखिल्याः पुरस्तादुप दधाति सप्त पश्चात्सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ प्राणानाꣳ सवीर्यत्वाय " [ सं० का० ५ प्र० ३ अ० २ ] इति।

वालखिल्यनामकैर्मुनिभिरादौ दृष्टत्वादिष्टका अपि वालखिल्याख्याः।

इष्टकागतया सप्तसंख्यया शीर्षण्यच्छिद्रसाम्यं, पुरस्तादेकं सप्तकं पश्चादेकं सप्तकमिति सप्तकयोर्द्वित्वादधोदेशवर्तिच्छिद्रद्वयसाम्यम् । अतः सर्वेषां प्राणानां सवीर्यत्वायेदमुपधानम् ॥

सप्तकद्वये मन्त्रविभागं विधत्ते—

" मूर्धाऽसि राडिति पुरस्तादुप दधाति यन्त्री राडिति पश्चात्प्राणानेवास्मै समीचो दधाति " [ सं० का० ५ प्र० ३ अ० २ ] इति ।

सप्तकद्वयस्य परस्पराभिमुख्येन प्राणानां सम्यक्त्वं संपद्यते । सम्यक्त्वं नाम स्वस्वव्यापारक्षमत्वम् ॥

अत्र विनियोगसंग्रहः—

मा दक्षिणस्यां बृहतीः पृथि पश्चादथोत्तरे ।
अग्निरित्यादिकाः सर्वा द्वादश द्वादशोदिताः ॥ १ ॥
मूर्धा यन्त्री वालखिल्याः पुरः पश्चाच्च सप्तभिः ।
सप्तमे त्वनुवाकेऽस्मिन्मन्त्राः पञ्चाशदीरिताः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके
सप्तमोऽनुवाकः ॥ ७ ॥

---

(अथ चतुर्थाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः ।)

---

आशुस्त्रिवृद्भान्तः पञ्चदशो व्योम सप्तदशः प्रतूर्तिरष्टादशस्तपो नवदशोऽभिवर्तः सविंशो धरुणं एकविंशो वर्चो द्वाविंशः संभरणस्त्रयोविंशो योनिश्चतुर्विंशो गर्भाः पञ्चविंश ओजस्त्रिणवः क्रतुरेकत्रिंशः प्रतिष्ठा त्रयस्त्रिंशो ब्रध्नस्य विष्टपं चतुस्त्रिंशो नाकः षट्त्रिंशो विवर्तोऽष्टाचत्वारिंशो धर्त्रश्चतुष्टोमः ( १ ) ॥

( आशुः सप्तत्रिꣳशत्। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहिताया चतुर्थाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ चतुर्थाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

आशुः। त्रिवृदिति त्रि—वृत्। भान्तः। पञ्चदश इति पञ्च—दशः। व्योमेति वि—ओम। सप्तदश इति सप्त—दशः। प्रतूर्तिरिति प्र—तूर्तिः। अष्टादश इत्यष्टा—दशः। तपः। नवदश इति नव—दशः। अभिवर्त इत्यभि—वर्तः। सविꣳश इति स—विꣳशः। धरुणः। एकविꣳश इत्येक—विꣳशः। वर्चः। द्वाविꣳशः। संभरण इति सं—भरणः। त्रयोविꣳश इति त्रयः—विꣳशः। योनिः। चतुर्विꣳश इति चतुः—विꣳशः। गर्भाः। पञ्चविꣳश इति पञ्च—विꣳशः। ओजः। त्रिणव इति त्रि—नवः। क्रतुः। एकत्रिꣳश इत्येक—त्रिꣳशः। प्रतिष्ठेति प्रति—स्था। त्रयस्त्रिꣳश इति त्रयः—त्रिꣳशः। ब्रध्नस्य। विष्टपम्। चतुस्त्रिꣳश इति चतुः—त्रिꣳशः। नाकः। षट्त्रिꣳश इति षट्—त्रिꣳशः। विवर्त इति वि—वर्तः। अष्टाच-

त्वारिꣳश इत्यष्टा—चत्वारिꣳशः । धर्त्रः । चतुष्टोम इति चतुः—स्तोमः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ चतुर्थकाण्डे तृतीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

सप्तमेऽनुवाके बृहत्याद्या इष्टका अभिहिताः । तावता तृतीया चितिः समाप्ता । अथाष्टमे चतुर्थ्यां चितावक्षणयास्तोमीयाख्यास्विष्टकासु काश्चिदुच्यन्ते ।

कल्पः—" श्वोभूते पौर्वाह्निकीभ्यां प्रचर्य चतुर्थी चितिं चिनोत्याशुस्त्रिवृदग्नेर्भागोऽसीत्येताभ्यामनुवाकाभ्यां यथाब्राह्मणमुपधाय " इति ।

तत्राऽऽद्यानुवाकपाठस्तु—

आशुस्त्रिवृद्भान्तः पञ्चदशो व्योम सप्तदशः प्रतूर्तिरष्टादशस्तपो नवदशोऽभिविवर्तः सविꣳशो धरुण एकविꣳशो वर्चो द्वाविꣳशः संभरणस्त्रयोविꣳशो योनिश्चतुर्विꣳशो गर्भाः पञ्चविꣳश ओजस्त्रिणवः क्रतुरेकत्रिꣳशः प्रतिष्ठा त्रयस्त्रिꣳशो ब्रध्नस्य विष्टपं चतुस्त्रिꣳशो नाकः षट्त्रिꣳशो विवर्तोऽष्टाचत्वारिꣳशो धर्त्रश्चतुष्टोमः ॥, इति ॥

अत्र त्रिवृत्पञ्चदशसप्तदशाष्टादशनवदशादिशब्दाः स्तोमविशेषवाचिनः स्तोमाश्च तृचनिष्ठस्य साम्न आवृत्तिभेदान्निष्पद्यन्ते । आवृत्तिप्रकारस्तु त्रिवृत्पञ्चदशसप्तदशानां समिधमा तिष्ठेत्यस्मिन्ननुवाके सामब्राह्मणोदाहरणेनास्माभिर्व्याख्यातः । एकविंशत्रिणवत्रयस्त्रिंशाख्या अपि स्तोमाः सामब्राह्मणे निरूपिताः । अष्टादशनवदशादयस्तु न्यायेनोन्नेया उपस्तोमाः । ते तु ब्राह्मण आम्नाताः । तदुन्नयनार्थस्त्वावृत्तिप्रकारः सामसूत्रादवगन्तव्यः । अत्र त्रिवृदादयश्चतुष्टोमान्ता अष्टादशसंख्याकाः स्तोमविशेषा आम्नाताः । आशुर्भान्त इत्यादीनि स्तोमविशेषणानि । तत्र कानिचिद्गुणवाचीनि कानिचिद्द्रव्यवा-

( चतुर्थचितावक्ष्णयास्तोमीयाख्येष्टकासु कासांचिदभिधानम् )

चीनि। तथा सति गुणसंबन्धं द्रव्यतादात्म्यं वा स्तोमेषूपचर्य तत्तत्स्तोमरूपत्वं तत्तदिष्टकायाः प्रशंसार्थमुपन्यस्यते। तत्रैवमक्षरयोजना—आशुः शैघ्र्यगुणोपेतो यस्त्रिवृत्स्तोमो हे इष्टके तद्रूपा त्वमसि। एवमुत्तरत्रापि योज्यम्। भान्तो भासमानः। व्योम प्रसिद्धं द्रव्यम्। प्रकृष्टा तूर्तिस्त्वरा यस्यासौ प्रतूर्तिः शीघ्रकारिणीत्यर्थः। तपः प्रसिद्धम्। अभिवर्तः सामविशेषः। सह विंशत्या संख्यया वर्तत इति सविंशः स्तोमविशेषः। धरुणो धारकः। वर्चो बलहेतुः। संभरणः सम्यक्पोषकः। योनिः प्रजोत्पादकः। गर्भाः प्रसिद्धाः। ओजोऽष्टमधातुः। क्रतुर्ज्योतिष्टोमादिः। प्रतिष्ठा स्थितिहेतुः। ब्रध्नस्याऽऽदित्यस्य विष्टपं निवासस्थानम्। 'असौ वा आदित्यो ब्रध्नः' इतिश्रुत्यन्तरात्। नाकः स्वर्गाख्यभोगभूमिः। विपरीतत्वेन वर्तनं यस्यासौ विवर्तः। त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशा अनेनैवाऽऽम्नातक्रमेण क्वचिदनुष्ठीयन्ते, क्वचित्तु विपरीतक्रमेण। अत एव सूत्रकारेण क्वचिदुक्तम्—"त्रयस्त्रिंशारम्भणास्त्रिवृदुत्तमाः" इति। धर्त्रो धारकः। चतुष्टोमस्त्रिवृत्पञ्चदशसप्तदशैकविंशानां समूहः। एतैः स्तोमवाचिभिरष्टादशभिर्मन्त्रैः स्तोमरूपत्वमापादिता अष्टादशेष्टका उपदध्यात्॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

"देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एता अक्ष्णयास्तोमीया अपश्यन्ता अन्यथाऽनूच्यान्यथोपादधत तदसुरा नान्ववायन्ततो देवा अभवन्पराऽसुरा यदक्ष्णयास्तोमीया अन्यथाऽनूच्यान्यथोपदधाति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवति" [सं० का० ५ प्र० ३ अ० ३] इति।

पुरा कदाचिद्देवसाम्यं प्राप्तुमसुरा देवसमीपे गूढचारिणं पुरुषमवस्थाप्य तन्मुखेनावगत्य देवा यज्ञे यद्यदङ्गमकुर्वंस्तत्सर्वं स्वयमपि तथैवानुष्ठितवन्तः। ततस्तान्वञ्चयितुं देवा अक्ष्णयास्तोमीयाख्या एता इष्टका अपश्यन्। स्तोमवाचिशब्दोपेतैर्मन्त्रैरुपधेयत्वात्स्तोमीयाः। तत्रापि मन्त्रपाठक्रममुल्लङ्घ्य वक्रत्वेनानुष्ठेयत्वादक्ष्णयास्तोमीयाः। कथं वक्रत्वमिति तदुच्यते—अन्यथा मन्त्रानुवचनमन्यथेष्टकोपधानमिति वक्रत्वम्। भान्तः पञ्चदश इत्ययमनुवचने द्वितीयो मन्त्रः, उपधाने तुरीयः। व्योम सप्तदश इत्यनुवचने तृतीयो मन्त्रः, उपधाने तु द्वितीयः। एवं सर्वत्र वक्रत्वं द्रष्टव्यम्। तदानीं गूढचारी विभ्रान्तः। तन्मुखादनवगतशब्दा असुरा देवाननुगन्तुं नाशक्नुवन्। ततोऽसुराणां पराभवो देवानां जयश्चाऽऽसीत्। तस्माद्यजमानोऽपि तथैवोपदध्यात्। तदुपधानं भ्रातृव्याभिभूत्यै स्वस्य जयाय च संपद्यते॥

तदेवं सामान्याकारेण विधाय विशेषाकारेण प्रथमं मन्त्रं विनियुङ्क्ते—

" आशुस्त्रिवृदिति पुरस्तादुप दधाति यज्ञमुखं वै त्रिवृद्यज्ञमुखमेव पुरस्ताद्वि यातयति " [ सं० का० ५ प्र० ३ अ० ३ ] इति ।

स्तोमानां मध्ये प्रथमभावित्वात्त्रिवृतो यज्ञमुखत्वम् । तन्मन्त्रेणोपधानेन पूर्वस्यां दिशि यज्ञमुखं प्रसारयति ॥

अथानुवचने तृतीयं मन्त्रं विनियुङ्क्ते—

" व्योम सप्तदश इति दक्षिणतोऽन्नं वै व्योमान्नꣳ सप्तदशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते " [ सं० का० ५ प्र० ३ अ० ३ ] इति ।

व्योमवदाकाशबहुले क्षेत्रे बहुधान्यनिष्पत्तेर्व्योम्नोऽन्नत्वम् । सप्तदशस्तोमस्यान्नसंपादकैर्वैश्यैः सह प्रजापतेर्मध्यदेशादुत्पन्नत्वादन्नत्वम् । यस्मादीदृशेन मन्त्रेण दक्षिणस्यां दिश्युपधानं तद्दिश्यन्नोपधानतुल्यं तस्माल्लोकेऽपि हि दक्षिणहस्तेनान्नं भुज्यते ॥

अथ सप्तममन्त्रं विनियुङ्क्ते—

" धरुण एकविꣳश इति पश्चात्प्रतिष्ठा वा एकविꣳशः प्रतिष्ठित्यै " [ सं० का० ५ प्र० ३ अ० ३ ] इति ।

सामिधेनीप्रकरण एकविंशस्तोमानां प्रतिष्ठेत्याम्नातत्वादस्य प्रतिष्ठात्वम् ॥

अथ द्वितीयं मन्त्रं विनियुङ्क्ते—

" भान्तः पञ्चदश इत्युत्तरत ओजो वै भान्त ओजः पञ्चदश ओज एवोत्तरतो धत्ते तस्मादुत्तरतोभिप्रयायी जयति " [ सं० का० ५ प्र० ३ अ० ३ ] इति ।

भासं[1]नस्यौजःकार्यत्वादोजस्त्वम् । अन्यत्र पञ्चदशो वज्र इत्याम्नातत्वादोजोवद्बलहेतुत्वा[2]च्चौजस्त्वम् ॥

अथ चतुर्थं मन्त्रं विनियुङ्क्ते—

" प्रतूर्तिरष्टादश इति पुरस्तादुप दधाति द्वौ त्रिवृतावभिपूर्वं यज्ञमुखे वि यातयति " [ सं० का० ५ प्र० ३ अ० ३ ] इति ।

अष्टादशस्तोमस्य पूर्वोत्तरभागयोर्नवसंख्योपेतत्वाद्द्वौ त्रिवृतौ संपद्येते । तौ चाभिपूर्वमनुक्रमेण यज्ञमुखे प्रसारयति ॥

अथ षष्ठं मन्त्रं विनियुङ्क्ते—

" अभिवर्तः सविꣳश इति दक्षिणतोऽन्नं वा अभिवर्तोऽन्नꣳ सविꣳशोऽ-

---

१ घ. ङ. 'समान' । २ ख. घ. ङ. च. 'त्वादोज' ।

न्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते " [ सं० का० ५ प्र० ३ अ० ३ ] इति ।

अभिवर्तसाम्नोऽन्नसाधनत्वादन्नत्वम् । विंशस्तोमस्य दशसंख्याकद्वयोपेतस्य विराड्द्वाराऽन्नत्वम् ॥

अथाष्टमं मन्त्रं विनियुङ्क्ते—

" वर्चो द्वाविꣳश इति पश्चाद्यद्विꣳशतिर्द्वे तेन विराजौ यद्द्वे प्रतिष्ठा तेन विराजोरेवाभिपूर्वमन्नाद्ये प्रति तिष्ठति " [ सं० का० ५ प्र० ३ अ० ३ ] इति ।

द्वाविंशतिसंख्यामध्ये येयं विंशतिस्तेन विंशतिसंख्याविशेषेण दशसंख्योपेते द्वे विराजौ संपद्येते। विंशतेरुपरि ये द्वे तेन द्विसंख्याविशेषेण पादयोरिव प्रतिष्ठाहेतुत्वम् । तथा सति विराजोः संबन्धिन्येवान्नाद्ये क्रमेण प्रतिष्ठितो भवति ॥

अथ पञ्चममन्त्रं विनियुङ्क्ते—

" तपो नवदश इत्युत्तरतस्तस्मात्सव्यो हस्तयोस्तपस्वितरः " [ सं० का० ५ प्र० ३ अ० ३ ] इति ।

यस्मादुदीच्यां दिशि तप इति मन्त्रः प्रवर्तते तस्मादुत्तरदिग्वर्ती वामहस्तो द्वयोर्हस्तयोर्मध्येऽतिशयेन तपस्वी, दक्षिणहस्तवद्भोजनशक्त्यभावादनशनस्य तपोरूपत्वात् ॥

अथ दशमं मन्त्रं विनियुङ्क्ते—

" योनिश्चतुर्विꣳश इति पुरस्तादुप दधाति चतुर्विꣳशत्यक्षरा गायत्री गायत्री यज्ञमुखं यज्ञमुखमेव पुरस्ताद्वि यातयति " [ सं० का० ५ प्र० ३ अ० ३ ] इति ।

प्रातःसवने प्रवृत्तत्वाद्गायत्र्या यज्ञमुखत्वम् ॥

अथैकादशं मन्त्रं विनियुङ्क्ते—

" गर्भाः पञ्चविꣳश इति दक्षिणतोऽन्नं वै गर्भा अन्नं पञ्चविꣳशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते " [सं० का० ५ प्र० ३ अ० ३] इति ।

गर्भाणामन्नकार्यत्वादन्नत्वं, पञ्चविंशस्यान्नहेतुत्वादन्नत्वम् ॥

अथ द्वादशं मन्त्रं विनियुङ्क्ते—

" ओजस्त्रिणव इति पश्चादिमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रति तिष्ठति " [ सं० का० ५ प्र० ३ अ० ३ ] इति ।

त्रिणवे त्रिसंख्याया विद्यमानत्वाल्लोकत्रयरूपत्वम् ॥

---

१ क. घ. ङ. °ख्याद्व° । २ क. ख. च. °तुत्वात्प्रतिष्ठा । तादृशद्विसंख्याविशेषेण त° ।

अथ नवमं मन्त्रं विनियुङ्क्ते—

" संभरणस्त्रयोविꣳश इत्युत्तरतस्तस्मात्सव्यो हस्तयोः संभार्यतरः " [ सं० का० ५ प्र० ३ अ० ३ ] इति ।

सम्यग्भरणीयं भिक्षापात्रादिकं येन वामहस्तेन सोऽयं संभार्यतरः[1][2] । यतः सोऽतिशयेन हस्तयोरुभयोर्मध्ये धार्यं धारयति ॥

अथ त्रयोदशं मन्त्रं विनियुङ्क्ते—

" क्रतुरेकत्रिꣳश इति पुरस्तादुप दधाति वाग्वै क्रतुर्यज्ञमुखं वाग्यज्ञमुखमेव पुरस्ताद्वि यातयति " [ सं० का० ५ प्र० ३ अ० ३ ] इति ।

मन्त्रनिष्पाद्यत्वात्क्रतोर्वाग्रूपत्वम् । सा च वाग्यज्ञस्य मुखं, प्रथमं मन्त्रमुच्चार्य पश्चादनुष्ठेयत्वात् ॥

अथ पञ्चदशं मन्त्रं विनियुङ्क्ते—

" ब्रध्नस्य विष्टपं चतुस्त्रिꣳश इति दक्षिणतोऽसौ वा आदित्यो ब्रध्नस्य विष्टपं ब्रह्मवर्चसमेव दक्षिणतो धत्ते तस्माद्दक्षिणोऽर्धो ब्रह्मवर्चसितरः " [ सं० का० ५ प्र० ३ अ० ३ ] इति ।

यद्यप्यादित्य एव ब्रध्नो विष्टपं तु तस्य निवासस्थानं तथाऽप्यत्राभेद उपचर्यते । दक्षिणस्यां दिश्यादित्यसंबन्धिमन्त्रेणोपधानाद्दक्षिणहस्तो ब्रह्मवर्चसाधिकः[3] । दक्षिणहस्ते ब्रह्मवर्चसशब्दाभिधेयं यद्वैदिकहोमपूजादिकं धारयति तस्माद्दक्षिणभाग एवातिशयेन ब्रह्मवर्चसयुक्तः[4] । अत एवाऽऽशीर्वादादौ स एव[5] हस्तः प्रसरति ॥

अथ चतुर्दशं मन्त्रं विनियुङ्क्ते—

" प्रतिष्ठा त्रयस्त्रिꣳश इति पश्चात्प्रतिष्ठित्यै " [ सं० का० ५ प्र० ३ अ० ३ इति ।

मन्त्रगतेनैव प्रतिष्ठाशब्देन प्रतिष्ठा सूचिता ॥

अथ षोडशं मन्त्रं विनियुङ्क्ते—

" नाकः षट्त्रिꣳश इत्युत्तरतः सुवर्गो वै लोको नाकः सुवर्गस्य लोकस्य समष्ट्यै " [ सं० का० ५ प्र० ३ अ० ३ ] इति ।

नाकशब्दार्थः प्रसिद्ध एव ॥

अत्र विनियोगसंग्रहः—

---

१ घ. ङ. °भार्यः । स चाति° । २ ख. च. °रः । स चाति° । ३ ख. च. °कः । यद्वै° । ४ घ. ङ. °क्तः । आशी° । ५ ख. च. °व प्रसक्तः । अ° ।

( अवशिष्टाक्ष्णयास्तोमीयाख्येष्टकाभिधानम् )

" आशुरष्टादशाऽऽद्ध्यादक्ष्णयास्तोमसंयुताः ॥१॥" इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठकेऽ-
ष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ चतुर्थाष्टके तृतीयप्रपाठके नवमोऽनुवाकः । )

---

अ॒ग्नेर्भा॒गो॑ऽसि दी॒क्षाया॒ आधि॑पत्यं॒ ब्रह्म॑ स्पृ॒तं त्रि॒वृत्स्तोम॒ इन्द्र॑स्य भा॒गो॑ऽसि॒ विष्णो॑रा॒धि॑पत्यं क्ष॒त्र२ं॑ स्पृ॒तं प॑ञ्चद॒शः स्तोमो॑ नृ॒चक्ष॑सां भा॒गो॑ऽसि धा॒तुराधि॑पत्यं ज॒नित्र२ं॑ स्पृ॒त२ं॑ स॑प्तद॒शः स्तोमो॑ मि॒त्रस्य॑ भा॒गो॑ऽसि॒ वरु॑णस्याऽऽधि॑पत्यं दि॒वो वृ॒ष्टिर्वाता॑ः स्पृ॒ता ए॑कवि॒२ंशः स्तोमोऽदि॑त्यै भा॒गो॑ऽसि पू॒ष्ण आधि॑पत्य॒मोजः॑ स्पृ॒तं त्रि॒णवः॑ स्तोमो॒ वसू॑नां भा॒गो॑ऽसि ( १ ) रु॒द्राणा॒माधि॑पत्यं॒ चतु॑ष्पात्स्पृ॒तं चतु॑र्वि॒२ंशः स्तोम॑ आदि॒त्यानां॑ भा॒गो॑ऽसि म॒रुता॒माधि॑पत्यं॒ गर्भा॑ः स्पृ॒ताः प॑ञ्चवि॒२ंशः स्तोमो॑ दे॒वस्य॑ सवि॒तुर्भा॒गो॑ऽसि बृह॒स्पते॒राधि॑पत्य२ं स॒मीची॒र्दिशः॑ स्पृ॒ताश्च॑तुष्टो॒मः स्तोमो॒ यावा॑नां भा॒गो॑ऽस्यया॒वाना॒माधि॑पत्यं प्र॒जाः स्पृ॒ताश्च॑तुश्चत्वारि॒२ंशः स्तोम॑ ऋभू॒णां भा॒गो॑ऽसि॒ विश्वे॑षां दे॒वाना॒-

माधिंपत्यं भूतं निशान्तः स्पृतं त्रयस्त्रिंशः स्तोमः ( २ ) ॥

( वसूनां भागोऽसि षट्चत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ चतुर्थाष्टके तृतीयप्रपाठके नवमोऽनुवाकः । )

---

अग्नेः । भागः । असि । दीक्षायाः । आधिंपत्यमित्याधिं—पत्यम् । ब्रह्म । स्पृतम् । त्रिवृदितिं त्रि—वृत् । स्तोमः । इन्द्रस्य । भागः । असि । विष्णोः । आधिंपत्यमित्याधिं—पत्यम् । क्षत्रम् । स्पृतम् । पञ्चदश इतिं पञ्च—दशः । स्तोमः । नृचक्षसामितिं नृ—चक्षसाम् । भागः । असि । धातुः । आधिंपत्यमित्याधिं—पत्यम् । जनित्रम् । स्पृतम् । सप्तदश इतिं सप्त—दशः । स्तोमः । मित्रस्य । भागः । असि । वरुणस्य । आधिंपत्यमित्याधिं—पत्यम् । दिवः । वृष्टिः । वाताः । स्पृताः । एकविंश इत्येक—विंशः । स्तोमः । अदित्यै । भागः । असि । पूष्णः । आधिंपत्यमित्याधिं—पत्यम् । ओजः । स्पृतम् । त्रिणव इतिं त्रि—नवः । स्तोमः । वसूनाम् । भागः । असि ( १ ) । रुद्राणाम् । आधिं-

पत्यमित्याधिं—पत्यम् । चतुंष्पादिति चतुंः—पात् । स्पृतम् । चतुर्विंशश इतिं चतुः—विंशः । स्तोमंः । आदित्यानांम् । भागः । असि । मरुतांम् । आधिंपत्यमित्याधिं—पत्यम् । गर्भाः । स्पृताः । पञ्चविंश इतिं पञ्च—विंशः । स्तोमंः । देवस्यं । सवितुः । भागः । असि । बृहस्पतेः । आधिंपत्यमित्याधिं—पत्यम् । समीचीः । दिशः । स्पृताः । चतुष्टोम इतिं चतुः—स्तोमः । स्तोमंः । यावांनाम् । भागः । असि । अयांवानाम् । आधिंपत्यमित्याधिं—पत्यम् । प्रजा इतिं प्र—जाः । स्पृताः । चतुश्चत्वारिंश इतिं चतुः—चत्वारिंशः । स्तोमंः । ऋभूणाम् । भागः । असि । विश्वेंषाम् । देवानांम् । आधिंपत्यमित्याधिं—पत्यम् । भूतम् । निशांन्तमिति नि—शान्तम् । स्पृतम् । त्रयस्त्रिंश इतिं त्रयः—त्रिंशः । स्तोमंः ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ चतुर्थकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः । )

---

अष्टमेऽनुवाके काश्चिदक्ष्णयास्तोमीयाख्या इष्टका उक्ताः । अथ नवमेऽवशिष्टास्ता उच्यन्ते ।

तासामवशिष्टानामिष्टकानां मन्त्रेषु प्रथमं मन्त्रमाह—

अग्नेर्भागोऽसि दीक्षाया आधिपत्यं
ब्रह्म स्पृतं त्रिवृत्स्तोमः, इति।

हे इष्टके योऽयमग्नेर्भागो हविर्लक्षणः, यच्च दीक्षा[1]देवताया आधिपत्यं स्वामित्वं स्पृतं ब्रह्म देवानां प्रीतिकरं मन्त्रजातं ब्राह्मणजातिर्वा, योऽपि त्रिवृदाख्यः स्तोमविशेषस्तत्सर्वं त्वमसि ॥

अथ द्वितीयं मन्त्रमाह—

इन्द्रस्य भागोऽसि विष्णोराधिपत्यं
क्षत्रꣳ स्पृतं पञ्चदशः स्तोमः, इति।

हे इष्टके योऽयमिन्द्रस्य भागो हविर्विशेषः, यच्च विष्णोः परमेश्वरस्याऽऽधिपत्यं, यदपि स्पृतं प्रीतिहेतुः क्षत्रं बलं क्षत्रियजातिर्वा, योऽपि पञ्चदशाख्यः स्तोमस्तत्सर्वं त्वमसि ॥

अथ तृतीयं मन्त्रमाह—

नृचक्षसां भागोऽसि धातुराधिपत्यं
जनित्रꣳ स्पृतꣳ सप्तदशः स्तोमः, इति।

ये मनुष्याः सन्तश्चक्षते वेदं व्यक्तमुच्चारयन्ति ते नृचक्षस ऋत्विगादयस्तेषां भागो दक्षिणारूपो गवादिः। धातुः प्रजापतेर्यदाधिपत्यं, यच्च स्पृतं प्रीतिकरं जनित्रं जननशीलमन्नं, यो हि(ऽपि) सप्तदशाख्यः स्तोमविशेषस्तत्सर्वं त्वमसि ॥

अथ चतुर्थं मन्त्रमाह—

मित्रस्य भागोऽसि वरुणस्याऽऽधिपत्यं दिवो
वृष्टिर्वाताः स्पृता एकविꣳशः स्तोमः, इति।

स्पृताः प्रीतिहेतवो वाता वायवो दिवः सकाशादागता वृष्टिश्च ॥

अथ पञ्चमं मन्त्रमाह—

अदित्यै भागोऽसि पूष्ण आधिपत्य-
मोजः स्पृतं त्रिणवः स्तोमः, इति।

ओजो बलमष्टमधातुर्वा ॥

---

१ ख. च. °क्षाया।

अथ षष्ठं मन्त्रमाह—

वसूनां भागोऽसि रुद्राणामाधिपत्यं
चतुष्पात्स्पृतं चतुर्विंशः स्तोमः, इति।

चतुष्पाद्गवाश्वादिः॥

अथ सप्तमं मन्त्रमाह—

आदित्यानां भागोऽसि मरुतामाधिपत्यं
गर्भाः स्पृताः पञ्चविंशः स्तोमः, इति।

गर्भा द्विपदां चतुष्पदां चोदरगताः॥

अथाष्टमं मन्त्रमाह—

देवस्य सवितुर्भागोऽसि बृहस्पतेराधिपत्यꣳ
समीचीर्दिशः स्पृताश्चतुष्टोमः स्तोमः, इति।

यासु दिक्ष्ववस्थिताः प्राणिनोऽनुकूलास्ता दिशः समीच्यस्ता एव स्पृताः॥

अथ नवमं मन्त्रमाह—

यावानां भागोऽस्ययावानामाधिपत्यं प्रजाः
स्पृताश्चतुश्चत्वारिꣳशः स्तोमः, इति।

युतो मिश्री भवतः शुक्लकृष्णपक्षावत्रेति यावा मासाः। अतथाविधत्वादयावा अर्धमासाः॥

अथ दशमं मन्त्रमाह—

ऋभूणां भागोऽसि विश्वेषां देवानामाधिपत्यं
भूतं निशान्तꣳ स्पृतं त्रयस्त्रिꣳशः स्तोमः॥, इति॥

ऋभुशब्दो देवसामान्यवाची। गणविशेषो विश्वे देवाः। भूतं निष्पन्नं, निशान्तं गृहम्॥

एतैर्मन्त्रैरुपधेयास्वक्ष्णयास्तोमीयास्विष्टकासु मन्त्रविशेषेषु देशविशेषेषु च सहोपधानं विधीयते।

तत्र प्रथमं मन्त्रं विनियुङ्क्ते—

"अग्नेर्भागोऽसीति पुरस्तादुप दधाति यज्ञमुखं वा अग्निर्यज्ञमुखं दीक्षा यज्ञमुखं ब्रह्म यज्ञमुखं त्रिवृद्यज्ञमुखमेव पुरस्ताद्वि यातयति" [ सं० का० ५ प्र० ३ अ० ४ ] इति।

प्रथममाहितेऽग्नौ पश्चाद्यज्ञस्य प्रवृत्तेरग्निर्यज्ञमुखम्। सोमयागस्य दीक्षोपक्र-

मत्वाद्दीक्षाया यज्ञमुखत्वम् । यज्ञस्य ऋत्विग्वरणपूर्वकत्वादार्त्विज्यस्य च ब्राह्मणधर्मत्वाद्ब्राह्मणजातिर्यज्ञमुखम् । स्तोत्राणां मध्ये प्रथमस्तोत्रस्य बहिष्पवमानस्य त्रिवृत्स्तोमेन निष्पाद्यमानत्वात्त्रिवृतो यज्ञमुखत्वम् । अनेन मन्त्रेणोपधाने तत्सर्वं यज्ञमुखं पुरस्तात्प्रसारयति ॥

अथ तृतीयं मन्त्रं विनियुङ्क्ते—

" नृचक्षसां भागोऽसीति दक्षिणतः शुश्रुवाꣳसो वै नृचक्षसोऽन्नं धाता जातायैवास्मा अन्नमपि दधाति तस्माज्जातोऽन्नमत्ति जनित्रꣳ स्पृतꣳ सप्तदशः स्तोम इत्याहान्नं वै जनित्रमन्नꣳ सप्तदशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते " [ सं० का० ५ प्र० ३ अ० ४ ] इति ।

वेदशास्त्रपारं गताः शुश्रुवांसः । त एव नृचक्षःशब्देनाभिधीयन्ते । चक्षते व्यक्तं ब्रुवत इति चक्षसः । नरश्च ते चक्षस इति नृचक्षसः । यद्वा नृषु मनुष्येषु मध्ये चक्षसो व्यक्तं वक्तारः । धातुरन्नोत्पादकत्वादन्नत्वम् । अतो मन्त्रे धातृशब्दपाठेनोत्पन्नाय यजमानायान्नं संपादयति । तस्मिन्मन्त्रे जनित्रमित्याद्युत्तरभागमपि ब्रूयात् । जायत इति व्युत्पत्त्या जनित्रशब्दोऽन्नवाची । सप्तदशस्तोमस्यान्नकारणत्वादन्नत्वम् । एवं सति कृत्स्नमप्यन्नं दक्षिणस्यां दिशि संपादयति । यस्माद्दक्षिणदिशोऽन्नभागित्वं तस्माद्दक्षिणहस्तेनान्नं भुङ्क्ते ॥

अथ चतुर्थं मन्त्रं विनियुङ्क्ते—

"मित्रस्य भागोऽसीति पश्चात्प्राणो वै मित्रोऽपानो वरुणः प्राणापानावेवास्मिन्दधाति दिवो वृष्टिर्वाताः स्पृता एकविꣳशः स्तोम इत्याह प्रतिष्ठा वा एकविꣳशः प्रतिष्ठित्यै " [ सं० का० ५ प्र० ३ अ० ४ ] इति ।

मित्रावरुणयोः प्राणापानाभिमानित्वात्तद्रूपत्वम् । तस्य मन्त्रस्योत्तरभागे सर्वस्तोमप्रतिष्ठारूपस्यैकाविंशस्याभिधानं प्रतिष्ठित्यै संपद्यते ॥

द्वितीयं मन्त्रं विनियुङ्क्ते—

" इन्द्रस्य भागोऽसीत्युत्तरत ओजो वा इन्द्र ओजो विष्णुरोजः क्षत्रमोजः पञ्चदश ओज एवोत्तरतो धत्ते तस्मादुत्तरतोभिप्रयायी जयति " [ सं० का० ५ प्र० ३ अ० ४ ] इति ।

इन्द्रादीनां बलवत्त्वादोजोरूपत्वम् । ततः सर्वमप्योज उदीच्यां दिशि स्थापितं भवति । ओजोयुक्तत्वादेवोत्तरदिग्गामी तीर्थयात्रादिपुण्येन स्वर्गं जयति ॥

अथ षष्ठं मन्त्रं विनियुङ्क्ते—

---

१ घ. ङ. 'पदधानस्तत्स' ।

( अवशिष्टाक्षण्यास्तोमीयाख्येष्टकाभिधानम् )

" वसूनां भागोऽसीति पुरस्तादुप [दधाति] यज्ञमुखं वै वसवो यज्ञमुखꣳ रुद्रा यज्ञमुखं चतुर्विꣳशो यज्ञमुखमेव पुरस्ताद्वि यातयति " [ सं० का० ५ प्र० ३ अ० ४ ] इति ।

वसूनां प्रातःसवनाभिमानित्वाद्यज्ञमुखत्वम् । प्रातःसवनाभिमानित्वं च च्छन्दोगा आमनन्ति—"ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनम् " इति । रुतं शब्दं मन्त्ररूपं द्रावयन्ति प्रवर्तयन्तीति रुद्राः । तथा सति रुद्रप्रवर्तितमन्त्रपूर्वकत्वाद्यज्ञस्य रुद्राणां यज्ञमुखत्वोपचारः । चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशरूपेषु च्छन्दोमेषु प्रथमत्वाच्चतुर्विंशस्य यज्ञमुखत्वम् ॥

अथ सप्तमं मन्त्रं विनियुङ्क्ते—

" आदित्यानां भागोऽसीति दक्षिणतोऽन्नं वा आदित्या अन्नं मरुतोऽन्नं गर्भा अन्नं पञ्चविꣳशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते " [ सं० का० ५ प्र० ३ अ० ४ ] इति ।

" आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः " इत्यन्नहेतुत्वादादित्यानामन्नत्वम् । मरुतां वैश्यरूपत्वेनान्नसंपादकत्वादन्नत्वम् । गर्भाणामन्नकार्यत्वादन्नत्वम् । पञ्चविंशस्तोमस्य शास्त्रसिद्धान्नहेतुत्वादन्नत्वम् ॥

अथ पञ्चमं मन्त्रं विनियुङ्क्ते—

" अदित्यै भागोऽसीति पश्चात्प्रतिष्ठा वा अदितिः प्रतिष्ठा पूषा प्रतिष्ठा त्रिणवः प्रतिष्ठित्यै " [ सं० का० ५ प्र० ३ अ० ४ ] इति ।

अदितिर्भूमिः । सा च निवासहेतुत्वात्प्रतिष्ठा । पूष्णः पोषकत्वेन प्रतिष्ठात्वम् । त्रिणवस्तोमस्य शास्त्रसिद्धं प्रतिष्ठात्वम् ॥

अथाष्टमं मन्त्रं विनियुङ्क्ते—

" देवस्य सवितुर्भागोऽसीत्युत्तरतो ब्रह्म वै देवः सविता ब्रह्म बृहस्पतिर्ब्रह्म चतुष्टोमो ब्रह्मवर्चसमेवोत्तरतो धत्ते तस्मादुत्तरोऽर्धो ब्रह्मवर्चसितरः सावित्रवती भवति प्रसूत्यै तस्माद्ब्राह्मणानामुदीची सनिः प्रसूता " [ सं० का० ५ प्र० ३ अ० ४ ] इति ।

प्रातःसंध्यादौ ब्राह्मणैरुपास्यमानत्वात्सवितुर्ब्रह्मत्वम् । बृहस्पतेर्ब्राह्मणजात्यभिमानित्वाद्ब्रह्मत्वम् । तच्च " ब्रह्म वै देवानां बृहस्पतिः " इति श्रुत्यन्तरादवगम्यते । चतुष्टोमस्य शास्त्रसिद्धं ब्रह्मत्वम् । सवितृप्रतिपादको मन्त्रः सावित्रस्तेन मन्त्रेणोपहितेष्टका सावित्रवती । अतः सा प्रसवाय संपद्यते । यस्माद्ब्रह्मरूपसवितृप्रतिपादकमन्त्रसाध्येष्टकोत्तरस्यां दिश्युपहिता तस्माद्ब्राह्म-

---

१ ख. च. स्तोमेषु । २ ख. च. 'स्यत्वा' ।

णानामुदीची सनिः प्रसूतोत्तरस्यां दिशि यज्ञभिक्षादिरूपा याच्ञा शास्त्रेणा-भ्यनुज्ञाता । विन्ध्यस्योत्तरभागे हि पुण्यभूमौ शुद्धा ब्राह्मणा वर्तन्ते, तस्मा-त्तत्र प्रतिग्रहः प्रशस्तः ॥

पूर्वानुवाकाम्नातौ सप्तदशाष्टादशमन्त्रावितः पूर्वं न विनियुक्तौ । तत्राष्टादशं मन्त्रमिदानीं विनियुङ्क्ते—

" धर्त्रश्चतुष्टोम इति पुरस्तादुप दधाति यज्ञमुखं वै धर्त्रो यज्ञमुखं चतुष्टोमो यज्ञमुखमेव पुरस्ताद्वि यातयति " [ सं० का ५ प्र० ३ अ० ४ ] इति ।

धर्त्रो धारयिताऽग्निष्टोमः । स च सोमयागानां प्रथमभावित्वाद्यज्ञमुखम् । चतुष्टोमः ( * षष्टिस्तोमस्तृतीयः । ) तस्य यज्ञमुखभूतत्रिवृदात्मकत्वाद्यज्ञ-मुखत्वम् ॥

अथ प्रकृतानुवाकगतं नवमं मन्त्रं विनियुङ्क्ते—

" यावानां भागोऽसीति दक्षिणतो मासा वै यावा अर्धमासा अयावास्त-स्माद्दक्षिणावृतो मासा अन्नं वै यावा अन्नं प्रजा अन्नमेव दक्षिणतो धत्ते तस्मा-द्दक्षिणेनान्नमद्यते " [ सं० का० ५ प्र० ३ अ० ४ ] इति ।

गोलकस्य प्रादक्षिण्येन संचरताऽऽदित्येन निष्पाद्यत्वान्मासानां दक्षिणावृ-त्त्वम् । यावशब्दवाच्यानां मासानां कालरूपाणामन्नपाकहेतुत्वादन्नत्वम् । प्रजा-नामन्नभोक्तृत्वादन्नत्वम् ॥

अथ दशमं मन्त्रं विनियुङ्क्ते—

"ऋभूणां भागोऽसीति पश्चात्प्रतिष्ठित्यै" [सं० का० ५ प्र० ३ अ० ४] इति ।

देवानामनुग्राहकत्वेन प्रतिष्ठाहेतुत्वम् ॥

अथ पूर्वानुवाकगतं सप्तदशं मन्त्रं विनियुङ्क्ते—

" विवर्तोऽष्टाचत्वारिꣳश इत्युत्तरतोऽनयोर्लोकयोः सवीर्यत्वाय तस्मादिमौ लोकौ समावद्वीर्यौ " [ सं० का० ५ प्र० ३ अ० ४ ] इति ।

स्तोमानां मध्येऽष्टाचत्वारिंशः स्तोमः सर्वोत्तमः । ततोऽप्यधिकस्य स्तोम-स्याभावात् । मनुष्यलोके दिशां मध्ये विन्ध्यादुत्तरा दिगुत्तमा । अत उत्तम-द्वयमेलनेन मनुष्यलोको वीर्यवान्संपन्नः । स्वर्गलोकस्य देवाधिष्ठितत्वाद्वीर्यवत्त्वं प्रसिद्धम् । एवं च सत्युभयोर्लोकयोः समानवीर्यत्वं भवति । यस्मादेवं मनुष्य-लोकस्य वीर्यवत्त्वं संपादितं तस्मादिमौ लोकौ समावद्वीर्यौ । मनुष्यलोक-

* धनुश्चिह्नान्तर्गतस्थाने भट्टभास्करभाष्यानुसारी " समष्टिस्तोत्रीयः स्तोमः " इति पाठो भवितुं युक्तः ।

१ ख. °मः, त° । २ ख. च. °दायात्म° ।

पुण्यानुष्ठाननिष्पादनेन वीर्यवान्स्वर्गलोकः पुण्यफलनिष्पादनेन वीर्यवानिति समत्वम् ॥

अनुवाकद्वयेन वक्रत्वेनोपहितानामिष्टकानां मध्य एकैकस्यां दिशि या उपहितास्ताः सर्वा दिग्विशेषोपाधिना संगृह्य प्रशंसति—

" यस्य मुख्यवतीः पुरस्तादुपधीयन्ते मुख्य एव भवत्याऽस्य मुख्यो जायते यस्यान्नवतीर्दक्षिणतोऽत्यन्नमाऽस्यान्नादो जायते यस्य प्रतिष्ठावतीः पश्चात्प्रत्येव तिष्ठति यस्यौजस्वतीरुत्तरत ओजस्व्येव भवत्याऽस्यौजस्वी जायते " [ सं० का० ५ प्र० ३ अ० ४ ] इति।

मुखत्वेन पूर्वोक्तेष्वर्थवादेषु स्तुता इष्टका मुख्यवत्यः। तासां पूर्वस्यां दिश्युपधानेन स्वयं मुख्यो भवति, स्वपुत्रश्च मुख्यो जायते। अन्नत्वेन स्तुता इष्टका अन्नवत्यः। तासां दक्षिणदिश्युपधानेन स्वयं पुत्रश्चान्नवन्तौ संपद्येते। प्रतिष्ठात्वेन स्तुता इष्टकाः प्रतिष्ठावत्यः। तासां पश्चिमदिश्युपधानेन प्रतिष्ठितो भवति। ओजस्त्वेन स्तुता इष्टका ओजस्वत्यः। तासामुत्तरदिश्युपधानेन स्वयं पुत्रश्चौजस्विनौ भवतः ॥

वक्रत्वेन योऽयमुपधानप्रकारोऽभिहितस्तमेतं स्तोत्रशस्त्ररूपत्वेन प्रशंसति—

" अर्को वा एष यदग्निस्तस्यैतदेव स्तोत्रमेतच्छस्त्रं यदेषा विधा विधीयतेऽर्क एव तदर्क्यमनु विधीयते " [ सं० का० ५ प्र० ३ अ० ४ ] इति।

योऽग्निरस्ति स एषोऽर्कोऽर्चनीयः। तस्यार्चनाङ्गत्वेन स्तोत्रशस्त्रे अपेक्षिते। तथा सति योऽयं वक्रत्वेनोपधानप्रकारोऽभिहितस्तत्रैकेनानुवाकेनोक्तं स्तोत्रमितरेणानुवाकेनोक्तं शस्त्रम्। एवं सत्यर्चनीये वह्नावेवार्चनयोग्यमनुष्ठानं क्रमेण संपादितं भवति ॥

तदनुष्ठानं तद्वेदनं च प्रशंसति—

"अत्यन्नमाऽस्यान्नादो जायते यत्रै[1]षा विधा विधीयते य उ चैनामेवं वेद" [ सं० का० ५ प्र० ३ अ० ४ ] इति।

एनां विधाम् ॥

अत्र विनियोगसंग्रहः—

" अग्नेः शिष्टा दशाऽऽदध्यादक्ष्णयास्तोमसंज्ञकाः ॥ १ ॥ " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके
नवमोऽनुवाकः ॥ ९ ॥

---

१ ख. मुख्यत्वे।

( सृष्टिशब्दाभिधेयेष्टकाभिधानम् )

( अथ चतुर्थाष्टके तृतीयप्रपाठके दशमोऽनुवाकः । )

---

एकयाऽस्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत्तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत्पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीत्सप्तभिरस्तुवत सप्तर्षयोऽसृज्यन्त धाताऽधिपतिरासीन्नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासीदेकादशभिरस्तुवतर्तवोऽसृज्यन्ताऽऽर्तवोऽधिपतिरासीत्त्रयोदशभिरस्तुवत मासा असृज्यन्त संवत्सरोऽधिपतिः ( १ ) आसीत्पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रोऽधिपतिरासीत्सप्तदशभिरस्तुवत पशवोऽसृज्यन्त बृहस्पतिरधिपतिरासीन्नवदशभिरस्तुवत शूद्रार्यावसृज्येतामहोरात्रे अधिपत्नी आस्तामेकविꣳशत्याऽस्तुवतैकशफाः पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत्त्रयोविꣳशत्याऽस्तुवत क्षुद्राः पशवोऽसृज्यन्त पूषाऽधिपतिरासीत्पञ्चविꣳशत्याऽस्तुवताऽऽरण्याः पशवोऽसृज्यन्त वायुरधिपतिरासीत्सप्तविꣳशत्याऽस्तुवत द्यावापृथिवी वि (२) ऐतां वसवो रुद्रा आदित्या अनु व्यायन्तेषामाधि-

( सृष्टिशब्दाभिधेयेष्टकाभिधानम् )

पत्यमासीन्नवविंशत्याऽस्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपतिरासीदेकत्रिंशताऽस्तुवत प्रजा असृज्यन्त यावानां चायावानां चाऽऽधिपत्यमासीत्रयस्त्रिंशताऽस्तुवत भूतान्यशाम्यन्प्रजापतिः परमेष्ठ्यधिपतिरासीत् ( ३ ) ॥

( संवत्सरोऽधिपतिर्वि पञ्चत्रिंशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ चतुर्थाष्टके तृतीयप्रपाठके दशमोऽनुवाकः । )

---

एकया । अस्तुवत । प्रजा इति प्र—जाः । अधीयन्त । प्रजापतिरिति प्रजा—पतिः । अधिपतिरित्यधि—पतिः । आसीत् । तिसृभिरिति तिसृ—भिः । अस्तुवत । ब्रह्म । असृज्यत । ब्रह्मणः । पतिः । अधिपतिरित्यधि—पतिः । आसीत् । पञ्चभिरिति पञ्च—भिः । अस्तुवत । भूतानि । असृज्यन्त । भूतानाम् । पतिः । अधिपतिरित्यधि—पतिः । आसीत् । सप्तभिरिति सप्त—भिः । अस्तुवत । सप्तर्षय इति सप्त—ऋषयः । असृज्यन्त । धाता । अधिपतिरित्यधि—पतिः । आसीत् । नवभिरिति नव—भिः । अस्तुवत । पितरः । असृज्यन्त । अदितिः । अधिप-

त्नीत्यधि—पत्नी । आसीत् । एकादशभिरित्येका-
दश—भिः । अस्तुवत । ऋतवः । असृज्यन्त ।
आर्तवः । अधिपतिरित्यधि—पतिः । आसीत् ।
त्रयोदशभिरिति त्रयोदश—भिः । अस्तुवत । मासाः ।
असृज्यन्त । संवत्सर इति सं—वत्सरः । अधिपति-
रित्यधि—पतिः ( १ ) । आसीत् । पञ्चदशभिरिति
पञ्चदश—भिः । अस्तुवत । क्षत्रम् । असृज्यत ।
इन्द्रः । अधिपतिरित्यधि—पतिः । आसीत् । सप्त-
दशभिरिति सप्तदश—भिः । अस्तुवत । पशवः ।
असृज्यन्त । बृहस्पतिः । अधिपतिरित्यधि—पतिः ।
आसीत् । नवदशभिरिति नवदश—भिः । अस्तुवत ।
शूद्रार्याविति शूद्र—अर्यौ । असृज्येताम् । अहोरात्रे
इत्यहः—रात्रे । अधिपत्नी इत्यधि—पत्नी । आस्ताम् ।
एकविंशत्येत्येक—विंशत्या । अस्तुवत । एकशफा
इत्येक—शफाः । पशवः । असृज्यन्त । वरुणः ।
अधिपतिरित्यधि—पतिः । आसीत् । त्रयोविंशत्येति
त्रयः—विंशत्या । अस्तुवत । क्षुद्राः । पशवः ।
असृज्यन्त । पूषा । अधिपतिरित्यधि—पतिः ।
आसीत् । पञ्चविंशत्येति पञ्च—विंशत्या । अस्तु-
वत । आरण्याः । पशवः । असृज्यन्त । वायुः ।

(सृष्टिशब्दाभिधेयेष्टकाभिधानम्)

अधिपतिरित्यधि—पतिः। आसीत्। सप्तविंशत्येति सप्त—विंशत्या। अस्तुवत। द्यावापृथिवी इति द्यावा—पृथिवी। वीति (२)। ऐताम्। वसवः। रुद्राः। आदित्याः। अनु। वीति। आयन्। तेषाम्। आधिपत्यमित्याधि—पत्यम्। आसीत्। नवविंशत्येति नव—विंशत्या। अस्तुवत। वनस्पतयः। असृज्यन्त। सोमः। अधिपतिरित्यधि—पतिः। आसीत्। एकत्रिंशतेत्येक—त्रिंशता। अस्तुवत। प्रजा इति प्र—जाः। असृज्यन्त। यावानाम्। च। अयावानाम्। च। आधिपत्यमित्याधि—पत्यम्। आसीत्। त्रयस्त्रिंशतेति त्रयः—त्रिंशता। अस्तुवत। भूतानि। अशाम्यन्। प्रजापतिरिति प्रजा—पतिः। परमेष्ठी। अधिपतिरित्यधि—पतिः। आसीत् (३)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके तृतीयप्रपाठके दशमोऽनुवाकः॥ १०॥

---

(अथ चतुर्थकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः।)

---

नवमेऽनुवाकेऽवशिष्टा अक्ष्णयास्तोमीया उक्ताः। अथ दशमे सृष्टिशब्दाभिधेया इष्टका उच्यन्ते।

कल्पः—"एकयाऽस्तुवतेति सप्तदश सृष्टीः" इति।

पाठस्तु—

एकयाऽस्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत्तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत्पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीत्सप्तभिरस्तुवत सप्तर्षयोऽसृज्यन्त धाताऽधिपतिरासीन्नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासीदेकादशभिरस्तुवतर्तवोऽसृज्यन्ताऽऽर्तवोऽधिपतिरासीत्त्रयोदशभिरस्तुवत मासा असृज्यन्त संवत्सरोऽधिपतिरासीत्पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रोऽधिपतिरासीत्सप्तदशभिरस्तुवत पशवोऽसृज्यन्त बृहस्पतिरधिपतिरासीन्नवदशभिरस्तुवत शूद्रार्यावसृज्येतामहोरात्रे अधिपत्नी आस्तामेकविꣳशत्याऽस्तुवतैकशफाः पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत्त्रयोविꣳशत्याऽस्तुवत क्षुद्राः पशवोऽसृज्यन्त पूषाऽधिपतिरासीत्पञ्चꣳविशत्याऽस्तुवताऽऽरण्याः पशवोऽसृज्यन्त वायुरधिपतिरासीत्सप्तविꣳशत्याऽस्तुवत द्यावापृथिवी व्यैतां वसवो रुद्रा आदित्या अनु व्यायन्तेषामाधिपत्यमासीन्नवविꣳशत्याऽस्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपतिरासीदेकत्रिꣳशताऽस्तुवत प्रजा असृज्यन्त यावानां चायावानां चाऽऽधिपत्यमासीत्त्रयस्त्रिꣳशताऽस्तुवत भूतान्यशाम्यन्प्रजापतिः परमेष्ठ्यधिपतिरासीत् ॥ , इति ॥

( सृष्टिशब्दाभिधेयेष्टकाभिधानम् )

पूर्वं महर्षयः कदाचिद्यागकाल एकया स्तोत्रिययर्चा स्तुतिमकुर्वन् । तत्तत्सामर्थ्यात्प्रजा अधीयन्त तैर्महर्षिभिरुदपाद्यन्त । तदानीं प्रजापतिस्तासां प्रजानामधिपतिरासीत् । अथ कदाचित्तिसृभिः स्तोत्रियाभिरस्तुवत । तत्सामर्थ्याद्ब्रह्म ब्राह्मणजातिस्तैरसृज्यत । ब्रह्मणस्पतिरिति प्रसिद्धो यो देवः सोऽयं ब्राह्मणजातेरधिपतिरासीत् । एवं सर्वत्र योज्यम् । भूतानां पतिः कश्चिद्देवविशेषः । अत एवान्यत्राऽऽम्नातम्—"भूतानां पतये स्वाहा" इति । सोऽयमत्र भूतानां पतिरधिपतिः स्वाम्यासीत् । धाता जगत्स्रष्टा । अदितिर्भूमिः । आर्तव ऋतुपालकः कश्चिदेवविशेषः । क्षत्रं क्षत्रियजातिः । शूद्रार्यौ शूद्रो वैश्यश्चेति जातिद्वयम् । अहर्देवता रात्रिदेवता चेत्येते जातिद्वयस्याधिपत्नी स्वामिरूपे आस्ताम् । सप्तविंशतिस्तोत्रसामर्थ्यात्पूर्वमेकीभूते द्यावापृथिव्यौ परस्परं वियुक्ते अभूताम् । तयोर्वियोगमनु वस्वादयस्त्रयो गणाः परस्परं वियुक्ता अभवन् । तेषां वस्वादीनां द्यावापृथिव्यौ प्रत्याधिपत्यमासीत् । यावा मासदेवता अयावा अर्धमासदेवताः । उभयविधदेवतानां प्रजाः प्रति आधिपत्यमासीत् । भूतान्यशाम्यन्, प्राणिनः शान्तानुपद्रवरहितानकुर्वत । परमे सत्यलोके तिष्ठतीति परमेष्ठी । तादृशः प्रजापतिः स्वाम्यभूत् ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

"सृष्टीरुप दधाति यथासृष्टमेवाव रुन्धे" [सं०का०५ प्र०३ अ०४] इति ।

सृजतिधातुयुक्तैर्मन्त्रैरुपधेया इष्टकाः सृष्टयः । तासामुपधाने सति यद्वस्तु यथा सृष्टं तत्तथैव प्राप्नोति ॥

अत्र विनियोगसंग्रहः—

एक सप्तदशाऽऽदध्यादिष्टकाः सृष्टिसंज्ञिताः ॥ १ ॥

अथ मीमांसा ।

प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

सृष्टीरुपदधातीति ये मन्त्राः सृष्टिलिङ्गकाः ।
विधेयास्ते गुणत्वेन वादो वाऽत्र गुणे[1] विधिः ॥
आख्यातेनाभिसंबन्धादविध्यन्तरयोगतः ।
लिङ्गप्रकरणप्राप्तेर्मन्त्राणां विध्यसंभवात् ॥
ताननूद्येष्टकाधानं विदध्यात्स्तोष्यते यतः ।
यथासृष्टेत्यनेनातः सृष्टीरित्यर्थवादगीः ॥

---

१ ख. च. गुणो ।

एकयाऽस्तुवतेत्यादौ मन्त्रसंघे क्वचिन्नहि ।
सृष्टिशब्दस्तथाऽप्युक्तिः सृष्टिशब्देन भूमतः ॥

अग्निचयने श्रूयते—"सृष्टीरुपदधाति" इति । सृष्टिशब्दोपेता मन्त्रा यासामिष्टकानामुपधाने विद्यन्ते ता इष्टकाः सृष्टय इत्युच्यन्ते । सृष्टिमानासामुपधानो मन्त्र इति विगृह्य "तद्वानासामुपधानः" इत्यादिव्याकरणसूत्रसिद्धप्रक्रियया तन्निष्पादनात् । सृष्टिशब्दोपेताश्चोपधानमन्त्रा एकयाऽस्तुवतेत्यस्मिन्ननुवाके समाम्नाताः । ब्रह्मासृज्यत भूतान्यसृज्यन्तेत्यादिना सृजतिधातोस्तेषु मन्त्रेषु प्रयुक्तत्वात् । ते च मन्त्रा अत्र सृष्टिशब्देनोपधाने गुणत्वेन विधीयन्ते । कुतः । उपदधातीत्यनेनाऽऽख्यातेनाभिसंबन्धात् । न चार्थवादत्वमस्य संभवति, विध्यन्तरेण सहैकवाक्यत्वाभावादिति प्राप्ते ब्रूमः—अग्निचयनप्रकरणे पठितत्वात्तेषां मन्त्राणां सामान्यतश्चयनसंबन्धोऽवगम्यते । विशेषसंबन्धस्तु सृजतिलिङ्गादवगन्तव्यः । तथा सति प्राप्तत्वान्न ते मन्त्रा अत्र विधीयन्ते, किंतु तान्मन्त्राननूद्येष्टकोपधानं विधीयते । सृष्टिशब्देनानुवादस्तु वक्ष्यमाणार्थवादोपपत्त्यर्थः । " यथासृष्टमेवावरुन्धे " इति हि वक्ष्यमाणोऽर्थवादः । यदि विधिवाक्ये मन्त्राणामनुवादकः सृष्टिशब्दो न स्यात्, तदानीमर्थवादे सृष्टिशब्दप्रयोगाद्विध्यर्थवादयोर्वैयधिकरण्यभ्रमः स्यात् । तस्मान्मन्त्रानुवादी सृष्टिशब्दो न गुणविधायकः किंत्वर्थवादः । ननु प्रथममन्त्रे सृजतिधातुर्न प्रयुक्तः " एकयाऽस्तुवत प्रजा अधीयन्त " इति पाठात् । बाढं, तथाऽपि द्वितीयतृतीयादिषु बहुषु मन्त्रेषु सृजतिधातुप्रयोगाद्भूमरूपं सादृश्यमस्ति । यत्र सर्वाणि वाक्यानि सृष्टिशब्दोपेतानि तत्र यथा सृष्टिभूमा तथाऽत्रापि भूमगुणयोगेन सृष्ट्यसृष्टिसंघे सृष्टिशब्दप्रयोगः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ चतुर्थाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः । )

---

इ॒यमे॒व सा या प्र॑थ॒मा व्यौच्छ॑द॒न्तर॑स्यां॒ चर॑ति॒ प्रवि॑ष्टा । व॒धूर्ज॑जान न॒वग॒ज्जनि॑त्री॒ त्रय॑ एनां महि॒मान॑ः सचन्ते । छन्द॑स्वती उ॒षसा॒

पेपिंशाने समानं योनिमनु संचरन्ती। सूर्यंपत्नी वि चंरतः प्रजानती केतुं कृण्वाने अजरे भूरिरेतसा। ऋतस्य पन्थामनु तिस्र आऽगुस्त्रयो घर्मासो अनु ज्योतिषाऽगुः। प्रजामेका रक्षत्यूर्जमेका (१) व्रतमेका रक्षति देवयूनाम्। चतुष्टोमो अंभवद्या तुरीया यज्ञस्यं पक्षावृंषयो भवंन्ती। गायत्रीं त्रिष्टुभं जगंतीमनुष्टुभं बृहदर्कं युञ्जानाः सुवराऽभंरन्निदम्। पञ्चभिंर्धाता वि दंधाविदं यत्तासाꣳ स्वसॄरजनयत्पञ्चंपञ्च। तासांमु यन्ति प्रयवेण पञ्च नानां रूपाणि क्रतंवो वसांनाः। त्रिꣳशत्स्वसांर उपं यन्ति निष्कृतꣳ समानं केतुं प्रंतिमुञ्चमांनाः (२)। ऋतूꣳस्तंन्वते कवयंः प्रजानतीर्मध्येंछन्दसः परिं यन्ति भास्वंतीः। ज्योतिंष्मती प्रतिं मुञ्चते नभो रात्रीं देवी सूर्यंस्य व्रतानिं। वि पंश्यन्ति पशवो जायंमाना नानांरूपा मातुरस्या उपस्थें। एकाष्टका तपंसा तप्यंमाना जजान गर्भं महिमानमिन्द्रंम्। तेन दस्यून्व्यंसहन्त देवा हन्ताऽसुंराणामभवच्छचींभिः। अनांनुजामनुजां मामंकर्त सत्यं वद-

न्त्यन्विच्छ एतत् । भूयासम् (३) अस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्र युक्त । अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधम् । भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्र युक्त । पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च । पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरभि लोकमेकम् (४) । ऋतस्य गर्भः प्रथमा व्यूषुष्यपामेका महिमानं बिभर्ति । सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका सवितैकां नि यच्छति । या प्रथमा व्यौच्छत्सा धेनुरभवद्यमे । सा नः पयस्वती धुक्ष्वोत्तरामुत्तराꣳ समाम् । शुक्रर्षभा नभसा ज्योतिषाऽगाद्विश्वरूपा शबलीरग्निकेतुः । समानमर्थꣳ स्वपस्यमाना बिभ्रती जरामजर उष आऽगाः । ऋतूनां पत्नी प्रथमेयमाऽगादह्नां नेत्री जनित्री प्रजानाम् । एका सती बहुधोषो व्युच्छस्यजीर्णा त्वं जरयसि सर्वमन्यत् (५) ॥

( ऊर्जमेकां प्रतिमुञ्चमाना भूयासमेकं पत्न्येकान्नविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

( व्युष्टिनामकेष्टकाभिधानम् )

( अथ चतुर्थाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः । )

---

इयम् । एव । सा । या । प्रथमा । व्यौच्छदिति वि—औच्छंत् । अन्तः । अस्याम् । चरति । प्रविष्टेति प्र—विष्टा । वधूः । जजान । नवगदिति नव—गत् । जनित्री । त्रयः । एनाम् । महिमानः । सचन्ते । छन्दस्वती इति । उषसा । पेपिंशाने इति । समानम् । योनिम् । अन्विति । संचरन्ती इति सं—चरन्ती । सूर्यपत्नी इति सूर्य—पत्नी । वीति । चरतः । प्रजानती इति प्र—जानती । केतुम् । कृण्वाने इति । अजरे इति । भूरिरेतसेति भूरि—रेतसा । ऋतस्य । पन्थाम् । अन्विति । तिस्रः । एति । अगुः । त्रयः । घर्मासः । अन्विति । ज्योतिषा । एति । अगुः । प्रजामिति प्र—जाम् । एका । रक्षति । ऊर्जम् । एका ( १ ) । व्रतम् । एका । रक्षति । देवयूनामिति देव—यूनाम् । चतुष्टोम इति चतुः—स्तोमः । अभवत् । या । तुरीया । यज्ञस्य । पक्षौ । ऋषयः । भवन्ती । गायत्रीम् । त्रिष्टुभम् । जगतीम् । अनुष्टुभमित्यनु—स्तुभम् । बृहत् । अर्कम् । युञ्जानाः । सुवः । एति । अभरन् । इदम् । पञ्चभिरिति पञ्च—भिः । धाता । वीति ।

दधौ । इदम् । यत् । तासाम् । स्वम् । अजनयत् । पञ्चपञ्चेति पञ्च—पञ्च । तासाम् । उ । यन्ति । प्रयवेणेति प्र—यवेन । पञ्च । नाना । रूपाणि । क्रतवः । वसानाः । त्रिंशत् । स्वसारः । उपेति । यन्ति । निष्कृतमिति निः—कृतम् । समानम् । केतुम् । प्रतिमुञ्चमाना इति प्रति—मुञ्चमानाः (२) । ऋतून् । तन्वते । कवयः । प्रजानतीरिति प्र—जानतीः । मध्येछन्दस इति मध्ये—छन्दसः । परीति । यन्ति । भास्वतीः । ज्योतिष्मती । प्रतीति । मुञ्चते । नभः । रात्री । देवी । सूर्यस्य । व्रतानि । वीति । पश्यन्ति । पशवः । जायमानाः । नानारूपा इति नाना—रूपाः । मातुः । अस्याः । उपस्थ इत्युप—स्थे । एकाष्टकेत्येक—अष्टका । तपसा । तप्यमाना । जजान । गर्भम् । महिमानम् । इन्द्रम् । तेन । दस्यून् । वीति । असहन्त । देवाः । हन्ता । असुराणाम् । अभवत् । शचीभिरिति शचि—भिः । अनानुजामित्यनानु—जाम् । अनुजामित्यनु—जाम् । माम् । अकर्त । सत्यम् । वदन्ती । अन्विति । इच्छे । एतत् । भूयासम् ( ३ ) । अस्य । सुमताविति सु—मतौ । यथा । यूयम् । अन्या । वः । अन्याम् ।

अतीति । मा । प्रेति । युक्त । अभूत् । मम । सुम-
ताविति सु—मतौ । विश्ववेदा इति विश्व—वेदाः ।
आष्ट । प्रतिष्ठामिति प्रति—स्थाम् । अविदत् । हि ।
गाधम् । भूयासम् । अस्य । सुमताविति सु—मतौ ।
यथा । यूयम् । अन्या । वः । अन्याम् । अतीति ।
मा । प्रेति । युक्त । पञ्च । व्युष्टीरिति वि—उष्टीः ।
अन्विति । पञ्च । दोहाः । गाम् । पञ्चनाम्नीमिति
पञ्च—नाम्नीम् । ऋतवः । अन्विति । पञ्च । पञ्च ।
दिशः । पञ्चदशेनेति पञ्च—दशेन । क्लृप्ताः । समान-
मूर्ध्नीरिति समान—मूर्ध्नीः । अभीति । लोकम् । एकम् ।
( ४ ) । ऋतस्य । गर्भः । प्रथमा । व्यूषुषीति वि—
उषुषी । अपाम् । एका । महिमानम् । बिभर्ति ।
सूर्यस्य । एका । चरति । निष्कृतेष्विति निः—
कृतेषु । घर्मस्य । एका । सविता । एकाम् । नीति ।
यच्छति । या । प्रथमा । व्यौच्छदिति वि—औ-
च्छत् । सा । धेनुः । अभवत् । यमे । सा । नः ।
पयस्वती । धुक्ष्व । उत्तरामुत्तरामित्युत्तराम्—उत्त-
राम् । समाम् । शुक्रर्षभेति शुक्र—ऋषभा । नभसा ।
ज्योतिषा । एति । अगात् । विश्वरूपेति विश्व—रू-
पा । शबलीः । अग्निकेतुरित्यग्नि—केतुः । समानम् ।

अर्धम् । स्वपस्यमानेति सु—अपस्यमाना । विभ्रती । जराम् । अजरे । उषः । एति । अगाः । ऋतूनाम् । पत्नी । प्रथमा । इयम् । एति । अगात् । अह्नाम् । नेत्री । जनित्री । प्रजानामिति प्र—जानाम् । एका । सती । बहुधेति बहु—धा । उषः । वीति । उच्छसि । अजीर्णा । त्वम् । जरयसि । सर्वम् । अन्यत् ( ९ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ चतुर्थकाण्डे तृतीयप्रपाठक एकादशोऽनुवाकः । )

---

दशमेऽनुवाके सृष्टिनामिका इष्टका उक्ताः । अथैकादशे व्युष्टिनामिका उच्यन्ते ।

कल्पः—" इयमेव सा या प्रथमा व्यौच्छदिति षोडश व्युष्टीः " इति ।

तत्र प्रथमामाह—

इयमेव सा या प्रथमा व्यौच्छदन्तरस्यां चरति प्रविष्टा । वधूर्जजान नवगज्जनित्री त्रय एनां महिमानः सचन्ते । , इति ।

अत्रोपधीयमाना येष्टकाऽस्ति, इयमेव सा तथाविधव्युष्टिरूपा, तच्छब्देन परामृश्यमाना पुनर्विविच्यते । सेयं व्युष्टिरूपा कालानां प्रथमभूता सती व्यौच्छद्विशेषेण प्रकाशरूपाऽभूत् । आदिसृष्टिकाले प्रथमो यः प्रभातकालस्तद्रूपेयमिष्टकेत्यर्थः । सा सृष्टिकालीना प्रथमा व्युष्टिरादित्येनानुविष्टा सती, अस्यां पृथिव्यां दैनंदिनप्रभातरूपेण चरति । तत्र दृष्टान्तः—वधूर्जजान नवगज्जनित्री, नवं वरं गच्छतीति नवगन्नूतनविवाहवती वधूर्जनित्री, उत्तरोत्तरजनोत्पादिका यथा जजान जाता तद्वदियमपि व्युष्टिरुत्तरोत्तरप्रभातनिष्पादिकेत्यर्थः ।

( व्युष्टिनामकेष्टकाभिधानम् )
त्रयस्त्रिंसंख्याका महिमानो महिमोपेता अग्निसूर्यचन्द्ररूपा देवा एनां व्युष्टिं सचन्ते समवयन्ति। देवतात्रयप्रकाशकानुग्रहादस्याः प्रभातरूपत्वमित्यर्थः। एवंविधव्युष्टिरूपामिष्टकामुपदधामीत्यभिप्रायः ॥

अथ द्वितीयामाह—

छन्दस्वती उषसा पेपिशाने समानं योनिमनु संचरन्ती। सूर्यपत्नी वि चरतः प्रजानती केतुं कृण्वाने अजरे भूरिरेतसा।, इति।

द्वे ह्युषसावेका सृष्टिकालीना प्रथमेति पूर्वमन्त्रोक्ता। अपरा प्रतिदिनसंचारिणी। साऽप्यस्यां चरति प्रविष्टेति पूर्वमन्त्रोक्ता। एवं सत्युषसा विचरतो द्वे अप्युषसौ विविधं चरतः। रात्राविव प्रलयकाले तिरोहितजगत आविर्भावलक्षणसृष्टिरूपा सती दिवससादृश्यमापादयति। तदिदमेकस्या व्युष्ट्याश्चरणं, शार्वरतमोनिवर्तकत्वमपरस्याश्चरणम्। कीदृश्यावुषसौ, छन्दस्वती छन्दोयुक्तैर्मन्त्रैः स्तूयमानतया छन्दस्वत्यौ, पेपिशाने भृशं प्रकाशयन्त्यौ, समानं योनिमनु संचरन्ती, उभयोः कालविशेषत्वात्कालसामान्यमेव तयोर्योनिर्हेतुः। स चोभयोः समानः, महाप्रभातं सृष्टिरूपमल्पप्रभातं दैनंदिनं चेत्युभौ कालविशेषौ, तौ च स्वकीयं कालसामान्यमनुसृत्य वर्तेते इत्यनुसंचरन्त्यावुषसौ। ते च सूर्यपत्नी सूर्यस्य जाये, प्रजानती स्वयं देवतारूपत्वेन प्रज्ञानवत्यौ, केतुं कृण्वाने ज्ञानं कुर्वत्यौ प्रकाशप्रदानेन हि प्राणिनां रूपज्ञानं जनयन्त्यौ, अजरे कदाचिदपि जरारहिते, भूरिरेतसा प्रभूतरेतस्के बहुव्यापारकारणभूते इत्यर्थः ॥

अथ तृतीयामाह—

ऋतस्य पन्थामनु तिस्र आऽगुस्त्रयो घर्मासो अनु ज्योतिषाऽगुः। प्रजामेका रक्षत्यूर्जमेका व्रतमेका रक्षति देवयूनाम्।, इति।

तिस्र उषस ऋतस्य यज्ञस्य पन्थां मार्गमन्वागुरनुप्राप्ता यज्ञरक्षकत्वेन व्यक्ता व्यवस्थिता इत्यर्थः। त्रयो घर्मासो दीप्तिरूपा अग्निचन्द्रादित्या ज्योतिषा प्रकाशप्रदानेन यज्ञमार्गमन्वागुरनुप्राप्ताः। तिसृणामुषसां देवीनां मध्ये यजमानस्य प्रजामेका रक्षति। यजमानस्योर्जं बलमेका रक्षति। देवयूनां देवानात्मन इच्छतां यजमानानां व्रतं कर्मानुष्ठानमेका रक्षति ॥

अथ चतुर्थीमाह—

चतुष्टोमो अभवद्या तुरीया यज्ञस्य पक्षावृ-
षयो भवन्ती । गायत्रीं त्रिष्टुभं जगतीमनुष्टुभं
बृहदर्कं युञ्जानाः सुवराऽभरन्निदम् ।, इति ।

यद्यप्येकैवोषा तथाऽपि जगद्रक्षणाय योगैश्वर्याद्यनेकशरीरस्वीकारे[1] सति बहव उषसो भवन्ति । या तत्र तुरीया चतुर्थी सा चोषाश्चतुष्टोमस्त्रिवृदादिस्तोमचतुष्टययुक्ताग्निष्टोमरूपाऽभवत् । कीदृशी, यज्ञस्य पक्षौ प्राच्यप्रतीच्याङ्गरूपौ पक्षसदृशौ द्वाववयवौ भवन्ती भावयन्ती जनयन्तीत्यर्थः । तथर्षय ऋषीन्यज्ञनिष्पादकानृत्विजो जनयन्ती । तथा बृहदर्कं प्रौढमर्चनरूपं स्तोत्रं युञ्जानाः संपादयन्ती । गायत्र्यादिदेवताश्चतस्रः सुवः फलभूतं स्वर्गमिदं कर्म चाऽऽभरन्सर्वतो भरन्ती पोषयन्तीत्यर्थः ॥

अथ पञ्चमीमाह—

पञ्चभिर्धाता वि दधाविदं यत्तासाꣳ स्वसॄरज-
नयत्पञ्चपञ्च । तासामु यन्ति प्रयवेण
पञ्च नाना रूपाणि क्रतवो वसानाः ।, इति ।

यदिदं जगदस्ति तत्सर्वं धाता स्रष्टा प्रजापतिः पञ्चभिरुषोभिर्देवीभिर्विदधौ निर्मितवान् । तासां पञ्चानामुषसां प्रत्येकं पञ्च पञ्च स्वसॄरजनयत् । एवं च सति पञ्चसंख्याका ज्येष्ठा उषसस्तासां स्वसारः पञ्चविंशतिसंख्याका इत्येकस्मिन्मासि प्रतिपदादितिथिरूपास्त्रिंशदुषसः संपद्यन्ते । तासामु तासामप्युषसां प्रयवेण प्रकृष्टरूपेण मिश्रणेन पञ्च मुख्या उषसः क्रतवः क्रतुनिष्पादिका वसाना आच्छादयन्त्यः क्रत्वङ्गानि सर्वाणि व्याप्नुवत्यो नाना रूपाणि बहुविधस्वरूपाणि यन्ति प्राप्नुवन्ति । तत्रैका दैनंदिनमग्निहोत्रं निष्पादयति । ततोऽन्ये दर्शपूर्णमासौ निष्पादयतः । औपवसथ्यदिनकृत्यमेका निष्पादयति, सुत्यादिनकृत्यमेकेत्येवं पञ्चानामुपयोगात्प्रकृष्टमिश्रणानां प्रकृष्टोपकारित्वं, क्रत्ववान्तरभेदनिष्पादकत्वेन नानारूपत्वम् ॥

अथ षष्ठीमाह—

त्रिꣳशत्स्वसार उप यन्ति निष्कृतꣳ समानं
केतुं प्रतिमुञ्चमानाः । ऋतूꣳस्तन्वते कवयः प्रजा-
नतीर्मध्येछन्दसः परि यन्ति भास्वतीः ।, इति ।

---

१ ख. च. 'न्ती संभवन्ती' ।

( व्युष्टिनामकेष्टकाभिधानम् )

त्रिंशन्मासगततिथिरूपेण त्रिंशत्संख्याकाः स्वसारो भगिन्य उपसो देव्यो निष्कृतमजस्रं कृतमग्निहोत्रादिकर्मोपयन्ति प्राप्नुवन्ति । कीदृश्यः, समानं केतुं सदृशं चिह्नं प्रकाशरूपं प्रतिमुञ्चमानाः कञ्चुकवद्धारयन्त्यः । ताश्च कवयो विद्वत्पुरुषसमानाः प्रजानतीस्तत्तद्दिनसंपादनीयं प्रजानन्त्य ऋतूंस्तन्वते स्वयमेव पुनः पुनरावर्तनेन वसन्तादीनृतून्संपादयन्ति । छन्दसां वेदानां मध्ये तिष्ठतीति मध्येछन्दाः सूर्यः । तथा चान्यत्राप्याम्नायते—" ऋग्भिः पूर्वाह्णे दिवि देव ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते । वेदैरशून्यस्त्रिभिरेति सूर्यः " इति । तस्य मध्येछन्दसः सूर्यस्य परि पार्श्वेषु भास्वतीर्भास्वत्यः प्रकाशमाना यन्ति गच्छन्ति वर्तन्त इत्यर्थः ॥

अथ सप्तमीमाह—

ज्योतिष्मती प्रति मुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि । वि पश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे ।, इति ।

इयमुषा ज्योतिष्मती ज्योतीरूपैर्नक्षत्रैर्युक्तत्वात् । रात्री चेयं सूर्योदयात्पूर्वभावित्वाद्देवी दीप्यमाना । तादृगुषा नभो नभस्थस्य सूर्यस्य व्रतानि सूर्यसंबन्धित्वेन व्रतवन्नियतानि रश्मिजालानि प्रतिमुञ्चते कञ्चुकमिव स्त्री करोति । तस्यामुषसि नानारूपा गोमहिषादिजातिभेदभिन्नाः पशवो जायमाना जन्मसदृशं निद्रायाः प्रबोधं प्राप्नुवन्तो मातुर्मातृसमानाया अस्या भूम्या उपस्थ उत्सङ्गे विपश्यन्ति विविधमरण्यगमनादिव्यवहारमवलोकयन्ति ॥

अथाष्टमीमाह—

एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् । तेन दस्यून्व्यसहन्त देवा हन्ताऽसुराणामभवच्छचीभिः ।, इति ।

एकाष्टकेति माघकृष्णाष्टमी कथ्यते । तथा चाऽऽपस्तम्बः—" या माघ्याः पौर्णमास्या उपरिष्टाद्व्यष्टका तस्यामष्टमी ज्येष्ठया संपद्यते तामेकाष्टकेत्याचक्षते " इति । सेयमेकाष्टका तपसा तप्यमाना पुत्रार्थं तपश्चरन्ती महिमानं महिमोपेतं गर्भं स्वोदरवर्तिनमिन्द्रं जजानोत्पादयामास । तेनेन्द्रेण देवाः सर्वे दस्यूंस्तस्कररूपान्राक्षसान्व्यसहन्त विशेषेणाभिभूतवन्तः । स चेन्द्रः शचीभिः स्वकीयशक्तिभिरसुराणां हन्ताऽभवत् ॥

---

१ ख. च. 'भस्य । २ ख. 'ष्टाद्व्यष्ट' ।

अथ नवमीमाह—

अनानुजामनुजां मामकर्त सत्यं वदन्त्यन्विच्छ एतत् । भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्र युक्त ।, इति ।

हे एकाष्टका देव्यो मां यजमानं पूर्वमनानुजां सन्तमिदानीमनुजामकर्त कृतवत्यः । आ समन्तात्कर्मानुष्ठानस्यानुकूलत्वेन जायत इत्यनुजास्तद्विपरीतस्त्वनानुजाः । अनुष्ठानरहितं मामनुष्ठानोपेतं कृतवत्य इत्यर्थः । कीदृश्य एकाष्टकाः, सत्यं वदन्त्यवितथं धर्मं वदन्त्यो हे यजमानैवमेतं धर्ममनुतिष्ठेत्येवं बोधयन्त्य इत्यर्थः । अतस्त्वत्प्रसादात्सन्मार्गप्रवृत्तिरहमेतदन्विच्छे वक्ष्यमाणमपेक्षितं प्रार्थये । किं तदपेक्षितमिति तदुच्यते—हे एकाष्टका यूयमस्य युष्मत्पुत्रस्येन्द्रस्य सुमतौ कल्याणबुद्धौ यथा स्थिता एवमहमप्यस्येन्द्रस्य सम्यगनुग्रहचित्ते भूयासम् । वो युष्माकं मध्येऽन्या काचिदन्यामितरामतिलङ्घ्य मा प्रयुक्त प्रयोगं व्यवहारं न करोति, किं तु परस्परानुकूल्येनैव व्यवहरति तद्वदहमप्यृत्विजामनुकूलव्यवहारयुक्तो भूयासम् ॥

अथ दशमीमाह—

अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधम् । भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्र युक्त ।, इति ।

मम यजमानस्य सुमतौ भक्तियुक्तायां बुद्धौ विश्ववेदाः सर्वजगदभिज्ञेयमुषा अभूत्स्थितवती । सा च प्रतिष्ठामाष्टास्मदनुग्रहे स्थैर्यं व्याप्तवती । हि यस्मादियमुषा गाधं प्रतिष्ठानिमित्तभूतं यजमानमविदल्लब्धवती तस्मान्मदनुग्रहे स्थैर्यवतीत्यर्थः । भूयासमित्यादि पूर्ववत् ॥

अथैकादशीमाह—

पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च । पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरभि लोकमेकम् ।, इति ।

अग्निहोत्रदर्शपूर्णमासौपवसथ्यसुत्याख्यकर्मनिष्पादिकाः पञ्च मुख्या उषसो

१ ख. च. 'स्य सुमतावनु' ।

( व्युष्टिनामकेष्टकाभिधानम् )

याः पूर्वमुक्तास्ताः पञ्च व्युष्टीरनु पश्चात्मकं सर्वमिदमुत्पन्नम्। किमुत्पन्नमिति तदुच्यते—पञ्च दोहा उत्पन्नाः। तमिस्रा ज्योत्स्ना संध्याद्वयमहरित्येते पञ्च दोहाः। ते च होतृब्राह्मणे 'इदं वा अग्रे नैव किंचनाऽऽसीत्' इत्यनुवाके 'याऽस्य सा तनूरासीत्। तामपाहत। सा तमिस्राऽभवत्' इत्यादिना समाम्नाताः। तत्रैव 'तेभ्यो मृन्मये पात्रेऽन्नमदुहत्' इत्यादिना दोहा आम्नाताः। आम्नाय चान्ते तदुपसंहृतम्—'एते वै प्रजापतेर्दोहाः' इति। त एते पञ्च दोहाः पञ्च व्युष्टीरनूत्पन्नाः। येयं गौः पृथिवी [ तां ] पञ्चनाम्नीं पञ्चविधनाम्नोपेतामपि पञ्च व्युष्टीरनूत्पन्नां विद्यात्। वसन्ततौं पुष्पवतीति नाम। ग्रीष्मर्तौ तापवतीति नाम। वर्षर्तौ वृष्टिमतीति नाम। शरदि जलप्रसादवतीति नाम। हेमन्तशिशिरयोः शैत्यवतीति नाम। सैषा पञ्चनाम्नी पृथिवी व्युष्टीरनूत्पन्ना। तथा हेमन्तशिशिरयोरैक्येन पञ्चर्तवो व्युष्टीरनूत्पन्नाः। तथा प्राच्यादयः सहोर्ध्वया पञ्च दिशो व्युष्टीरनूत्पन्नाः। पञ्चदशाख्यस्तोमेन क्लृप्ताः संपादिताः पञ्चविधवृत्त्युपेताः स्तोत्रियाः पञ्च व्युष्टीरनूत्पन्नाः। तस्य स्तोमस्य निरूपके ब्राह्मणे 'पञ्चभ्यो हिं करोति' इत्येवं त्रिवारमाम्नातम्। एताः पञ्च व्युष्टयः। एकं लोकमभि समानमूर्ध्नीर्लोक आलोकः प्रकाशस्तमेकं प्रति समानस्वभावाः। मूर्धशब्द उत्तमाङ्गवाची सन्मुख्यं स्वभावमुपलक्षयति। मुख्यस्वभावश्च व्युष्टीनां प्रकाशकत्वम्। एवंविधव्युष्टिरूपेयमिष्टकेति स्तूयते॥

अथ द्वादशीमाह—

ऋतस्य गर्भः प्रथमा व्यूषुष्यपामेका महिमानं बिभर्ति। सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका सवितैकां नि यच्छति। इति।

या एताः पूर्वोक्ताः पञ्चोषसो मुख्यास्तासां मध्ये प्रथमा या व्यूषुषी व्युष्टिरुषःकालरूपाऽस्ति सर्तस्य सत्यस्य गर्भो गर्भसदृशी तेनाऽऽदित्येन सहैव वर्तते। एका काचिदुषा रश्मिसहकारिण्यपां महिमानं बिभर्ति। घर्मकाले रश्मिद्वारा जलमानीय मेघोदरे गर्भरूपं महत्त्वं पोषयति। एका काचिदन्योषाः सूर्यस्य संबन्धिषु निष्कृतेषु संस्कृतेषु प्रदेशेषु चरति प्रकाशं कुर्वती वर्तते। एका काचिदन्योषा घर्मस्य दीप्यमानस्याग्नेः संबन्धिषु चरति प्रकाशं करोति। एकां कांचिदन्यामुषसं सविता नियच्छति दैनंदिनप्रकाशकारित्वेन नियतां करोति॥

अथ त्रयोदशीमाह—

---

१ ख. च. °शत्व°। २ ख. च. °रूपत्वं म°।

या प्रथमा व्यौच्छत्सा धेनुरभवद्यमे । सा नः पयस्वती धुक्ष्वोत्तरामुत्तराꣳ समाम् ।, इति ।

मुख्यासु पञ्चसूषःसु या प्रथमोषा व्यौच्छत्तमो व्यवासयत्प्रकाशोत्पादनेन तमो निराकरोदित्यर्थः । सा तादृगुषा यमे धेनुरभवद्यमस्वामिके लोके प्रकाशप्रदानेन धेनुवत्प्रीतिहेतुरभवत् । तथाविधे हे उषः सा त्वं पयस्वती वृष्ट्युदकयुक्ता सती नोऽस्मदर्थमुत्तरामुत्तरां समामुत्तरोत्तरेषु सर्वेष्वपि संवत्सरेषु निरन्तरं धुक्ष्व दोहनं कुरु । यथा धेनुः क्षीरं प्रयच्छति तथा त्वं व्युष्टिं प्रकाशं च प्रयच्छेत्यर्थः ॥

अथ चतुर्दशीमाह—

शुक्रर्षभा नभसा ज्योतिषाऽगाद्विश्वरूपा शबलीरग्निकेतुः । समानमर्थꣳ स्वपस्यमाना बिभ्रती जरामजर उष आऽगाः ।, इति ।

येयमुषाः शुक्रर्षभा शुक्रेषु प्रकाशरूपेषु नक्षत्रादिषु मध्ये श्रेष्ठा सेयमुषा नभसा ज्योतिषाऽऽकाशवर्तिप्रकाशेन युक्ता सत्यागादिह समागता । कीदृशी, विश्वरूपा सर्वाणि रूपाणि प्रकाश्यानि यस्याः सा विश्वरूपा, शबलीः सूर्योदयात्पूर्वमन्धकारलेशानुवृत्तेर्मिश्रवर्णा, अग्निकेतुरग्निहोत्रिभिरुषःकाले विहृत्य प्रज्वालिता येऽग्नयस्त एव केतवो ध्वजस्थानीया यस्याः साऽग्निकेतुः, समानमर्थं बिभ्रती सूर्यस्य यत्प्रयोजनमन्धकारनिवारणरूपं तदेवोषसोऽपि प्रयोजनमतः सूर्येण सह समानप्रयोजना, स्वपस्यमाना शोभनान्यपांसि कर्माणि तान्यात्मन इच्छतीति स्वपस्यमाना । हेऽजर उषस्त्वं जरामागा वलीपलितादिरूपजरारहिताऽपि सृष्ट्यादिमारभ्य प्रवृत्तत्वाच्चिरकालावस्थानलक्षणां जरां प्राप्ताऽसि । तादृगुषारूपेयमिष्टकेत्यर्थः ॥

अथ पञ्चदशीमाह—

ऋतूनां पत्नी प्रथमेयमाऽगादह्नां नेत्री जनित्री प्रजानाम् । एका सती बहुधोषो व्युच्छस्यजीर्णा त्वं जरयसि सर्वमन्यत् ॥, इति ॥

इयं प्रथमोषा आगादिह कर्मण्यायाता । कीदृशी, ऋतूनां वसन्तादीनां पत्नी पालयित्री, उषःकालस्यासकृदावृत्त्या ह्यृतवः संपद्यन्ते । अह्नां नेत्री

१ ख. 'ती व्युष्ट्यु' ।

नयनस्य हेतुः प्रकाशप्रदानेन निष्पादिकेत्यर्थः। प्रजानां जनित्र्युत्पादयित्री। उषःकालावृत्त्या नवमासगर्भधारणादिना प्रजोत्पद्यते। हे उषस्त्वं स्वरूपेणैका सती बहुधा दिनभेदेन बहुप्रकारा भूत्वा व्युच्छासि तमो विवासयसि निष्कासयसीत्यर्थः। ईदृशी त्वमजीर्णा वलीपलितादिजरारहिता सर्वमन्यन्मनुष्यशरीरादिकं जरयसि जीर्णं करोषि। इत्थं पञ्चदशाऽऽम्नाताः। षोडशी त्वन्यत्र द्रष्टव्या॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

"न वा इदं दिवा न नक्तमासीदव्यावृत्तं ते देवा एता व्युष्टीरपश्यन्ता उपादधत ततो वा इदं व्यौच्छद्यस्यैता उपधीयन्ते व्येवास्मा उच्छत्यथो तम एवाप हते" [ सं० का० ५ प्र० ३ अ० ४ ] इति।

इदं कालस्वरूपं दिवारात्र्योर्व्यावर्तिकयोषसा रहितत्वादव्यावृत्तमासीत्। तथा सति दिवाऽपि नाऽऽसीन्नक्तमपि नाऽऽसीत्। व्यावृत्तस्वरूपस्य निश्चेतुमशक्यत्वात्। तदानीं देवा व्यावृत्तिकारिणीर्व्युष्टिसंज्ञका एता इष्टका अपश्यन्। विशेषेणोच्छति तमो विनाशयतीति व्युष्टिरुषःकालस्तद्वाचकशब्देनोपेतैर्मन्त्रैरुपधेया इष्टका व्युष्टयः। ता दृष्ट्वोपादधत। तत ऊर्ध्वमिदं कालस्वरूपं व्यौच्छद्व्यावर्तिकया व्युष्ट्या दिवानक्तभेदेन व्यावृत्तमासीत्। तस्माद्व्युष्टीरुपदध्यात्। तदुपधाने हि यजमानार्थं व्युच्छत्येव परलोकापरलोकप्रकाशं करोत्येव। अपि च बुद्धिगतभ्रान्तिरूपं तमो विनाशयति॥

अत्र विनियोगसंग्रहः—

इयं व्युष्टीरुपादध्यान्मन्त्राः पञ्चदशेरिताः॥ १॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठक
एकादशोऽनुवाकः॥ ११॥

---

(अथ चतुर्थाष्टके तृतीयप्रपाठके द्वादशोऽनुवाकः।)

---

अग्ने जातान्प्र णुदा नः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व। अस्मे दीदिहि सुमना अहेडन्तवं स्याः शर्मन्त्रिवरूथ उद्भिद्। सहसा

---

१ क. ख. च. कीदृशी।

जाताम्प्र णुंदा नः सपत्नान्प्रत्यजांताञ्जातवेदो नुदस्व । अधिं नो ब्रूहि सुमनस्यमांनो वयः स्याम प्र णुंदा नः सपत्नांन् । चतुश्चत्वारिंशः स्तोमो वर्चो द्रविंणं षोडशः स्तोम ओजो द्रविंणं पृथिव्याः पुरीषमसि ( १ ) अप्सो नामं । एवश्छन्दो वरिंवश्छन्दः शम्भूश्छन्दः परिभूश्छन्दं आच्छच्छन्दो मनश्छन्दो व्यचश्छन्दः सिन्धुश्छन्दः समुद्रं छन्दः सलिलं छन्दः संयच्छन्दो वियच्छन्दो बृहच्छन्दो रथंतरं छन्दो निकायश्छन्दो विवधश्छन्दो गिरश्छन्दो भ्रजश्छन्दः सष्टुप्छन्दोऽनुष्टुप्छन्दः ककुच्छन्दस्त्रिककुच्छन्दः काव्यं छन्दोऽङ्कुपं छन्दः ( २ ) पदपङ्क्तिश्छन्दोऽक्षरंपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छन्दः क्षुरो भृज्वान्छन्दः प्रच्छच्छन्दः पक्षश्छन्द एवश्छन्दो वरिंवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विशालं छन्दो विष्पर्धाश्छन्दश्छदिश्छन्दो दूरोहणं छन्दस्तन्द्रं छन्दोऽङ्काङ्कं छन्दः ( ३ ) ॥

( अस्यङ्कुपं छन्दस्त्रयंस्त्रिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

( पञ्चम्यां चितावसपत्नादीष्टकाभिधानम् )

( अथ चतुर्थाष्टके तृतीयप्रपाठके द्वादशोऽनुवाकः । )

---

अग्ने । जातान् । प्रेति । नुद । नः । सपत्नान् । प्रतीति । अजातान् । जातवेद इति जात—वेदः । नुदस्व । अस्मे इति । दीदिहि । सुमना इति सु—मनाः । अहेडन् । तव । स्याम् । शर्मन् । त्रिवरूथ इति त्रि—वरूथः । उद्भिदित्युत्—भित् । सहसा । जातान् । प्रेति । नुद । नः । सपत्नान् । प्रतीति । अजातान् । जातवेद इति जात—वेदः । नुदस्व । अधीति । नः । ब्रूहि । सुमनस्यमान इति सु—मनस्यमानः । वयम् । स्याम । प्रेति । नुद । नः । सपत्नान् । चतुश्चत्वारिंश इति चतुः—चत्वारिंशः । स्तोमः । वर्चः । द्रविणम् । षोडशः । स्तोमः । ओजः । द्रविणम् । पृथिव्याः । पुरीषम् । असि ( १ ) । अप्सः । नाम । एवः । छन्दः । वरिवः । छन्दः । शंभूरिति शं—भूः । छन्दः । परिभूरिति परि—भूः । छन्दः । आच्छत् । छन्दः । मनः । छन्दः । व्यचः । छन्दः । सिन्धुः । छन्दः । समुद्रम् । छन्दः । सलिलम् । छन्दः । संयदिति सं—यत् । छन्दः । वियदिति वि—यत् । छन्दः । बृहत् । छन्दः । रथंतरमिति रथं—तरम् । छन्दः ।

निकाय इति नि—कायः । छन्दः । विवध इति वि—वधः । छन्दः । गिरः । छन्दः । भ्रजः । छन्दः । सष्टुबिति स—स्तुप् । छन्दः । अनुष्टुबित्यनु—स्तुप् । छन्दः । ककुत् । छन्दः । त्रिककुदिति त्रि—ककुत् । छन्दः । काव्यम् । छन्दः । अङ्कुपम् । छन्दः (२)। पदपङ्क्तिरिति पद—पङ्क्तिः । छन्दः । अक्षरपङ्क्तिरित्यक्षर—पङ्क्तिः । छन्दः । विष्टारपङ्क्तिरिति विष्टा-र—पङ्क्तिः । छन्दः । क्षुरः । भृज्वान् । छन्दः । प्रच्छत् । छन्दः । पक्षः । छन्दः । एवः । छन्दः । वरिवः । छन्दः । वयः । छन्दः । वयस्कृदिति वयः—कृत् । छन्दः । विशालमिति वि—शालम् । छन्दः । विष्पर्धा इति वि—स्पर्धाः । छन्दः । छदिः । छन्दः । दूरोहणमिति दुः—रोहणम् । छन्दः । तन्द्रम् । छन्दः । अङ्काङ्कम् । छन्दः ( ३ )॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ चतुर्थकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः । )

---

एकादशेऽनुवाके व्युष्ट्याख्या इष्टका उक्ताः । तावता चतुर्थचितिः समाप्ता । अथ द्वादशे पञ्चम्यां चितावसपत्नाद्या इष्टका उच्यन्ते ॥

कल्पः—“ श्वोभूते पौर्वाह्णिकीभ्यां प्रचर्य पञ्चमीं चितिं चिनोत्यग्ने जातान्प्र णुदा नः सपत्नानिति पुरस्तादुपदधाति ” इति ।

पाठस्तु—

अग्ने जातान्प्र णुदा नः सपत्नान्प्रत्यजाताञ्जा-
तवेदो नुदस्व । अस्मे दीदिहि सुमना
अहेडन्तव स्याᳪं शर्मन्त्रिवरूथ उद्भित् ।, इति ।

हेऽग्ने नोऽस्माकं जातान्सपत्नान्ये पूर्वमुत्पन्नाः शत्रवस्तान्प्रणुद प्रकर्षेण नाशय । हे जातवेदो ये पूर्वमनुत्पन्ना इतः परमुत्पत्तिप्रसक्तियुक्तास्तानजाताञ्छत्रून्प्रति नुदस्वोत्पत्तिप्रतिबन्धेन निराकुरु । सुमनाः सानुग्रहचित्तस्त्वमहेडन्नक्रुध्यंस्त्रिवरूथः प्राग्वंशसदोहविर्धानरूपगृहत्रयोपेत उद्भिदनुष्ठेयकर्मोत्पादकः सन्नस्मे दीदिहि अस्मान्प्रकाशय । तत्र प्रसादाच्छर्मन्स्यां सुखवान्भवेयम् ॥

एतन्मन्त्रसाध्यमुपधानं विधत्ते—

"अग्ने जातान्प्र णुदा नः सपत्नानिति पुरस्तादुप दधाति जातानेव भ्रातृव्यान्प्र णुदते" [ सं० का० ५ प्र० ३ अ० ५ ] इति ॥

कल्पः—"सहसा जातानिति पश्चात्" इति ।

पाठस्तु—

सहसा जातान्प्र णुदा नः सपत्नान्प्रत्यजाता-
ञ्जातवेदो नुदस्व । अधि नो ब्रूहि सुमनस्य-
मानो वयᳪं स्याम प्र णुदा नः सपत्नान् ।, इति ।

सहसा बलेन जातानिति पूर्ववत् । सुमनस्यमानः सौमनस्यं प्राप्तः सन्नोऽस्मानधिब्रूहि । वयमपि त्वदनुग्रहादधिकाः स्याम । नोऽस्मदीयान्सपत्नाञ्छत्रून्प्रणुद ॥

एतन्मन्त्रसाध्यमुपधानं विधत्ते—

"सहसा जातानिति पश्चाज्जनिष्यमाणानेव प्रति नुदते" [ सं० का० ५ प्र० ३ अ० ५ ] इति ।

पश्चादुपदधातीत्यनुवर्तते । पूर्वमन्त्र उत्पन्नविनाशनप्राधान्यमिह तूत्पत्स्यमानप्रतिबन्धप्राधान्यम् । अनेनाभिप्रायेणोभयत्रैवकारप्रयोगः ॥

कल्पः—"चतुश्चत्वारिᳪंशः स्तोम इति दक्षिणतः" इति ।

पाठस्तु—

चतुश्चत्वारिᳪंशः स्तोमो वर्चो द्रविणम् , इति ।

योऽयं स्तोमश्चतुश्चत्वारिंशदावृत्त्या संपन्नो यच्च वर्चो बलरूपं धनं हे इष्टके तदुभयरूपा त्वमसि ॥

इमं मन्त्रं विनियुङ्क्ते—

" चतुश्चत्वारिꣳशः स्तोम इति दक्षिणतो ब्रह्मवर्चसं वै चतुश्चत्वारिꣳशो ब्रह्मवर्चसमेव दक्षिणतो धत्ते तस्माद्दक्षिणोऽर्धो ब्रह्मवर्चसितरः " [ सं० का० ५ प्र० ३ अ० ५ ] इति ।

ब्राह्मणानामेवाऽऽर्त्विज्यात्तैर्निष्पाद्यस्य स्तोमस्य ब्रह्मवर्चसरूपत्वम् ॥

कल्पः—" षोडशः स्तोम इत्युत्तरतः " इति ।

पाठस्तु—

षोडशः स्तोम ओजो द्रविणम् , इति ।

षोडशभिरावृत्तिभिर्निष्पाद्यः षोडशः । यस्तादृशः स्तोमो यच्चाष्टमधातुरूपं धनं हे इष्टके तदुभयरूपा त्वमसि ॥

एतं मन्त्रं विनियुङ्क्ते—

" षोडशः स्तोम इत्युत्तरत ओजो वै षोडश ओज एवोत्तरतो धत्ते तस्मादुत्तरतोभिप्रयायी जयति " [ सं० का० ५ प्र० ३ अ० ५ ] इति ।

षोडशस्तोमस्यौजोवृद्धिहेतुत्वादोजस्त्वम् ॥

अथेष्टकाद्वयं सह प्रशंसति—

" वज्रो वै चतुश्चत्वारिꣳशो वज्रः षोडशो यदेते इष्टके उपदधाति जाताꣳश्चैव जनिष्यमाणाꣳश्च भ्रातृव्यान्प्रणुद्य वज्रमनु प्र हरति स्तृत्यै " [ सं० का० ५ प्र० ३ अ० ५ ] इति ।

स्तोमयोरनिष्टनिवारकत्वेन वज्रत्वं, प्रणोदनमस्मात्स्थानान्निःसारणं, ततो वज्रस्यानुप्रहारः स्तृत्यै हिंसायै संपद्यते ॥

कल्पः—"इष्टकायां पुरीषमध्यू ( ध्यु ) ह्य पृथिव्याः पुरीषमसीति मध्येऽग्नेः पुरीषवतीम् " इति ।

पाठस्तु—

पृथिव्याः पुरीषमस्यप्सो नाम । , इति ।

हे इष्टकास्वरूप त्वं पृथिव्याश्रितिरूपायाः पुरीषं पूरकमासि । प्सा[ति] भक्षयति विनाशयतीति प्सः । न प्सातीत्यप्सः । हे इष्टके त्वमप्सो नामासि ।

एतन्मन्त्रसाध्यमुपधानं विधत्ते—

" पुरीषवतीं मध्य उप दधाति पुरीषं वै मध्यमात्मनः सात्मानमेवाग्निं चिनुते " [ सं० का० ५ प्र० ३ अ० ५ ] इति ।

---

१ क. घ. ङ. 'वृत्तिहे' । २ क. घ. ङ. 'मध्यस्य पृ' । ३ घ. ङ. हेऽग्ने त्व' ।

( पञ्चम्यां चितावसपत्नादीष्टकाभिधानम् )

पुरीषमध्यू( ध्यु )श्च तस्योपर्युपधीयमानत्वात्पुरीषवती । पुरीषं वा आत्मनो गवादिशरीरस्य मध्यमुदरमध्ये वर्तमानत्वात् । अतः पुरीषवत्त्वेन सात्मानं शरीरसहितमेवाग्निं चिनुते ॥

एतद्वेदनं प्रशंसति—

"सात्माऽमुष्मिँल्लोके भवति य एवं वेद" [सं०का०५प्र०३अ०५] इति ॥

नामकरणपूर्वकमुक्तमिष्टकापञ्चकं प्रशंसति—

"एता वा असपत्ना नामेष्टका यस्यैता उपधीयन्ते नास्य सपत्नो भवति" [सं० का० ५ प्र० ३ अ० ५] इति ।

सपत्नानां शत्रूणां विनाशकत्वादसपत्ना इत्येतासामिष्टकानां नामधेयम् ॥

कल्पः—"एवश्छन्दो वरिवश्छन्द इति चत्वारिंशतं विराजो दशदश प्रतिदिशमक्ष्णया" इति ।

पाठस्तु—

एवश्छन्दो वरिवश्छन्दः शम्भूश्छन्दः परिभूश्छन्द आच्छच्छन्दो मनश्छन्दो व्यचश्छन्दः सिन्धुश्छन्दः समुद्रं छन्दः सलिलं छन्दः संयच्छन्दो वियच्छन्दो बृहच्छन्दो रथंतरं छन्दो निकायश्छन्दो विवधश्छन्दो गिरश्छन्दो भ्रजश्छन्दः सष्टुप्छन्दोऽनुष्टुप्छन्दः ककुच्छन्दस्त्रिककुच्छन्दः काव्यं छन्दोऽङ्कुपं छन्दः पदपङ्क्तिश्छन्दोऽक्षरपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छन्दः क्षुरो भृज्वान्छन्दः प्रच्छच्छन्दः पक्षश्छन्द एवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विशालं छन्दो विष्पर्धाश्छन्दश्छदिश्छन्दो दूरोहणं छन्दस्तन्द्रं छन्दोऽङ्काङ्कं छन्दः ॥, इति ॥

ऐवो वरिव इत्याद्याः शब्दाः स्वर्गलोकवर्तिनां छन्दोविशेषाणां नामधेयानि । हे इष्टके त्वमेवश्छन्दो यत्तद्रूपाऽसि । एवं सर्वत्रोहनीयम् ॥

---

१ घ. ङ 'मध्यस्य त'।

एतन्मन्त्रसाध्यमुपधानं विधत्ते—

" पशुर्वा एष यदग्निर्विराज उत्तमायां चित्यामुप दधाति विराजमेवोत्तमां पशुषु दधाति तस्मात्पशुमानुत्तमां वाचं वदति " [ सं० का० ५ प्र० ३ अ० ५ ] इति ।

पशुप्राप्तिहेतुत्वादग्नेः पशुत्वम् । अतः पशुषूत्तमां विराजं क्षीरदध्यादिरूपमन्नं स्थापयितुमस्मिन्पशुरूपेऽग्नावुत्तमायां पञ्चम्यां चितौ विराडाख्या इष्टका उपदध्यात् । विराड्रूपत्वं तु वक्ष्यमाणदशसंख्यया संपद्यते । यस्मात्पशुरूपेऽग्नावन्नरूपं विराजमुपदधाति तस्माल्लोकेऽपि बहुपशुयुक्तः पुरुषः समागतानतिथीन्प्रत्युत्तमां वाचं वदति—श्रान्ता यूयं मद्गृहे समागच्छत भुज्यतामिति । सेयमुत्तमा वाक् ॥

एकैकस्यां दिशीष्टकासंख्यां विधत्ते—

" दशदशोप दधाति सवीर्यत्वाय " [ सं०का०५प्र०३ अ० ५ ] इति ।

सवीर्यत्वं दार्ढ्योपेतत्वं, तच्च बहुभिरिष्टकाभिः संपद्यते ॥

सम्यक्पङ्क्तिरूपत्वं वारयितुं वक्रत्वं विधत्ते—

" अक्ष्णयोप दधाति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै " [ सं० का० ५ प्र० ३ अ० ५ ] इति ॥

उक्ता विराजः प्रशंसति—

" यानि वै छन्दाꣳसि सुवर्ग्याण्यासन्तैर्देवाः सुवर्गं लोकमायन्तेनर्षयोऽश्राम्यन्ते तपोऽतप्यन्त तानि तपसाऽपश्यन्तेभ्य एता इष्टका निरमिमतेवश्छन्दो वरिवश्छन्द इति ता उपादधत ताभिर्वै ते सुवर्गं लोकमायन्यदेता इष्टका उपदधाति यान्येव छन्दाꣳसि सुवर्ग्याणि तैरेव यजमानः सुवर्गं लोकमेति " [ सं० का० ५ प्र० ३ अ० ५ ] इति ।

स्वर्गमर्हन्तीति सुवर्ग्याणि । तादृशानि यान्याम्नातानि च्छन्दांसि स्वर्गलोके स्थितानि तैश्छन्दोभिर्देवाः स्वर्गं प्राप्ताः । तत्पाठस्तेषां स्वर्गप्राप्तिसाधनम् । ऋषयश्च तेन स्वर्गप्राप्तिनिमित्तेनाश्राम्यन्नुपायमन्विष्यालभमानाः खिन्ना आसन् । ते पुनर्विचार्य स्वर्गप्राप्त्यर्थं तपः कृतवन्तः । ततोऽनुष्ठितेन तपसा तानि च्छन्दांसि स्वर्गसाधनान्यपश्यन् । तेभ्यश्छन्दोभ्य एता विराडाख्या इष्टका निर्मितवन्तः । निर्माय चैवश्छन्दो वरिवश्छन्द इति मन्त्रैस्ता विराज उपादधत । ततस्ताभिरिष्टकाभिस्त ऋषयः स्वर्गं प्राप्ताः । अतो यजमानोऽपि तदुपधानेन सुवर्ग्यैस्तैश्छन्दोभिः स्वर्गं प्राप्नोत्येव ॥

( याज्यानुवाक्याभिधानम् )

अत्र विनियोगसंग्रहः—

" पञ्चम्यां तु चितावग्ने ह्यसपत्नास्तु पञ्च च ।
एवञ्चत्वारिंशदुक्ता विराजो दिक्षु वक्रगाः ॥ १ ॥ " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके
द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ चतुर्थाष्टके तृतीयप्रपाठके त्रयोदशोऽनुवाकः । )

---

अग्निर्वृत्राणिं जङ्घनद्द्रविणस्युर्विपन्यया ।
समिद्धः शुक्र आहुतः । त्वꣳ सोमासि सत्पति-
स्त्वꣳ राजोत वृत्रहा । त्वं भद्रो असि क्रतुः ।
भद्रा ते अग्ने स्वनीक संदृग्घोरस्यं सतो विषु-
णस्य चारुः । न यत्ते शोचिस्तमसा वरन्त न
ध्वस्मानस्तनुवि रेप आ धुः । भद्रं ते अग्ने
सहसिन्ननीकमुपाक आ रोचते सूर्यस्य (१) ।
रुशद्दृशे ददृशे नक्तया चिदरूक्षितं दृश आ
रूपे अन्नम् । सेनाऽनीकेन सुविदत्रो अस्मे
यष्टा देवाꣳ आयजिष्ठः स्वस्ति । अदब्धो
गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दि-
दीहि । स्वस्ति नो दिवो अग्ने पृथिव्या विश्वा-
युर्धेहि यजथाय देव । यत्सीमहिं दिविजात

---

१ क. घ. ङ. 'क्षु ताः स्थिताः ' इ° ।

प्रशंस्तं तद॒स्मासु॑ द्रवि॑णं धेहि चि॒त्रम् । यथा॑ होत॒र्मनु॑षः ( २ ) दे॒वता॑ता य॒ज्ञेभि॑ः सूनो सहसो यजा॑सि । ए॒वा नो॑ अ॒द्य स॒मना समा॒नानु॒शन्न॑ग्न उश॒तो य॑क्षि दे॒वान् । अ॒ग्निमी॑डे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् । होता॑रꣳ रत्न॒धात॑मम् । वृषा॑ सोम द्यु॒माꣳ अ॑सि॒ वृषा॑ दे॒व वृष॑व्रतः । वृषा॒ धर्मा॑णि दधिषे । सांत॑पना इ॒दꣳ ह॒विर्मरु॑त॒स्तज्जु॑जुष्टन । यु॒ष्माको॒ती रिशा॑दसः । यो नो॒ मर्तो॑ वसवो दुर्हृ॒णायुस्ति॒रः स॒त्यानि॑ मरुतः ( ३ ) जिघा॑ꣳसात् । द्रुहः॒ पाशं॒ प्रति॒ स मु॑चीष्ट॒ तपि॑ष्ठेन॒ तप॑सा हन्तना॒ तम् । सं॒व॒त्स॒रीणा॑ म॒रुतः॑ स्व॒र्का उ॑रुक्षया॒ः सग॑णा॒ मानु॑षेषु । ते॑ऽस्मत्पा॒शान्प्र मु॑ञ्च॒न्त्वꣳह॑सः सांत॒पना म॑दि॒रा मा॑द॒यि॒ष्णव॑ः । पि॒प्री॒हि दे॒वाꣳ उ॑श॒तो य॑विष्ठ वि॒द्वाꣳ ऋ॒तूꣳऋ॑तुपते यजे॒ह । ये दैव्या॑ ऋ॒त्वि॒जस्तेभि॑रग्ने॒ त्वꣳ होतॄ॑णाम॒स्याय॑जिष्ठः । अग्ने॒ यद॒द्य वि॒शो अ॑ध्वरस्य होत॒ः पाव॑क ( ४ ) शो॒चे॒ वेष्ट्वꣳ हि यज्वा॑ । ऋ॒ता य॑जासि महि॒ना वि यद्भूर्ह॒व्या वह यविष्ठ॒ या ते॑ अ॒द्य । अ॒ग्निना॑

रयिमश्ववत्पोषमेव दिवेदिवे । यशसं वीरवं-
त्तमम् । गयस्फानो अमीवहा वसुवित्पुष्टिव-
र्धनः । सुमित्रः सोम नो भव । गृहमेधास
आ गत मरुतो माऽप भूतन । प्रमुञ्चन्तो नो
अꣳहसः । पूर्वीभिर्हि ददाशिम शरद्भिर्मरुतो
वयम् । महोभिः ( ५ ) चर्षणीनाम् । प्र
बुध्नियां ईरते वो महाꣳसि प्र णामानि प्रय-
ज्यवस्तिरध्वम् । सहस्रियं दम्यं भागमेतं
गृहमेधीयं मरुतो जुषध्वम् । उप यमेति
युवतिः सुदक्षं दोषा वस्तोर्हविष्मती घृताची ।
उप स्वैनमरमतिर्वसूयुः । इमो अग्ने वीततं-
मानि हव्याऽजस्रो वक्षि देवतातिमच्छं ।
प्रति न ईꣳ सुरभीणि वियन्तु । क्रीडं वः
शर्धो मारुतमनर्वाणꣳ रथेशुभम् (६) । कण्वा
अभि प्र गायत । अत्यासो न ये मरुतः
स्वञ्चो यक्षदृशो न शुभयन्त मर्याः । ते
हर्म्येष्ठाः शिशवो न शुभ्रा वत्सासो न प्रक्री-
डिनः पयोधाः । प्रैषामज्मेषु विथुरेव रेजते
भूमिर्यामेषु यद्ध युञ्जते शुभे । ते क्रीडयो
धुनयो भ्राजदृष्टयः स्वयं महित्वं पनयन्त

धूतंयः । उपह्वरेषु यदचिध्वं ययिं वयं इव मरुतः केनं ( ७ ) चित्पथा । श्चोतंन्ति कोशा उपं वो रथेष्वा घृतमुक्षता मधुंवर्ण-मर्चते । अग्निमंग्निं हवींमभिः सदां हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् । तं हि शश्वंन्त ईडंते स्रुचा देवं घृतश्चुतां । अग्निं हव्याय वोढंवे । इन्द्राग्नी रोचना दिवः श्नथं-द्वृत्रमिन्द्रं वो विश्वतस्परीन्द्रं नरो विश्वंक-र्मन्हविषां वावृधानो विश्वंकर्मन्हविषा वर्धं-नेन ( ८ ) ॥

( सूर्यस्य मनुंषो मरुतः पावंक महोंभी रथेशुभं केन षट्चंत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके तृतीयप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

अपां त्वेमंन्नयं पुरः प्राचींध्रुवक्षितिरुग्रयविरिन्द्राग्नी मा छन्दं आशुस्त्रिवृदग्ने-र्भागोंऽस्येकंयेयमेव सा याऽग्ने जातानग्निर्वृत्राणिं जङ्घनत्रयोंदश ॥ १३ ॥

अपां त्वेन्द्राग्नी इयमेव सा देवतांता षट्त्रिंशत् ॥ ३६ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके तृतीयः प्रपाठकः ॥ ३ ॥

---

( याज्यानुवाक्याभिधानम् )

( अथ चतुर्थाष्टके तृतीयप्रपाठके त्रयोदशोऽनुवाकः । )

---

अग्निः । वृत्राणि । जङ्घनत् । द्रविणस्युः । विपन्ययेति वि—पन्यया । समिद्ध इति सम्—इद्धः । शुक्रः । आहुत इत्या—हुतः । त्वम् । सोम । असि । सत्पतिरिति सत्—पतिः । त्वम् । राजा । उत । वृत्रहेति वृत्र—हा । त्वम् । भद्रः । असि । क्रतुः । भद्रा । ते । अग्ने । स्वनीकेति सु—अनीक । संदृगिति सं—दृक् । घोरस्य । सतः । विषुणस्य । चारुः । न । यत् । ते । शोचिः । तमसा । वरन्त । न । ध्वस्मानः । तनुवि । रेपः । एति । धुः । भद्रम् । ते । अग्ने । सहसिन् । अनीकम् । उपाके । एति । रोचते । सूर्यस्य ( १ ) । रुशत् । दृशे । ददृशे । नक्तया । चित् । अरूक्षितम् । दृशे । एति । रूपे । अन्नम् । सः । एना । अनीकेन । सुविदत्र इति सु—विदत्रः । अस्मे इति । यष्टा । देवान् । आयजिष्ठ इत्या—यजिष्ठः । स्वस्ति । अदब्धः । गोपा इति गो—पाः । उत । नः । परस्पा इति परः—पाः । अग्ने । द्युमदिति द्यु—मत् । उत । रेवत् । दिदीहि । स्वस्ति । नः । दिवः । अग्ने । पृथिव्याः । विश्वायुरिति विश्व—आयुः । धेहि । यजथाय । देव ।

यत् । सीमहिं । दिविजातेतिं दिवि—जात । प्रशंस्तमिति प्र—शस्तम् । तत् । अस्मासुं । द्रविंणम् । धेहि । चित्रम् । यथां । होतः । मनुंषः(२)। देवतातेतिं देव—ताता । यज्ञेभिंः । सूनो इतिं । सहसः । यजांसि । एवा । नः । अद्य । समना । समानान् । उशन् । अग्ने । उशतः । यक्षि । देवान् । अग्निम् । ईडे । पुरोहिंतमितिं पुरः—हितम् । यज्ञस्यं । देवम् । ऋत्विजंम् । होतांरम् । रत्नधातंममितिं रत्न—धातंमम् । वृषां । सोम । द्युमानितिं द्यु—मान् । असि । वृषां । देव । वृषंव्रत इति वृषं—व्रतः । वृषां । धर्मांणि । दधिषे । सांतपना इति सां—तपनाः । इदम् । हविः । मरुंतः । तत् । जुजुष्टन । युष्माकं । ऊती । रिशादस इतिं रिश—अदसः । यः । नः । मर्तः । वसवः । दुर्हृणायुरितिं दुः—हृणायुः । तिरः । सत्यानिं । मरुतः ( ३ ) । जिघांंसात् । द्रुहः । पाशंम् । प्रतीतिं । सः । मुचीष्ट । तपिंष्ठेन । तपंसा । हन्तन । तम् । संवत्सरीणा इतिं सं—वत्सरीणांः । मरुतंः । स्वर्का इतिं सु—अर्काः । उरुक्षया इत्युंरु—क्षयांः । सगणा इति स—गणाः । मानुंषेषु । ते । अस्मत् । पाशांन् । प्रेतिं । मुञ्चन्तु । अंहंसः । सांतपना इतिं सां-

तपनाः। मदिराः। मादयिष्णवः। पिप्रीहि। देवान्। उशतः। यविष्ठ। विद्वान्। ऋतून्। ऋतुपत इत्यृतु—पते। यज। इह। ये। दैव्याः। ऋत्विजः। तेभिः। अग्ने। त्वम्। होतृणाम्। असि। आयजिष्ठ इत्या—यजिष्ठः। अग्ने। यत्। अद्य। विशः। अध्वरस्य। होतः। पावक (४)। शोचे। वेः। त्वम्। हि। यज्वा। ऋता। यजासि। महिना। वीति। यत्। भूः। हव्या। वह। यविष्ठ। या। ते। अद्य। अग्निना। रयिम्। अश्ववत्। पोषम्। एव। दिवेदिव इति दिवे—दिवे। यशसम्। वीरवत्तममिति वीरवत्—तमम्। गयस्फान इति गय—स्फानः। अमीवहेत्यमीव—हा। वसुविदिति वसु—वित्। पुष्टिवर्धन इति पुष्टि—वर्धनः। सुमित्र इति सु—मित्रः। सोम। नः। भव। गृहमेधास इति गृह—मेधासः। एति। गत। मरुतः। मा। अपेति। भूतन। प्रमुञ्चन्त इति प्र—मुञ्चन्तः। नः। अंहसः। पूर्वीभिः। हि। ददाशिम। शरद्भिरिति शरत्—भिः। मरुतः। वयम्। महोभिरिति महः—भिः (५)। चर्षणीनाम्। प्रेति। बुध्नियाः। ईरते। वः। महांसि। प्रेति। नामानि। प्रयज्यव इति प्र—यज्यवः। तिरध्वम्।

सहस्रियंम् । दम्यंम् । आगम् । एतम् । गृहमेधीय-
मिति गृह—मेधीयंम् । मरुतः । जुषध्वम् । उपेति ।
यम् । एति । युवतिः । सुदक्षमिति सु—दक्षम् ।
दोषा । वस्तोः । हविष्मती । घृताची । उपेति ।
स्वा । एनम् । अरमतिः । वसूयुरिति वसु—युः ।
इमो इति । अग्ने । वीततमानीति वीत—तमानि ।
हव्या । अजस्रः । वक्षि । देवतातिमिति देव—ता-
तिम् । अच्छं । प्रतीति । नः । ईम् । सुरभीणि ।
वियन्तु । क्रीडम् । वः । शर्धः । मारुतम् । अनर्वा-
णम् । रथेशुभमिति रथे—शुभम् ( ६ ) । कण्वाः ।
अभि । प्रेति । गायत । अत्यासः । न । ये । मरुतः ।
स्वञ्चः । यक्षदृश इति यक्ष—दृशः । न । शुभयन्त ।
मर्याः । ते । हर्म्येष्ठा इति हर्म्ये—स्थाः । शिशवः ।
न । शुभ्राः । वत्सासः । न । प्रक्रीडिन इति प्र—
क्रीडिनः । पयोधा इति पयः—धाः । प्रेति । एषाम् ।
अज्मेषु । विथुरा । इव । रेजते । भूमिः । यामेषु ।
यत् । ह । युञ्जते । शुभे । ते । क्रीडयः । धुनयः ।
भ्राजदृष्टय इति भ्राजत्—ऋष्टयः । स्वयम् । महित्व-
मिति महि—त्वम् । पनयन्त । धूतयः । उपह्वरेष्वि-
त्युप—ह्वरेषु । यत् । अचिध्वम् । ययिम् । वयः ।

इव । मरुतः । केन (७) । चित् । पथा । श्चोतन्ति । कोशाः । उपेति । वः । रथेषु । एति । घृतम् । उक्षत । मधुवर्णमिति मधु—वर्णम् । अर्चते । अग्निमग्निमित्यग्निम्—अग्निम् । हवीमभिरिति हवी-म—भिः । सदा । हवन्त । विश्पतिम् । हव्यवाह-मिति हव्य—वाहम् । पुरुप्रियमिति पुरु—प्रियम् । तम् । हि । शश्वन्तः । ईडते । स्रुचा । देवम् । घृत-श्चुतेति घृत—श्चुता । अग्निम् । हव्याय । वोढवे । इन्द्राग्नी इतीन्द्र—अग्नी । रोचना । दिवः । श्नथत् । वृत्रम् । इन्द्रम् । वः । विश्वतः । परीति । इन्द्रम् । नरः । विश्वकर्मन्निति विश्व—कर्मन् । हविषा । वावृ-धानः । विश्वकर्मन्निति विश्व—कर्मन् । हविषा । वर्धनेन (८) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके तृतीयप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके तृतीयः प्रपाठकः ॥ ३ ॥

---

( अथ चतुर्थकाण्डे तृतीयप्रपाठके त्रयोदशोऽनुवाकः । )

---

द्वादशेऽनुवाकेऽसपत्ना विराजश्चोक्ताः । अथ त्रयोदशस्यान्त्यानुवाकत्वा-त्तत्र याज्यानुवाक्या उच्यन्ते ।

चातुर्मास्येषु साकमेधाख्ये तृतीये पर्वण्यग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यतेत्यादिहवींष्याम्नातानि । तत्र प्रथमस्याऽऽज्यभागस्य पुरोनुवाक्यामाह—

अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विप-
न्यया । समिद्धः शुक्र आहुतः ।, इति ।

अयमग्निरस्माननुगृह्णात्विति शेषः । कीदृशोऽग्निः, वृत्राणि जङ्घनत्कर्मानुष्ठाननिवारकाणि पापान्यतिशयेन हतवान्, विपन्यया विशिष्टयाऽस्मत्कृतया स्तुत्या द्रविणस्युरस्मदर्थं द्रविणेच्छुः, समिद्धः सम्यक्प्रज्वालितः, शुक्रः शोचमानः, आहुत आ समन्तादस्माभिराकारितोऽनेनाऽऽज्येनाऽऽहुतो वा ॥

अथ द्वितीयस्याऽऽज्यभागस्य पुरोनुवाक्यामाह—

त्वꣳ सोमासि सत्पतिस्त्वꣳ राजोत
वृत्रहा । त्वं भद्रो असि क्रतुः ।, इति ।

हे सोम त्वं सतां सम्यगनुष्ठितानां कर्मणां पतिरसि । किं च त्वं राजा दीप्तिमान् । अपि च त्वं वृत्रहा पापघाती । किं च त्वं भद्रः फलप्रदत्वेन मङ्गलः क्रतुरसि तस्य क्रतोर्निष्पादकत्वात् । यद्यप्येतन्मन्त्रद्वयं चोदकप्राप्तं तथाऽप्यमावास्याविकृतित्वप्रयुक्तां वृधन्वत्योः प्राप्तिं वारयितुं पुनः पाठः ॥

अथ प्रधानस्याग्नेरनीकवतो हविषः पुरोनुवाक्यामाह—

भद्रा ते अग्ने स्वनीक संदृग्घोरस्य
सतो विषुणस्य चारुः । न यत्ते
शोचिस्तमसा वरन्त न ध्वस्मा-
नस्तनुवि रेप आ धुः ।, इति ।

शोभनमनीकं सैन्यं यस्यासौ स्वनीकः, तादृश हेऽग्ने ते त्वदीयानि चरित्राणि भद्रा भद्राणि मङ्गलानि । कथं भद्रत्वमिति तदुच्यते—त्वं संदृक्सम्यग्यजमानादीन्पश्यसि, यजमानादिभिर्वा सम्यग्दृश्यसे । तथा त्वं घोरस्योग्रस्य सतः सर्वदा विद्यमानस्य विषुणस्य बहुलज्वालारूपेण विष्वग्व्याप्तस्य चारुश्चरणहेतुः, अस्मदनिष्टनिवारकस्य निरन्तरस्य ज्वालासमूहस्य प्रवर्तक इत्यर्थः । यत्ते तव शोचिः प्रकाशनं कदाचिदपि तमसा न वरन्त नाऽऽत्रि-

१ ख. च. 'स्ये सा'।

( याज्यानुवाक्याभिधानम् )

यते। ध्वस्मानो ध्वंसहेतवो राक्षसास्तनुवि शरीरे त्वदीये रेपः प्रहाररूपं पापं नाऽऽधुर्नैव संपादितवन्तः ॥

अथ तत्रैव याज्यामाह—

भद्रं ते अग्ने सहसिन्ननीकमुपाक आ
रोचते सूर्यस्य। रुशद्दृशे ददृशे नक्तया
चिदरूक्षितं दृश आ रूपे अन्नम्।, इति।

सहो बलमस्यास्तीति सहसी, तादृश हेऽग्ने सूर्यस्य ते सूर्यसदृशस्य तव भद्रं कल्याणमनीकं ज्वालारूपं सैन्यमुपाक उपान्तिके समीप आरोचते सर्वतो दीप्यते। तादृशं ज्वालारूपं त्वदीयमनीकं नक्तयाचिन्नक्तमपि गाढान्धकारावृतायां रात्रावपि ददृशे विस्पष्टं दृश्यते प्राणिभिः। किमर्थं रात्रौ तज्ज्वालादर्शनमिति तदुच्यते—रुशाद्धिंसकं सर्पादिकं दृशे मार्गे द्रष्टुं, तथा रात्रौ भोजनवेलायां रूपे पुरतो निरूपिते पात्रेऽरूक्षितं रूक्षोपलक्षितमक्षिकाद्युपद्रवरहितमन्नमादृशे सर्वतो द्रष्टुम् ॥

अथ तत्रैव विकल्पितां याज्यामाह—

सैनाऽनीकेन सुविदत्रो अस्मे यष्टा देवाꣳ
आयजिष्ठः स्वस्ति। अदब्धो गोपा उत
नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि।,इति।

हेऽग्ने स त्वं द्युमद्दीप्यमानमुतापि च रेवद्बहुधनयुक्तं गृहक्षेत्रादिकं दिदीहि प्रकाशय। कीदृशस्त्वम्। एनाऽनीकेन सुविदत्र एनेन ज्वालासमूहेन सुष्ठु वेदिता, अस्मे देवान्यष्टाऽस्मदर्थं देवानुद्दिश्य यागनिष्पादकः, स्वस्ति विघ्नराहित्यं यथा भवति तथाऽऽयजिष्ठोऽतिशयेन कृत्स्नयागसमाप्तिकारी, अदब्धः केनाप्यहिंसितो गोपा यज्ञस्य गोप्ता, उतापि च नोऽस्माकं परस्पा अतिशयेन पालयिता ॥

अथ स्विष्टकृतः पुरोनुवाक्यामाह—

स्वस्ति नो दिवो अग्ने पृथिव्या
विश्वायुर्धेहि यजथाय देव।
यत्सीमहि दिविजात प्रशस्तं तद-
स्मासु द्रविणं धेहि चित्रम्।, इति।

हेऽग्ने नोऽस्मभ्यं स्वस्ति निर्विघ्नं विश्वायुः संपूर्णमायुर्धेहि संपादय। किमर्थं, यजथाय यागानुष्ठानार्थम्। कुत्र, दिवो द्युलोके पृथिव्या भूलोके। हे देव यदा द्युलोके भूलोके वा तिष्ठामस्तदा सर्वदा संपूर्णमायुः प्रयच्छेत्यर्थः। हे दिविजात स्वर्गसमुत्पन्नाग्ने यद्द्रविणं सीमहि वयं सेवेम तद्द्रविणमस्मासु धेहि संपादय। कीदृशं द्रविणं, प्रशस्तं विद्यमानश्रैष्ठ्यं चित्रं मणिमुक्तादिनानाजात्युपेतम्॥

तत्रैव याज्यामाह—

यथा होतर्मनुषो देवताता यज्ञेभिः सूनो सहसो यजासि। एवा नो अद्य समना समानानुशन्नग्न उशतो यक्षि देवान्।, इति।

सहसो मन्थनरूपस्य बलस्य सूनुः पुत्रोऽग्निः। स च देवानामाह्वाता। हे सहसः सूनो होतरग्ने यथा मनुषो मनुष्याननुग्रहेण पालयसि, देवताता देवानपि यज्ञैर्यजासि पूजयसि। तातिप्रत्ययस्य स्वार्थे विहितत्वाद्देवा एव देवतातयः। देवताता देवतातीन्। इतरयजमानपालनं तदीयदेवयजनं च दृष्टान्तः। दार्ष्टान्तिकं तु स्वकीयदेवयजनमुच्यते। एवा, एवमेव हेऽग्ने नोऽस्माकमद्यास्मिन्कर्मणि देवान्यक्षि त्वं यज। कीदृशस्त्वं, समना तैर्देवैः सह समानमनस्कः। यद्वा समानस्तैर्देवैस्तुल्य इत्यर्थः। उशन्कामयमान आस्थायुक्त इत्यर्थः। कीदृशान्देवान्, समानांस्त्वया तुल्यानुशतः कामयमानांस्त्वयि प्रीतियुक्तानित्यर्थः॥

अथ मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुमित्यत्र प्रथमाज्यभागस्यानुवाक्यामाह—

अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारꣳ रत्नधातमम्।, इति।

इममग्निमहमीडे स्तौमि। कीदृशं, पुरोहितं पुरोदेश आहवनीये स्थापितं यज्ञस्यानुष्ठीयमानस्य कर्मण ऋत्विजमृत्विक्त्वनिष्पादकं, देवं द्योतमानं होतारं देवानामाह्वातारं, रत्नधातममतिशयेन रत्नानां मणिमुक्ताप्रभृतीनां संपादकम्॥

अथ द्वितीयाज्यभागस्य पुरोनुवाक्यामाह—

---

१ ख. च. यथा। घ. ङ. यदि। २ ख. च. 'स्तथा स'।

वृषा सोम द्युमाꣳ असि वृषा देव
वृषव्रतः। वृषा धर्माणि दधिषे।, इति।

हे सोम त्वं वृषा कामानां वर्षयिता द्युमान्दीप्तिमांश्चासि। हे देव यस्मात्त्वं वृषा वर्षयिता तस्मात्त्वं वृषव्रतो वर्षनिमित्तं कर्म यस्यासौ वृषव्रतः। किंच यस्मात्त्वं वृषा वर्षयिता तस्माद्धर्माणि पुण्यानि दधिषे धारयसि॥

अथ प्रधानस्य हविषः पुरोनुवाक्यामाह—

सांतपना इदꣳ हविर्मरुतस्तज्जुजु-
ष्टन। युष्माकोती रिशादसः।, इति।

सम्यक्तप्यन्ते शत्रव एभिरिति सांतपनाः। तादृशो हे मरुतोऽस्माभिर्दी-यमानं यदिदं हविरस्ति तज्जुजुष्टन सेवध्वम्। किमर्थं, युष्माकोती युष्माक-मूतये क्षुद्बाधातो रक्षणाय। कीदृशा मरुतः, रिशादसो रिशन्ति हिंसन्तीति रिशास्तानदन्ति भक्षयन्ति विनाशयन्तीति रिशादसः॥

अथ तत्रैव याज्यामाह—

यो नो मर्तो वसवो दुर्हृणायुस्तिरः सत्यानि
मरुतो जिघाꣳसात्। द्रुहः पाशं प्रति स
मुचीष्ट तपिष्ठेन तपसा हन्तना तम्।, इति।

वसवो वासहेतवो हे मरुतो यो मर्तो मनुष्यो दुर्हृणायुर्दुष्टक्रोधोऽत्यन्तं पापबुद्धिः सत्यानि तिरोऽस्मान्प्रति कृतान्सर्वथा नानिष्टं करिष्यामीत्येवं-रूपाञ्शपथांस्तिरस्कृत्य नोऽस्माञ्जिघांसाद्धन्तुमिच्छेत्स द्रुहो द्रोही पाशं भव-दीयं बन्धनरज्जुं प्रतिमुचीष्ट प्रतिमुञ्चतु स्वगले बध्नात्वित्यर्थः। तं द्रोहिणं तपि-ष्ठेन तपसाऽत्यधिकेन संतापेन हन्तन मारयत॥

तत्रैव विकल्पितां याज्यामाह—

संवत्सरीणा मरुतः स्वर्का उरुक्षयाः सगणा
मानुषेषु। तेऽस्मत्पाशान्प्र मुञ्चन्त्वꣳहसः
सांतपना मदिरा मादयिष्णवः।, इति।

ये मरुतः सन्ति ते पाशान्स्वकीयबन्धनरज्जूरस्मदस्मत्तोऽपनीय मानुषेषु विरो-धिजनेषु प्रमुञ्चन्तु गले बध्नन्तु। कीदृशान्पाशान्, अंहसः पापिष्ठानत्यन्त-

निर्बन्धहेतूनित्यर्थः । कीदृशो मरुतः, संवत्सरीणाः सकृद्यागेनाऽऽराधिताः संवत्सरपर्यन्तं रक्षकाः, स्वर्काः सुष्ठ्वर्चनीयाः, उरुक्षया विस्तीर्णगृहाः, सगणाः सप्तभिर्गणैः सहिताः । ' सप्तगणा वै मरुतः ' इति श्रुत्यन्तरात् । सांतपनाः सम्यक्शत्रूणां तापकारिणः, मदिराः स्वयं दृष्टाः, मादयिष्णवोऽस्मानपि हर्षयन्तः ॥

अथ तत्रैव स्विष्टकृतः पुरोनुवाक्यामाह—

पिप्रीहि देवाꣳ उशतो यविष्ठ विद्वाꣳ ऋतूꣳ-
ऋँतुपते यजेह । ये दैव्या ऋत्विजस्तेभि-
रग्ने त्वꣳ होतॄणामस्यायजिष्ठः ।, इति ।

हे यविष्ठ युवतमाग्न उशतः कामयमानान्देवान्पिप्रीह्यतिशयेन प्रीणय । हे ऋतुपते सूर्यात्मना कालपरिपालक त्वमृतून्कालविशेषान्विद्वाञ्जानन्वर्तसे । तस्मादिहोचिते काले यज । देवेषु भवा ये दैव्या ऋत्विजः सन्ति " अग्निर्होता । अश्विनाऽध्वर्यू । त्वष्टाऽग्नीत् " इत्यादिनाऽऽम्नातास्तेभिस्तैर्देवैः सह त्वमस्य यजमानस्य संबन्धिनां होतॄणामृत्विजां मध्य आयजिष्ठः सर्वतो यष्टृतमोऽसि ॥

तत्रैव याज्यामाह—

अग्ने यदद्य विशो अध्वरस्य होतः पावक
शोचे वेष्ट्वꣳ हि यज्वा । ऋता यजासि महिना
वि यद्भूर्हव्या वह यविष्ठ या ते अद्य ।, इति ।

हे स्विष्टकृदग्ने विशः प्रविष्टस्यानुष्ठितस्याध्वरस्य संबन्धि यद्धविरस्ति तदद्य वेरशान भक्षय । होतर्होमकर्तः पावक शोधक शोचे दीप्यमान । तान्येतान्यग्निविशेषणानि । हि यस्मात्त्वं यज्वा यागस्य कर्ता तस्मादृता—ऋतेऽस्मदीययज्ञे महिना महिम्ना यजासि देवान्प्रीणयसि । यद्यस्मात्कारणाद्विभूर्विशिष्टो भवसि तत्तस्मात्कारणाद्धे यविष्ठ युवतमाद्य ते तव या हव्या यानि हव्यानि अस्माभिर्दीयन्ते तानि [ वह ] स्वी कुरु । यद्यप्येतन्मन्त्रद्वयं दार्शिकहौत्रकाण्डे समाम्नातत्वाचोदकादेव प्राप्तं तथाऽपि विस्पष्टार्थं पुनर्वचनमिति द्रष्टव्यम् ॥

अथ " मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम् " इत्यत्र प्रथमस्याऽऽज्यभागस्य पुरोनुवाक्यामाह—

(याज्यानुवाक्याभिधानम्)

अग्निना रयिमश्नवत्पोषमेव दिवे-
दिवे। यशसं वीरवत्तमम्।, इति।

अनेनाग्निना रायिं धनमश्नवत्सर्वो जनः प्राप्नोति। न केवलं धनस्य स्वरूपमात्रं किंतु दिने दिने तस्य धनस्य पुष्टिमेव प्राप्नोति न तु ह्रासम्। कीदृशं पोषं, यशसं कीर्तिकरं, वीरवत्तमं वीरा अस्मदीयाः पुत्रा अस्येति वीरवानतिशयेन तथाविधम्॥

अथ द्वितीयस्याऽऽज्यभागस्य पुरोनुवाक्यामाह—

गयस्फानो अमीवहा वसुवित्पुष्टिवर्ध-
नः। सुमित्रः सोम नो भव।, इति।

हे सोम नोऽस्मान्प्रत्युच्यमानविशेषणविशिष्टो भव। कानि तानि विशेषणानीति तान्युच्यन्ते—गयस्फानो गृहाणां वर्धयिता। अमीवहा रोगाणां हन्ता। वसुविद्धनस्य लम्भयिता। पुष्टिवर्धनो गवादिषु पुष्टेर्वर्धयिता। सुमित्रः शोभनं यजमानरूपं मित्रं यस्यासौ सुमित्रः॥

अथ प्रधानस्य पुरोनुवाक्यामाह—

गृहमेधास आ गत मरुतो माऽप भूत-
न। प्रमुञ्चन्तो नो अꣳहसः।, इति।

गृहे क्रियमाणो मेधो यज्ञो येषां ते गृहमेधासः। तादृशा हे मरुत आगतेह कर्मण्यागच्छत। माऽपभूतन कदाचिदपि माऽपगच्छत। किं कुर्वन्तः, अंहसः पापान्नोऽस्मान्प्रमुञ्चन्तः प्रकर्षेण वियोजयन्तः[1]॥

तत्रैव याज्यामाह—

पूर्वीभिर्हि ददाशिम शरद्भिर्मरुतो वय-
म्। महोभिश्चर्षणीनाम्।, इति।

हे मरुतो वयं यजमानाः पूर्वीभिरनादिकालप्रवृत्ताभिर्महोभिर्व्रीह्यादिसंपूर्णतया महनीयाभिः शरद्भिः संवत्सरैश्चर्षणीनां मनुष्याणामृत्विजां मध्ये[2] स्थित्वा हि यस्माद्ददाशिम हविर्द[3]द्मस्तस्माद्यूयमिहाऽऽगच्छत॥

तत्रैव विकल्पितामन्यां याज्यामाह—

---

१ ख. च. 'ण मोचय'। २ ख. च. 'ध्ये स्थाथिभिर्यस्मा'। ३ ख. च. 'ददेम तस्मा'।

प्र बुध्निया ईरते वो महा॑ꣳसि प्र णामानि प्रयज्यवस्तिरध्वम् । सहस्रियं दम्यं भागमेतं गृहमेधीयं मरुतो जुषध्वम् ।, इति ।

हे मरुतो बुध्निया बुध्ने मूले भवानि बुध्नियानि अनादिकालप्रवृत्तानीत्यर्थः । वो महांसि युष्माकं तेजांसि प्रेरते प्रकर्षेण गच्छन्ति प्रवृत्तानीत्यर्थः । प्रयज्यवः प्रकृष्टयागयुक्ता यूयं नामानि गृहमेधिनो मरुतो वयमित्यादीनि भवदीयनामधेयानि प्रतिरध्वं प्रकर्षेण लोके ख्यापयत । सहस्रियं सहस्रसमार्हं गृहमेधीयं गृहमेधिनो युष्मानुद्दिश्य दीयमानमेतं भागं पुरोडाशरूपं जुषध्वं सेवध्वम् ॥

अथ तत्रैव स्विष्टकृतः पुरोनुवाक्यामाह—

उप यमेति युवतिः सुदक्षं दोषा वस्तोर्हविष्मती घृताची । उप स्वैनमरमतिर्वसूयुः ।, इति ।

युवतिर्मन्त्रेण मिश्रीभूता हविष्मती संपूर्णहविर्युक्ता घृताची घृतपुष्टेयमाहुतिर्दोषा रात्रौ वस्तोर्दिवसे च सुदक्षं कुशलं यं स्विष्टकृतमग्निमुपैति प्राप्नोति । एनं स्विष्टकृतमग्निमरमतिः कदाचिदप्युपरतिरहितो वसूयुर्धनमिच्छन्यजमानः स्वा स्वकीयेन हविषोपैति प्राप्नोति सेवत इत्यर्थः ॥

अथ तत्रैव याज्यामाह—

इमो अग्ने वीततमानि हव्याऽजस्रो वक्षि देवतातिमच्छ । प्रति न ईꣳ सुरभीणि वियन्तु ।, इति ।

हेऽग्न इमो इमानि वीततमान्यतिशयेन कान्तानि हव्या हवींषि देवतातिमच्छ देवानभिप्राप्तुमजस्रोऽनुपरतो वक्षि वह नोऽस्मत्संबन्धीनि सुरभीणि सुगन्धीनि हवींषि प्रतीं प्रत्येकमेव वियन्तु देवा भक्षयन्तु ॥

अथ " मरुद्भ्यः क्रीडिभ्यः पुरोडाशꣳ सप्तकपालं निर्वपति साकꣳ सूर्येणोद्यता " इत्यस्य हविषः पुरोनुवाक्यामाह—

क्रीडं वः शर्धो मारुतमनर्वाणꣳ रथेशुभम् । कण्वा अभि प्र गायत ।, इति ।

---

१ ख. °रमति° ।

( याज्यानुवाक्याभिधानम् )

हे कण्वाः कण्वप्रभृतयो वेदाचार्याः शर्धो बलमभि प्रगायताभितो वैदिकैः स्तोत्रैः प्रकर्षेण गानं कुरुत। कीदृशं बलं, वः क्रीडं युष्माकं क्रीडाकारणं, ारुतं मरुतां संबन्धि, अनर्वाणं भ्रातृव्यैरतिरस्कृतं, भ्रातृव्यो वा अर्वेति श्रुत्यन्तरात्। रथेशुभं रथप्रेरणे समर्थम् ॥

तत्रैव याज्यामाह—

अत्यासो न ये मरुतः स्वञ्चो यक्षदृशो न शुभयन्त मर्याः। ते हर्म्येष्ठाः शिशवो न शुभ्रा वत्सासो न प्रक्रीडिनः पयोधाः।, इति।

ये मरुतः शुभयन्त शोभयन्ते स्वरुचा स्वसंचारेण सर्वं जगदलं कुर्वन्तीत्यर्थः। तेऽस्माननुगृह्णन्त्विवति शेषः। कीदृशा मरुतः, अत्यासो न सततगमनशीला अश्वादय इव, स्वञ्चः शोभनगतयः, यक्षदृशो न मर्या यागदर्शनार्थिनो मर्त्या इवौत्सुक्येनात्र समागता इति शेषः। हर्म्येष्ठाः शिशवो न शुभ्राः प्रासादमारूढा राजबालका इव पर्वतेषु शुभ्राः संचरन्तीति शेषः। वत्सासो न प्रक्रीडिनः। यथाऽत्यन्तबालवत्साः शीघ्रमितस्ततः पलायमानाः प्रकर्षेण क्रीडन्ति तथा तत्र तत्र संचरन्तः क्रीडापराः, पयोधा मेघानुत्पाद्य तेषु जलधारिणः ॥

तत्रैव विकल्पितामन्यां पुरोनुवाक्यामाह—

प्रैषामज्मेषु विथुरेव रेजते भूमिर्यामेषु यद्ध युञ्जते शुभे। ते क्रीडयो धुनयो भ्राजदृष्टयः स्वयं महित्वं पनयन्त धूतयः।, इति।

एषां मरुतामज्मेषु गमनेषु भूमिः प्ररेजते प्रकर्षेण रेजते कम्पते भृशं भूकम्पजनकानि मरुतां गमनानीत्यर्थः। तत्र दृष्टान्तः—विथुरेव यथा भर्तृरहिता योषित्पालकाभावादत्यन्तं कम्पते तद्वत्। यद्ध ये हि मरुतो यामेषु जलस्य नियामकेषु मेघेषु युञ्जते जलं योजयन्ति ते मरुतो महित्वं स्वकीयमहिमानं स्वयं पनयन्त स्वयमेव व्याहरन्ति स्तुवन्ति वा। कीदृशास्ते, क्रीडयः क्रीडापराः, धुनयः कम्पयुक्ताः सर्वदा चलन्त इत्यर्थः। भ्राजदृष्टयो भ्राजो दीप्तिर्विद्युद्रूपा दृष्टिर्येषां ते भ्राजदृष्टयः। धूतयः शत्रूणां कम्पहेतवः ॥

तत्रैव विकल्पितां याज्यामाह—

उपह्वरेषु यदचिध्वं ययिं वय इव मरुतः

---

१ क. ख. च. 'व व्यवह'।

केन चित्पथा । श्चोतन्ति कोशा उप वो
रथेष्वा घृतमुक्षता मधुवर्णमर्चते । , इति ।

हे मरुतो यद्यदा वय इव पक्षिण इव यूयं केनचित्पथा केनापि मार्गेणोपह्वरेषूपेत्य हर्तव्येषु ताडनीयेषु मेघेषु ययिमचिध्वं गतिं संपादितवन्तः । यदा जलपूर्णमेघमास्फालयन्ति भवन्त इत्यर्थः । तदानीं कोशा धनपूर्णगृहसदृशा जलपूर्णा मेघा वो युष्माकं रथेषूप समीपमागतेषु सत्सु श्चोतन्ति जलं स्रावयन्ति । यूयमप्यर्चते यजमानाय मधुवर्णं मधुररसोपेतं घृतं घृतसमानमुदकमा समन्तादुक्षत सिञ्चत ॥

अथ तत्रैव स्विष्टकृतः पुरोनुवाक्यामाह—

अग्निमग्निं॑ हवीमभिः सदा हवन्त
विश्पतिम् । हव्यवाहं पुरुप्रियम् । , इति ।

अग्निमग्निं तत्तद्यागगतस्विष्टकृतं हवीमभिराह्वानपरैः सदा हवन्त सर्वदा यजमाना आह्वयन्ति । कीदृशमग्निं, विश्पतिं प्रजानां पालकं, हव्यवाहं देवान्प्रति हविषो वोढारं, पुरुप्रियं पुरूणां बहूनां यजमानानां प्रीतिहेतुम् ॥

तत्रैव याज्यामाह—

तं॑ हि शश्वन्त ईडते स्रुचा देवं घृत-
श्चुता । अग्निं॑ हव्याय वोढवे । , इति ।

शश्वन्तो निरन्तरमनुतिष्ठन्त ऋत्विजो घृतश्चुता घृतं क्षरता ( न्त्या ) स्रुचा युक्तास्तमग्निं देवमीडते स्तुवते । किमर्थं, हव्याय वोढवे हविर्वोढुम् ॥

अथ यान्यन्यानि त्रीणि हवींष्याम्नातानि—" ऐन्द्राग्नमेकादशकपालमैन्द्रं चरुं वैश्वकर्मणमेककपालम् " इति, तत्रैन्द्राग्नस्य याज्यापुरोनुवाक्ययोः प्रतीके दर्शयति—

इन्द्राग्नी रोचना दिवः श्नथद्वृत्रम् , इति ।

इन्द्राग्नी रोचना दिव इति पुरोनुवाक्या । श्नथद्वृत्रमिति याज्या । एतच्चोभयमिन्द्राग्नी रोचना दिव इत्यनुवाके व्याख्यातम् ॥

अथैन्द्रस्य याज्यानुवाक्ययोः प्रतीके दर्शयति—

इन्द्रं वो विश्वतस्परीन्द्रं नरः , इति ।

---

१ ख. घ. ङ. च. यथा । २ ख. च. 'भयं पूर्वप्रपाठकस्यान्त्यानु' ।

( याज्यानुवाक्याभिधानम् )

इन्द्रं वो विश्वतस्परीति पुरोनुवाक्या । इन्द्रं नर इति याज्या । एतच्चोभयमिन्द्रं वो विश्वतस्परि हवामह इत्यनुवाके व्याख्यातम् ॥

अथ वैश्वकर्मणस्य याज्यानुवाक्ययोः प्रतीके दर्शयति—

विश्वकर्मन्हविषा वावृधानो विश्व-
कर्मन्हविषा वर्धनेन ॥, इति ॥

तत्र विश्वकर्मन्हविषा वावृधान इति पुरोनुवाक्या । विश्वकर्मन्हविषा वर्धनेनेति याज्या । एतच्चोभयं य इमा विश्वा भुवनानि जुह्वदित्यनुवाके व्याख्यास्यते ॥

अत्र विनियोगसंग्रहः—

अथ याज्या साकमेधे ह्यनीकवति यागके ।
आज्यभागानुवाक्ये द्वे ह्यग्निर्वृत्रेति वर्णिते ॥ १ ॥

भद्रा तिस्रः प्रधाने स्युः स्वस्ति स्विष्टकृति द्वयम् ।
अग्निं सांतपनीयाज्यभागयोर्द्वे प्रधानके ॥ २ ॥

सांतातिस्रः पिप्रीह्यग्ने द्वयं स्विष्टकृतीरितम् ।
अग्निना गृहमेधीये द्वे स्यातामाज्यभागयोः ॥ ३ ॥

गृह प्रधाने तिस्रः स्युरुप स्विष्टकृति द्वयम् ।
क्रीडं चतुष्टयं क्रीडियागे ह्यग्निमिति द्वयम् ॥ ४ ॥

संयाज्ये स्तामथेन्द्राग्नी श्नथचैन्द्राग्नयागके ।
इन्द्रमिन्द्रं चैन्द्रयागे विश्वद्वे वैश्वकर्मणे ॥
त्रयस्त्रिंशदृचः प्रोक्ता अनुवाक इहान्तिमे ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके
त्रयोदशोऽनुवाकः ॥ १३ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे तृतीयः प्रपाठकः ॥ ३ ॥

( पञ्चमचितिशेषस्तोमभागाभिधानम् )

( अथ चतुर्थाष्टके चतुर्थः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

रश्मिरसि क्षयाय त्वा क्षयं जिन्व प्रेतिरसि धर्माय त्वा धर्मं जिन्वान्वितिरसि दिवे त्वा दिवं जिन्व संधिरस्यन्तरिक्षाय त्वाऽन्तरिक्षं जिन्व प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्व विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्व प्रवाऽस्यह्ने त्वाऽहर्जिन्वानुवाऽसि रात्रियै त्वा रात्रिं जिन्वोशिगसि ( १ ) वसुभ्यस्त्वा वसूञ्जिन्व प्रकेतोऽसि रुद्रेभ्यस्त्वा रुद्राञ्जिन्व सुदीतिरस्यादित्येभ्यस्त्वाऽऽदित्याञ्जिन्वौजोऽसि पितृभ्यस्त्वा पितॄञ्जिन्व तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व पृतनाषाडसि पशुभ्यस्त्वा पशूञ्जिन्व रेवदस्योषधीभ्यस्त्वौषधीर्जिन्वाभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्वाधिपतिरसि प्राणाय ( २ ) त्वा प्राणं जिन्व यन्ताऽस्यपानाय त्वाऽपानं जिन्व सꣳसर्पोऽसि चक्षुषे त्वा चक्षुर्जिन्व वयोधा असि श्रोत्राय त्वा श्रोत्रं

जिन्व त्रिवृदसि प्रवृदसि संवृदसि विवृदसि सꣳरोहोऽसि नीरोहोऽसि प्ररोहोऽस्यनुरोहोऽसि वसुकोऽसि वेषश्रिरसि वस्यष्टिरसि ( ३ ) ॥

( उशिगसि प्राणाय त्रिचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ चतुर्थाष्टके चतुर्थः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

रश्मिः । असि । क्षयाय । त्वा । क्षयम् । जिन्व । प्रेतिरिति प्र—इतिः । असि । धर्माय । त्वा । धर्मम् । जिन्व । अन्वितिरित्यनु—इतिः । असि । दिवे । त्वा । दिवम् । जिन्व । संधिरिति सं—धिः । असि । अन्तरिक्षाय । त्वा । अन्तरिक्षम् । जिन्व । प्रतिधिरिति प्रति—धिः । असि । पृथिव्यै । त्वा । पृथिवीम् । जिन्व । विष्टम्भ इति वि—स्तम्भः । असि । वृष्ट्यै । त्वा । वृष्टिम् । जिन्व । प्रवेति प्र—वा असि । अह्ने । त्वा । अहः । जिन्व । अनुवेत्यनु—वा । असि । रात्रियै । त्वा । रात्रिम् । जिन्व । उशिक् । असि ( १ ) । वसुभ्य इति वसु—

भ्यः । त्वा । वसून् । जिन्व । प्रकेत इति प्र—केतः । असि । रुद्रेभ्यः । त्वा । रुद्रान् । जिन्व । सुदीतिरिति सु—दीतिः । असि । आदित्येभ्यः । त्वा । आदित्यान् । जिन्व । ओजः । असि । पितृभ्य इति पितृ—भ्यः । त्वा । पितॄन् । जिन्व । तन्तुः । असि । प्रजाभ्य इति प्र—जाभ्यः । त्वा । प्रजा इति प्र—जाः । जिन्व । पृतनाषाट् । असि । पशुभ्य इति पशु—भ्यः । त्वा । पशून् । जिन्व । रेवत् । असि । ओषधीभ्य इत्योषधि—भ्यः । त्वा । ओषधीः । जिन्व । अभिजिदित्यभि—जित् । असि । युक्तग्रावेति युक्त—ग्रावा । इन्द्राय । त्वा । इन्द्रम् । जिन्व । अधिपतिरित्यधि—पतिः । असि । प्राणायेति प्र—अनाय ( २ ) । त्वा । प्राणमिति प्र—अनम् । जिन्व । यन्ता । असि । अपानायेत्यप—अनाय । त्वा । अपानमित्यप—अनम् । जिन्व । सꣳसर्प इति सं—सर्पः । असि । चक्षुषे । त्वा । चक्षुः । जिन्व । वयोधा इति वयः—धाः । असि । श्रोत्राय । त्वा । श्रोत्रम् । जिन्व । त्रिवृदिति त्रि—वृत् । असि । प्रवृदिति प्र—वृत् । असि । संवृदिति सं—वृत् । असि । विवृदिति

वि—वृत् । असि । सꣳरोह इति सं—रोहः । असि । नीरोह इति निः—रोहः । असि । प्ररोह इति प्र—रोहः । असि । अनुरोह इत्यनु—रोहः । असि । वसुकः । असि । वेषश्रीरिति वेष—श्रीः । असि । वस्यष्टिः । असि ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ चतुर्थकाण्डे चतुर्थः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रपाठके तृतीयेऽस्मिंश्चितयः पञ्च वर्णिताः ।
चतुर्थे पञ्चमचितेः शेषः सर्वो विधीयते ॥ २ ॥

तत्र प्रथमानुवाके स्तोमभागा उच्यन्ते ।

कल्पः—" रश्मिरसि क्षयाय त्वा क्षयं जिन्वेति स्तोमभागाः सप्त सप्त प्रतिदिशमवशिष्टा मध्ये " इति ।

तत्र पूर्वस्यां दिश्युपधेयानामिष्टकानां सप्त मन्त्रानाह—

रश्मिरसि क्षयाय त्वा क्षयं जिन्व प्रेतिरसि धर्माय त्वा धर्मं जिन्वान्वितिरसि दिवे त्वा दिवं जिन्व संधिरस्यन्तरिक्षाय त्वाऽन्तरिक्षं जिन्व प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्व विष्ट-

---

१ च. 'तीये हि चित' ।

( पञ्चमचितिशेषस्तोमभागाभिधानम् )

म्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्व
प्रवाऽस्यह्ने त्वाऽहर्जिन्व , इति ।

हे इष्टके त्वमादित्यरश्मिरूपाऽस्यतः क्षयाय निवाससिद्ध्यर्थं त्वामुपदधामि । त्वं चास्माकं क्षयं निवासं जिन्व प्रीणय संपादयेत्यर्थः । एवं सर्वं[1] योजनीयम् । प्रकृष्टा गतिर्यस्याः सा प्रेतिः । धर्मो विहितकर्मानुष्ठानम् । अनुकूला गतिर्यस्याः साऽन्वितिः । द्यौः स्वर्गः । द्यावापृथिव्योर्मध्यवर्ती देशः संधिः । अन्तरिक्षं गन्धर्वादिलोकभागोऽन्तरिक्ष[2]म् । प्रतिधिशब्देन भूलोकभाग उपलक्ष्यते । विशेषेण स्तभ्यते जलमत्र धार्यत इति विष्टम्भो मेघः । प्रथमं वाति गच्छति प्रवर्तत इ[3]ति प्रवोषःकालः । उषा हि सूर्योदयात्पूर्वं प्रवर्तते । अतोऽहःसिद्ध्यर्थं त्वामुपदधामि ॥

अथ दक्षिणस्यां दिश्युपधेयानामिष्टकानां सप्त मन्त्रानाह—

अनुवाऽसि रात्रियै त्वा रात्रिं जिन्वोशिगसि
वसुभ्यस्त्वा वसूञ्जिन्व प्रकेतोऽसि रुद्रेभ्यस्त्वा
रुद्राञ्जिन्व सुदीतिरस्यादित्येभ्यस्त्वाऽऽदित्या-
ञ्जिन्वौजोऽसि पितृभ्यस्त्वा पितॄञ्जिन्व तन्तु-
रसि प्रजाभ्यस्त्वा प्रजा जिन्व पृतना-
षाडसि पशुभ्यस्त्वा पशूञ्जिन्व , इति ।

अनु सूर्यास्तमयात्पश्चाद्वाति चरति प्रयातीत्यनुवा सायंसंध्या । उशि[4]ग्वसुभिः काम्यमानाऽसि[5] अतो वसुभ्यो वसूनां प्रीत्यर्थं त्वामुपदधामि । त्वं च वसूञ्जिन्व प्रीणय । एवमुत्तरत्र योज्यम् । प्रकृ[6]ष्टः केतो यः [स] प्रकेतः । रुद्राणां यः प्रकेतस्तद्रूपा त्वमसि । शोभना दीतिर्दीप्तिः सुदीतिः सा त्वमसि । ओजो बलं पितॄणां यद्बलमनुग्रहसमर्थं तद्रूपा त्वमसि । तन्तुः पुत्रपौत्रादिसांतत्यम् । स्वकीयान्गवादिपशूनपहर्तुमागता या परकीयसेना सा पृतना तां सहतेऽभिभवतीति पृतनाषाट् ॥

अथ पश्चिमायां दिश्युपधेयानामिष्टकानां सप्त मन्त्रानाह—

रेवदस्योषधीभ्यस्त्वौषधीर्जिन्वाभिजिदसि यु-

१ ख. च. सर्वत्र । २ ख. च. °क्षश° । ३ ख. घ. ङ. च. इत्युषः° । ४ घ. ङ. °शिगसिका° । ५ क. °सि वसुभिर्वसु° । घ. ङ. °सि व° । ६ घ. °कृष्टो यः के° । ७ क. यस्य ।

क्ग्रावेन्द्राय त्वेन्द्रं जिन्वाधिपतिरसि प्रा-
णाय त्वा प्राणं जिन्व यन्ताऽस्यपा-
नाय त्वाऽपानं जिन्व सꣳसर्पोऽसि
चक्षुषे त्वा चक्षुर्जिन्व वयोधा असि श्रो-
त्राय त्वा श्रोत्रं जिन्व त्रिवृदसि , इति।

रा अस्यास्तीति रेवत् । ओषधिसाध्यं[1] यद्धनं[2] जीवनं तद्रूपा त्वमसि । अभितो जयसि शत्रूनभिभवसीत्यभिजित् । पाषाणसदृशो वज्रो ग्रावा, युक्तो हस्ते स्वीकृतो ग्रावा यस्यासौ युक्तग्रावा । इन्द्रश्चक्षुरादीन्द्रियाण्यधिष्ठाय पाल-यिता । यः श्वासरूपो वायुः सोऽधिपतिस्तद्रूपा त्वमसि । वहिर्निर्गतस्य[3] श्वासस्य पुनरप्यन्तःप्रवेशाय नियामको यो वायुविशेषः स यन्ता, तद्रूपा त्व-मसि । सम्यक्सर्पयति बलेन[4] प्रवर्तयति मां चयनधनप्रस्वा(स्वीक)रणाय संसर्पो दृष्टिः । वयः पक्षी तद्वद्धावतीति[5] वयोधाः । पक्षी तत्र तत्र गत्वा स्वकार्यं साधयति तथा श्रोत्रेन्द्रियशक्तिस्तत्तच्छब्दं प्राप्य निश्चिनोति, तच्छ-क्तिरूपा त्वमसि । तिस्र आवृतोऽवयवविशेषा यस्य मिथुनीभावस्य सोऽयं त्रिवृत्पुमान्योषित्सङ्गश्चेत्यवयवत्रयं, तथाविधमिथुनीभावरूपा त्वमसि ॥

अथोदीच्यां दिश्युपधेयानामिष्टकानां सप्त मन्त्रानाह—

प्रवृदसि संवृदसि विवृदसि सꣳरोहोऽसि
नीरोहोऽसि प्ररोहोऽस्यनुरोहोऽसि , इति।

स्त्रीपुरुषयोः संसर्गानन्तर[6]भाविनी या प्रवृत्तिः सा प्रवृत्तद्रूपा त्वमसि[7] । प्रवृत्त्यनन्तरभावी यः सम्यग्व्यापारः सोऽयं संवृत्तद्रूपा त्वमसि । तद्व्यापारा-दूर्ध्वं या विवृत्तिः सा विवृत्तद्रूपा त्वमसि । संभोगादूर्ध्वं[8] बीजस्य क्षेत्रे यः समारोपः सोऽयं संरोहस्तद्रूपा त्वमसि । क्षेत्रे प्रक्षिप्तस्य[9] बीजस्य निःशेषेण गर्भाशयव्याप्तिर्नीरोहस्तद्रूपा त्वमसि । गर्भाशये व्याप्तस्य बीजस्य शरीराकारः परिणामः प्ररोहस्तद्रूपा त्वमसि । तस्य च परिणतस्य शरीरस्या-नुकूलः पुत्रादिरूपेण प्रादुर्भावोऽनुरोहस्तद्रूपा त्वमसि ॥

---

१ क. °षधीसा° । २ ख. घ. ङ. °नं तद्वज्जीव° । च. °नं त° । ३ ख. च. °तव-तः श्वा° । ४ ख. च. °लेनेति संसर्पोऽहि । धनदृष्टिसारणया धनमवाति एवं मामवतु धने दृष्टिं प्रसा-रय । वयः° । ५ क ख. °द्वद्धाती° । ६ क. घ. ङ. °न्तरं भा° । ७ ख. च. °सि । सद्व्या° । ८ घ. ङ तद्रूपादू° । ९ ख. च. क्षिप्तस्य ।

( पञ्चमचितिशेषस्तोमभागाभिधानम् )

अथ मध्यदेश उपधेयानामिष्टकानां त्रीन्मन्त्रानाह—

वसुकोऽसि वेषश्रिरसि वस्यष्टिरसि ॥, इति ॥

वसु धनमस्यास्तीति वसुको धनी पुत्रस्तद्रूपा त्वमसि । वेषो व्याप्तं धनं, वेषं श्रयते सेवत इति वेषश्रिः। प्राप्तस्याभिवृद्धिकारीत्यर्थः। तद्रूपा त्वमसि। वसुनोऽभिवृद्धस्य धनस्याष्टिर्भोजनं यस्यासौ वस्यष्टिः । धनं संपाद्य तदभिवृद्धिं च कृत्वा तयाऽभिवृद्ध्या जीवतीत्यर्थः। तद्रूपा त्वमसि ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

" यज्ञेन वै प्रजापतिः प्रजा असृजत ताः स्तोमभागैरेवासृजत यत्स्तोमभागा उपदधाति प्रजा एव तद्यजमानः सृजते " [ सं० का० ५ प्र० ३ अ० ५ ] इति।

प्रजापतिर्यदा यज्ञेन[1] प्रजा असृजत तदानीं यज्ञमध्यवर्तिनः स्तोमभागमन्त्रा एव[2] सृष्टिहेतव[3] आसन् । त्रिवृदादिस्तोमयुक्तानि यानि बहिष्पवमानादिस्तोत्राणि तानि भजन्त इति रश्मिरित्यादयो मन्त्राः स्तोमभागाः। ब्रह्मा तत्स्तोत्राण्यभ्यनुजानन्रश्मिरित्यादिकमेकैकं मन्त्रमुच्चार्याभ्यनुजानाति। एतच्चास्माभिः पूर्वमृषयो वा इन्द्रमित्यनुवाके स्पष्टमुक्तम्। अतो रश्मिरित्यादयः[4] स्तोमभागाः[5]। एतैर्मन्त्रैरुपधेया इष्टका अपि स्तोमभागाः । तदुपधानेन यजमानः प्रजाः सृजत एव ॥

ता एताः स्तोमभागाख्या इष्टका यज्ञतेजस्त्वेन यज्ञप्रतिष्ठात्वेन च क्रमेण प्रशंसति[6]—

" बृहस्पतिर्वा एतद्यज्ञस्य तेजः समभरद्यत्स्तोमभागा यत्स्तोमभागा उपदधाति सतेजसमेवाग्निं चिनुते बृहस्पतिर्वा एतां यज्ञस्य प्रतिष्ठामपश्यद्यत्स्तोमभागा यत्स्तोमभागा उपदधाति यज्ञस्य प्रतिष्ठित्यै " [ सं० का० ५ प्र० ३ अ० ५ ] इति ॥

सामान्येन विहितं पुनर्विशेषाकारेण विधत्ते—

" सप्तसप्तोप दधाति सवीर्यत्वाय तिस्रो मध्ये प्रतिष्ठित्यै " [ सं० का० ५ प्र० ३ अ० ५ ] इति।

एकैकस्यां दिशि सप्तसप्तोपधानेन सवीर्यत्वं दार्ढ्यं भवति। मध्ये[7] तिसृणामुपधानेन प्रतिष्ठा स्थैर्यं भवति ॥

---

१ च. यज्ञात्प्रजा°। २ ख. च. °व वृद्धिहे°। ३ ख. घ. ङ. च. °तवः। त्रि°। ४ च. °दयो मन्त्राः स्तो°। ५ ख. च. °गाः। त°। ६ ख. च. प्रशंसति। ७ क. °ध्येऽपि ति°।

प्रजापतिः स्तोमभागैरेवासृजतेति सामान्यत उक्तं, तेषु कैः स्तोमभागैः किमसृजतेत्येकैकमिष्टकामन्त्रं विभजते—

"रश्मिरित्येवाऽऽदित्यमसृजत प्रेतिरिति धर्ममन्वितिरिति दिवꣳ संधिरित्यन्तरिक्षं प्रतिधिरिति पृथिवीं विष्टम्भ इति वृष्टिं प्रवेत्यहरनुवेति रात्रिमुशिगिति वसून्प्रकेत इति रुद्रान्त्सुदीतिरित्यादित्यानोज इति पितॄꣳस्तन्तुरिति प्रजाः पृतनाषाडिति पशून्रेवदित्योषधीः" [सं० का० ५ प्र० ३ अ० ६] इति ।

तत्र रश्मिरित्यादयो मन्त्रास्तत्तत्सृज्यपदार्थसंबन्धित्वेन पूर्वं व्याख्याताः । अतस्तेन तेन मन्त्रेण तत्तत्पदार्थमसृजतेत्युपपन्नम् ॥

एवं पञ्चदशभिर्मन्त्रैः सृष्टिरभिहिता । अथ सृष्टस्य जगतो रक्षाहेतुभूतं षोडशं मन्त्रं दर्शयति—

"अभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्वेत्येव दक्षिणतो वज्रं पर्यौहदभिजित्यै" [सं० का० ५ प्र० ३ अ० ६] इति ।

अस्मिन्मन्त्रे वज्र एव संबोध्यते । हे वज्र त्वमभिजिज्जयहेतुर्युक्तग्रावा स्थापितपाषाण इव दृढश्चाऽसि अत इन्द्रप्रीत्यर्थं त्वां पर्यूहामि तेनेन्द्रं प्रीणयेति मन्त्रार्थः । प्रजापतिरेतं मन्त्रमुच्चारयन्दक्षिणहस्तेन सृष्टस्य जगतो रक्षणाय वज्रं प्रेरितवांस्तेन बाधकविनाशे सति सृष्ट्या अभिजयोऽभूत् ॥

याः सृष्टाः प्रजा वज्रेण रक्षितास्तासु शरीररूपासु प्रजासु मन्त्रचतुष्टयेनेन्द्रियस्थापनं दर्शयति—

"ताः प्रजा अपप्राणा असृजत तास्वधिपतिरसीत्येव प्राणमदधाद्यन्तेत्यपानꣳ सꣳसर्प इति चक्षुर्वयोधा इति श्रोत्रम्" [सं० का० ५ प्र० ३ अ० ६] इति ॥

एवमिन्द्रिययुक्तैः शरीरैर्व्यवहरन्तीषु प्रजासु मन्त्रचतुष्टयेन मिथुनीभावसंपत्तिं दर्शयति—

"ताः प्रजाः प्राणतीरपानतीः पश्यन्तीः शृण्वतीर्न मिथुनी अभवन्तासु त्रिवृदसीत्येव मिथुनमदधात्" [सं० का० ५ प्र० ३ अ० ६] इति ॥

मिथुनीभूतासु प्रजासु मन्त्रचतुष्टयेन प्रजोत्पादनसामर्थ्यं दर्शयति—

"ताः प्रजा मिथुनी भवन्तीर्न प्राजायन्त ताः सꣳरोहोऽसि नीरोहोऽसीत्येव प्राजनयत्" [सं० का० ५ प्र० ३ अ० ६] इति ॥

---

१ ख. च. 'रेव प्रजा असृ' । २ ख. च. तच्च । ३ ख. च. अत्र । ४ क. घ. ङ. °ते । व° । ५ घ. ङ. °श्चासीत । ६ ख. घ. ङ. °रेतन्मन्त्र° । च. °रेनं म° । ७ ख. च. °ञेणाभिर° ।

( नाकसदाख्येष्टकाभिधानम् )

अपत्योपेतानां प्रजानां मन्त्रत्रयेण प्रतिष्ठा भवतीत्येतद्दर्शयति—

" ताः प्रजाः प्रजाता न प्रत्यतिष्ठन्ता वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीत्येवैषु लोकेषु प्रत्यस्थापयद्यदाह वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीति प्रजा एव प्रजाता एषु लोकेषु प्रति ष्ठापयति " [ सं० का० ५ प्र० ३ अ० ६ ] इति ॥

एतद्वेदनं प्रशंसति—

" सात्माऽन्तरिक्षꣳ रोहति सप्राणोऽमुष्मिँल्लोके प्रति तिष्ठत्यव्यर्धुकः प्राणापानाभ्यां भवति य एवं वेद " [ सं० का० ५ प्र० ३ अ० ६ ] इति। सात्मा सशरीरोऽन्तरिक्षं गत्वा यक्षगन्धर्वादिलोकेषु भोगान्भुङ्क्ते, स्वर्गलोकेऽपि प्राणशरीरयुक्त एव प्रतितिष्ठति, प्राणापानाभ्यां कदाचिदपि न वियुक्तो भवति ॥

अत्र विनियोगसंग्रहः—

" इष्टका रश्मिरित्येकत्रिंशच्च स्तोमभागकाः ॥ १ ॥ " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ चतुर्थाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः । )

---

राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपतयोऽग्निर्हेतीनां प्रतिधर्ता त्रिवृत्त्वा स्तोमः पृथिव्याꣳ श्रयत्वाज्यमुक्थमव्यथयत्स्तभ्नातु रथंतरꣳ साम प्रतिष्ठित्यै विराडसि दक्षिणा दिग्रुद्रास्ते देवा अधिपतय इन्द्रो हेतीनां प्रतिधर्ता पञ्चदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु प्रउगमुक्थमव्यथयत्स्तभ्नातु बृहत्साम प्रति-

---

१ ख. घ. ङ. च. °नां प्र°।

ष्ठित्यै सम्राडंसि प्रतीची दिक् ( १ ) आदित्या-
स्तें देवा अधिपतयः सोमो हेतीनां प्रतिधर्ता
संप्तदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु मरुत्वतीयं-
मुक्थमव्यंथयत्स्तभ्नातु वैरूपꣳ साम प्रतिष्ठित्यै
स्वराडस्युदीची दिग्विश्वे ते देवा अधिपतयो
वरुणो हेतीनां प्रतिधर्तैकविꣳशस्त्वा स्तोमः
पृथिव्याꣳ श्रयतु निष्केवल्यमुक्थमव्यंथयत्स्त-
भ्नातु वैराजꣳ साम प्रतिष्ठित्या अधिपत्न्यसि
बृहती दिङ्मरुतस्ते देवा अधिपतयः ( २ )
बृहस्पतिर्हेतीनां प्रतिधर्ता त्रिणवत्रयस्त्रिꣳशौ
त्वा स्तोमौ पृथिव्याꣳ श्रयतां वैश्वदेवाग्निमा-
रुते उक्थे अव्यंथयन्ती स्तभ्नीताꣳ शाक्व-
ररैवते सामनी प्रतिष्ठित्या अन्तरिक्षायर्षयस्त्वा
प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु
विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना
नाकस्य पृष्ठे सुवर्गे लोके यजमानं च
सादयन्तु ( ३ ) ॥

( प्रतीची दिङ्मरुतस्ते देवा अधिपतयश्चत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके
चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

(नाकसदाख्येष्टकाभिधानम्)

(अथ चतुर्थाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः।)

---

राज्ञी। असि। प्राची। दिक्। वसवः। ते। देवाः। अधिपतय इत्यधि—पतयः। अग्निः। हेतीनाम्। प्रतिधर्तेति प्रति—धर्ता। त्रिवृदिति त्रि—वृत्। त्वा। स्तोमः। पृथिव्याम्। श्रयतु। आज्यम्। उक्थम्। अव्यथयत्। स्तभ्नातु। रथंतरमिति रथं—तरम्। साम। प्रतिष्ठित्या इति प्रति—स्थित्यै। विराडिति वि—राट्। असि। दक्षिणा। दिक्। रुद्राः। ते। देवाः। अधिपतय इत्यधि—पतयः। इन्द्रः। हेतीनाम्। प्रतिधर्तेति प्रति—धर्ता। पञ्चदश इति पञ्च—दशः। त्वा। स्तोमः। पृथिव्याम्। श्रयतु। प्रउगम्। उक्थम्। अव्यथयत्। स्तभ्नातु। बृहत्। साम। प्रतिष्ठित्या इति प्रति—स्थित्यै। सम्राडिति सम्—राट्। असि। प्रतीची। दिक्। (१)। आदित्याः। ते। देवाः। अधिपतय इत्यधि—पतयः। सोमः। हेतीनाम्। प्रतिधर्तेति प्रति—धर्ता। सप्तदश इति सप्त—दशः। त्वा। स्तोमः। पृथिव्याम्। श्रयतु। मरुत्वतीयम्। उक्थम्। अव्यथयत्। स्तभ्नातु। वैरूपम्। साम। प्रतिष्ठित्या इति प्रति—स्थित्यै। स्वराडिति स्व—राट्। असि।

उदीची । दिक् । विश्वे । ते । देवाः । अधिपतय इत्यधि—पतयः । वरुणः । हेतीनाम् । प्रतिधर्तेति प्रति—धर्ता । एकविंश इत्येक—विंशः । त्वा । स्तोमः । पृथिव्याम् । श्रयतु । निष्केवल्यम् । उक्थम् । अव्यथयत् । स्तभ्नातु । वैराजम् । साम । प्रतिष्ठित्या इति प्रति—स्थित्यै । अधिपत्नीत्यधि—पत्नी । असि । बृहती । दिक् । मरुतः । ते । देवाः । अधिपतय इत्यधि—पतयः ( २ ) । बृहस्पतिः । हेतीनाम् । प्रतिधर्तेति प्रति—धर्ता । त्रिणवत्रयस्त्रिंशावितिं त्रिणव—त्रयस्त्रिंशौ । त्वा । स्तोमौ । पृथिव्याम् । श्रयताम् । वैश्वदेवाग्निमारुते इतिं वैश्वदेव—आग्निमारुते । उक्थे इति । अव्यथयन्ती इति । स्तभ्नीताम् । शाक्वररैवते इति शाक्वर—रैवते । सामनी इति । प्रतिष्ठित्या इति प्रति—स्थित्यै । अन्तरिक्षाय । ऋषयः । त्वा । प्रथमजा इति प्रथम—जाः । देवेषु । दिवः । मात्रया । वरिणा । प्रथन्तु । विधर्तेति वि—धर्ता । च । अयम् । अधिपतिरित्यधि—पतिः । च । ते । त्वा । सर्वे । संविदाना इति सं—विदानाः । नाकस्य । पृष्ठे । सुवर्गे इति

(नाकसदाख्येष्टकाभिधानम्)

सुवः—गे । लोके । यजमानम् । च । साद-
यन्तु (३) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके
चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ चतुर्थकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः ।)

---

प्रथमेऽनुवाके स्तोमभागाख्या इष्टका उक्ताः । अथ द्वितीये नाकसदाख्या इष्टका अभिधीयन्ते ।

कल्पः—"राज्ञ्यसि प्राची दिगिति पञ्च नाकसदः प्रतिदिशमेकां मध्ये" इति ।

तत्र प्रथमामाह—

राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपत-
योऽग्निर्हेतीनां प्रतिधर्ता त्रिवृत्त्वा स्तोमः
पृथिव्याꣳ श्रयत्वाज्यमुक्थमव्यथयत्स्त-
भ्नातु रथंतरꣳ साम प्रतिष्ठित्यै, इति ।

हे इष्टके त्वं राज्ञी राजमाना प्राची दिक्तद्रूपाऽसि । ते तव वसवोऽष्टसंख्याका अधिपतयोऽधिकं पालयितारः । अग्निस्तवोपद्रवकराणां हेतीनां परकीयायुधानां प्रतिधर्ता निराकर्ता । योऽयं त्रिवृदाख्यः स्तोमः स त्वां पृथिव्यां स्थापयतु । यदाज्यमुक्थमाज्यनामकं प्र वो देवायाग्नय इत्यादिकं शस्त्रमवस्थितं [ तत् ] त्वामव्यथयद्व्यथारहितां कुर्वत्स्तभ्नातु दृढी करोतु । यद्रथंतरं साम तत्प्रतिष्ठित्यै तव चिरावस्थानाय भवतु । एवमुत्तरेष्वपि मन्त्रेषु योज्यम् ॥

अथ द्वितीयं मन्त्रमाह—

विराडसि दक्षिणा दिग्रुद्रास्ते देवा अधिपतय
इन्द्रो हेतीनां प्रतिधर्ता पञ्चदशस्त्वा स्तो-
मः पृथिव्याꣳ श्रयतु प्रउगमुक्थमव्यथय-
त्स्तभ्नातु बृहत्साम प्रतिष्ठित्यै, इति ।

---

१ ख. च. °ति पाठस्तु त° । २ क. घ. ङ. °तीयम° ।

तत्तत्सामदेवतासंबन्धिनस्त्रिवृदादयः स्तोमास्ते च “ समिधमा तिष्ठ ” इत्यत्रैव व्याख्याताः । वायुरग्रेगा इत्यादिकं शस्त्रं प्रउगम् ॥

अथ तृतीयं[2] मन्त्रमाह—

सम्राडसि प्रतीची दिगादित्यास्ते देवा अधिपतयः सोमो हेतीनां प्रतिधर्ता सप्तदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु मरुत्वतीयमुक्थमव्यथयत्स्तभ्नातु वैरूपꣳ साम प्रतिष्ठित्यै , इति ।

“ आ त्वा रथं यथोतयः ” इत्यादिकं मरुत्वतीयं शस्त्रम् ॥

अथ चतुर्थं[3] मन्त्रमाह—

स्वराडस्युदीची दिग्विश्वे ते देवा अधिपतयो वरुणो हेतीनां प्रतिधर्तैकविꣳशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु निष्केवल्यमुक्थमव्यथयत्स्तभ्नातु वैराजꣳ साम प्रतिष्ठित्यै , इति ।

“ अभि त्वा शूर नोनुमः ” इत्यादि[4] निष्केवल्यम् ॥

अथ पञ्चमं[5] मन्त्रमाह—

अधिपत्न्यसि बृहती दिङ्मरुतस्ते देवा अधिपतयो बृहस्पतिर्हेतीनां प्रतिधर्ता त्रिणवत्रयस्त्रिꣳशौ त्वा स्तोमौ पृथिव्याꣳ श्रयतां वैश्वदेवाग्निमारुते उक्थे अव्यथयन्ती स्तभ्नीताꣳ शाक्वररैवते सामनी प्रतिष्ठित्यै , इति ।

अधिकं पालयित्र्यधिपत्नी । बृहती दिक्प्रौढोर्ध्वा दिक् । “ तत्सवितुर्वृणीमहे ” इत्यादिकं शस्त्रं वैश्वदेवम् । “ वैश्वानराय पृथुपाजसे ” इत्यादिकं शस्त्रमाग्निमारुतम् ॥

अथ सर्वेष्वपि मन्त्रेष्वनुषञ्जनीयं शेषमाह—

---

१ ख. च. °त्तत्संब° । २ क. °तीयम° । ३ क. °तुर्थम° । ४ ख. च. °दिकं नि° । ५ °ञ्चमम° ।

( नाकसदाख्येष्टकाभिधानम् )

अन्तरिक्षायर्षयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे सुवर्गे लोके यजमानं च सादयन्तु ॥ , इति ॥

देवेषु मध्ये ये प्रथमजा ऋषयो नारदाद्याः। अत एव स्मर्यते—" देवर्षिर्नारदस्तथा " इति। ते महर्षयस्त्वामिष्टकां दिवो मात्रयाऽऽकाशस्य यत्परिमाणं तेन परिमाणेन प्रथन्तु विस्तारयन्तु। किमर्थम्, अन्तरिक्षार्थमन्तरिक्षं व्याप्तुमित्यर्थः। कीदृशेन परिमाणेन, वरिणा वरणीयेन। न केवलमृषयः प्रथन्तु किं तु विधर्ता चायमधिपतिश्च योऽयमिष्टकानां निष्पादयिता यश्च पालकस्तावपि प्रथेताम्। तेन ( च ) महर्षयो विधर्ता चाधिपतिश्च सर्वे संविदानाः परस्परमैकमत्यं प्राप्ता नाकस्य पृष्ठे स्वर्गसदृशस्यास्य क्षेत्रस्योपरि त्वां सादयन्तु, यजमानं च स्वर्गे लोके सादयन्तु ॥

अत्र यान्युदात्दृतानि शस्त्राणि तान्याश्वलायनो दर्शयति—" प्र वो देवायेत्याज्यमुपसंतनुयादिति वायुरग्रेगा यज्ञप्रीरिति सप्तानां पुरोरुचां तस्यास्तस्या उपरिष्टाद्दृचमृचं शंसेद्वायवायाहि दर्शतेति सप्तं ऋचां द्वितीयां प्रउगे त्रिरिति। मरुत्वतीयं शस्त्रं शंसेदध्वर्यो शोंसावोमिति माध्यंदिने शस्त्रादिष्वाहाव आ त्वा रथं यथोतय इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचराविति। निष्केवल्यस्याभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति प्रगाथौ स्तोत्रियानुरूपौ यदि रथंतरं पृष्ठमिति। तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचराविति। स्वभ्यंग्रमाग्निमारुतं तस्याऽऽद्यां पच्छ ऋगावानं पच्छः शस्यां चेदर्धर्चश इतरां संतानमुत्तमेन वचनेन वैश्वानराय पृथुपाजसे " इति ॥

राज्यसीत्यादिभिर्मन्त्रैः साध्यमुपधानं विधत्ते—

" नाकसद्भिर्वै देवाः सुवर्गं लोकमायन्तन्नाकसदां नाकसत्त्वं यन्नाकसद उपदधाति नाकसद्भिरेव तद्यजमानः सुवर्गं लोकमेति" [ सं० का० ५ प्र० ३ अ० ७ ] इति।

नाकः स्वर्गः संद्यते प्राप्यते यैर्मन्त्रैस्ते नाकसदः। तथा च मन्त्रलिङ्गम्—

---

१ क. घ. °नं स्व°। २ क. °ष्टादृचं तृचं। च. °ष्टात्तृचं तृचं। ३ ख. च. °सतृचा द्वि°। ४ ख. °दिनं श°। ५ क. °भ्यग्र आग्नि°। ६ क. °रुते त°। ७ घ. ङ. °वातं प°। ८ ख. °स्याचेद°। ९ घ. ङ. संहायमु°। १० घ. ङ. स्वर्ग्यते। च. संपद्यते।

" नाकस्य पृष्ठे सुवर्गे लोके यजमानं च सादयन्तु " इति । एतैर्मन्त्रैरुपधेया इष्टका अपि नाकसदः । यस्मात्ताभिर्देवाः स्वर्गं गतास्तस्मान्नाकसदिति नाम संपन्नम् । तदुपधानेन यजमानः स्वर्गं लोकं प्राप्नोति ॥

दुःखनिवारकत्वेन तदुपधानं प्रशंसति—

" सुवर्गो वै लोको नाको यस्यैता उपधीयन्ते नास्मा अकं भवति " [ सं० का० ५ प्र० ३ अ० ७ ] इति ।

कं सुखमकं दुःखं न विद्यते दुःखं यत्र सोऽयं नाकः, स्वर्गश्च[1] तादृशः । ततो नाकसदुपधानेन[2] यजमानस्य[3] दुःखं न भवति ॥

पुनरपि स्थानसंपादकत्वेन प्रशंसति—

" यजमानायतनं वै नाकसदो यन्नाकसद उपदधात्यायतनमेव तद्यजमानः कुरुते " [ सं० का० ५ प्र० ३ अ० ७ ] इति[4] ॥

पृष्ठस्तोत्रसंबन्धितेजोरूपत्वेन पुनः प्रशंसति—

" पृष्ठानां वा एतत्तेजः संभृतं यन्नाकसदो यन्नाकसद उपदधाति पृष्ठानामेव तेजोऽव रुन्धे " [ सं० का० ५ प्र० ३ अ० ७ ] इति ॥

अत्र विनियोगसंग्रहः—

राज्ञी नाकसदः पञ्च सर्वशेषोऽन्तरित्ययम् ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ चतुर्थाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः । )

---

अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानिग्रामण्यौ पुञ्जिकस्थला च कृतस्थला चाप्सरसौ यातुधाना हेती रक्षांसि प्रहेतिरयं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानिग्रामण्यौ

---

१ क. घ. ङ. °र्गस्ताद° । २ ख. च. °सदासुप° । ३ क. घ. ङ. °स्य न दुःखं भ° । ४ ... °ति । पुनरपि पृ° । घ. ङ. °ति पु° ।

मेनका च सहजन्या चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिरयं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानिग्रामण्यौ प्रम्लोचन्ती च ( १ ) अनुम्लोचन्ती चाप्सरसौ सर्पा हेतिर्व्याघ्राः प्रहेतिरयमुत्तरात्संयद्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानिग्रामण्यौ विश्वाची च घृताची चाप्सरसावापो हेतिर्वातः प्रहेतिरयमुपर्यर्वाग्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानिग्रामण्यावुर्वशी च पूर्वचित्तिश्चाप्सरसौ विद्युद्धेतिरवस्फूर्जन्प्रहेतिस्तेभ्यो नमस्ते नो मृडयन्तु ते यम् ( २ ) द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधाम्यायोस्त्वा सदने सादयाम्यवतश्छायायां नमः समुद्राय नमः समुद्रस्य चक्षसे परमेष्ठी त्वा सादयतु दिवः पृष्ठे व्यचस्वतीं प्रथस्वतीं विभूमतीं प्रभूमतीं परिभूमतीं दिवं यच्छ दिवं दृꣳह दिवं मा हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय सूर्यस्त्वाऽभि पातु मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद।

प्रोथदश्वो न यवसे अविष्यन्यदा महः संवरणाद्व्यस्थात् । आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति ( ३ )॥

( प्रम्लोचन्ती च यश्च स्वस्त्याऽष्टाविंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ चतुर्थाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः । )

---

अयम् । पुरः । हरिकेश इति हरि—केशः । सूर्यरश्मिरिति सूर्य—रश्मिः । तस्य । रथगृत्स इति रथ—गृत्सः । च । रथौजा इति रथ—ओजाः । च । सेनानिग्रामण्याविति सेनानि—ग्रामण्यौ । पुञ्जिकस्थलेति पुञ्जिक—स्थला । च । कृतस्थलेति कृत—स्थला । च । अप्सरसौ । यातुधाना इति यातु—धानाः । हेतिः । रक्षांसि । प्रहेतिरिति प्र—हेतिः । अयम् । दक्षिणा । विश्वकर्मेति विश्व—कर्मा । तस्य । रथस्वन इति रथ-स्वनः । च । रथेचित्र इति रथे-चित्रः । च । सेनानिग्रामण्याविति सेनानि—ग्रामण्यौ । मेनका । च । सहजन्येति सह—जन्या । च । अप्सरसौ । दङ्क्ष्णवः । पशवः । हेतिः । पौरुषेयः । वधः । प्रहेतिरिति प्र—हेतिः । अयम् । पश्चात् । विश्व-

(चोडाख्येष्टकाभिधानम्)

व्यंचा इतिं विश्व—व्यचाः । तस्यं । रथंप्रोत इति
रथं—प्रोतः । च । असंमरथ इत्यसंम—रथः । च ।
सेनानिग्रामण्यांविति सेनानि—ग्रामण्यौं । प्रम्लो-
चन्तीतिं प्र—म्लोचंन्ती । च (१) । अनुम्लो-
चन्तीत्यंनु—म्लोचंन्ती । च । अप्सरसौं । सर्पाः ।
हेतिः । व्याघ्राः । प्रहेंतिरिति प्र—हेतिः । अयम् ।
उत्तरादित्युंत्—तरात् । संयद्वसुरितिं संयत्—वसुः ।
तस्यं । सेनजिदितिं सेन—जित् । च । सुषेण इतिं
सु—सेनंः । च । सेनानिग्रामण्यांविति सेनानि—
ग्रामण्यौं । विश्वाचीं । च । घृताचीं । च । अप्स-
रसौं । आपंः । हेतिः । वातंः । प्रहेंतिरिति प्र—
हेतिः । अयम् । उपरिं । अर्वाग्वंसुरित्यर्वाक्—वसुः ।
तस्यं । ताक्ष्यंः । च । अरिंष्टनेमिरित्यरिंष्ट—नेमिः ।
च । सेनानिग्रामण्यांविति सेनानि—ग्रामण्यौं ।
उर्वशीं । च । पूर्वचित्तिरितिं पूर्व—चित्तिः । च ।
अप्सरसौं । विद्युदितिं वि—द्युत् । हेतिः । अवस्फू-
र्जन्नित्यंव—स्फूर्जन् । प्रहेंतिरिति प्र—हेतिः । तेभ्यंः ।
नमः । ते । नः । मृडयन्तु । ते । यम् (२) ।
द्विष्मः । यः । च । नः । द्वेष्टिं । तम् । वः । जम्भें ।
दधामि । आयोः । त्वा । सदंने । सादयामि ।

अवंतः । छायायाम् । नमः । समुद्राय । नमः । समुद्रस्यं । चक्षसे । परमेष्ठी । त्वा । सादयतु । दिवः । पृष्ठे । व्यचस्वतीम् । प्रथस्वतीम् । विभूमतीमिति वि—भूमतीम् । प्रभूमतीमिति प्र—भूमतीम् । परिभूमतीमिति परि—भूमतीम् । दिवम् । यच्छ । दिवम् । दृꣳह । दिवम् । मा । हिꣳसीः । विश्वस्मै । प्राणायेति प्र—अनाय । अपानायेत्यप—अनाय । व्यानायेति वि—अनाय । उदानायेत्युत्—अनाय । प्रतिष्ठाया इति प्रति—स्थायै । चरित्राय । सूर्यः । त्वा । अभीति । पातु । मह्या । स्वस्त्या । छर्दिषा । शंतमेनेति शं—तमेन । तया । देवतया । अङ्गिरस्वत् । ध्रुवा । सीद । प्रोथत् । अश्वः । न । यवसे । अविष्यन् । यदा । महः । संवरणादिति सं—वरणात् । व्यस्थादिति वि—अस्थात् । आत् । अस्य । वातः । अन्विति । वाति । शोचिः । अध । स्म । ते । व्रजनम् । कृष्णम् । अस्ति ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ चतुर्थकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः । )

---

द्वितीयेऽनुवाके नाकसदाख्या इष्टका उक्ताः । अथ तृतीये चोडाख्य इष्टका उच्यन्ते ।

( चोडाख्येष्टकाभिधानम् )

कल्पः—" तासु पुरीषमध्यू( ध्यु )द्यायं पुरो हरिकेश इति पञ्च चोडा अभ्युपदधाति द्वेष्यं मनसा ध्यायन्पश्चात्प्राचीमुत्तमाम् " इति ।

तत्र प्रथमं मन्त्रमाह—

अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथ-
गृत्सश्च रथौजाश्च सेनानिग्रामण्यौ पुञ्जि-
कस्थला च कृतस्थला चाप्सरसौ
यातुधाना हेती रक्षाꣳसि प्रहेतिः, इति ।

अयमग्निः पुरः पूर्वस्यां दिशि हरिकेशो हिरण्यवर्णकेशसमाना ज्वाला यस्यासौ हरिकेशः सूर्यसमानरश्मिस्तस्य तादृशस्याग्नेः परिचारकौ द्वौ सेनानिग्रामण्यौ । एकः सेनां परराज्येषु नयत्यपरः स्वराज्ये ग्रामं नयति । तत्र रथगृत्स इति सेनान्यो नामधेयम् । गृत्सो गर्धनवान् । यस्य रथे महती तृष्णा सोऽयं रथगृत्सः । रथौजा इति ग्रामण्यो नामधेयम् । ओजो बलम् । यस्य रथारोहणे बलाधिक्यं स रथौजाः । यथैतौ मुख्यौ परिचारकौ तथा द्वे अप्सरसौ परिचारिके । तत्र पुञ्जिकस्थलेत्येकस्या नामधेयं, कृतस्थलेत्यपरस्या नामधेयम् । यातुधाना रक्षांसि चेत्यवान्तरजातिभेदोऽवगन्तव्यः । हेतिप्रहेती अप्यायुधविशेषौ । तत्र यातुधानाः क्रूरास्तीक्ष्णहेतिस्वरूपाः । रक्षांस्यतिक्रूराणि अतितीक्ष्णप्रहेतिरूपाणि । यस्याग्नेरिदं सर्वं हे इष्टके तदग्निस्वरूपाऽसीत्यभिप्रायः । एवं सर्वत्र योज्यम् ॥

अथ द्वितीयमन्त्रमाह—

अयं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च
रथेचित्रश्च सेनानिग्रामण्यौ मेनका च
सहजन्या चाप्सरसौ दङ्क्ष्णवः पशवो
हेतिः पौरुषेयो वधः प्रहेतिः, इति ।

विश्वानि कर्माण्यग्निहोत्रादीनि यस्याग्नेः सोऽयं विश्वकर्मा दक्षिणस्यां दिशि स्थितः । तस्य रथस्वनः सेनानी रथेचित्रो ग्रामणीः । मेनकेति सहजन्येति चाप्सरसोर्नामधेयम् । दङ्क्ष्णवो दंशनशीला व्याघ्रादयो हेतिः । सङ्ग्रामे पुरुषसंबन्धी यो वधः स प्रहेतिः ॥

---

१ ख. च. पुर इ° । २ क. घ. ङ. °थमामा° । ३ क. घ. ङ. °वर्णा के° । ४ ख. च. °र्धवा° । ५ च. °णि ती° । ६ क. ख. च. °तिस्वरू° । ७ ख. च. °तीयं म° ।

अथ तृतीयमन्त्रमाह—

अयं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानिग्रामण्यौ प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ सर्पा हेतिर्व्याघ्राः प्रहेतिः, इति।

विश्वं व्यचति प्राप्नोतीति विश्वव्यचाः। सर्वमन्यत्पूर्ववद्व्याख्येयम् ॥

अथ चतुर्थमन्त्रमाह—

अयमुत्तरात्संयद्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानिग्रामण्यौ विश्वाची च घृताची चाप्सरसावापो हेतिर्वातः प्रहेतिः, इति।

संयत्प्राप्तं वसु धनं यस्याग्नेः सोऽयं संयद्वसुः। सोऽग्निरुत्तरादुत्तरस्यां दिशि वर्तते। शेषं पूर्ववत् ॥

अथ पञ्चममन्त्रमाह—

अयमुपर्यर्वाग्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानिग्रामण्यावुर्वशी च पूर्वचित्तिश्चाप्सरसौ विद्युद्धेतिरवस्फूर्जन्प्रहेतिः, इति।

अर्वाग्वसुरधोमुखत्वेन वसुनो मेघाद्भूमौ पतनाद्वैद्युतोऽग्निस्तथोच्यते। स चोपर्यूर्ध्वायां दिशि प्रवर्तते। भयहेतुप्रकाशा विद्युत्। मारकोऽशनिरवस्फूर्जन्।

एतेषु पञ्चस्वपि मन्त्रेष्वनुषञ्जनीयं शेषमाह—

तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि, इति।

योऽयमग्निर्यौ च सेनानिग्रामण्यौ ये चाप्सरसौ यौ च हेतिप्रहेती तेभ्यः सर्वेभ्यो नमोऽस्तु। ते सर्वे नोऽस्मान्मृडयन्तु सुखयन्तु। यं वैरिणं ते वयं द्विष्मो यश्च वैरी नोऽस्मान्द्वेष्टि तं वैरिणं युष्माभिरनुगृहीतोऽहं वो युष्माकं जम्भे विदारितास्ये दधामि स्थापयामि ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

"पञ्चचोडा उप दधात्यप्सरस एवैनमेता भूता अमुष्मिँल्लोक उप शेरेऽथो तनूपानीरेवैता यजमानस्य" [ सं० का० ५ प्र० ३ अ० ७ ] इति।

---

१ ख. च. 'यमा'। २ ख. च. 'तुर्थ म'। ३ क. ख. च. 'ञ्चमं म'। ४ क. घ. ङ. 'पस्थानं'।

( चोडाख्येष्टकाभिधानम् )

चुड संवरण इत्यस्माद्धातोरुत्पन्नश्चोडाशब्दः। नाकसदामुपरि च्छिद्रावरणार्थत्वादेता इष्टकाश्चोडा इत्युच्यन्ते। पञ्चसंख्याकाश्चोडाः पञ्चचोडास्तासामुपधाने सत्येता इष्टका अप्सरस एव भूताः स्वर्गे लोक एनं यजमानमुपशेरते। अपिच, एता अप्सरसो यजमानस्य तनूपानीरेव शरीरपालनपरा एव ॥

उपधानकाले ध्यानविशेषं विधत्ते—

" यं द्विष्यात्तमुपदधद्ध्यायेदेताभ्य एवैनं देवताभ्य आ वृश्चति ताजगार्तिमार्छति " [ सं० का० ५ प्र० ३ अ० ७ इति।

यजमानो यं पुरुषं द्विष्यात्तं द्वेष्यमध्वर्युरुपधानं कुर्वन्ध्यायेत्। तेन ध्यानेनैताभ्य एवाग्निसेनान्यादिभ्यो देवताभ्य एनं द्वेष्यमावृश्चति सर्वतो विच्छिन्नं करोति। ताजगार्तिमार्छति तदानीमेव मरणं प्राप्नोति ॥

नाकसदामुपरि पञ्चचोडोपधानं विधत्ते—

"उत्तरा नाकसद्भ्य उप दधाति यथा जायामानीय गृहेषु निषादयति तादृगेव तत् " [ सं० का० ५ प्र० ३ अ० ७ ] इति।

गृहस्थानीया नाकसदो जायास्थानीयाः पञ्चचोडाः ॥

तत्रायं पश्चादिति तृतीयमन्त्रेणोपधेया येयमिष्टका तस्याश्चरमत्वं विधत्ते—

" पश्चात्प्राचीमुत्तमामुप दधाति तस्मात्पश्चात्प्राची पत्न्यन्वास्ते " [ सं० का० ५ प्र० ३ अ० ७ ] इति।

यस्मात्पश्चिमायां दिशि प्राङ्मुखत्वेनोपधेया इ(मि)ष्टका(कां) चरमत्वेनोपधत्ते तस्मात्पश्चिमायां दिश्यवस्थाय प्राङ्मुखी[1] पत्नी गार्हपत्यमुपविशति ॥

कल्पः—" आयोस्त्वा सदने सादयामीति स्वयमातृण्णामभिमृश्याश्वेनोपघ्राप्य परमेष्ठी त्वा सादयतु दिवः पृष्ठ इत्यविदुषा ब्राह्मणेन सह मध्येऽग्नेरुपदधाति " इति।

अभिमर्शनमन्त्रपाठस्तु—

आयोस्त्वा सदने सादयाम्यवतश्छायायां नमः
समुद्राय नमः समुद्रस्य चक्षसे, इति।

एति निरन्तरं गच्छतीत्यायुरादित्यः। स च सर्वं जगदवति। तस्मादवतं[3] आयोश्छायायां सत्यां संतापपरिहारेण शैत्ये कृते सतीत्यर्थः। सदनेऽस्मिन्स्थाने हे इष्टके त्वां सादयामि। समुद्राय समुद्रसदृशायाऽऽदित्याय नमोऽस्तु। समुद्रस्य चक्षसे प्रकाशकाय नमोऽस्तु ॥

उपधानमन्त्रपाठस्तु—

---

१ ख. घ. ङ. च. 'त्वाचोडा'। २ क. घ. ङ. प्राङ्मुखा। ३ क. 'तश्छा'।

परमेष्ठी त्वा सादयतु दिवः पृष्ठे व्यचस्वतीं प्रथस्वतीं विभूमतीं प्रभूमतीं परिभूमतीं दिवं यच्छ दिवं दृꣳह दिवं मा हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय सूर्यस्त्वाऽभि पातु मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ।, इति।

परम उत्कृष्टे सत्यलोके तिष्ठतीति परमेष्ठी ब्रह्मा । स त्वा दिवः पृ स्वर्गस्योपरि सादयतु । कीदृशीं त्वां, व्यचस्वतीमभिव्यक्तिमतीं, प्रथस्वतीं विस्तारवतीं, विभूमतीं विविधनूतनोत्पादनशक्तिमतीं, प्रभूमतीं प्रभुत्वशक्तिमतीं, परिभूमतीं परसैन्यपराभवशक्तिमतीम् । दिवं यच्छ स्वर्गभोगं यजमानाधीनतया नियतं कुरु । दिवं दृंह द्युलोके भोगं दृढी कुरु । दिवं मा हिंसीर्दि द्युलोकभोगं मा विनाशय । विश्वस्मै सर्वस्मै प्राणापानव्यानोदानाख्यवायुवृत्तिलाभाय, प्रतिष्ठायै स्वगृहे स्थितिलाभाय, चरित्राय शास्त्रीयाचरणाय, प्राणिनामेतस्य सर्वस्य सिद्ध्यर्थमयं सूर्यस्त्वामभितः पातु रक्षतु । केन रक्षणमिति तदुच्यते—मह्या स्वस्त्या महत्या योगक्षेमसंपत्त्या, शंतमेन च्छर्दिषाऽत्यन्तसुखकारिणा दीप्तिविशेषेण । तव स्वामिभूतया देवतयाऽनुगृही स्थिरा सती सीदेहोपविश । अङ्गिरस्वदङ्गिरसां चयनानुष्ठाने यथा त्वं ध्रु स्थिता तद्वत् ॥

कल्पः—“ प्रोथदश्व इत्युत्तरेंऽसे विकर्णीम् ” इति ।

पाठस्तु—

प्रोथदश्वो न यवसे अविष्यन्यदा महः संवरणाद्व्यस्थात् । आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति ॥, इति ॥

अयमग्निरश्वो नाश्व इव प्रोथत्प्रोथति जाज्वल्यमानः शब्दं करोति । दृष्टान्तभूतोऽश्वः कथं शब्दं करोतीति तदुच्यते—यदा महो महतः संवरणादश्वशालारूपात्संवृतस्थानाद्व्यस्थाद्विनिर्गच्छति तदानीमरण्ये यवसेऽविष्यन्घासं गमिष्यञ्शब्दं करोति । आदतोऽनन्तरमस्य शब्दं कुर्वतोऽग्नेः शोचिरनु दीप्ति

---

१ क. घ. ङ. 'ष्ठे सर्वस्यो' । २ ख. च. 'धवर्तनो' । ३ ख. च. मा हिंसीर्मा वि' ।

( चोडाख्येष्टकाभिधानम् )

मनु वातो वाति वायुः प्रवर्तते । अग्निज्वालाशब्दसमनन्तरमेव वायोरवश्यं प्रवृत्तेरयमग्निर्वायुसख इति लोकेऽभिधीयते । अधशब्दो वर्गचतुर्थयुक्तोऽप्यानन्तर्यमेवाऽऽचष्टे । हेऽग्ने तव ज्वालाया वायुसंयोगानन्तरं व्रजनमरण्यगमनस्थानं कृष्णमस्ति दाहेन कृष्णवर्णमेवावभासते ॥

आयोस्त्वेत्यादिमन्त्रसाध्यमुपधानं विधत्ते—

" स्वयमातृण्णां च विकर्णीं चोत्तमे उप दधाति प्राणो वै स्वयमातृण्णाऽऽयुर्विकर्णी प्राणं चैवाऽऽयुश्च प्राणानामुत्तमौ धत्ते तस्मात्प्राणश्चाऽऽयुश्च प्राणानामुत्तमौ " [ सं० का० ५ प्र० ३ अ० ७ ] इति ।

स्वयमातृण्णा स्वतश्छिद्रेष्टका पूर्वमप्युक्ता । उत्तरेंऽसे संस्पृष्टा सती वामभागे विभक्तः कर्ण इवावभासमानत्वादियमिष्टका विकर्णीत्युच्यते । या स्वयमातृण्णा या च विकर्णी ते उभे अप्युत्तमे उपदध्यात् । सर्वासामिष्टकानामवसाने तयोरुपधानमित्यर्थः । स्वयमातृण्णायाः प्राणरूपत्वाद्विकर्ण्याश्चाऽऽयुःस्वरूपत्वात्तयोरुत्तमत्वे सति चक्षुरादीनां प्राणानां मध्ये श्वासरूपमायुश्चोत्तमत्वेन धृतवान्भवति । तस्माल्लोकेऽपि श्वासायुषी सर्वेषां प्राणानामितरेषां मध्य उत्तमे । तयोः स्थितयोश्चक्षुरादीन्द्रियवैकल्यमपि सहन्ते ॥

अन्यासामिष्टकानामुपरि यथैते इष्टके उपहिते तथा तयोरुपर्यन्येष्टकोपधानप्रसक्तिं वारयितुं निषेधति—

" नान्यामुत्तरामिष्टकामुप दध्याद्यदन्यामुत्तरामिष्टकामुपदध्यात्पशूनां च यजमानस्य च प्राणं चाऽऽयुश्चापि दध्यात्तस्मान्नान्योत्तरेष्टकोपधेया " [ सं० का० ५ प्र० ३ अ० ७ ] इति ।

एतयोरुपर्यन्येष्टकोपधाने श्वासायुषी छादिते भवतः । तस्मादन्यां नोपदध्यात् ॥

प्रथमचितौ या स्वयमातृण्णा सा भूमित्वेन स्तुता, मध्यमचितावन्तरिक्षत्वेन, इदानीं पञ्चमचितौ द्युलोकत्वेन स्तौति—

" स्वयमातृण्णामुप दधात्यसौ वै स्वयमातृण्णाऽमूमेवोप धत्ते " [ सं० का० ५ प्र० ३ अ० ७ ] इति ॥

उपधानात्प्रागश्वोपघ्रापणं विधत्ते—

" अश्वमुप घ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते " [ सं० का० ५ प्र० ३ अ० ७ ] इति ॥

इष्टकाछिद्रं प्रशंसति—

" स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्या अथो सुवर्गस्य लोकस्यानुख्यात्यै"
[ सं० का० ५ प्र० ३ अ० ७ ] इति ॥

विकर्णीं प्रशंसति—

" एषा वै देवानां विक्रान्तिर्यद्विकर्णी यद्विकर्णीमुपदधाति देवानामेव विक्रान्तिमनु वि क्रमते " [ सं० का० ५ प्र० ३ अ० ७ ] इति ।

विकर्ण्या एव पराक्रमरूपत्वात्तदुपधानेन यजमानोऽपि देववत्पराक्रमवान्भवति ॥

उत्तरांसरूपं देशं विधत्ते—

" उत्तरत उप दधाति तस्मादुत्तरतउपचारोऽग्निः " [ सं० का० ५ प्र० ३ अ० ७ ] इति ।

येषूपचारेषु देशविशेषो न विहितस्ते सर्वेऽपि वह्नेरुत्तरतः स्थित्वा कर्तव्याः तद्यथा ब्रह्मवरणान्वाधानजपादयः ॥

अथैतस्या उपधान आदस्य वातो अनु वाति शोचिरिति वायुवाचिशब्दयुक्तामृचं विनियुङ्क्ते—

" वायुमती भवति समिद्ध्यै " [ सं० का० ५ प्र० ३ अ० ७ ] इति ॥

सति हि वायावग्निः समिध्यते ॥

अत्र विनियोगसंग्रहः—

अयं पुरः पञ्चचोडास्तेभ्य इत्यनुपज्यते ।
आ स्पृशेत्स्वयमातृण्णां परमेष्ठीति सादयेत् ॥
प्रोथद्विकर्णीमादध्यान्मन्त्रा अष्टाविहेरिताः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके
तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ चतुर्थाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः । )

---

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाᳬं रेताᳬंसि जिन्वति । त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः । अयमग्निः सहस्रिणो वाजस्य शति-

(छन्दोभिधेष्टकाभिधानम्)

नस्पतिः । मूर्धा कवी रयीणाम् । भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः । दिवि मूर्धानं दधिषे सुवर्षां जिह्वामग्ने चकृषे हव्यवाहम् । अबोध्यग्निः समिधा जनानाम् (१) प्रति धेनुमिवाऽऽयतीमुषासम् । यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ । अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुर्व्यञ्चमश्रेत् । जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे । घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः । त्वामग्ने अङ्गिरसः (२) गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने । स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमङ्गिरः । यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समिन्धते । इन्द्रेण देवैः सरथꣳ स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः । त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः । शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढवे । सखायः सं वः सम्यञ्चमिषम् । (३)

स्तोमं चाग्नये । वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते । सꣳ समिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इडस्पदे समिध्यसे स नो वसून्या भर । एना वो अग्निं नमसोर्जो नपातमा हुवे । प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतम् । स योजते अरुषो विश्वभोजसा स दुद्रवत्स्वाहुतः । सुब्रह्मा यज्ञः सुशमी ( ४ ) वसूनां देवꣳ राधो जनानाम् । उदस्य शोचिरस्थादाजुह्वानस्य मीढुषः । उद्धूमासो अरुषासो दिविस्पृशः समग्निमिन्धते नरः । अग्ने वाजस्य गोमत ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि श्रवः । स इधानो वसुष्कविरग्निरीडेन्यो गिरा । रेवदस्मभ्यं पुर्वणीक दीदिहि । क्षपो राजन्नुत त्मनाऽग्ने वस्तोरुतोषसः । स तिग्मजम्भ ( ५ ) रक्षसो दह प्रति । आ ते अग्न इधीमहि द्युमन्तं देवाजरम् । यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषꣳ स्तोतृभ्य आ भर । आ ते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते । सुश्चन्द्र दस्म विश्पते हव्यवाट्तुभ्यꣳ हूयत इषꣳ

स्तोतृभ्य आ भर। उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि। उतो न उत्पुपूर्याः (६) उक्थेषु शवसस्पत इष स्तोतृभ्य आ भर। अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम्। ऋध्यामा त ओहैः। अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः। रथीर्ऋतस्य बृहतो बभूथ। आभिष्टे अद्य गीर्भिर्गृणन्तोऽग्ने दाशेम। प्र ते दिवो न स्तनयन्ति शुष्माः। एभिर्नो अर्कैर्भवा नो अर्वाङ् (७) सुवर्न ज्योतिः। अग्ने विश्वेभिः सुमना अनीकैः। अग्निं होतारं मन्ये दास्वन्तं वसोः सूनुं सहसो जातवेदसम्। विप्रं न जातवेदसम्। य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा। घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः। अग्ने त्वं नो अन्तमः। उत त्राता शिवो भव वरूथ्यः। तं त्वा शोचिष्ठ दीदिवः। सुम्नाय नूनमीमहे सखिभ्यः। वसुरग्निर्वसुश्रवाः। अच्छा नक्षि द्युमत्तमो रयिं दाः (८)॥

[ जनानामङ्गिरस इष सुशर्मी तिग्मजम्भ पुपूर्या अर्वाङ्वसुश्रवाः पञ्च च। ]

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

( अथ चतुर्थाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः । )

---

अग्निः । मूर्धा । दिवः । ककुत् । पतिः । पृथिव्याः । अयम् । अपाम् । रेताꣳसि । जिन्वति । त्वाम् । अग्ने । पुष्करात् । अधीति । अथर्वा । निरिति । अमन्थत । मूर्ध्नः । विश्वस्य । वाघतः । अयम् । अग्निः । सहस्रिणः । वाजस्य । शतिनः । पतिः । मूर्धा । कविः । रयीणाम् । भुवः । यज्ञस्य । रजसः । च । नेता । यत्र । नियुद्भिरिति नियुत्—भिः । सचसे । शिवाभिः । दिवि । मूर्धानम् । दधिषे । सुवर्षामिति सुवः—साम् । जिह्वाम् । अग्ने । चकृषे । हव्यवाहमिति हव्य—वाहम् । अबोधि । अग्निः । समिधेति सम्—इधा । जनानाम् ( १ ) । प्रतीति । धेनुम् । इव । आयतीमित्या—यतीम् । उषासम् । यह्वाः । इव । प्रेति । वयाम् । उज्जिहाना इत्युत्—जिहानाः । प्रेति । भानवः । सिस्रते । नाकम् । अच्छ । अवोचाम । कवये । मेध्याय । वचः । वन्दारु । वृषभाय । वृष्णे । गविष्ठिरः । नमसा । स्तोमम् । अग्नौ । दिवि । इव । रुक्मम् । उर्व्यञ्चम् । अश्रेत् । जनस्य । गोपा इति गो—पाः । अजनिष्ट । जागृविः । अग्निः । सुदक्ष इति सु—

दक्षः। सुवितार्यं। नव्यसे। घृतप्रतीक इति घृत—प्रतीकः। बृहता। दिविस्पृशेति दिवि—स्पृशा। द्युमदिति द्यु—मत्। वीति। भाति। भरतेभ्यः। शुचिः। त्वाम्। अग्ने। अङ्गिरसः (२)। गुहा। हितम्। अन्विति। अविन्दन्। शिश्रियाणम्। वनेवन इति वने—वने। सः। जायसे। मथ्यमानः। सहः। महत्। त्वाम्। आहुः। सहसः। पुत्रम्। अङ्गिरः। यज्ञस्य। केतुम्। प्रथमम्। पुरोहितमिति पुरः—हितम्। अग्निम्। नरः। त्रिषधस्थ इति त्रि—सधस्थे। समिति। इन्धते। इन्द्रेण। देवैः। सरथमिति स—रथम्। सः। बर्हिषि। सीदत्। नीति। होता। यजथाय। सुक्रतुरिति सु—क्रतुः। त्वाम्। चित्रश्रवस्तमेति चित्रश्रवः—तम। हवन्ते। विक्षु। जन्तवः। शोचिष्केशमिति शोचिः—केशम्। पुरुप्रियेति पुरु—प्रिय। अग्ने। हव्याय। वोढवे। सखायः। समिति। वः। सम्यञ्चम्। इषम् (३)। स्तोमम्। च। अग्नये। वर्षिष्ठाय। क्षितीनाम्। ऊर्जः। नप्त्रे। सहस्वते। संसमिति सं—सम्। इत्। युवसे। वृषन्। अग्ने। विश्वानि। अर्यः। आ। इडः। पदे। समिति। इध्यसे। सः। नः।

वसूनि । एति । भर । एना । वः । अग्निम् ।
नमसा । ऊर्जः । नपातम् । एति । हुवे । प्रियम् ।
चेतिष्ठम् । अरतिम् । स्वध्वरमिति सु—अध्वरम् ।
विश्वस्य । दूतम् । अमृतम् । सः । योजते । अरुषः ।
विश्वभोजसेति विश्व—भोजसा । सः । दुद्रवत् ।
स्वाहुत इति सु—आहुतः । सुब्रह्मेति सु—ब्रह्मा ।
यज्ञः । सुशमीति सु—शमी ( ४ ) । वसूनाम् ।
देवम् । राधः । जनानाम् । उदिति । अस्य ।
शोचिः । अस्थात् । आजुह्वानस्येत्या—जुह्वानस्य ।
मीढुषः । उदिति । धूमासः । अरुषासः । दिविस्पृश
इति दिवि—स्पृशः । समिति । अग्निम् । इन्धते ।
नरः । अग्ने । वाजस्य । गोमत इति गो—मतः ।
ईशानः । सहसः । यहो इति । अस्मे इति । धेहि ।
जातवेद इति जात—वेदः । महि । श्रवः । सः ।
इधानः । वसुः । कविः । अग्निः । ईडेन्यः । गिरा ।
रेवत् । अस्मभ्यमित्यस्म—भ्यम् । पुर्वणीकेति पुरु—
अनीक । दीदिहि । क्षपः । राजन् । उत । त्मना ।
अग्ने । वस्तोः । उत । उषसः । सः । तिग्मजम्भेति
तिग्म—जम्भ ( ५ ) । रक्षसः । दह । प्रति । एति ।
ते । अग्ने । इधीमहि । द्युमन्तमिति द्यु—मन्तम् ।

देव। अजरम्। यत्। ह। स्या। ते। पनीयसी। समिदिति सम्—इत्। दीदयति। द्यवि। इषम्। स्तोतृभ्य इति स्तोतृ—भ्यः। एति। भर। एति। ते। अग्ने। ऋचा। हविः। शुक्रस्य। ज्योतिषः। पते। सुश्चन्द्रेति सु—चन्द्र। दस्म। विश्पते। हव्यवाडिति हव्य—वाट्। तुभ्यम्। हूयते। इषम्। स्तोतृभ्य इति स्तोतृ—भ्यः। एति। भर। उभे इति। सुश्चन्द्रेति सु—चन्द्र। सर्पिषः। दर्वी इति। श्रीणीषे। आसनि। उतो इति। नः। उदिति। पुपूर्याः (६)। उक्थेषु। शवसः। पते। इषम्। स्तोतृभ्य इति स्तोतृ—भ्यः। एति। भर। अग्ने। तम्। अद्य। अश्वम्। न। स्तोमैः। क्रतुम्। न। भद्रम्। हृदिस्पृशमिति हृदि—स्पृशम्। ऋध्याम। ते। ओहैः। अध। हि। अग्ने। क्रतोः। भद्रस्य। दक्षस्य। साधोः। रथीः। ऋतस्य। बृहतः। बभूथ। आभिः। ते। अद्य। गीर्भिः। गृणन्तः। अग्ने। दाशेम। प्रेति। ते। दिवः। न। स्तनयन्ति। शुष्माः। एभिः। नः। अर्कैः। भव। नः। अर्वाङ् (७)। सुवः। न। ज्योतिः। अग्ने। विश्वेभिः। सुमना इति सु—मनाः। अनीकैः। अग्निम्। होता-

रम् । मन्ये । दास्वन्तम् । वसोः । सूनुम् । सहसः । जातवेदसमिति जात—वेदसम् । विप्रम् । न । जात-वेदसमिति जात—वेदसम् । यः । ऊर्ध्वया । स्वध्वर इति सु—अध्वरः । देवः । देवाच्या । कृपा । घृतस्य । विभ्राष्टिमिति वि—भ्राष्टिम् । अन्विति । शुक्रशोचिष इति शुक्र—शोचिषः । आजुह्वानस्येत्या—जुह्वानस्य । सर्पिषः । अग्ने । त्वम् । नः । अन्तमः । उत । त्राता । शिवः । भव । वरूथ्यः । तम् । त्वा । शोचिष्ठ । दीदिवः । सुम्नाय । नूनम् । ईमहे । सखिभ्य इति सखि—भ्यः । वसुः । अग्निः । वसुश्रवा इति वसु—श्रवाः । अच्छ । नक्षि । द्युमत्तम इति द्युमत्—तमः । रयिम् । दाः (८) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ चतुर्थकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः । )

---

तृतीयेऽनुवाके पञ्चचोडादय इष्टका उक्ताः । अथ चतुर्थेऽनुवाके छन्दोभिधा इष्टका उच्यन्ते ।

कल्पः—" अग्निर्मूर्धेति तिस्रो गायत्रीः पुरस्तादुपदधात्येवमुत्तराणि त्रीणि त्रीणि त्रिष्टुभो दक्षिणतो जगतीः पश्चादनुष्टुभ उत्तरतो बृहतीरुष्णिहाः पङ्क्तीरक्षरपङ्क्तीरिति विषुरूपाणि 'छन्दाꣳसि यथावकाशमतिच्छन्दसं मध्ये द्विपदा अन्ततः " इति ।

तत्र तिसृषु गायत्रीषु प्रथमां गायत्रीमाह—

(छन्दोभिधेष्टकाभिधानम्)

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ।
अपाꣳ रेताꣳसि जिन्वति । , इति ।

अयमग्निरादित्यरूपेण दिवो द्युलोकस्य ककुदुच्छ्रितो मूर्धा शिरस्थानीयः, पृथिव्याः पतिर्दाहपाकादिकारित्वेन पालकोऽप्ययम् । किंच । अपां रेतांस्युदककार्याणि स्थावरजङ्गमशरीराणि जाठराग्निरूपेण जिन्वति प्रीणयति ॥

अथ द्वितीयामाह—

त्वामग्ने पुष्करादध्यथर्वा निरम-
न्थत । मूर्ध्नो विश्वस्य वाघतः ।, इति ।

हेऽग्नेऽथर्वाख्य ऋषिः पुष्करपर्णादधि पद्मपत्रस्योपरि त्वां निरमन्थत निःशेषेण मथितवान् । अत एव पञ्चमकाण्डे ब्राह्मणमाम्नातम्—"पुष्करपर्णे ह्येनमुपश्रितमविन्दत्" इति । कीदृशात्पुष्करपर्णात्, मूर्ध्नं उत्तमाङ्गवत्प्रशस्तात्, विश्वस्य वाघतः सर्वस्य जगतो वाहकात् । इदं हि पुष्करपर्णमग्निमन्थनयज्ञनिष्पादनादिद्वारा सर्वं जगन्निर्वहति ॥

अथ तृतीयामाह—

अयमग्निः सहस्रिणो वाजस्य शतिन-
स्पतिः । मूर्धा कवी रयीणाम् । , इति ।

अयं समिध्यमानोऽग्निः सहस्रसंख्यावतः शतसंख्यावतश्चान्नस्य पतिः । अत एव मूर्धा शिरोवदुत्तमः, कविर्विद्वान्, तादृशो रयीणां धनानां दाता भवतु ॥

अथ तिसृषु त्रिष्टुप्सु प्रथमां त्रिष्टुभमाह—

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः
सचसे शिवाभिः । दिवि मूर्धानं दधिषे
सुवर्षां जिह्वामग्ने चकृषे हव्यवाहम् । , इति ।

अयमग्निर्भूलोकस्य तत्रानुष्ठेयस्य यज्ञस्य तस्मिन्यज्ञे प्रवर्तकस्य रजसो गुणस्य च नेता निर्वाहकः । तादृश हेऽग्ने यत्र यस्यां दिवि सूर्यरूपो भूत्वा नियुद्भी रथे नितरां योज्यमानाभिः शिवाभिरुत्तमाभिरश्वजातिभिः सचसे समवैषि तस्यां दिवि मूर्धानं शिरोवदुन्नतस्थितिं दधिषे धारयासि । कीदृशं मूर्धानं, सुवर्षां सुवः स्वर्गे स्याति सर्वदा तिष्ठतीति सुवर्षास्तम् । सोमपाशब्द-

वत्पुंलिङ्गोऽयम् । हेऽग्ने त्वमस्मिन्यज्ञे हव्यवाहं हविष्प्रापिकां जिह्वां ज्वालां चक्रुषे करोषि ॥

अथ द्वितीयां त्रिष्टुभमाह—

अबोध्यग्निः समिधा जनानां प्रति धेनु-
मिवाऽऽयतीमुषासम् । यह्वा इव प्र वयामु-
ज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ।, इति ।

जनानामृत्विजां संबन्धिना(न्या) समिधाऽयमग्निरबोधि बोधितः प्रज्वालितोऽभूत् । तत्र दृष्टान्तः—आयतीमुषासं प्रति धेनुमुषःकाले समागते सति दोहनार्थं शयनाद्धेनुं यथोत्थापयति तद्वत् । बुध्यमानस्याग्नेर्भानवो रश्मयः प्रोज्जिहानाः प्रकर्षेणोद्गच्छन्तो नाकमच्छ स्वर्गमभिप्राप्तुं प्रसिस्रतेऽतिशयेन प्रसरन्ति । तत्र दृष्टान्तः—वयां यह्वा इव वयां वीनां पक्षिणां मध्ये यह्वा महान्तः पक्षिणो यथा प्रकर्षेणोत्पतान्ति तद्वत् ॥

अथ तृतीयां त्रिष्टुभमाह—

अवोचाम कवये मेध्याय वचो वन्दारु
वृषभाय वृष्णे । गविष्ठिरो नमसा स्तो-
ममग्नौ दिवीव रुक्ममुर्व्यञ्चमश्रेत् ।, इति ।

वयं कवये विदुषे वह्नये वचो वाक्यमवोचाम । कीदृशाय कवये, मेध्याय यज्ञयोग्याय, वृषभाय श्रेष्ठाय, वृष्णे कामानां वर्षयित्रे, गविष्ठिरो गविष्ठिराय भूमौ स्थिरत्वेनावस्थिताय । कीदृशं वचः, अग्नौ नमसा स्तोममग्निविषये नमस्कारेण युक्तं स्तोत्ररूपमत एव वन्दारु वन्दनशीलम् । तत्र दृष्टान्तः—यथा दिवि द्युलोके रुक्मं रोचमानमुर्व्यञ्चं विस्तीर्णगतिमादित्यं संध्यावन्दनादिषु ब्राह्मणैः प्रयुक्तं वाक्यमश्रेदाश्रयति तद्वदस्मद्वचोऽपि वह्निमाश्रयतु ॥

अथ तिसृषु जगतीषु प्रथमां जगतीमाह—

जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः
सुविताय नव्यसे । घृतप्रतीको बृहता दिवि-
स्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः ।, इति ।

अयमग्निरजनिष्टोत्पन्नः । किमर्थम्, सुविताय नव्यसे सुष्ठु दीप्ताय स्तुतियुक्ताय कर्मणे, एतत्कर्मसिध्यर्थमित्यर्थः । कीदृशः, जनस्य गोपाः प्राणिनो रक्षकः ।

(छन्दोभिधेष्टकाभिधानम्)

सुदक्षोऽत्यन्तकुशलः। जागृविः कर्माणि सावधानः। घृतं प्रतीके मुखे यस्यासौ घृतप्रतीकः। तादृशोऽयमग्निर्बृहता प्रौढेन दिविस्पृशा द्युलोकस्पर्शिना ज्वालासमूहेन द्युमद्दीप्यमानः शुचिः शुद्धः सन्भरतेभ्यो भरणकुशलयजमानाद्यर्थं विभाति विशेषेण भासते॥

अथ द्वितीयां जगतीमाह—

त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने। स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमङ्गिरः।, इति।

हेऽग्ने त्वामङ्गिरसो महर्षयोऽन्वविन्दन्नन्विष्य लब्धवन्तः। कीदृशं त्वां, गुहा हितमरणीप्रभृतिषु गोप्यस्थानेष्ववस्थितम्। वने वने शिश्रियाणं तस्मिंस्तस्मिन्वने दावाग्निरूपेणाऽऽश्रितम्। स त्वं महत्सहः प्रौढं बलं विमथ्यमानो जायसे। हेऽङ्गिरोऽङ्गसौष्ठवयुक्ताग्ने त्वां सहसस्पुत्रं बलस्य पुत्रमाहुः। महता बलेन मन्थने सति जायमानत्वात्॥

अथ तृतीयां जगतीमाह—

यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समिन्धते। इन्द्रेण देवैः सरथꣳ स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः।, इति।

सह स्थितानि स्थानानि सधस्थानि, त्रीणि सधस्थानि यस्मिन्देवयजने तत्त्रिषधस्थं, तस्मिन्नर ऋत्विजोऽग्निं समिन्धते दीपयन्ति। कीदृशं, यज्ञस्य केतुं ज्ञातारं, प्रथमं यागोपक्रम एव संपन्नं, पुरोहितं पुरोदेशवर्तिनम्। सुक्रतुः शोभनक्रतुनिष्पादकः सोऽग्निर्यजथाय यागसिद्ध्यर्थं होता देवानामाह्वाता सन्निन्द्रेण देवैश्च सह सरथं रथसहितो यथा भवति तथा बर्हिष्यस्मिन्यज्ञे निषीददुपविष्टवान्॥

अथ त्रिष्वनुष्टुप्सु प्रथमामाह—

त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः। शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढवे।, इति।

चित्रं श्रवो विचित्रा कीर्तिर्यस्यासौ चित्रश्रवा अतिशयेन चित्रश्रवाश्चित्रश्रवस्तमः। पुरूणां यजमानानां प्रिय, तथाविध हेऽग्ने विक्षु प्रजासु मध्ये जन्तवो जन्तव इव जनास्त्वां हवन्त आह्वयन्ति। किमर्थम्। हव्याय वोढवे

हविर्वोढुम् । कीदृशं त्वां, शोचिष्केशं शोचींषि ज्वाला एव केशस्थानीया यस्यासौ शोचिष्केशस्तम् ॥

अथ द्वितीयामनुष्टुभमाह—

सखायः सं वः सम्यञ्चमिषꣳ स्तोमं चाग्नये । वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते । , इति ।

हे सखायः परस्परसख्ययुक्ता ऋत्विग्यजमाना वो युष्माकं सम्यञ्चमिषं समीचीनमभीष्टान्नं संपादयतु । समित्यस्योपसर्गस्यापेक्षितः शेषोऽध्याहृतः । यूयं चाग्नये स्तोमं स्तोत्रं संपादयत । कीदृशायाग्नये, क्षितीनां मध्ये रक्षकाणां मध्ये वर्षिष्ठाय वृद्धतमाय, ऊर्जो नप्त्रे बलस्य न पातयित्रे विनाशमकुर्वते [सहस्वते] स्वयमतिशयेन बलवते ॥

अथ तृतीयामनुष्टुभमाह—

सꣳसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इडस्पदे समिध्यसे स नो वसून्या भर । , इति ।

हे वृषन्कामानां वर्षकाग्ने विश्वानि सर्वाणि फलानि संसमित्संपाद्य संपाद्यैव[1] युवसे यजमाने संमिश्रयसि । अर्य आ ईश्वरस्त्वमागत्येडस्पदे पृथिवीरूपाया वेद्याः स्थाने समिध्यसे सम्यग्ज्वाल्यसे । स तादृशो महानुभावस्त्वं नोऽस्मभ्यं वसूनि धनानि समाभर सम्यगाहृत्य प्रयच्छ ॥

अथ तिसृषु बृहतीषु प्रथमामाह—

एना वो अग्निं नमसोर्जो नपातमा हुवे । प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतम् । , इति ।

हे ऋत्विग्यजमाना वो युष्माकं संबन्धिनमग्निमेना नमसैतेन नमस्कारेण युक्तोऽहमाहुव आह्वयामि । कीदृशमग्निम् । ऊर्जोऽन्नस्य नपातमविनाशयितारं प्रियं यजमानानां प्रीतिहेतुं चेतिष्ठमतिशयेन चेतयितारं ज्ञातारमरातिं रतिरुक्तद्राहितं सर्वदोद्युक्तमित्यर्थः । स्वध्वरं शोभनस्य क्रतोर्निष्पादकम् विश्वस्य दूतं सर्वस्य जगतो दूतवत्कार्यकारिणं, सर्वस्य हि गृहे दाहपाकादिकार्यं करोति । अमृतं मरणरहितं, नहि मनुष्यवद्देवानां सहसा मरणमस्ति ॥

---

१ ख. च. 'द्यैवं यु'।

(छन्दोभिधेष्टकाभिधानम्)

अथ द्वितीयां बृहतीमाह—

स योजते अरुषो विश्वभोजसा स
दुद्रवत्स्वाहुतः। सुब्रह्मा यज्ञः सुशमी
वसूनां देवꣳ राधो जनानाम्। इति।

सोऽग्निर्योजते प्रस्तुतं कर्म योजयतीत्यर्थः। अरुषो रोषरहितो यजमाने स्निग्ध इत्यर्थः। विश्वभोजसा विश्वं जगद्भोजनीयं दातृत्वेन यस्यासौ विश्वभोजसा। सोऽग्नी राधोऽन्नं दुद्रवत्संपादयत्वित्यर्थः। कीदृशं राधः, वसूनां जनानां निवासार्थिनां प्राणिनां [देवं] व्यवहारकारणम्। कीदृशः सोऽग्निः, स्वाहुत ऋत्विग्भिः सुष्ठु कर्मण्याहूतः। सुब्रह्मा शोभन ऋत्विग्रूपो ब्रह्मा यस्यासौ सुब्रह्मा शोभनमन्त्रो वा। यज्ञो यजनीयः। सुशमी पापं सुष्ठु शमयतीति सुशमी॥

अथ तृतीयां बृहतीमाह—

उदस्य शोचिरस्थादाजुह्वानस्य मीढु-
षः। उद्धूमासो अरुषासो दिवि-
स्पृशः समग्निमिन्धते नरः।, इति।

अस्याग्नेः शोचिर्दीप्तिरुदस्थादुत्थितम्। कीदृशस्याग्नेः, आजुह्वानस्य सर्वतो होमनिष्पादकस्य, मीढुष आहुतिद्वारा वृष्टिसेचनसमर्थस्य। उद्धूमासो धूमाश्चोत्थिता अरुषासो रोषरहिताश्चक्षुराद्युपद्रवमकुर्वन्त इत्यर्थः। दिविस्पृश आकाशस्पर्शिनोऽत्युन्नता इत्यर्थः। यथैतत्सर्वं भवति तथा नर ऋत्विग्यजमाना अग्निमिन्धते दीपयन्ति॥

अथ तिसृषूष्णिक्सु प्रथमामुष्णिहमाह—

अग्ने वाजस्य गोमत ईशानः सहसो यहो।
अस्मे धेहि जातवेदो महि श्रवः।, इति।

सहसो बलस्य यहो सूनो जातवेद उत्पन्नजगदभिज्ञाग्ने गोमतो गोभिर्युक्तस्य वाजस्यान्नस्येशानस्त्वमस्मे अस्मासु महि श्रवो महतीं कीर्तिं धेहि संपादय॥

अथ द्वितीयामुष्णिहमाह—

---

१ ख. °जसः, सो°। क. घ. ङ. °जसो°। २ ख. °वद्द्रवयतु संपा°।

स इधानो वसुष्कविरग्निरीडेन्यो गिरा ।
रेवदस्मभ्यं पुर्वणीक दीदिहि ।, इति ।

पुरु बहु अनीकं सैन्यं यस्यासौ पुर्वणीकः । तादृश हेऽग्ने स त्वमस्मभ्यं रेवद्धनयुक्तं गृहक्षेत्रादिकं दीदिहि प्रयच्छ । कीदृशस्त्वम्, इधानो दीप्यमानो वसुर्निवासहेतुः कविर्विद्वानग्निरग्रणीः प्रथमं यज्ञप्रवर्तक इत्यर्थः । गिरा मन्त्ररूपया वाचेडेन्यः स्तुत्यः ॥

अथ तृतीयामुष्णिहमाह—

क्षपो राजन्नुत त्मनाऽग्ने वस्तोरुतोषसः । स
तिग्मजम्भ रक्षसो दह प्रति ।, इति ।

हेऽग्ने वस्तोरहानि क्षपः क्षपय । उतापि चोषस उषःकालानपि क्षपय । द्वितीयाया अत्यन्तसंयोगवाचित्वात्सर्वेष्वप्युषःकालेषु राक्षसान्विनाशयेत्यर्थः । हे राजन्दीप्यमानाग्ने न केवलं स्वकीयसेनामुखेन रक्षसां क्षपणं त्मनाऽपि स्वयमपि क्षपयेति । मुखविदारणवाचिना जम्भशब्देन ज्वाला उपलक्ष्यन्ते । तिग्मास्तीक्ष्णा जम्भा यस्यासौ तिग्मजम्भः । हे तिग्मजम्भ स त्वं रक्षसो राक्षसान्[प्रति]दह भस्मी कुरु ॥

अथ तिसृषु पङ्क्तिषु प्रथमामाह—

आ ते अग्न इधीमहि द्युमन्तं देवा-
जरम् । यद्ध स्या ते पनीयसी समिद्दी-
दयति द्यवीषꣳ स्तोतृभ्य आ भर ।, इति ।

हेऽग्ने देवाजरं जरारहितं ते त्वां द्युमन्तं दीप्तिमन्तमिधीमहि सर्वतः प्रज्वालयामः । यद्यस्मात्कारणात्पनीयस्यतिशयेन स्तुतियुक्ता सा[स्या]ह समिदचेतनरूपा सा समिदपि द्यवि प्रतिदिनं दीदयति त्वां प्रकाशयति, तस्माच्चेतना वयं दीपयाम इति किमु वक्तव्यम् । त्वं चेषमन्नं स्तोतृभ्य ऋत्विग्भ्य आभर संपादय ॥

अथ द्वितीयां पङ्क्तिमाह—

आ ते अग्न ऋचा हविः शुक्रस्य ज्योतिष-
स्पते । सुश्चन्द्र दस्म विश्पते हव्यवाट्तुभ्यꣳ
हूयत इषꣳ स्तोतृभ्य आ भर ।, इति ।

( छन्दोभिधेष्टकाभिधानम् )

शुक्रस्य शुद्धस्य ज्योतिषः पते पालक, सुष्ठ्वाह्लादकारिन्सुश्चन्द्र, पापस्योपक्षपयितर्दस्म, प्रजानां पालक विश्पते, हविषो वोढा हव्यवाट्, तथाविध हेऽग्ने त ऋचा त्वत्संबन्धिना मन्त्रेण तुभ्यं हविरा समन्ताद्धूयते। इषमित्यादि गतम् ॥

अथ तृतीयां पङ्क्तिमाह—

उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि। उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आ भर।, इति।

हे सुश्चन्द्र सुष्ठ्वाह्लादकराऽऽसनि त्वदीय आस्ये सर्पिषः संबन्धिन्या उभे दर्वी दर्विसदृशे हनू श्रीणीषे। हनुपूरणपर्यन्तं सर्पिस्त्वया पीतमित्यर्थः। उतो अपि च हे शवसस्पते बलस्याधिपत उक्थेषु शस्त्रवत्सु यज्ञेषु नोऽस्मान्पु(नुत्पु)पूर्या उत्कर्षेण पूरय प्रापयेत्यर्थः। स्तोतृभ्यो यजमानेभ्य इषमन्नमाभर संपादय ॥

अथाक्षरपङ्क्तिषु चतसृषु प्रथमामाह—

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम्। ऋध्यामा त ओहैः।, इति।

हेऽग्ने हृदिस्पृशं हृद्यमन्तःप्रियं तं त्वामद्यास्मिन्कर्मणि ओहैः सम्यूहरूपैः स्तोमैस्त्वदीयैः स्तोत्रैर्ऋध्याम समृद्धं करवाम। तत्रैको दृष्टान्तः—अश्वं न यथाऽश्वं घासादिप्रदानेन समर्थ(र्ध)यन्ति तद्वत्। अथापरो दृष्टान्तः—क्रतुं न भद्रं यथा समीचीनं ज्योतिष्टोमादिक्रतुं सर्वयागानुष्ठानेन सम[1]र्धयन्ति तद्वत्। भद्रं कल्याणमित्यग्निविशेषणं वा ॥

अथ द्वितीयामक्षरपङ्क्तिमाह—

अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः। रथीर्ऋतस्य बृहतो बभूथ।, इति।

हेऽग्नेऽधास्मदीयस्तोत्रानन्तरं क्रतोरनुष्ठीयमानस्य कर्मणो रथीर्बभूथ हि, रथोऽस्यास्तीति रथीः सारथिः। यथा सारथिर्निर्वाहकस्तथा त्वं निर्वाहको बभूथ खलु। कीदृशस्य क्रतोः, भद्रस्य कल्याणरूपस्य, दक्षस्य स्वफ-

---

१ क. ख. घ. ङ. 'मर्थय'।

लप्रदानसमर्थस्य, साधो *रश्मिभिः साध्यस्य, ऋतस्य सत्यस्यामोघवलस्य, बृहतः प्रौढस्य ॥

अथ तृतीयामक्षरपङ्क्तिमाह—

आभिष्टे अद्य गीर्भिर्गृणन्तोऽग्ने दाशेम ।
प्र ते दिवो न स्तनयन्ति शुष्माः ।, इति ।

हेऽग्नेऽद्यास्मिन्कर्मण्याभिर्गीर्भिर्मन्त्ररूपाभिर्गृणन्तः स्तुवन्तो वयं दाशेम हविर्दद्मः । ते त्वदीयाः शुष्माः प्रवला ज्वालास्त्वां प्रकर्षेण स्तनयन्ति शब्दयन्ति । तत्र दृष्टान्तः—दिवो न द्युस्था मेघा इव ॥

अथ चतुर्थीमक्षरपङ्क्तिमाह—

एभिर्नो अर्कैर्भवा नो अर्वाङ्स्वर्ण ज्योतिः ।
अग्ने विश्वेभिः सुमना अनीकैः ।, इति ।

हेऽग्ने विश्वेभिरनीकैः सर्वसैन्यैः सहितः सुमनाः सौमनस्यं प्राप्त एभिरिदानीं क्रियमाणैर्नोऽस्मत्संबन्धिभिरर्कैरर्चनीयैर्नोऽस्मान्प्रत्यर्वाङ्भव समीपस्थो भव । समीपदेशमभिगच्छतीत्यर्वाङ् । तत्र दृष्टान्तः—सुवर्न स्वर्गलोकप्रकाशरूप आदित्यो यथा समीपवर्ती भवति तद्वत् ॥

अथातिच्छन्दसमाह—

अग्निꣳ होतारं मन्ये दास्वन्तं वसोः
सूनुꣳ सहसो जातवेदसम् । विप्रं न
जातवेदसम् । य ऊर्ध्वया स्वध्वरो देवो
देवाच्या कृपा । घृतस्य विभ्राष्टिमनु
शुक्रशोचिष आजुह्वानस्य सर्पिषः ।, इति ।

इममग्निं होतारं देवानामाह्वातारमहं मन्ये । कीदृशमग्निं, वसोर्दास्वन्तं धनस्य दातारं, सहसः सूनुं बलस्य पुत्रं, जातवेदसमुत्पन्नजगदभिज्ञम् । तत्र दृष्टान्तः—विप्रं न जातवेदसम् । यथा ब्राह्मणकुलीनमुत्पन्नपुत्राद्यभिज्ञं मन्ये तद्वत् । योऽग्निर्देव ऊर्ध्वयाऽत्युन्नतया देवाच्या देवान्प्रति गच्छन्त्या कृपया ज्वालया स्वध्वरः सुष्ठु यागनिष्पादको भवति, सोऽग्निर्घृतस्य विभ्राष्टिं विशेषेण दीप्तिमनुहाय दीप्यत इति शेषः । कीदृशस्य घृतस्य, शुक्रशोचिषः शुद्धदीप्तियुक्तस्याऽऽजुह्वानस्य सर्वतो हूयमानस्य सर्पिषः सर्पणशीलस्य ॥

* ख. पुस्तके 'रथिभिः' इति पाठान्तरम् ।

अथ तिसृषु द्विपदासु प्रथमामाह—

अग्ने त्वं नो अन्तमः । उत त्राता
शिवो भव वरूथ्यः । , इति ।

हेऽग्ने त्वं नोऽस्माकमन्तमोऽन्तिकतमो भव । वरूथ्यो वरूथे गृहे नित्यं संनिहितो भव ॥

अथ द्वितीयां द्विपदामाह—

तं त्वा शोचिष्ठ दीदिवः । सुम्नाय
नूनमीमहे सखिभ्यः । , इति ।

हे शोचिष्ठ दीदिवः शुद्धतम दीप्यमान सखिभ्यः सखीनामस्माकं सुम्नाय सुखाय नूनं पूर्वोक्तगुणयुक्तं त्वामीमहे प्राप्नुमः ॥

अथ तृतीयां द्विपदामाह—

वसुरग्निर्वसुश्रवा अच्छा नक्षि
द्युमत्तमो रयिं दाः ॥ , इति ॥

वसुर्वसुमानयमग्निर्वसुरुद्रादिदेवैरादरेण श्रूयत इति वसुश्रवाः । हे तादृशाग्नेऽच्छ स्वाभिमुखो नक्षि प्राप्नुहि ॥

एतैरग्निर्मूर्धेत्यादिभिः साध्यमुपधानं विधत्ते—

" छन्दाꣳस्युप दधाति पशवो वै छन्दाꣳसि पशूनेवाव रुन्धे छन्दाꣳसि वै देवानां वामं पशवो वाममेव पशूनव रुन्ध एताꣳ ह वै यज्ञसेनश्चैत्रियायणश्चितिं विदां चकार तया वै स पशूनवारुन्ध यदेतामुपदधाति पशूनेवाव रुन्धे " [ सं० का० ५ प्र० ३ अ० ८ ] इति ।

गायत्र्यादिच्छन्दोयुक्तैर्मन्त्रैरुपधेया इष्टका अपि च्छन्दांसीत्युच्यन्ते । तदुपधाने सति च्छन्दसां पशुहेतुत्वाद्यजमानः पशून्प्राप्नोति । किंच च्छन्दांस्येव देवानां वननीयधनरूपाण्यतस्तादृशान्पशूनयं प्राप्नोति । किंच चित्रनामकस्य कस्यचित्पुरुषस्य वंशे समुत्पन्नो यज्ञसेननामकः कश्चित्पुरुष एताभिश्छन्दोभिधाभिरिष्टकाभिः संपादितां चितिं विदित्वा स्थितवान् । ततस्तयैव चित्या पशून्प्राप्नोत् । एवमन्योऽपि प्राप्नोति ॥

सामान्येन विहितं पुनर्विशेषाकारेण विधत्ते—

" गायत्रीः पुरस्तादुप दधाति तेजो वै गायत्री तेज एव मुखतो धत्ते " [ सं० का० ५ प्र० ३ अ० ८ ] इति ।

अग्निर्मूर्धेत्यादिभिर्गायत्रीछन्दोभिर्युक्तैर्मन्त्रैरुपधेया इष्टका अपि गायत्र्यः ॥

मन्त्रेषु मूर्धशब्दस्य तात्पर्यमाह—

" मूर्धन्वतीर्भवन्ति मूर्धानमेवैनꣳ समानानां करोति " [ सं० का० ५ प्र० ३ अ० ८ ] इति ।

मूर्धशब्दयुक्तैर्मन्त्रैरुपधेया इष्टका मूर्धन्वत्यः । समानानां मध्ये यजमानस्य मूर्धत्वं शिरोवदुत्कृष्टत्वम् ॥

भुवो यज्ञस्येत्यादिभिस्त्रिष्टुप्छन्दोयुक्तैर्मन्त्रैरुपधेया इष्टका विधत्ते—

" त्रिष्टुभ उप दधातीन्द्रियं वै त्रिष्टुगिन्द्रियमेव मध्यतो धत्ते " [सं० का० ५ प्र० ३ अ० ८ ] इति ॥

जनस्य गोपा इत्यादिभिर्जगतीछन्दोभिर्मन्त्रैरुपधेया इष्टका विधत्ते—

" जगतीरुप दधाति जागता वै पशवः पशूनेवाव रुन्धे " [ सं० का० ५ प्र० ३ अ० ८ ] इति ॥

त्वां चित्रश्रवस्तम हवन्त इत्यादिभिरनुष्टुप्छन्दोयुक्तैर्मन्त्रैरुपधेया इष्टका विधत्ते—

" अनुष्टुभ उप दधाति प्राणा वा अनुष्टुप्प्राणानामुत्सृष्ट्यै " [ सं० का० ५ प्र० ३ अ० ८ ] इति ॥

एना वो अग्निमित्यादिभिरग्ने वाजस्येत्यादिभिरा ते अग्न इधीमहीत्यादिभिरग्ने तमद्येत्यादिभिश्चोपधेया विधत्ते—

" बृहतीरुष्णिहाः पङ्क्तीरक्षरपङ्क्तीरिति विषुरूपाणि छन्दाꣳस्युप दधाति विषुरूपा वै पशवः पशवश्छन्दाꣳसि विषुरूपानेव पशूनव रुन्धे " [ सं० का० ५ प्र० ३ अ० ८ ] इति ।

पूर्वोक्तेषु च्छन्दःसु समानाक्षराः सर्वे पादाः । बृहत्यादिषु विषमाक्षराः । अतो विषुरूपत्वम् । पशवोऽपि गोमहिषादयः परस्परविलक्षणत्वाद्विषुरूपाः । छन्दसां च पशुहेतुत्वात्पशुत्वम् । तथा सत्येतदुपधानेन बहुविधान्पशूनाप्नोति ॥

अथोपधानं वेदनं च प्रशंसति—

" विषुरूपमस्य गृहे दृश्यते यस्यैता उपधीयन्ते य उ चैना एवं वेद" [ सं० का० ५ प्र० ३ अ० ८ ] इति ॥

विषुरूपं बहुविधं धनम् ॥

अग्निꣳ होतारमिति मन्त्रेणोपधेयां विधत्ते—

" अतिच्छन्दसमुप दधात्यतिच्छन्दा वै सर्वाणि छन्दाꣳसि सर्वेभिरेवैनं छन्दोभिश्चिनुते वर्ष्म वा एषा छन्दसां यदतिच्छन्दा यदतिच्छन्दसमुपदधाति वर्ष्मैवैनꣳ समानानां करोति " [ सं० का० ५ प्र० ३ अ० ८ ] इति ।

(सयुजादीष्टकाभिधानम्)

गायत्र्यादीनां सर्वच्छन्दसां येयमक्षरसंख्या तस्या अतिच्छन्दस्त्वाभा-(स्यन्तर्भा)वात्सर्वच्छन्दोरूपत्वम्। किंच सर्वेषामन्तर्भावादेवैतदीयेष्टकाऽतिच्छन्दोभिधानादन्यासां छन्दोभिधानानामिष्टकानां शरीरम्। अत एतदुपधानेन यजमानं समानानां पुरुषाणां शरीरस्थानं करोति, सर्वेऽप्येनमनु जीवन्तीत्यर्थः॥

अग्ने त्वं न इत्यादिभिरुपधेया इष्टका विधत्ते—

"द्विपदा उप दधाति द्विपाद्यजमानः प्रतिष्ठित्यै" [सं० का० ५ प्र० ३ अ० ८] इति॥

अत्र विनियोगसंग्रहः—

अग्निस्तिस्रस्तु गायत्र्यो भुवस्तु त्रिष्टुभां त्रयम्।
जनतिस्रो जगत्यः स्युस्त्वां चित्रानुष्टुभां त्रयम्॥ १॥
एनातिस्रो बृहत्यः स्युरग्न इत्युष्णिहां त्रयम्।
आ ते पङ्क्तित्रयं ह्यग्नेऽक्षरपङ्क्तिचतुष्टयम्॥ २॥
अग्निमेका ह्यतिच्छन्दा अग्ने त्वं द्विपदात्रयम्।
एकोनत्रिंशदेतानि च्छन्दांस्युपदधाति हि॥ ३॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः॥ ४॥

---

(अथ चतुर्थाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः।)

---

इ॒न्द्रा॒ग्निभ्यां॑ त्वा स॒युजा॑ यु॒जा युं॑नज्म्या-
घा॒रा॒भ्यां तेज॑सा॒ वर्च॑सो॒क्थेभि॑ः स्तोमे॑भिश्छ-
न्दो॑भी र॒य्यै पोषा॑य सजा॒ता॑नां मध्यम॒स्थेया॑य
मया॑ त्वा स॒युजा॑ यु॒जा युं॑नज्म्य॒म्बा दु॒ला
निं॒त॒त्निर॒भ्रयं॑न्ती मे॒घयं॑न्ती व॒र्षयं॑न्ती चुपु॒णी-
का॒ नामा॑सि प्र॒जाप॑तिना त्वा॒ विश्वा॑भि॒र्धी-
भिरुप॑ दधामि पृथि॒व्युं॑दपु॒रमन्ने॑न वि॒ष्टा मंनु-

---

१ ख. च. 'नमुपजीं'।

ष्यांस्ते गोप्तारोऽग्निर्वियंत्तोऽस्यां तामहं प्र पंद्ये सा ( १ ) मे शर्मं च वर्मं चास्त्वधिंद्यौरन्तरिक्षं ब्रह्मंणा विष्टा मरुतंस्ते गोप्तारों वायुर्वियंत्तोऽस्यां तामहं प्र पंद्ये सा मे शर्मं च वर्मं चास्तु द्यौरपंराजिताऽमृतेंन विष्टाऽऽदित्यास्तें गोप्तारः सूर्यो वियंत्तोऽस्यां तामहं प्र पंद्ये सा मे शर्मं च वर्मं चास्तु ( २ ) ।

( साऽष्टाचंत्वारिंश्शच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ चतुर्थाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः । )

---

इन्द्राग्निभ्यामितीन्द्राग्नि—भ्याम् । त्वा । सयुजेतिं स—युजां । युजा । युनज्मि । आघाराभ्यामित्यां—घाराभ्यांम् । तेजंसा । वर्चंसा । उक्थेभिः । स्तोमेंभिः । छन्दोंभिरिति छन्दंः—भिः । रय्यै । पोषांय । सजातानामितिं स—जातानांम् । मध्यमस्थेयायेतिं मध्यम—स्थेयांय । मयां । त्वा । सयुजेतिं स—युजां । युजा । युनज्मि । अम्बा । दुला । नितत्निरितिं नि—तत्निः । अभ्रयंन्ती । मेघयंन्ती । वर्षयंन्ती । चुपुणीकां । नामं । असि । प्रजापति-

( सयुजादीष्टकाभिधानम् )

नेतिं प्रजा—पतिना । त्वा । विश्वाभिः । धीभिः ।
उपेतिं । दधामि । पृथिवी । उदपुरमित्युद—पुरम् ।
अन्नेन । विष्टा । मनुष्याः । ते । गोप्तारः । अग्निः ।
वियत्त इति वि—यत्तः । अस्याम् । ताम् । अहम् ।
प्रेतिं । पद्ये । सा ( १ ) । मे । शर्म । च । वर्म ।
च । अस्तु । अधिद्यौरित्यधि—द्यौः । अन्तरिक्षम् ।
ब्रह्मणा । विष्टा । मरुतः । ते । गोप्तारः । वायुः ।
वियत्त इति वि—यत्तः । अस्याम् । ताम् । अहम् ।
प्रेतिं । पद्ये । सा । मे । शर्म । च । वर्म । च ।
अस्तु । द्यौः । अपराजितेत्यपरा—जिता । अमृतेन ।
विष्टा । आदित्याः । ते । गोप्तारः । सूर्यः । वियत्त
इति वि—यत्तः । अस्याम् । ताम् । अहम् ।
प्रेतिं । पद्ये । सा । मे । शर्म । च । वर्म । च ।
अस्तु ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके
चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ चतुर्थकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः । )

---

चतुर्थेऽनुवाके छन्दोभिधा इष्टका उक्ताः । अथ पञ्चमे सयुजादय[1] इष्टका उच्यन्ते ।

कल्पः—“ इन्द्राग्निभ्यां त्वा सयुजा युजा युनज्मीत्यष्टौ सयुजः ” इति ॥

---

१ क. 'युगाद' ।

पाठस्तु--

इन्द्राग्निभ्यां त्वा सयुजा युजा युनज्म्या-
घाराभ्यां तेजसा वर्चसोक्थेभिः स्तोमेभिश्छ-
न्दोभी रय्यै पोषाय सजातानां मध्यमस्थेयाय
मया त्वा सयुजा युजा युनज्मि ।, इति ।

सह योजयतीति सयुक् । उत्तरेण युक्शब्देन संबन्धोऽभिधीयते । हे इष्टक इन्द्राग्निभ्यां सह तव योजयिता यः संबन्धस्तेन संबन्धेनाहं त्वां युनज्मीह क्षेत्रे युक्तां करोमि । आघाराभ्यामित्यादिभिः सप्तभि( षड्भि )स्तृतीयान्तैः सह प्रत्येकं त्वा सयुजेत्यादिशेषस्यानुषङ्गे सति षण्मन्त्राः संपद्यन्ते । आघारावाहुती । तेजः कान्तिः । वर्चो धनम् । उक्थानि शस्त्राणि । स्तोमानि स्तोत्राणि । छन्दांसि गायत्र्यादीनि । रय्या इत्यादिरष्टमो मन्त्रः । रय्यै धनार्थं पोषाय पुष्ट्यर्थं सजातानां मध्यमस्थेयाय ज्ञातीनां मध्ये मुख्यत्वेनावस्थानार्थं हे इष्टके मया सह तव योजयिता यः संबन्धस्तेन संबन्धेन त्वामिह क्षेत्रे युक्तां करोमि ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

" सर्वाभ्यो वै देवताभ्योऽग्निश्चीयते यत्सयुजो नोपदध्याद्देवता अस्याग्निं वृञ्जीरन्यत्सयुज उपदधात्यात्मनैवैनꣳ सयुजं चिनुते नाग्निना व्यृध्यतेऽथो यथा पुरुषः स्नावभिः संतत एवमेवैताभिरग्निः संततः " [ सं० का० ५ प्र० ३ अ० ९ ] इति ।

योऽयं चीयमानोऽग्निः स सर्वदेवतार्थः । तथा सति सयुजाख्यानामिष्टकानामनुपधाने सत्यस्याग्निमिन्द्राग्न्याघारादिदेवताः परित्यजेयुः । देवताभिः सहाग्निं योजयन्तीति सयुजो मन्त्राः । तैर्मन्त्रैरुपधेया इष्टका अपि सयुजः । तासामुपधाने सति यजमानः स्वेन सह योजयित्वाऽग्निं चितवान्भवति । ततो नाग्निना वियुक्तो भवति । अपि च यथा लोके पुरुषः स्नावभिः शरीरे सर्वतो व्याप्तस्तद्वदेताभिरिष्टकाभिरग्निः सर्वतो व्याप्तो भवति । तस्मादेता उपदध्यात् ।

कल्पः—" अम्बा नामासीति सप्त कृत्तिकाः " इति ।

पाठस्तु—

अम्बा दुला नितत्निरभ्रयन्ती मेघयन्ती वर्षयन्ती

---

१ ख. च. 'युगाख्या' ।

( सयुजादीष्टकाभिधानम् )

चुपुणीका नामासि प्रजापतिना त्वा
विश्वाभिर्धीभिरुप दधामि , इति ।

अम्बादिचुपुणीकान्तानि सप्त पदानि सप्तानां कृत्तिकादेवीनां नामानि । नामासीत्यादिशेषः सर्वेष्वपि पदेष्वनुज्यते । ततः सप्तैते मन्त्राः । हे इष्टके या कृत्तिकाऽम्बानामा तद्रूपा त्वमसि । तादृशी त्वं (शीं त्वां) प्रजापतिना देवेन प्रेरिता या अस्मद्बुद्धयस्ताभिः सर्वाभिरुपदधामि, सावधानोऽहं बुद्धिवैचित्र्येण सम्यगुपदधामीत्यर्थः । एवं दुला नामासीत्यादिकं योजनीयम् ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

“ अग्निना वै देवाः सुवर्गं लोकमायन्ता अमूः कृत्तिका अभवन्यस्यैता उपधीयन्ते सुवर्गमेव लोकमेति गच्छति प्रकाशं चित्रमेव भवति ” [ सं० का० ५ प्र० ३ अ० ९ ] इति ।

पूर्वमेताभिरिष्टकाभिश्चितेनाग्निना देवाः स्वर्गं प्राप्ताः । ताश्चेष्टकास्तैः सह गत्वा तत्रामूर्दृश्यमानाः कृत्तिका अभवन् । अतस्तदुपधानेन स्वर्गप्राप्तिर्भवति । किंच, अनेन स्वर्गे प्रकाशं प्राप्नोति । विचित्रमाभरणादिकं चास्य भवति ॥

कल्पः—“ पृथिव्युदपुरमन्नेनेति मण्डलेष्टकाम् ” इति ॥

पाठस्तु—

पृथिव्युदपुरमन्नेन विष्टा मनुष्यास्ते
गोप्तारोऽग्निर्वियत्तोऽस्यां तामहं प्र पद्ये
सा मे शर्म च वर्म चास्तु , इति ।

अन्नेन विष्टाऽन्नेन संपूर्णा या पृथिवी हे इष्टके सा पृथिव्युदपुरमूदकसंपूर्ण [पुरम् ] । मनुष्यास्ते तत्र गोप्तारो रक्षितारः । अस्यां पृथिव्यामग्निर्वियत्तो रक्षणाय विशेषेण प्रयत्नवान् । [तां] तादृशीं पृथिवीरूपां त्वामिष्टकामहं प्रपद्ये प्राप्नोमि । सा तथाविधेष्टका मे मम यजमानस्य शर्म शरणं गृहस्थानमस्तु । वर्म च रक्षणार्थं कवचस्थानीयमप्यस्तु ॥

कल्पः—“ अधिद्यौरिति मण्डलेष्टकाम् ” इति ॥

पाठस्तु—

अधिद्यौरन्तरिक्षं ब्रह्मणा विष्टा मरुतस्ते

१ क. ‘ने स्व’ । २ ख. च. ‘ति । चि’ । ३ ख. ‘पां तामि’ ।

गोप्तारो वायुर्बियत्तोऽस्यां तामहं प्र
पद्ये सा मे शर्म च वर्म चास्तु, इति ।

ब्रह्मणा विष्टा प्रौढेन जनेन विष्टा युक्ताऽधिद्यौर्दिवोऽप्यधिका या पू
साऽन्तरिक्षमन्तरिक्षनामकं हे इष्टके तव पुरम् । मरुतो वायवस्तेष्वेको मुख्यो
वायुः । शेषं पूर्ववत् ॥

कल्पः—" द्यौरपराजितेति मण्डलेष्टकाम् " इति ॥

पाठस्तु—

द्यौरपराजिताऽमृतेन विष्टाऽऽदित्यास्ते
गोप्तारः सूर्यो बियत्तोऽस्यां तामहं प्र
पद्ये सा मे शर्म च वर्म चास्तु॥, इति ॥

अमृतेन विष्टा पीयूषेण पूर्णा द्यौर्द्युलोकाख्या हे इष्टके तव[1] पूः केनाप्यप-
राजिता । आदित्या द्वादशसंख्याकास्तेष्वेको मुख्यः सूर्यः । शेषं पूर्ववत् ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

" मण्डलेष्टका उप दधातीमे वै लोका मण्डलेष्टका इमे खलु वै लोका देव-
पुरा देवपुरा एव प्र विशति नाऽऽर्तिमार्छत्यग्निं चिक्यानः " [ सं० का० ५
प्र० ३ अ० ९ ] इति ।

मण्डलाख्या इष्टकास्तिस्रः प्रथममध्यमोत्तमचितिषूपदध्यात् । तासां चेष्ट-
कानां लोकत्रयरूपत्वाल्लोकत्रयस्य देवपुरत्वाद्देवपुरा एवाग्निचित्प्रविशति ।
अग्निं चिन्वानो न नाशं प्राप्नोति ॥

अत्र विनियोगसंग्रहः—

इन्द्रेति सयुजस्त्वष्टा आधारादिपदेष्वपि ।
अनुषङ्गस्त्वेति तथा रय्या इत्यष्टमो मतः ॥ १ ॥
अम्बेति कृत्तिकाः सप्त नामासीत्यनुषज्यते ।
पृथिवीत्रिभिर्मण्डलाख्या मन्त्रा अष्टादशेरिताः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके
पञ्चमोऽनुवाकः ॥ ५ ॥

———

१ ख. घ. ङ. च. 'व पूस्तेना'।

(विश्वज्योतिरादीष्टकाभिधानम्)

(अथ चतुर्थाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः।)

---

बृहस्पतिस्त्वा सादयतु पृथिव्याः पृष्ठे
ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं
ज्योतिर्यच्छाग्निस्तेऽधिपतिर्विश्वकर्मा त्वा सा-
दयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीं विश्वस्मै
प्राणायापानाय विश्वं ज्योतिर्यच्छ वायु-
स्तेऽधिपतिः प्रजापतिस्त्वा सादयतु दिवः
पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणायापा-
नाय विश्वं ज्योतिर्यच्छ परमेष्ठी तेऽ-
धिपतिः पुरोवातसनिरस्यभ्रसनिरसि वि-
द्युत्सनिः (१) असि स्तनयित्नुसनिरसि
वृष्टिसनिरस्यग्नेर्यान्यसि देवानामग्नेयान्यसि
वायोर्यान्यसि देवानां वायोयान्यस्यन्तरिक्षस्य
यान्यसि देवानामन्तरिक्षयान्यस्यन्तरिक्षमस्य-
न्तरिक्षाय त्वा सलिलाय त्वा सर्णीकाय त्वा
सतीकाय त्वा केताय त्वा प्रचेतसे त्वा विव-
स्वते त्वा दिवस्त्वा ज्योतिष आदित्येभ्यस्त्वर्चे
त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे
त्वा यशोदां त्वा यशसि तेजोदां त्वा तेजसि
पयोदां त्वा पयसि वर्चोदां त्वा वर्चसि द्रवि-

णोदां त्वा द्रविणे सादयामि तेनर्षिणा तेन ब्रह्मणा तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (२)॥

( विद्युत्सनिर्धुते त्वैकान्नत्रिꣳशच्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ चतुर्थाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः । )

---

बृहस्पतिः । त्वा । सादयतु । पृथिव्याः । पृष्ठे । ज्योतिष्मतीम् । विश्वस्मै । प्राणायेति प्र—अनाय । अपानायेत्यप—अनाय । विश्वम् । ज्योतिः । यच्छ । अग्निः । ते । अधिपतिरित्यधि—पतिः । विश्वकर्मेति विश्व—कर्मा । त्वा । सादयतु । अन्तरिक्षस्य । पृष्ठे । ज्योतिष्मतीम् । विश्वस्मै । प्राणायेति प्र—अनाय । अपानायेत्यप—अनाय । विश्वम् । ज्योतिः । यच्छ । वायुः । ते । अधिपतिरित्यधि—पतिः । प्रजापतिरिति प्रजा—पतिः । त्वा । सादयतु । दिवः । पृष्ठे । ज्योतिष्मतीम् । विश्वस्मै । प्राणायेति प्र—अनाय । अपानायेत्यप—अनाय । विश्वम् । ज्योतिः । यच्छ । परमेष्ठी । ते । अधिपतिरित्यधि—पतिः । पुरोवातसनिरिति पुरोवात—सनिः । असि । अभ्रसनिरित्यभ्र—सनिः । असि । विद्युत्स-

निरिति विद्युत्—सनिः (१)। असि। स्तनयित्नु-सनिरिति स्तनयित्नु—सनिः। असि। वृष्टिसनि-रिति वृष्टि—सनिः। असि। अग्नेः। यानी। असि। देवानाम्। अग्नेयानीत्यग्ने—यानी। असि। वायोः। यानी। असि। देवानाम्। वायोयानीति वायो—यानी। असि। अन्तरिक्षस्य। यानी। असि। देवानाम्। अन्तरिक्षयानीत्यन्तरिक्ष—यानी। असि। अन्तरिक्षम्। असि। अन्तरिक्षाय। त्वा। सलिलाय। त्वा। सर्णीकाय। त्वा। सतीकायेति स—तीकाय। त्वा। केताय। त्वा। प्रचेतस इति प्र—चेतसे। त्वा। विवस्वते। त्वा। दिवः। त्वा। ज्योतिषे। आदित्येभ्यः। त्वा। ऋचे। त्वा। रुचे। त्वा। द्युते। त्वा। भासे। त्वा। ज्योतिषे। त्वा। यशोदामिति-यशः—दाम्। त्वा। यशसि। तेजोदामिति तेजः—दाम्। त्वा। तेजसि। पयोदामिति पयः—दाम्। त्वा। पयसि। वर्चोदामिति वर्चः—दाम्। त्वा। वर्चसि। द्रविणोदामिति द्रविणः—दाम्। त्वा। द्रविणे। साद-यामि। तेन। ऋषिणा। तेन। ब्रह्मणा। तया। देवतया। अङ्गिरस्वत्। ध्रुवा। सीद (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

( अथ चतुर्थकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः । )

---

पञ्चमेऽनुवाके सयुजाद्या इष्टका उक्ताः । अथ षष्ठे विश्वज्योतिराद्या इष्टका उच्यन्ते ।

कल्पः—" बृहस्पतिस्त्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीमिति विश्वज्योतिषम् " इति ।

पाठस्तु—

बृहस्पतिस्त्वा सादयतु पृथिव्याः पृष्ठे
ज्योतिष्मतीं विश्वस्मै प्राणायापानाय
विश्वं ज्योतिर्यच्छाग्निस्तेऽधिपतिः, इति ।

हे इष्टके त्वां बृहस्पतिः पृथिव्याः पृष्ठ उपरि स्थापयतु । कीदृशीं त्वां, ज्योतिष्मतीं प्रकाशवतीम् । किमर्थम् । विश्वस्मै प्राणायापानाय सर्वस्य प्राणिजातस्य प्राणापानवृत्तिलाभार्थम् । विश्वं कृत्स्न(त्स्नं) स्वर्गप्रकाशकं ज्योतिर्यच्छ नियमय । ते तवाग्निरधिपतिः पालकोऽस्ति ।

कल्पः—" विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीमिति विश्वज्योतिषम् " इति ।

पाठस्तु—

विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे
ज्योतिष्मतीं विश्वस्मै प्राणायापानाय
विश्वं ज्योतिर्यच्छ वायुस्तेऽधिपतिः, इति ।

पूर्ववद्व्याख्येयम् ।

कल्पः—" प्रजापतिस्त्वा सादयतु दिवः पृष्ठे ज्योतिष्मतीमिति विश्वज्योतिषम् " इति ॥

पाठस्तु—

प्रजापतिस्त्वा सादयतु दिवः पृष्ठे ज्यो-
तिष्मतीं विश्वस्मै प्राणायापानाय विश्वं
ज्योतिर्यच्छ परमेष्ठी तेऽधिपतिः , इति ।

एतदपि पूर्ववद्व्याख्येयम् ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

( विश्वज्योतिरादीष्टकाभिधानम् )

"विश्वज्योतिष उप दधातीमानेवैताभिर्लोकाञ्ज्योतिष्मतः कुरुतेऽथो प्राणानेवैता यजमानस्य दाधत्येता वै देवताः सुवर्ग्यास्ता एवान्वारभ्य सुवर्गं लोकमेति" [ सं० का० ५ प्र० ३ अ० ९ ] इति।

विश्वशब्दोपेतैश्च मन्त्रैरुपधेया विश्वज्योतिषः। ताश्च तिस्रः प्रथममध्यमोत्तमचितिषूपदध्यात्। तदुपधानेन लोकान्प्रकाशवतः करोति। किंच, एता इष्टका यजमानस्य प्राणान्दृढं धारयन्ति। एतेषु मन्त्रेषु प्रतीयमाना बृहस्पत्यादय एता देवताः स्वर्गयोग्यास्ता एवानुसृत्येष्टका उपधाय स्वर्गं प्राप्नोति।

कल्पः—"पुरोवातसनिरसीति पञ्च वृष्टिसनीरनुपरिहारम्" इति॥

पाठस्तु—

पुरोवातसनिरस्यभ्रसनिरसि विद्युत्सनिरसि स्तनयित्नुसनिरसि वृष्टिसनिरसि, इति।

पुरोवातं सनोति ददातीति पुरोवातसनिः। हे इष्टके तथाविधा त्वमसि। एवमभ्रादिषु योज्यम्॥

एतन्मन्त्रसाध्यमुपधानं विधत्ते—

"वृष्टिसनीरुप दधाति वृष्टिमेवाव रुन्धे" [ सं० का० ५ प्र० ३ अ० १० ] इति।

वृष्टिसनिशब्दयुक्तैर्मन्त्रैरुपधेया इष्टका वृष्टिसनयः। तदुपधानेन वृष्टिं प्राप्नोति॥

एकप्रयत्नोपधानं वारयितुमनुक्रमेण परितो हृत्वा[1] हृत्वा तदुपधानं विधत्ते—

"यदेकधोपदध्यादेकमृतुं वर्षेदनुपरिहारꣳ सादयति तस्मात्सर्वानृतून्वर्षति" [ सं० का० ५ प्र० ३ अ० १० ] इति।

एकामिष्टकां हस्ते धृत्वा चयनक्षेत्रं प्रदक्षिणीकृत्योपदध्यात्। एवमनुक्रमेणोपधाने सति सर्वेष्वप्यृतुषु वृष्टिर्भवति॥

मन्त्रेषु पुरोवातादिशब्दानां तात्पर्यं दर्शयति—

"पुरोवातसनिरसीत्याहैतद्वै वृष्ट्यै रूपꣳ रूपेणैव वृष्टिमव रुन्धे" [ सं० का० ५ प्र० ३ अ० १० ] इति।

[2]पुरोवाताभ्रविद्युत्स्तनयित्नुवर्षणानि मिलित्वा पञ्च वृष्टेः स्वरूपम्। अतो वृष्टिरूपवाचिना मन्त्रेणैव वृष्टिं प्राप्नोति।

कल्पः—"अग्नेर्यान्यसीति द्वे संयान्यौ" इति॥

पाठस्तु—

अग्नेर्यान्यसि देवानामग्नेयान्यसि, इति।

---

१ क. 'त्वा त'। २ ख. च. 'ष्टिवा'।

हे इष्टके त्वमग्नेश्चीयमानस्य वह्नेर्यानी प्रापिकाऽसि। अनेन मन्त्रेण यजमानस्याग्निप्राप्तिरुक्ता। द्वितीयेन देवानामग्निप्राप्तिरुच्यते। हेऽग्ने त्वं यानी प्रापकोऽसीत्येतादृगुच्चारणं यस्यामिष्टकायां सेयमग्नेयानी। हे इष्टके देवानां संबन्धिनी तथाविधा त्वमसि।

कल्पः—"वायोर्यान्यसीति द्वे संयान्यौ" इति॥

पाठस्तु—

वायोर्यान्यसि देवानां वायोयान्यसि, इति।

पूर्ववद्व्याख्येयम्।

कल्पः—"अन्तरिक्षस्य यान्यसीति द्वे संयान्यौ" इति॥

पाठस्तु—

अन्तरिक्षस्य यान्यसि देवानामन्तरिक्षयान्यसि, इति।

एतदपि पूर्ववद्व्याख्येयम्।

कल्पः—"अन्तरिक्षमस्यन्तरिक्षाय त्वेति द्वे संयान्यौ" इति॥

पाठस्तु—

अन्तरिक्षमस्यन्तरिक्षाय त्वा, इति।

हे इष्टके त्वमन्तरिक्षरूपाऽसि। हे द्वितीयेष्टकेऽन्तरिक्षप्रीत्यर्थं त्वामुपदधामीति शेषः॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

"संयानीभिर्वै देवा इमाल्लँोकान्त्समयुस्तत्संयानीनाꣳ संयानित्वं यत्संयानीरुपदधाति यथाऽप्सु नावा संयात्येवमेवैताभिर्यजमान इमाल्लँोकान्त्संयाति" [सं० का० ५ प्र० ३ अ० १०] इति।

यानीशब्दोपेतैर्मन्त्रैरुपधेया इष्टकाः संयान्यः। ताभिर्देवा इमाल्लँोकान्सम्यक्प्राप्ताः। ततः सम्यग्यान्ति लोकानाभिरिति संयानीशब्दो व्युत्पन्नः। तदुपधाने सति यथा लोके नद्यादिजलेषु नावा परतीरं सम्यग्याति एवमेताभिर्लोकान्सम्यक्प्राप्नोति॥

पूर्वं नौदृष्टान्तेन प्रशंसा कृताऽथ प्लवरूपत्वमारोप्य प्रशंसति—

"प्लवो वा एषोऽग्नेर्यत्संयानीर्यत्संयानीरुपदधाति प्लवमेवैतमग्नय उपदधाति" [सं० का० ५ प्र० ३ अ० १०] इति।

चीयमानस्याग्निसमुद्रस्य संयानीसमूहोऽयं प्लवरूपः। अतस्तदुपधानेनाग्न्यर्थं प्लवरूपमेवोपदधाति॥

---

१ ख. च. °ति। संया°।

(विश्वज्योतिरादीष्टकाभिधानम्)

प्रकारान्तरेण पुनः प्रशंसति—

"उत यस्यैतासूपहितास्वापोऽग्निꣳ हरन्त्यहृत एवास्याग्निः" [सं० का० ५ प्र० ३ अ० १०] इति।

अपि च तदुपधानादूर्ध्वं यदि कथंचिद्बहुलवृष्टिसंपादितप्रवाहेण चीयमानो हृतो भवेत्तथाऽप्यस्य यजमानस्याग्निरहृत एव भवति।

कल्पः—"सलिलाय त्वेत्यष्टावादित्येष्टकाः" इति॥

पाठस्तु—

सलिलाय त्वा सर्णीकाय त्वा सतीकाय त्वा केताय त्वा प्रचेतसे त्वा विवस्वते त्वा दिवस्त्वा ज्योतिष आदित्येभ्यस्त्वा, इति।

सलिलसर्णीकसतीकशब्दा जलावान्तरविशेषवाचिनः। यस्मिन्बहुले जले पतितं वस्तु लीनं भवति तद्बहुलजलं[1] सलिलम्। हे इष्टके तथाविधजलसिध्यर्थं त्वामुपदधामि। एवमुत्तरत्रापि योज्यम्। प्रवाहरूपेण सरणशीलं जलं सर्णीकम्[2]। तत्रैव[3] सद्भावमापन्नं जलं सतीकम्। केतो ज्ञानमात्रम्। प्रचेतः प्रकृष्टज्ञानम्। विशेषेण वासहेतुः सूर्यप्रकाशो विवस्वान्। द्युलोकवर्तिनक्षत्रादिप्रकाशो दिवोज्योतिः। आदित्याः प्रसिद्धाः॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

"आदित्येष्टका उप दधात्यादित्या वा एतं भूत्यै प्रति नुदन्ते योऽलं भूत्यै सन्भूतिं न प्राप्नोत्यादित्या एवैनं भूतिं गमयन्त्यसौ वा एतस्याऽऽदित्यो रुचमा दत्ते योऽग्निं चित्वा न रोचते यदादित्येष्टका उपदधात्यसावेवाऽस्मिन्नादित्यो रुचं दधाति यथाऽसौ देवानाꣳ रोचत एवमेवैष मनुष्याणाꣳ रोचते" [सं० का० ५ प्र० ३ अ० १०] इति।

आदित्यशब्दोपेतैर्मन्त्रैरुपधेया इष्टका आदित्येष्टकाः। यो राजामात्यादिपुत्रत्वेन भूत्यर्थं समर्थोऽपि भूतिं न प्राप्नोति एनमादित्या एव भूतेरपनयन्ति। अतस्तस्याऽऽदित्येष्टकोपधानेनाऽऽदित्या एव भूतेः प्रापयितारो भवन्ति। यो यजमान उक्तक्रमेणाग्निं चित्वाऽपि मनुष्येभ्यो न रोचतेऽयमग्निचिदित्येवं मनुष्या बहुमानं न कुर्वन्ति तदानीमस्याग्निचितो रुचं प्रीतिमादित्य उपादत्ते। तस्याऽऽदित्येष्टकोपधाने सत्यादित्य एव तस्मिन्स्थापयति। ततः शास्त्रीयवचनेन यथा देवानां प्रिय एवमेव मनुष्याणां प्रियो भवति। ततः—

---

१ क. नीलं। २ क. घ. 'हुलं ज'। ३ घ. ङ. 'व भूतिभाववद्धा'।

" अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत नित्यशः " ॥

इत्यादिस्मृतिविषयत्वेनैनं मनुष्या गणयन्ति ।

कल्पः—" ऋचे त्वा रुचे त्वेति पञ्च घृतेष्टकाः " इति ॥

पाठस्तु—

ऋचे त्वा रुचे त्वा द्युते त्वा
भासे त्वा ज्योतिषे त्वा , इति ।

हे इष्टके पादबद्धमन्त्रसाध्यस्तुत्यर्थं त्वामुपदधामि । एवमुत्तरत्रापि योज्यम् । प्रकाशवाचिनो रुग्द्युद्भाज्योतिःशब्दा आदित्यचन्द्राग्निनक्षत्रदीप्तिविषयतया क्रमेण व्याख्येयाः ॥

एतन्मन्त्रसाध्यमुपधानं विधत्ते—

"घृतेष्टका उप दधात्येतद्वा अग्नेः प्रियं धाम यद्घृतं प्रियेणैवैनं धाम्ना समर्धयत्यथो तेजसा " [ सं० का० ५ प्र० ३ अ० १० ] इति ।

घृतपिण्डा एव घृतेष्टकाः । अमृन्मयीष्विष्टकासु सूत्रकारेण परिगणितत्वात् । घृतस्याग्निप्रियद्रव्यत्वात्तेनाग्निः समृद्धो भवति । किं च तेजसाऽपि युक्तो भवति ॥

तत्रापि पूर्ववदेकैकस्या इष्टकायाः प्रदक्षिणावृत्तिपूर्वकत्वं विधत्ते—

" अनुपरिहारꣳ सादयत्यपरिवर्गमेवास्मिन्तेजो दधाति " [ सं० का० ५ प्र० ३ अ० १० ] इति ।

परितः क्वापि वर्जनमकृत्वा सर्वतो यजमाने तेजः स्थापयति ।

कल्पः—" यशोदां त्वेति पञ्च यशोदाः " इति ॥

पाठस्तु—

यशोदां त्वा यशसि तेजोदां त्वा तेजसि
पयोदां त्वा पयसि वर्चोदां त्वा वर्चसि द्रवि-
णोदां त्वा द्रविणे सादयामि तेनर्षिणा तेन
ब्रह्मणा तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद , इति ।

यशः कीर्तिः । तेजः कान्तिः । पयः क्षीरम् । वर्चो बलम् । द्रविणं धनम् । हे इष्टके यशःप्रदां त्वां यशोनिमित्तं सादयामि । केन केन सह, यस्त्वदभिज्ञ ऋषिः, यच्च ब्रह्म त्वत्प्रतिपादकं मन्त्रवाक्यं, या च त्वदभिमानिनी देवता,

तैः सर्वैः सह त्वा महं सादयामि। यथाऽङ्गिरसः सादयन्ति तद्वत्। एवं तेजोदां त्वेत्यादिषु चतुर्षु मन्त्रेषु सादयामीत्यादिकं सर्वमनुषज्य व्याख्येयम्॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

"प्रजापतिरग्निमचिनुत स यशसा व्यार्धत स एता यशोदा अपश्यत्ता उपाधत्त ताभिर्वै स यश आत्मन्नधत्त यद्यशोदा उपदधाति यश एव ताभिर्यजमान आत्मन्धत्ते" [सं० का० ५ प्र० ३ अ० १०] इति।

अग्निं चित्वाऽप्येतासामनुपधानात्प्रजापतिर्यशसा वियुक्त आसीत्। तत एता दृष्ट्वा ता उपधाय यशो लब्धवान्। एवं यजमानोऽपि तदुपधानेन यशो लभते॥

इष्टकासंख्यां विधत्ते—

"पञ्चोप दधाति पाङ्क्तः पुरुषो यावानेव पुरुषस्तस्मिन्यशो दधाति" [सं० का० ५ प्र० ३ अ० १०] इति।

हस्तपादशिरोभिः पञ्चभिरवयवैः पुरुषस्य पाङ्क्तत्वम्॥

अत्र विनियोगसंग्रहः—

बृहविश्वप्रजेत्येता विश्वज्योतिष ईरिताः।
पुरो वृष्टिसनीः पञ्च ह्यग्नेः संयानिकाष्टकम्॥ १॥
सत्यादित्येष्टका अष्टावृचे पञ्च घृतेष्टकाः।
यशः पञ्च यशोदाः स्युः सादयाम्यनुषज्यते॥
षष्ठानुवाके संप्रोक्ताश्चतुस्त्रिंशत्तु मन्त्रकाः॥ २॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः॥ ६॥

---

(अथ चतुर्थाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः।)

---

भूयस्कृदसि वरिवस्कृदसि प्राच्यस्यूर्ध्वाऽस्यन्तरिक्षसदस्यन्तरिक्षे सीदाप्सुषदसि श्येनसदसि गृध्रसदसि सुपर्णसदसि नाकसदसि पृथिव्यास्त्वा द्रविणे सादयाम्यन्तरिक्षस्य त्वा

द्रविणे सादयामि दिवस्त्वा द्रविणे सादयामि दिशां त्वा द्रविणे सादयामि द्रविणोदां त्वा द्रविणे सादयामि प्राणं मे पाह्यपानं मे पाहि व्यानं मे (१) पाह्यायुर्मे पाहि विश्वायुर्मे पाहि सर्वायुर्मे पाह्यग्ने यत्ते परꣳ हृन्नाम तावेहि सꣳ रभावहै पाञ्चजन्येष्वप्येध्यग्ने यावा अयावा एवा ऊमाः सब्दः सगरः सुमेकः (२)॥

( व्यानं मे द्वात्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ चतुर्थाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः । )

---

भूयस्कृदिति भूयः—कृत् । असि । वरिवस्कृदिति वरिवः—कृत् । असि । प्राची । असि । ऊर्ध्वा । असि । अन्तरिक्षसदित्यन्तरिक्ष—सत् । असि । अन्तरिक्षे । सीद । अप्सुषदित्यप्सु—सत् । असि । श्येनसदिति श्येन—सत् । असि । गृध्रसदिति गृध्र—सत् । असि । सुपर्णसदिति सुपर्ण—सत् । असि । नाकसदिति नाक—सत् । असि । पृथिव्याः । त्वा । द्रविणे । सादयामि । अन्तरिक्षस्य । त्वा । द्रविणे । सादयामि । दिवः । त्वा ।

( भूयस्कृदादीष्टकाभिधानम् )

द्रविणे । सादयामि । दिशाम् । त्वा । द्रविणे । सादयामि । द्रविणोदामिति द्रविणः—दाम् । त्वा । द्रविणे । सादयामि । प्राणमिति प्र—अनम् । मे । पाहि । अपानमित्यप—अनम् । मे । पाहि । व्यानमिति वि—अनम् । मे ( १ ) । पाहि । आयुः । मे । पाहि । विश्वायुरिति विश्व—आयुः । मे । पाहि । सर्वायुरिति सर्व—आयुः । मे । पाहि । अग्ने । यत् । ते । परम् । हृत् । नाम । तौ । एति । इहि । समिति । रभावहै । पाञ्चजन्येष्विति पाञ्च—जन्येषु । अपीति । एधि । अग्ने । यावाः । अयावाः । एवाः । ऊमाः । सब्दः । सगरः । सुमेक इति सु—मेकः ( २ )॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ चतुर्थकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः । )

---

षष्ठेऽनुवाके विश्वज्योतिरादय इष्टका उक्ताः । अथ सप्तमे भूयस्कृदादय इष्टका उच्यन्ते ।

कल्पः—" भूयस्कृदसीति पञ्च भूयस्कृतः " इति ॥

पाठस्तु—

भूयस्कृदसि वरिवस्कृदसि प्राच्यस्यूर्ध्वाऽस्यन्तरिक्षसदस्यन्तरिक्षे सीद, इति ।

हे इष्टके त्वं भूयो बाहुल्यं करोतीति भूयस्कृत् । तथाविधाऽसि । एवमुत्तरत्रापि योज्यम् । वरिवो भूमेः पूज्यत्वं करोतीति वरिवस्कृत् । स्पष्टमन्यत् ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

“ देवासुराः संयत्ता आसन्कनीयाꣳसो देवा आसन्भूयाꣳसोऽसुरास्ते देवा एता इष्टका अपश्यन्ता उपादधत भूयस्कृदसीत्येव भूयाꣳसोऽभवन्वनस्पतिभिरोषधीभिर्वरिवस्कृदसीतीमामजयन्प्राच्यसीति प्राचीं दिशमजयन्नूर्ध्वाऽसीत्यमूमजयन्नन्तरिक्षसदस्यन्तरिक्षे सीदेत्यन्तरिक्षमजयन्ततो देवा अभवन्पराऽसुरा यस्यैता उपधीयन्ते भूयानेव भवत्यभीमाꣳल्लोकाञ्जयति भवत्यात्मना पराऽस्य भ्रातृव्यो भवति ” [ सं० का० ५ प्र० ३ अ० ११ ] इति ।

देवाश्चासुराश्च यदा युद्धायोद्युक्तास्तदा देवाः पुरुषसंख्यया द्रव्यसंपत्त्या चाल्पा भूत्वा तत्परिहारायैता इष्टका दृष्ट्वा ता उपधाय प्रथममन्त्रेण वनस्पत्योषधिद्रव्यसंपत्त्या तदुपलक्षितपुरुषसंपत्त्या चातिबहुला अभवन् । उपरितनैर्मन्त्रैर्भूम्यादिजयं प्राप्ताः । ततो देवा विजयिनोऽभवन्नसुराश्च पराभूताः । यजमानोऽप्येतासामुपधानेन तथा भवति ।

कल्पः—“ अप्सुषदसीति पञ्चाग्निरूपाणि ” इति ॥

पाठस्तु—

अप्सुषदसि श्येनसदसि गृध्रसदसि
सुपर्णसदसि नाकसदसि , इति ।

योऽग्निरप्सु सीदति हे इष्टके तद्रूपा त्वमसि । आरुणकेतुकचयने जानुदघ्नीमुत्तरवेदिमद्भिः पूरयित्वा तास्वग्निश्चीयते । श्येनगृध्रसुपर्णाः पक्षिविशेषाः । तत्तदाकारेण स्थितोऽग्निः श्येनसदादिशब्दैरुच्यते । नाके स्वर्गे वर्तमानोऽग्निर्नाकसत् । तदग्निरूपेष्टके त्वमसीति योज्यम् ॥

मन्त्रेष्वप्सुषदादिपदानामग्न्याकार[1] [ वाचि ] त्वं दर्शयति—

“ अप्सुषदसि श्येनसदसीत्याहैतद्वा अग्ने रूपꣳ रूपेणैवाग्निमव रुन्धे ” [ सं० का० ५ प्र० ३ अ० ११ ] इति ।

अग्न्याकारवाचिनां पदानां पाठेन योग्यरूपेण युक्तमग्निमेव प्राप्नोति । अग्निरूपवाचिभिर्मन्त्रैरुपधेयत्वादिष्टका अप्यग्निरूपाणीत्येवोच्यन्ते ।

कल्पः—“ पृथिव्यास्त्वा द्रविणे सादयामीति पञ्च द्रविणोदाः ” इति ।

पाठस्तु—

पृथिव्यास्त्वा द्रविणे सादयाम्यन्तरि-
क्षस्य त्वा द्रविणे सादयामि दिव-
स्त्वा द्रविणे सादयामि दिशां

---

१ ख. च. ‘रवत्वं द’ ।

( भूयस्कृदादीष्टकाभिधानम् )

त्वा द्रविणे सादयामि द्रवि-
णोदां त्वा द्रविणे सादयामि, इति ।

पृथिव्याः संबन्धि यद्द्रविणं धनं तस्मिन्द्रविणे त्वां सादयामि । एवमुत्तरत्र योज्यम् । द्रविणप्रदां त्वामनुक्तविशेषेऽपि सर्वस्मिन्द्रविणे सादयामि ॥

मन्त्राणां तात्पर्यं दर्शयति—

" पृथिव्यास्त्वा द्रविणे सादयामीत्याहेमानेवैताभिर्लोकान्द्रविणावतः कुरुते " [ सं० का० ५ प्र० ३ अ० ११ ] इति ।

एताभिरेतन्मन्त्रसाध्याभिर्द्रविणोदाख्याभिः । द्रविणोदाशब्दयुक्तैर्मन्त्रैरुपधेयत्वाद्द्रविणोदा इत्यासां नाम ।

कल्पः—" प्राणं मे पाहीति षडायुष्याः " इति ॥

पाठस्तु—

प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाह्यायुर्मे
पाहि विश्वायुर्मे पाहि सर्वायुर्मे पाहि, इति ।

हे इष्टके मदीयां प्राणवृत्तिं पालय । एवं सर्वत्र । स्वकीयायुषः साकल्यं विश्वशब्देनोच्यते । स्वसंबन्धिपुत्राद्यायुष्यं सर्वशब्देनोच्यते ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

" आयुष्या उप दधात्यायुरेवास्मिन्दधाति " [ सं० का ५ प्र० ३ अ० ११ ] इति ।

आयुःशब्दोपेतैर्मन्त्रैरुपधेयत्वादेता इष्टका आयुष्याः ।

कल्पः—" अग्ने यत्ते परꣳ हृन्नामेत्यग्नेर्हृदयम् " इति ॥

पाठस्तु—

अग्ने यत्ते परꣳ हृन्नाम तावेहि सꣳ
रभावहै पाञ्चजन्येष्वप्येध्यग्ने , इति ।

हेऽग्ने हृदिति यत्ते परमुत्कृष्टं नामानिष्टं पापं हरतीति हृत्तेन नाम्ना युक्तस्त्वमेहि मत्समीपमागच्छ । तौ त्वं चाहं चेत्युभावावां संरभावहै संगतौ कुर्वः । पञ्चजनशब्दः संज्ञायां समस्तत्वादत्र चितिपञ्चकमाचष्टे । हेऽग्ने त्वं पाञ्चजन्येष्वपि पञ्चचितिसंबन्धिषु सर्वेष्वपि स्थानेष्वेध्यवस्थितो भव ॥

मन्त्रस्य प्रथमपादे हृच्छब्दस्य तात्पर्यं दर्शयति—

" अग्ने यत्ते परꣳ हृन्नामेत्याहैतद्वा अग्नेः प्रियं धाम प्रियमेवास्य धामोपाऽऽप्नोति " [ सं० का० ५ प्र० ३ अ० ११ ] इति ।

हृच्छब्दवाच्यं पापहारि स्वरूपं यत्तदेवाग्नेः प्रियं स्थानम् ॥

मध्यभागे सꣳरभावहा इत्यस्य तात्पर्यं दर्शयति—

" तावेहि सꣳरभावहा इत्याहैवैनेन परि धत्ते " [ सं० का० ५ प्र० ३ अ० ११ ] इति ।

सहानुष्ठानप्रार्थने सत्य(त्ये)नेनाग्निना स्वस्य परिधानं प्रावरणं विशेषेण कृतं भवति ॥

तृतीयभागे पाञ्चजन्यशब्दार्थं दर्शयति—

" पाञ्चजन्येष्वप्येध्यग्न इत्याहैष वा अग्निः पाञ्चजन्यो यः पञ्चचितीकस्तस्मादेवमाह " [ सं० का० ५ प्र० ३ अ० ११ ] इति ।

कल्पः—" यावा अयावा इति सप्तर्तव्याः " इति ॥

पाठस्तु—

यावा अयावा एवा ऊमाः
सब्दः सगरः सुमेकः॥, इति ॥

यावाद्याः षट्शब्दा वसन्ताद्यृतुवाचिनः । सुमेकशब्दः संवत्सरवाची । हे इष्टके त्वं तद्रूपाऽसीति योज्यम् ॥

एतन्मन्त्रसाध्यमुपधानं विधत्ते—

" ऋतव्या उप दधात्येतद्वा ऋतूनां प्रियं धाम यदृतव्या ऋतूनामेव प्रियं धामाव रुन्धे सुमेक इत्याह संवत्सरो वै सुमेकः संवत्सरस्यैव प्रियं धामोपाऽऽप्नोति " [ सं० का० ५ प्र० ३ अ० ११ ] इति ।

एतद्यावादिशब्दानामृतुसंबन्धित्वात्तैरुपधेया इष्टका अप्यृतव्या इत्युच्यन्ते ॥

अत्र विनियोगसंग्रहः—

भूयो भूयस्कृतः पञ्च पञ्चाप्स्वित्यग्निरूपकाः ।
पृथि पञ्च द्रविणोदाः प्राणमायुष्यकास्तु षट् ॥ १ ॥
अग्नेऽग्नेर्हृदयं प्रोक्तं यावाः सप्त ऋतव्यकाः ।
अनुवाके सप्तमेऽस्मिन्नेकोनत्रिंशदीरिताः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( इन्द्रतन्वाख्येष्टकाभिधानम् )

( अथ चतुर्थाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः । )

---

अ॒ग्निनां॑ वि॒श्वाषा॒ट्सूर्ये॑ण स्व॒राट्क्रत्वा॒ शची॒पति॑र्ऋष॒भेण॒ त्वष्टां॒ य॒ज्ञेनं॑ म॒घवा॒न्दक्षि॑णया सु॒व॒र्गो म॒न्युनां॑ वृत्र॒हा सौहार्द्येन तनू॒धा अन्ने॑न॒ गयः॑ पृ॒थि॒व्याऽस॑नो॒दृग्भि॒रन्ना॒दो व॑षट्का॒रेण॒र्धः साम्नां॑ तनू॒पा वि॒राजा॒ ज्योति॑ष्मा॒न् ब्रह्म॑णा सोम॒पा गोभि॑र्य॒ज्ञं दा॑धार क्ष॒त्रेण॒ मनुष्या॑नश्वे॑न च॒ रथे॑न च व॒ज्र्यृ॑तुभिः॑ प्र॒भुः सं॑वत्स॒रेणं॑ परि॒भूस्त॒पसाऽना॑धृ॒ष्टः सूर्यः॒ सन्त॒नूभिः॑ ( १ ) ॥

( अ॒ग्नि॒नैका॒न्नपं॒चाश॒त् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ चतुर्थाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः । )

---

अ॒ग्निनां॑ । वि॒श्वाषा॒ट् । सूर्ये॑ण । स्व॒राडिति॑ स्व॒—रा॒ट् । क्रत्वां॑ । शची॒पतिः॑ । ऋ॒ष॒भेण॑ । त्वष्टां॑ । य॒ज्ञेनं॑ । म॒घवा॒निति॑ म॒घ—वा॒न् । दक्षि॑णया । सु॒व॒र्ग इति॑ सुवः—गः । म॒न्युनां॑ । वृ॒त्र॒हेति॑ वृत्र—हा । सौहार्द्येन । त॒नू॒धा इति॑ तनू—धाः । अन्ने॑न । गयः॑ । पृ॒थि॒व्या । अ॒स॒नो॒त् । ऋ॒ग्भि॒रित्यृ॑क्—भिः ।

अन्नाद इत्यन्न—अदः । वषट्कारेणेति वषट्—कारेण । ऋद्धः । साम्ना । तनूपा इति तनू—पाः । विराजेति वि—राजा । ज्योतिष्मान् । ब्रह्मणा । सोमपा इति सोम—पाः । गोभिः । यज्ञम् । दाधार । क्षत्रेण । मनुष्यान् । अश्वेन । च । रथेन । च । वज्री । ऋतुभिरित्यृतु—भिः । प्रभुरिति प्र—भुः । संवत्सरेणेति सं—वत्सरेण । परिभूरिति परि—भूः । तपसा । अनाधृष्ट इत्यना—धृष्टः । सूर्यः । सन् । तनूभिः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ चतुर्थकाण्डे चतुर्थप्रपाठकेऽष्टमोऽनुवाकः । )

---

सप्तमेऽनुवाके भूयस्कृदाद्या इष्टका उक्ताः । अथाष्टम इन्द्रतन्वाख्या इष्टका उच्यन्ते ।

कल्पः—" अग्निना विश्वाषाडिति द्वाविंशतिमिन्द्रतनूः " इति ॥

पाठस्तु—

अग्निना विश्वाषाट्सूर्येण स्वराट्क्रत्वा शचीपतिर्ऋषभेण त्वष्टा यज्ञेन मघवान्दक्षिणया सुवर्गो मन्युना वृत्रहा सौहार्द्येन तनूधा अन्नेन गयः पृथिव्याऽसनोदृग्भिरन्नादो वषट्कारेणर्धः साम्ना तनूपा विराजा ज्योतिष्मान्ब्रह्मणा सोमपा गोभिर्यज्ञं दाधार क्षत्रेण मनुष्यान-

( इन्द्रतन्वाख्येष्टकाभिधानम् )

**श्वेन च रथेन च वज्र्यृतुभिः प्रभुः संवत्सरेण परिभूस्तपसाऽनाधृष्टः सूर्यः सन्तनूभिः ।, इति ॥**

विश्वं सहते तत्पालनप्रयासमङ्गी करोतीति विश्वाषाट् । अग्निना सह विश्वाषाड्य इन्द्रो हे इष्टके तद्रूपा त्वमसि । एवं सर्वत्र योज्यम् । सूर्येण सह स्वतो राजत इति स्वराडिन्द्रः । क्रत्वा ज्योतिष्टोमादिप्रौढकर्मणा सहितः शच्या देव्याः पतिरिन्द्रः । ऋषभेण वर्षित्रा धर्मेण सह त्वष्टा रूपकृदिन्द्रः । यज्ञेनाल्पेन पाकयज्ञेन सहितो मघवानन्नवानिन्द्रः । दक्षिणया गवादिरूपया सुवर्गः स्वर्गलोकात्मक इन्द्रः । मन्युना क्रोधेन सह वृत्रहा शत्रुघातीन्द्रः । सुहृदो भावः सौहार्द्यं स्नेहातिशयस्तेन सहितस्तनूधाः शरीरधारीन्द्रः । अन्नेन सहितो गयो गृहविशेषरूप इन्द्रः । पृथिव्या सहासनोद्वर्त्यादिदानं कृतवानिन्द्रः । ऋग्भिर्मन्त्रविशेषैः सहितोऽन्नादो हविर्लक्षणस्यान्नस्य भोक्तेन्द्रः । वषट्कारेण हविष्प्रदानेन हेतुना सह ऋद्धः समृद्ध इन्द्रः । साम्ना गीयमानेन मन्त्रेण सह तनूपाः शरीरपालक इन्द्रः । विराजा दशाक्षरच्छन्दसा सह ज्योतिष्मान्प्रकाशवानिन्द्रः । ब्रह्मणा मुख्येन ऋत्विजा मन्त्रेण वा सह सोमपाः सोमपानस्य कर्तेन्द्रः । गोभिर्दक्षिणारूपाभिः सह यज्ञं दाधार यज्ञधारक इन्द्रः । क्षत्रेण राज्ञा सह मनुष्यान्दाधारेत्यनुवर्तते । तथा च मनुष्यधारक इन्द्रः । योऽयमश्वो यश्च रथस्ताभ्यामुभाभ्यां सह वज्री वज्रयुक्त इन्द्रः । ऋतुभिर्वसन्तादिभिः सह प्रभुः फलदानसमर्थ इन्द्रः । संवत्सरेण कालरूपेण सह परिभूः परितो व्याप्तवानिन्द्रः । तपसाऽशनवर्जनधनदानादिरूपेणानाधृष्टः केनाप्यतिरस्कृत इन्द्रः । तनूभिर्द्वादशमूर्तिभिः सह सूर्यः सन्सूर्यरूपो भूत्वेन्द्रो वर्तते । हे इष्टके तद्रूपा त्वमसि ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

"देवासुराः संयत्ता आसन्ते न व्यजयन्त स एता इन्द्रस्तनूरपश्यत्ता उपाधत्त ताभिर्वै स तनुवमिन्द्रियं वीर्यमात्मन्नधत्त ततो देवा अभवन्पराऽसुरा यदिन्द्रतनूरुपदधाति तनुवमेव ताभिरिन्द्रियं वीर्यं यजमान आत्मन्धत्तेऽथो सेन्द्रमेवाग्निꣳ सतनुं चिनुते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति" [ सं० का० ५ प्र० ४ अ० १ ] इति ।

देवानामसुराणां च सङ्ग्रामे प्राप्ते दुर्बला देवा विजयं न प्राप्ताः । तदानीं विजयाय स इन्द्र एतास्तनूनामिका इष्टका दृष्ट्वा तदुपधानेन शरीरपुष्टिमि-

---

१ च. 'था म' ।

न्द्रियपाटवं शौर्यपाटवं च धृतवान् । ततो देवानां जयोऽसुराणां पराभवश्चाऽऽसीत् । ततो यजमानोऽपीन्द्रतनूनामुपधानेन तथाविधो भवति । विश्वापाडित्यादिशब्दा इन्द्रतनूविशेषवाचकाः । तद्युक्तैर्मन्त्रैरुपधेया इष्टका इन्द्रतनवः ॥

अत्र विनियोगसंग्रहः—

अग्नीन्द्रतनुनामानो द्वाविंशतिरितीरिताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ चतुर्थाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः । )

---

प्रजापतिर्मनसाऽन्धोऽच्छेतो धाता दीक्षायाꣳ सविता भृत्यां पूषा सोमक्रयण्यां वरुण उपनद्धोऽसुरः क्रीयमाणो मित्रः क्रीतः शिपिविष्ट आसादितो नरंधिषः प्रोह्यमाणोऽधिपतिरागतः प्रजापतिः प्रणीयमानोऽग्निराग्नीध्रे बृहस्पतिराग्नीध्रात्प्रणीयमान इन्द्रो हविर्धानेऽदितिरासादितो विष्णुरुपावह्रियमाणोऽथर्वोपोत्तो यमोऽभिषुतोऽपूतपा आधूयमानो वायुः पूयमानो मित्रः क्षीरश्रीर्मन्थी संक्तुश्रीर्वैश्वदेव उन्नीतो रुद्र आहुतो वायुरावृत्तो नृचक्षाः प्रतिख्यातो भक्ष आगतः पितृणां नाराशꣳसोऽसुरात्तः सिन्धुरवभृथमवप्रयन्त्समुद्रोऽवगतः सलिलः प्रप्लुतः सुवरुदृचं गतः ( १ ) ॥

---

१ च. 'नो मन्त्रा द्वाविंशती' ।

( यज्ञतन्वाख्येष्टकाभिधानम् )

( रुद्र एकविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके
चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ चतुर्थाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः । )

---

प्रजापतिरिति प्रजा—पतिः । मनसा । अन्वः । अच्छेत इत्यच्छ—इतः । धाता । दीक्षायाम् । सविता । भृत्याम् । पूषा । सोमक्रयण्यामिति सोम—क्रयण्याम् । वरुणः । उपनद्ध इत्युप—नद्धः । असुरः । क्रीयमाणः । मित्रः । क्रीतः । शिपिविष्ट इति शिपि—विष्टः । आसादित इत्या—सादितः । नरंधिषः । प्रोह्यमाण इति प्र—उह्यमानः । अधिपतिरित्यधि—पतिः । आगत इत्या—गतः । प्रजापतिरिति प्रजा—पतिः । प्रणीयमान इति प्र—नीयमानः । अग्निः । आग्नीध्र इत्याग्नि—इध्रे । बृहस्पतिः । आग्नीध्रादित्याग्नि—इध्रात् । प्रणीयमान इति प्र—नीयमानः । इन्द्रः । हविर्धान इति हविः—धाने । अदितिः । आसादित इत्या—सादितः । विष्णुः । उपावह्रियमाण इत्युप—अवह्रियमाणः । अथर्वा । उपोत्त इत्युप—उत्तः । यमः । अभिषुत इत्यभि—सुतः । अपूतपा इत्यपूत—पाः । आधू-

यमान इत्या—धूयमानः । वायुः । पूयमानः । मित्रः । क्षीरश्रीरिति क्षीर—श्रीः । मन्थी । सक्तुश्रीरिति सक्तु—श्रीः । वैश्वदेव इति वैश्व—देवः । उन्नीत इत्युत्—नीतः । रुद्रः । आहुत इत्या—हुतः । वायुः । आवृत्त इत्या—वृत्तः । नृचक्षा इति नृ—चक्षाः । प्रतिख्यात इति प्रति—ख्यातः । भक्षः । आगत इत्या—गतः । पितॄणाम् । नाराशंसः । असुः । आत्तः । सिन्धुः । अवभृथमित्यव—भृथम् । अवप्रयन्नित्यव—प्रयन् । समुद्रः । अवगत इत्यव—गतः । सलिलः । प्रप्लुत इति प्र—प्लुतः । सुवः । उदृचमित्युत्—ऋचम् । गतः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ चतुर्थकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः । )

---

अष्टमेऽनुवाक इन्द्रतन्वाख्या इष्टका उक्ताः । अथ नवमे यज्ञतन्वाख्या इष्टका उच्यन्ते ।

कल्पः—" प्रजापतिर्मनसाऽन्धोऽच्छेत इति त्रयस्त्रिंशतं यज्ञतनूः " इति

पाठस्तु—

प्रजापतिर्मनसाऽन्धोऽच्छेतो धाता दीक्षायाꣳ सविता भृत्यां पूषा सोमक्रयण्यां वरुण उपनद्धोऽसुरः क्रीयमाणो मित्रः क्रीतः शिपिविष्ट

( यज्ञतन्वाख्येष्टकाभिधानम् )

आसादितो नरंधिषः प्रोह्यमाणोऽधिपतिरागतः प्रजापतिः प्रणीयमानोऽग्निराग्नीध्रे बृहस्पति-राग्नीध्रात्प्रणीयमान इन्द्रो हविर्धानेऽदितिरा-सादितो विष्णुरुपावह्रियमाणोऽथर्वोपोत्तो य-मोऽभिषुतोऽपूतपा आधूयमानो वायुः पूय-मानो मित्रः क्षीरश्रीर्मन्थी सक्तुश्रीर्वैश्वदेव उन्नीतो रुद्र आहुतो वायुरावृत्तो नृचक्षाः प्रतिख्यातो भक्ष आगतः पितृणां नाराशं-सोऽसुरात्तः सिन्धुरवभृथमवप्रयन्त्समुद्रोऽवगतः सलिलः प्रप्लुतः सुवरुदृचं गतः ।, इति ।

अत्र संकल्पमारभ्य समाप्तिपर्यन्तं ये सोमयागास्ते यज्ञपुरुषस्य तनुवि-शेषाः । तद्रूपत्वमिष्टकानामुच्यते । यो यजमानोऽस्त्यसौ मनसाऽन्धोऽन्नं तेन तद्धेतुर्यज्ञ उपलक्ष्यते, यज्ञमच्छेतः प्राप्तुं गतः, मनसा यज्ञं करिष्यामीति संक-ल्पितवानित्यर्थः । सोऽयं संकल्पदशामापन्नो यज्ञस्य विग्रहः प्रजापतिनामकः । हे इष्टके तद्रूपा त्वमसि । दीक्षायां यो विग्रहो यज्ञसंबन्धी स धाता धातृसदृ-शमूर्तिः । हे इष्टके तद्रूपा त्वमसि । एवं सर्वत्र योज्यम् । भृतिर्यज्ञभिक्षा तस्यां सवितृसमानमूर्तिर्यज्ञतनुः । सोमक्रयण्येकहायनी गौस्तस्यां पूषसमानो यज्ञवि-ग्रहः । उपनद्धो वस्त्रेण बद्धो यः सोमः स वरुणसमानशरीरो यज्ञपुरुषः । क्रीयमाणो यः सोमः सोऽयमसुर इन्द्रसमानविग्रहः, शत्रूनस्यति क्षिपतीत्य-सुरः, असून्प्राणान्राति ददातीति वाऽसुरः । यः क्रीतः सोमः सोऽयं मित्र-समानविग्रहो यज्ञः । आसादितो यजमानस्योरौ यः स्थापितः सोमः सोऽयं शिपिविष्टो विष्णुसमानविग्रहो यज्ञः । प्रोह्यमाणः शकटेन प्राग्वंशं प्रति नीय-मानो यः सोमः सोऽयं नरंधिषोऽग्निसमानविग्रहो यज्ञः, नरैर्यजमानैर्धीयत आधीयत इति नरंधिषोऽग्निः । आगतः प्राग्वंश आसन्दीं प्रति समागतो यः सोमः सोऽयमधिपतिरधिकं पालको य आहवनीयस्तत्समानविग्रहः । प्रणीय-मानः प्राग्वंशादाग्नीध्रं प्रति नीयमानो यः सोमः सोऽयं प्रजापतिसमानवि-ग्रहः । आग्नीध्रेऽवस्थितो यः सोमः सोऽयमग्निसमानविग्रहः । आग्नीध्राद्धवि-र्धानं प्रति नीयमानो यः सोमः स बृहस्पतिसमानविग्रहः । हविर्धाने प्रविष्ट इन्द्रसमानविग्रहः । आसादित आसन्द्यां स्थापितः सोमोऽदितिसमानविग्रहः ।

उपावह्रियमाणः शकटादधिषवणफलकस्थग्रावस्ववरोप्यमाणः सोमो विष्णुसमानविग्रहः । उपोप्तो वसतीवरीभिरद्भिः क्लेदितः सोमोऽथर्वाऽथर्वऋषिसमानविग्रहः । [ अभिषुतश्चूर्णितः सोमो यमसमानविग्रहः । ] आधूयमानोऽदाभ्यग्रहे सोमांशुभिश्चाल्यमानोऽपूतं मूत्राद्युपहतं देशं पाति शोषयति विशेषेण शुद्धं करोतीत्यपूतपा आदित्यः । पूयमानो दशापवित्रेण शोध्यमानः सोमो वायुर्वायुसमानविग्रहः । क्षीरश्रीर्मैत्रावरुणग्रहे पयसा मिश्रितः सोमो मित्रसमानविग्रहः । सक्तुश्रीर्मन्थिग्रहे सक्तुभिर्मिश्रितः सोमो मन्थी मन्थिग्रहदेवतारूपेन्द्रसमानविग्रहः । उन्नीतश्चमसेषु पूरितः सोमो वैश्वदेवो विश्वैर्देवैः समानविग्रहः । आहुतो वह्नौ प्रक्षिप्तः सोमो रुद्रसमानविग्रहः । आवृत्तो भक्षार्थं सदस्यानेतुं प्रतिनिवृत्तः सोमो वायुसमानविग्रहः । प्रतिख्यातो भक्षार्थमवेक्षितः सोमो नृचक्षा मनुष्यदृष्टिसमानविग्रहः । आगत आस्ये प्रवेशितः सोमो भक्षो वैश्वानरसमानविग्रहः । भक्षयतीति व्युत्पत्त्या भक्षशब्दस्तद्वाची । नाराशंसो भक्षितशेषः सन्पुनर्वसतीवरीभिराप्यायितः सोमः पितृसमानविग्रहः । आत्तोऽवभृथगमनार्थं स्वीकृतः सोमोऽसुः प्राणदेवतासमानविग्रहः । अवभृथमवप्रयन्नवभृथकर्मार्थं मार्गे गच्छन्सोमः सिन्धुर्नदीदेवतासमानविग्रहः । अवगतोऽवभृथप्रदेशं प्राप्तः सोमः समुद्रदेवतासमानविग्रहः । प्लुतोजले प्रक्षिप्तः सोमो जलदेवतासमानविग्रहः । उदृचमुत्तमामृचं समाप्तिरूपं गतः सोमः स्वर्गनिवासिदेवतासमानविग्रहः ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

"यज्ञो देवेभ्योऽपाक्रामत्तमवरुधं नाशक्नुवन्त एता यज्ञतनूरपश्यन्ता उपादधत ताभिर्वै ते यज्ञमवारुन्धत यद्यज्ञतनूरुपदधाति यज्ञमेव ताभिर्यजमानोऽव रुन्धे" [ सं० का० ५ प्र० ४ अ० १ ] इति ।

केनापि निमित्तेन देवेभ्योऽपरक्तो यज्ञोऽन्यत्रागच्छत् । तं यज्ञं देवा अवरोद्धुं नाशक्नुवन् । तदवरोधोपायत्वेन यज्ञतन्वाख्या इष्टका दृष्ट्वा ता उपधाय यज्ञमवारुन्धत । ततो यजमानोऽपि यज्ञतनूभिर्यज्ञं प्राप्नोति । यज्ञतनुप्रतिपादकशब्दयुक्तैर्मन्त्रैरुपधेया इष्टका यज्ञतनवः ॥

इष्टकासंख्यां विधत्ते—

"त्रयस्त्रिंशतमुप दधाति त्रयस्त्रिंशद्वै देवता देवता एवाव रुन्धेऽथो सात्मानमेवाग्निं सतनुं चिनुते" [ सं० का० ५ प्र० ४ अ० १ ] इति ।

हविर्भाजां देवतानामियं संख्या त्रिंशत्त्रयश्चेति मन्त्रे समाम्नाता । अतः

---

१ ख. च. 'वमहर्धिस' । २ ख. च. 'र्थमपोक्षि' । ङ. 'र्थमवे' ।

संख्यया तावतीर्देवताः प्राप्नोति। अपि च तनूपधानेन सशरीरमेवाग्निं चितवान्भवति॥

एतद्वेदनं प्रशंसति—

"सात्माऽमुष्मिँल्लोके भवति य एवं वेद" [ सं० का० ५ प्र० ४ अ० १ ] इति॥

यदुक्तं सूत्रकारेण—"ज्योतिष्मतीं त्वा सादयामीति द्वादश ज्योतिष्मतीः" इति, तदिदं विधत्ते—

"ज्योतिष्मतीरुप दधाति ज्योतिरेवास्मिन्दधात्येताभिर्वा अग्निश्चितो ज्वलति ताभिरेवैनꣳ समिन्ध उभयोरस्मै लोकयोर्ज्योतिर्भवति" [ सं० का० ५ प्र० ४ अ० १ ] इति।

ज्योतिष्मतीशब्दयुक्तैर्मन्त्रैरुपधेया इष्टका ज्योतिष्मत्यः। ते च मन्त्रा अरण्यकाण्डे समाम्नाताः। तदुपधानेन ज्योतिः स्थापयति। किं चैताभिश्चितोऽग्निः प्रज्वलति। अतस्ताभिरेवैनमग्निं दीपितवान्भवति। ततोऽस्मै यजमानायोभयोर्लोकयोर्ज्योतिः संपद्यते॥

अत्र विनियोगसंग्रहः—

प्रजेति यज्ञतनवस्त्रयस्त्रिंशत्समीरिताः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके
नवमोऽनुवाकः॥ ९॥

---

( अथ चतुर्थाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः। )

---

कृत्तिका नक्षत्रमग्निर्देवताऽग्ने रुचः स्थ प्रजापतेर्धातुः सोमस्यर्चे त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वा रोहिणी नक्षत्रं प्रजापतिर्देवता मृगशीर्षं नक्षत्रꣳ सोमो देवताऽऽर्द्रा नक्षत्रꣳ रुद्रो देवता पुनर्वसू नक्षत्रमदितिर्देवता तिष्यो नक्षत्रं बृहस्पतिर्देवताऽऽ-

श्रेषा नक्षत्रꣳ सर्पा देवता मघा नक्षत्रं पितरो देवता फल्गुनी नक्षत्रम् ( १ ) अर्यमा देवता फल्गुनी नक्षत्रं भगो देवता हस्तो नक्षत्रꣳ सविता देवता चित्रा नक्षत्रमिन्द्रो देवता स्वाती नक्षत्रं वायुर्देवता विशाखे नक्षत्रमिन्द्राग्नी देवताऽनूराधा नक्षत्रं मित्रो देवता रोहिणी नक्षत्रमिन्द्रो देवता विचृतौ नक्षत्रं पितरो देवताऽषाढा नक्षत्रमापो देवताऽषाढा नक्षत्रं विश्वे देवा देवता श्रोणा नक्षत्रं विष्णुर्देवता श्रविष्ठा नक्षत्रं वसवः ( २ ) देवता शतभिषङ्नक्षत्रमिन्द्रो देवता प्रोष्ठपदा नक्षत्रमज एकपाद्देवता प्रोष्ठपदा नक्षत्रमहिर्बुध्नियो देवता रेवती नक्षत्रं पूषा देवताऽश्वयुजौ नक्षत्रमश्विनौ देवताऽपभरणीर्नक्षत्रं यमो देवता पूर्णा पश्चाद्यत्ते देवा अदधुः ( ३ ) ।

( फल्गुनी नक्षत्रं वसवस्त्रयस्त्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ चतुर्थाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः । )

---

कृत्तिकाः । नक्षत्रम् । अग्निः । देवता । अग्नेः ।

रुचः। स्थ । प्रजापतेरिति प्रजा—पतेः। धातुः।
सोमस्य। ऋचे। त्वा। रुचे। त्वा। द्युते। त्वा।
भासे। त्वा। ज्योतिषे। त्वा। रोहिणी। नक्षत्रम्।
प्रजापतिरिति प्रजा—पतिः। देवता। मृगशीर्षमिति
मृग—शीर्षम्। नक्षत्रम्। सोमः। देवता। आर्द्रा।
नक्षत्रम्। रुद्रः। देवता। पुनर्वसू इति पुनः—वसू।
नक्षत्रम्। अदितिः। देवता। तिष्यः। नक्षत्रम्।
बृहस्पतिः। देवता। आश्रेषा इत्या—श्रेषाः। नक्ष-
त्रम्। सर्पाः। देवता। मघाः। नक्षत्रम्। पितरः।
देवता। फल्गुनी इति। नक्षत्रम् (१)। अर्यमा।
देवता। फल्गुनी इति। नक्षत्रम्। भगः। देवता।
हस्तः। नक्षत्रम्। सविता। देवता। चित्रा। नक्ष-
त्रम्। इन्द्रः। देवता। स्वाती। नक्षत्रम्।
वायुः। देवता। विशाखे इति वि—
शाखे। नक्षत्रम्। इन्द्राग्नी इतीन्द्र—अग्नी।
देवता। अनूराधा इत्यनु—राधाः। नक्षत्रम्।
मित्रः। देवता। रोहिणी। नक्षत्रम्। इन्द्रः।
देवता। विचृताविति वि—चृतौ। नक्षत्रम्। पितरः।
देवता। अषाढाः। नक्षत्रम्। आपः। देवता।
अषाढाः। नक्षत्रम्। विश्वे। देवाः। देवता।

श्रोणा । नक्षत्रम् । विष्णुः । देवता । श्रविष्ठाः । नक्षत्रम् । वसवः ( २ ) । देवता । शतभिषगिति शत—भिषक् । नक्षत्रम् । इन्द्रः । देवता । प्रोष्ठपदा इति प्रोष्ठ—पदाः । नक्षत्रम् । अजः । एकपादित्येक—पात् । देवता । प्रोष्ठपदा इति प्रोष्ठ—पदाः । नक्षत्रम् । अहिः । बुध्नियः । देवता । रेवती । नक्षत्रम् । पूषा । देवता । अश्वयुजावित्यश्व—युजौ । नक्षत्रम् । अश्विनौ । देवता । अपभरणीरित्यप—भरणीः । नक्षत्रम् । यमः । देवता । पूर्णा । पश्चात् । यत् । ते । देवाः । अदधुः ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ चतुर्थकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः । )

---

नवमेऽनुवाके यज्ञतन्वाख्या इष्टका उक्ताः । अथ दशमे नक्षत्रेष्टका उच्यन्ते ।

कल्पः—“ पूर्णा पश्चादिति पौर्णमासीं पुरस्तादुपधाय कृत्तिका नक्षत्रमिति नक्षत्रेष्टकाः पुरस्तात्प्रतीचीरसंस्पृष्टाः पूर्वां पूर्वामुपधायापरामपरामा विशाखाभ्यः दक्षिणेन स्वयमातृण्णां रीतिं प्रतिपादयति, यत्ते देवा अदधुरित्यमावास्यां पश्चादुपधायावशिष्टानां पूर्वां पूर्वामाऽपभरणीभ्य उत्तरेण स्वयमातृण्णां रीतिं प्रतिपादयति, पौर्णमासीमन्तत ऋचे त्वा रुचे त्वेति सर्वासु नक्षत्रेष्टकास्वनुषजति ” इति ।

येयं स्वयमातृण्णेष्टका तस्याः पूर्वस्यां ( वां ) दिशमारभ्य प्रदक्षिणावृत्त्ये-

(नक्षत्रेष्टकाभिधानम्)

ष्टका उपदध्यात्। तत्र येष्टका पौर्णमास्याख्या पूर्वस्यां दिश्युपधेया तां सर्वासामन्तत उपदध्यात्॥

तत्र प्रथममन्त्रपाठस्तु—

कृत्तिका नक्षत्रमग्निर्देवताऽग्ने रुचः स्थ प्रजापतेर्धातुः सोमस्यर्चे त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वा, इति।

अम्बा दुला नितत्निरित्यादिका ज्योतीरूपा या देवता दिव्या भासन्ते ताः कृत्तिकाः। तासां समुदायरूपमेकं नक्षत्रं, तस्य च नक्षत्रस्याग्निर्देवता स्वामित्वेन वर्तते। हे कृत्तिका यूयमग्नेः प्रजापतेर्धातुः सोमस्य च संबन्धिन्यो रुचो दीप्तयः स्थ। प्रजापतेर्धातुश्च पालकत्वोत्पादकत्वाकारेण भेदः। उक्तदेवतारूपे हे इष्टके, ऋचे स्तुतिरूपमन्त्रसिध्यर्थं त्वामुपदधामि। तथा रुचे शारीरकान्तिसिध्यर्थं त्वामुपदधामि। द्युद्भाज्योतिःशब्दा अग्निसूर्यचन्द्राणां दीप्तिवाचकाः। तत्तत्सिध्यर्थं त्वामुपदधामि। एवमुत्तरेष्वपि नक्षत्रमन्त्रेषु योजनीयम्॥

द्वितीयनक्षत्रमन्त्रमारभ्य षड्विंशतिनक्षत्रमन्त्राणां पाठस्तु—

रोहिणी नक्षत्रं प्रजापतिर्देवता मृगशीर्षं नक्षत्रꣳ सोमो देवताऽऽर्द्रा नक्षत्रꣳ रुद्रो देवता पुनर्वसू नक्षत्रमदितिर्देवता तिष्यो नक्षत्रं बृहस्पतिर्देवताऽऽश्रेषा नक्षत्रꣳ सर्पा देवता मघा नक्षत्रं पितरो देवता फल्गुनी नक्षत्रमर्यमा देवता फल्गुनी नक्षत्रं भगो देवता हस्तो नक्षत्रꣳ सविता देवता चित्रा नक्षत्रमिन्द्रो देवता स्वाती नक्षत्रं वायुर्देवता विशाखे नक्षत्रमिन्द्राग्नी देवताऽनूराधा नक्षत्रं मित्रो देवता रोहिणी नक्षत्रमिन्द्रो देवता विचृतौ नक्षत्रं पितरो देवताऽषाढा नक्षत्रमापो देवताऽषाढा नक्षत्रं विश्वे देवा देवता श्रोणा नक्षत्रं विष्णु-

देवता श्रविष्ठा नक्षत्रं वसवो देवता शतभि-
षङ्नक्षत्रमिन्द्रो देवता प्रोष्ठपदा नक्षत्रमज
एकपाद्देवता प्रोष्ठपदा नक्षत्रमहिर्बुध्नियो देवता
रेवती नक्षत्रं पूषा देवताऽश्वयुजौ नक्षत्रमश्विनौ
देवताऽपभरणीर्नक्षत्रं यमो देवता , इति ।

अत्र रोहिण्यादयो नक्षत्रविशेषा ज्योतिःशास्त्राभिज्ञेषु तदीयव्यवहाराभिज्ञेषुच प्रसिद्धाः । तिष्यः पुष्यः । द्वितीया रोहिणी ज्येष्ठा । विचृतश ( च्छ )ब्दो मूलवाची । ज्योतिर्मण्डलद्विरूपतायां द्विवचनम् । पितृशब्दोऽत्र निर्ऋतिवाची । आधानेन पालनात्पितृत्वम् । श्रोणाशब्दः श्रवणवाची । श्रविष्ठाशब्दो धनिष्ठावाची । शतभिषङ्नक्षत्रस्य वरुणो देवता । स च परमैश्वर्ययोगादिन्द्र इत्युच्यते । प्रोष्ठपदा भाद्रपदाः ॥

अथ पौर्णमास्यमावास्याभिधेययोरिष्टकयोर्यौ मन्त्रौ तयोः प्रतीके दर्शयति—

पूर्णा पश्चाद्यत्ते देवा अदधुः ॥, इति ॥

एतच्चोभयं तृतीयकाण्डस्य पञ्चमप्रपाठकादौ व्याख्यातम् ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

" नक्षत्रेष्टका उप दधात्येतानि वै दिवो ज्योतीꣳषि तान्येवाव रुन्धे " [ सं० का० ५ प्र० ४ अ० १ ] इति ।

नक्षत्रशब्दोपेतैर्मन्त्रैरुपधेया इष्टका नक्षत्रेष्टकाः । यानि कृत्तिकादीनि द्युलोकसंबन्धीनि ज्योतींषि अतस्तदु (नेनो) पधानेन तान्येव प्राप्नोति ॥

प्रकारान्तरेण प्रशंसति—

" सुकृतां वा एतानि ज्योतीꣳषि यन्नक्षत्राणि तान्येवाऽऽप्नोत्यथो अनूकाशमेवैतानि ज्योतीꣳषि कुरुते सुवर्गस्य लोकस्यानुख्यात्यै " [ सं० का० ५ प्र० ४ अ० १ ] इति ।

ये शोभनं शास्त्रविहितं पुण्यं कर्म कुर्वन्ति ते सुकृतिनः । तेषामेतानि दि[वि] दृश्यमानानि नक्षत्ररूपाणि ज्योतींषि । ते हि पुण्यकृतः स्वर्गं गत्वा भास्मानविग्रहास्तान्याप्नुवन्ति । अत एव तदुपधानेन तदीयानि ज्योतींषि प्राप्नु[व]न्ति । अपि चैतानि नक्षत्रज्योतींष्यनु तेनोपधानेन किंचित्प्रकाशं करोति । स च प्रकाशः स्वर्गलोकाविर्भावाय संपद्यते ॥

अथोपधाने कंचिद्विशेषं विधत्ते—

---

१ ख घ. ङ. च. °त उप°।

( कृतव्याख्येष्टकाभिधानम् )

" यत्सꣳस्पृष्टा उप दध्याद्वृष्ट्यै लोकमपि दध्यादवर्षुकः पर्जन्यः स्याद-सꣳस्पृष्टा उप दधाति वृष्ट्या एव लोकं करोति वर्षुकः पर्जन्यो भवति " [ सं० का० ५ प्र० ४ अ० १ ] इति।

इष्टकानां परस्परं स्पर्शे सति वृष्टेः स्थानस्याऽऽच्छादितत्वात्पर्जन्यो वृष्टिर-हितो भवति। असंस्पर्शे तु तच्छिद्रस्य वृष्टिस्थानत्वान्मेघो वर्षणशीलो भवति॥

उपधाने विशेषान्तरं विधत्ते—

" पुरस्तादन्याः प्रतीचीरुप दधाति पश्चादन्याः प्राचीस्तस्मात्प्राचीनानि च प्रतीचीनानि च नक्षत्राण्या वर्तन्ते " [ सं० का० ५ प्र० ४ अ० १ ] इति।

स्वयमातृण्णाया दक्षिणभागे पूर्वां दिशमारभ्य प्रत्यगवसानाः कृत्तिका-दिविशाखान्ता इष्टका उपदध्यात्। अनूराधाद्यपभरण्यन्ता इष्टकाः स्वयमा-तृण्णाया उत्तरभागे प्रतीचीं दिशमारभ्य प्रागवसाना उपदध्यात्। स्वयमा-तृण्णाया दक्षिणोत्तरभागस्थितयोः पङ्क्त्योर्मध्ये पश्चिमायां दिशि समरूपेणा-मावास्याख्यामिष्टकामुपदध्यात्[१]। स्वयमातृण्णाया दक्षिणोत्तरभागस्थितयोः पङ्क्त्योर्मध्ये पूर्वस्यां दिशि समरूपेण[२] पौर्णमास्याख्यामिष्टकामुपदध्यात्। यस्मा-देवं तस्माल्लोकेऽपि नक्षत्राणि गोलकस्यापि दक्षिणे भागे पश्चिमाभिमुखानि, उत्तरभागे तु प्राङ्मुखानीत्येवमावर्तन्ते॥

अत्र विनियोगसंग्रहः—

कृत्ति नक्षत्रेष्टकाः स्युः सप्तविंशतिरीरिताः।
ऋचे त्वा सर्वशेषः स्यात्पूर्णा यत्त इति द्वयम्॥ १॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके
दशमोऽनुवाकः॥ १०॥

---

( अथ चतुर्थाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः। )

---

मधु॑श्च॒ माध॑वश्च॒ वास॑न्तिकावृ॒तू शु॒क्रश्च॒ शुचि॑श्च॒ ग्रैष्मा॑वृ॒तू नभ॑श्च नभ॒स्य॑श्च॒ वार्षि॑का-वृ॒तू इ॒षश्चो॒र्जश्च॑ शार॒दावृ॒तू सह॑श्च॒ सह॒स्य॑श्च॒

---

१ क. घ. ङ. 'पेऽमा'। २ क. घ. ङ. 'पे पौ'।

हैमन्तिकावृतू तपश्च तपस्यश्च शैशिरावृतू
अग्नेरन्तश्श्लेषोऽसि कल्पेतां द्यावापृथिवी कल्प-
न्तामाप ओषधीः कल्पन्तामग्नयः पृथङ्मम
ज्यैष्ठ्याय सव्रताः (१)। येऽग्नयः समन-
सोऽन्तरा द्यावापृथिवी शैशिरावृतू अभि
कल्पमाना इन्द्रमिव देवा अभि सं विशन्तु
संयच्च प्रचेताश्चाग्नेः सोमस्य सूर्यस्योग्रा च
भीमा च पितृणां यमस्येन्द्रस्य ध्रुवा च पृथिवी
च देवस्य सवितुर्मरुतां वरुणस्य धर्त्री च
धरित्री च मित्रावरुणयोर्मित्रस्य धातुः प्राची
च प्रतीची च वसूनाꣳ रुद्राणाम् (२) आ-
दित्यानां ते तेऽधिपतयस्तेभ्यो नमस्ते नो
मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो
जम्भे दधामि सहस्रस्य प्रमा असि सहस्रस्य
प्रतिमा असि सहस्रस्य विमा असि सहस्र-
स्योन्मा असि साहस्रोऽसि सहस्राय त्वेमा
मे अग्न इष्टका धेनवः सन्त्वेका च शतं च
सहस्रं चायुतं च (३) नियुतं च प्रयुतं
चार्बुदं च न्यर्बुदं च समुद्रश्च मध्यं चान्तश्च
परार्धश्चेमा मे अग्न इष्टका धेनवः सन्तु षष्टिः

सहस्रमयुतमक्षीयमाणा ऋतस्थाः स्थर्तावृधो घृतश्चुतो मधुश्चुत ऊर्जस्वतीः स्वधाविनीस्ता मे अग्न इष्टका धेनवः सन्तु विराजो नाम कामदुघा अमुत्रामुष्मिँल्लोके (४) ॥

( सव्रता रुद्राणामयुतं च पञ्चचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ चतुर्थाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः । )

---

मधुः । च । माधवः । च । वासन्तिकौ । ऋतू इति । शुक्रः । च । शुचिः । च । ग्रैष्मौ । ऋतू इति । नभः । च । नभस्यः । च । वार्षिकौ । ऋतू इति । इषः । च । ऊर्जः । च । शारदौ । ऋतू इति । सहः । च । सहस्यः । च । हैमन्तिकौ । ऋतू इति । तपः । च । तपस्यः । च । शैशिरौ । ऋतू इति । अग्नेः । अन्तःश्लेष इत्यन्तः—श्लेषः । असि । कल्पेताम् । द्यावापृथिवी इति द्यावा—पृथिवी । कल्पन्ताम् । आपः । ओषधीः । कल्पन्ताम् । अग्नयः । पृथक् । मम । ज्यैष्ठ्याय । सव्रता इति स—व्रताः (१) । ये । अग्नयः । समनस इति स—मनसः । अन्तरा । द्यावापृथिवी इति द्यावा—पृथिवी ।

शैशिरौ । ऋतू इति । अभीति । कल्पमानाः । इन्द्रम् । इव । देवाः । अभि । समिति । विशन्तु । संयदिति सं—यत् । च । प्रचेता इति प्र—चेताः । च । अग्नेः । सोमस्य । सूर्यस्य । उग्रा । च । भीमा । च । पितृणाम् । यमस्य । इन्द्रस्य । ध्रुवा । च । पृथिवी । च । देवस्य । सवितुः । मरुताम् । वरुणस्य । धर्त्री । च । धरित्री । च । मित्रावरुणयोरिति मित्रा—वरुणयोः । मित्रस्य । धातुः । प्राची । च । प्रतीची । च । वसूनाम् । रुद्राणाम् ( २ ) । आदित्यानाम् । ते । ते । अधिपतय इत्यधि—पतयः । तेभ्यः । नमः । ते । नः । मृडयन्तु । ते । यम् । द्विष्मः । यः । च । नः द्वेष्टि । तम् । वः । जम्भे । दधामि । सहस्रस्य । प्रमेति प्र—मा । असि । सहस्रस्य । प्रतिमेति प्रति—मा । असि । सहस्रस्य । विमेति वि—मा । असि । सहस्रस्य । उन्मेत्युत्—मा । असि । साहस्रः । असि । सहस्राय । त्वा । इमाः । मे । अग्ने । इष्टकाः । धेनवः । सन्तु । एका । च । शतम् । च । सहस्रम् । च । अयुतम् । च ( ३ ) । नियुतमिति नि—युतम् । च । प्रयुतमिति प्र—युतम् । च । अर्बुदम् । च । न्यर्बुदमिति नि—अर्बुदम् । च । समुद्रः । च ।

(ऋतव्याख्येष्टकाभिधानम्)

मध्यम्। च। अन्तः। च। परार्ध इति पर-अर्धः। च। इमाः। मे। अग्ने। इष्टकाः। धेनवः। सन्तु। षष्टिः। सहस्रम्। अयुतम्। अक्षीयमाणाः। ऋत-स्था इत्यृत-स्थाः। स्थ। ऋतावृध इत्यृत-वृधः। घृतश्चुत इति घृत-श्चुतः। मधुश्चुत इति मधु-श्चुतः। ऊर्जस्वतीः। स्वधाविनीरिति स्वधा-विनीः। ताः। मे। अग्ने। इष्टकाः। धेनवः। सन्तु। विराज इति वि-राजः। नाम। कामदुघा इति काम-दुघाः। अमुत्र। अमुष्मिन्। लोके (४)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः॥ ११॥

---

(अथ चतुर्थकाण्डे चतुर्थप्रपाठक एकादशोऽनुवाकः।)

---

दशमेऽनुवाके नक्षत्रेष्टका उक्ताः। अथैकादश ऋतव्याख्या इष्टका उच्यन्ते। कल्पः—"मधुश्च माधवश्चेति द्वे ऋतव्ये समानतयां द्वे देवते" इति॥ पाठस्तु—

मधुश्च माधवश्च वासन्तिकावृतू, इति।

मधुश्चैत्रो मासः। माधवो वैशाखो मासः। तावुभौ वसन्तसंबन्धिनावृत्ववयवौ। यद्यप्येतौ द्वौ मन्त्रौ तथाऽपि सहपठितत्वात्तया देवतयेति शेषं सकृदेवोचार्य द्वे इष्टके प्रथमचितावुपदध्यात्।

कल्पः—"शुक्रश्च शुचिश्चेति द्वे ऋतव्ये समानतयां द्वे देवते" इति॥ पाठस्तु—

शुक्रश्च शुचिश्च ग्रैष्मावृतू, इति।

---

१ क. ख. च. 'या दे'। २ क. ख. च. 'या दे'।

शुक्रो ज्येष्ठः । शुचिराषाढः । तावुभौ ग्रीष्मसंबन्धिनावृत्ववयवौ । एतेन मन्त्रेण द्वितीयस्यां चितौ द्वे उपदध्यात् ।

कल्पः—"नभश्च नभस्यश्चेति चतस्र ऋतव्या द्वे द्वे समानतया देवते" इति।

पाठस्तु—

नभश्च नभस्यश्च वार्षिकावृतू
इषश्चोर्जश्च शारदावृतू , इति ।

नभः श्रावणः । नभस्यो भाद्रपदः । तावुभौ वर्षाणां संबन्धिनावृत्ववयवौ । इष आश्वयुजः । ऊर्जः कार्तिकः । तावुभौ शरत्संबन्धिनावृत्ववयवौ । एतन्मन्त्रसाध्याश्चतस्र इष्टका मध्यमचितावुपदध्यात् ।

कल्पः—" सहश्च सहस्यश्चेति द्वे ऋतव्ये समानतया [द्वे] देवते " इति ॥

पाठस्तु—

सहश्च सहस्यश्च हैमन्तिकावृतू , इति ।

सहो मार्गशीर्षः । सहस्यः पौषः । तावुभौ हेमन्तसंबन्धिनावृत्ववयवौ । एतन्मन्त्रसाध्ये द्वे इष्टके चतुर्थ्यां चितावुपदध्यात् ।

कल्पः—" तपश्च तपस्यश्चेति द्वे ऋतव्ये समानतया द्वे देवते " इति ॥

पाठस्तु—

तपश्च तपस्यश्च शैशिरावृतू , इति ।

तपो माघः । तपस्यः फाल्गुनः । एतावुभौ शिशिरसंबन्धिनावृत्ववयवौ । एतन्मन्त्रसाध्ये द्वे इष्टके पञ्चम्यां चितावुपदध्यात् ॥

अथ सर्वेष्वप्यनुषञ्जनीयं मन्त्रशेषमाह—

अग्नेरन्तश्श्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । येऽग्नयः समनसोऽन्तरा द्यावापृथिवी शैशिरावृतू अभि कल्पमाना इन्द्रमिव देवा अभि सं विशन्तु, इति ।

हे ऋतुविशेष त्वं चीयमानस्याग्नेरन्तःश्लेषोऽसि । यथा कुड्यस्यान्तर्दार्ढ्यार्थं काष्ठपाषाणादयः श्लिष्यन्ते तद्वन्ममाग्निं चिन्वतो यजमानस्य ज्यैष्ठ्यायोत्कर्षार्थमिमे द्यावापृथिव्यौ कल्पेतां स्वोचितमुपकारं संपादयताम् । समानं

१ घ. ङ. 'न्त्रमा' । च. 'न्त्रविशे' ।

( ऋतव्याख्येष्टकाभिधानम् )

व्रतं कर्म येषां ते सव्रता एकस्मिन्कर्मण्यवस्थिता आहवनीयाद्यग्नयोऽपि पृथक्कल्पन्तां स्वस्वोचितव्यापारं संपादयन्तु। किंच द्यावापृथिवी अन्तरा द्यावापृथिव्योर्मध्ये वर्तमानाः समनस एकमनस्का येऽग्नयस्ते सर्वेऽपि शिशिरसंबन्धिनावृत्ववयवावभिकल्पमानाः सर्वतः संपादयन्त एतत्कर्माभिसंविशन्तु। इन्द्रमिव देवा यथाऽन्ये सर्वे देवा इन्द्रमभितः सेवन्ते तद्वत्। हे इष्टक ईदृगृतुस्वरूपां त्वामुपदधामीति तात्पर्यार्थः। यदा वसन्ताद्यृतुमन्त्र*शेषत्वेनायं पठ्यते तदानीं शैशिरावृतू शैशिरसमानौ वासन्तिकावृतू इत्याद्यर्थो व्याख्येयः॥

एतन्मन्त्रसाध्यमुपधानं विधत्ते—

"ऋतव्या उप दधात्यृतूनां क्लृप्त्यै द्वंद्वमुप दधाति तस्माद्द्वंद्वमृतवः" [ सं० का० ५ प्र० ४ अ० २ ] इति।

यस्मादिष्टकयोर्द्वंद्वमुपधीयते तस्मान्मासयोर्द्वयमृतुस्वरूपं भवति॥

मध्यमचितौ चतुष्टयोपधानं विधत्ते—

"अधृतेव वा एषा यन्मध्यमा चितिरन्तरिक्षमिव वा एषा द्वंद्वमन्यासु चितीषूप दधाति चतस्रो मध्ये धृत्यै" [ सं० का० ५ प्र० ४ अ० २ ] इति।

यैषा मध्यमा चितिः सेयं भूमिं न स्पृशति, नापि दिवं, तस्मादियमधृतेवाऽऽधाररहितेव तिष्ठति। अत एवान्तरिक्षसमाना। तस्मादन्यासु चितीषु द्वंद्वमात्रोपधानेऽप्यस्यां चितौ धारणार्थं चतस्र उपदध्यात्॥

अथ सर्वर्तव्याः सामान्येन प्रशंसति—

"अन्तःश्लेषणं वा एताश्चितीनां यदृतव्या यदृतव्या उपदधाति चितीनां विधृत्यै" [ सं० का० ५ प्र० ४ अ० २ ] इति।

यथा कुड्यादेर्दृढधारणाय पाषाणाद्यन्तःश्लेषणं तथा चितीनां दृढधारणाय ऋतव्या उपदध्यात्॥

एतासामृतव्यानामुपरि शैवालस्योपधानं विधत्ते—

"अवकामनूप दधात्येषा वा अग्नेर्योनिः सयोनिमेवाग्निं चिनुते" [ सं० का० ५ प्र० ४ अ० २ ] इति।

उदकजन्यां शैवालापरपर्यायामवकामुपर्युपदध्यात्। आपो ह्यग्नेः स्थानं, 'स निलायत सोऽपः प्राविशत्' इति श्रुत्यन्तरात्। अवका च जलस्य कार्यत्वाज्जलवदग्नेर्योनिः। अतस्तदुपधानेन सयोनिमेवाग्निं चितवान्भवति॥

प्रकारान्तरेणावकासहिता ऋतव्यास्तद्वेदनं च प्रशंसति—

---

* आदर्शपुस्तकेषु "मन्त्रविशेषत्वेन" इति पाठः। स प्रामादिकः।

" उवाच ह विश्वामित्रोऽदादित्स ब्रह्मणाऽन्नं यस्यैता उपधीयान्तै य उ चैना एवं वेदादिति " [ सं० का० ५ प्र० ४ अ० २ ] इति ।

यस्य यजमानस्यावकायुक्ता ऋतव्या उपधीयन्ते, योऽप्येता जानाति स उपधाता ज्ञाता च ब्रह्मणा मुख्यया ब्राह्मणवृत्त्याऽन्नमददित्सर्वथाऽप्यन्नं भक्षयत्येवेति विश्वामित्रः स हायमुवाच । तस्मादेताः स्तुत्या इत्यर्थः ।

कल्पः—" अथ यो न प्रतितिष्ठेत्स क्रतुमारभमाण एकचितीकमेव चिन्वीत संयच्च प्रचेताश्चेति पञ्च नानामन्त्रा उत्तरवेद्यामुपदध्यात् " इति ।

तत्र प्रथमेष्टकामन्त्रमाह—

संयच्च प्रचेताश्चाग्नेः सोमस्य सूर्यस्य , इति ।

अग्निसोमसूर्याणां संयत्संयमनकारणं यदस्ति, प्रचेताः प्रकाशज्ञानहेतुश्च योऽस्ति, हे इष्टके तदुभयरूपा त्वमासि ॥

अथ द्वितीयेष्टकामन्त्रमाह—

उग्रा च भीमा च पितॄणां यमस्येन्द्रस्य , इति ।

पित्रादीनां येयमुग्रा ताडनादिशक्तिर्या च भीमा भयंकरशक्तिस्तदुभयरूपा त्वमसि ॥

अथ तृतीयेष्टकामन्त्रमाह—

ध्रुवा च पृथिवी च देवस्य
सवितुर्मरुतां वरुणस्य , इति ।

सवित्रादीनां या ध्रुवा स्थिरा शक्तिर्या च पृथिवी विस्तीर्णा शक्तिस्तदुभयरूपा त्वमासि ॥

अथ चतुर्थेष्टकामन्त्रमाह—

धर्त्री च धरित्री च मित्राव-
रुणयोर्मित्रस्य धातुः , इति ।

मित्रावरुणादीनां या धारणशक्तिर्या च परप्रेरणारूपा धारयितृत्वशक्तिस्तदुभयरूपा त्वमसि ॥

अथ पञ्चमेष्टकामन्त्रमाह—

प्राची च प्रतीची च वसूनाꣳ
रुद्राणामादित्यानाम् , इति ।

---

१ क. घ. ङ. 'या उप' ।

( ऋतव्याख्येष्टकाभिधानम् )

वस्त्रादीनां प्राग्वर्तिनी या शक्तिर्या च प्रतीचीदि( त्यग्दि )ग्वर्तिनी तयो र्हि दिशोः सर्वे प्राणिन एतदाज्ञामनुसृत्यैव वर्तन्ते। हे इष्टके तथाविध-शक्तिरूपा त्वमसि ॥

अथ सर्वेष्वप्यनुषञ्जनीयं मन्त्रशेषमाह—

ते तेऽधिपतयस्तेभ्यो नमस्ते नो मृड-
यन्तु ते यं द्विष्मो यश्च नो द्वेष्टि
तं वो जम्भे दधामि, इति।

तेऽग्निसोमादयस्तत्तन्मन्त्रोक्ता देवा हे इष्टके ते तवाधिकं पालयितारः। तेभ्यो नम इत्यादिकं तु पञ्चचोडामन्त्रवद्व्याख्येयम् ॥

ता एता इष्टकाः षष्ठचितौ विधातुमादौ षष्ठीं चितिं विधत्ते—

" संवत्सरो वा एतं प्रतिष्ठायै नुदते योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्त्यथ षष्ठीं चितिं चिनुते षड्वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठति " [ सं० का० ५ प्र० ४ अ० २ ] इति।

यो यजमानः पूर्वोक्तप्रकारेण पञ्चचितीकमग्निं चित्वाऽप्युत्तरक्रत्वनुष्ठानाय द्रव्यादिसंपत्तिरूपां प्रतिष्ठां न प्राप्नोति, एतं यजमानं संवत्सराभिमानी देवः प्रतिष्ठाया अपनुदते। तथा सति याः पूर्वाः पञ्च चितय आसंस्ताभिः प्रति-ष्ठाया अलाभात्तदपेक्षया येयं चितिः षष्ठी तां चिनुयात्। षट्संख्यया बुद्धिस्था ऋतवः। तद्द्वारा संवत्सरे प्रतितिष्ठति ॥

षष्ठीं चितिं विधाय तत्र संयच्चेत्यादिमन्त्रसाध्यमुपधानं विधत्ते—

" एता वा अधिपत्नीर्नामेष्टका यस्यैता उपधीयन्तेऽधिपतिरेव समानानां भवति " [ सं० का० ५ प्र० ४ अ० २ इति।

अधिपतिशब्दयुक्तैर्मन्त्रैरुपधेया इष्टका अधिपत्न्यः। तदुपधानेन स्वसमा-नानां पुरुषाणां स्वयमधिपतिर्भवति ॥

उपधानकाले ध्यानविशेषं विधत्ते—

"यं द्विष्यात्तमुपदधद्ध्यायेदेताभ्य एवैनं देवताभ्य आ वृश्चति ताजगार्ति-मार्छति " [ सं० का० ५ प्र० ४ अ० २ ] इति।

एतद्वाक्यं पञ्चचोडाब्राह्मणवद्व्याख्येयम्।

कल्पः—" सहस्रस्य प्रमा असीति सहस्रेण हिरण्यशल्कैरू+र्ध्वस्तिष्ठन्प्रति-दिशमग्निं प्रोक्षति " इति ॥

---

+ ख. पुस्तके ' ऊर्ध्वे तिष्ठन्निति पाठो भवितुं युक्तः। ' इति टिप्पणिका।

---

१ क. घ. ङ. 'न्नमा'। २ ख. घ. ङ. च. 'दति। त'। ३ क. घ. ङ. 'धिश'।

पाठस्तु—

सहस्रस्य प्रमा असि सहस्रस्य प्रतिमा
असि सहस्रस्य विमा असि सहस्रस्योन्मा
असि साहस्रोऽसि सहस्राय त्वा , इति।

हे इष्टके प्राच्यां दिशीष्टकासहस्रस्य प्रमा तुल्याऽसि । एवं दक्षिणस्यां दिशि सहस्रस्य प्रतिमा तुल्याऽसि । तथा पश्चिमायां दिशि सहस्रस्य विमा तुल्याऽसि । तथोत्तरस्यां दिशि सहस्रस्योन्मा तुल्याऽसि । हे चित्याग्ने त्वमूर्ध्वायां दिशि सहस्रसंबन्ध्यसि । अतः सहस्राय सहस्रसंख्याकफलसिद्ध्यर्थं त्वां प्रोक्षामि ॥

एतन्मन्त्रसाध्यं प्रोक्षणं विधत्ते—

" अङ्गिरसः सुवर्गं लोकं यन्तो या यज्ञस्य निष्कृतिरासीत्तामृषिभ्यः प्रत्यौहन्तद्धिरण्यमभवद्यद्धिरण्यशल्कैः प्रोक्षति यज्ञस्य निष्कृत्या अथो भेषजमेवास्मै करोत्यथो रूपेणैवैनꣳ समर्धयत्यथो हिरण्यज्योतिषैव सुवर्गं लोकमेति" [ सं० का० ५ प्र० ४ अ० २ ] इति।

अङ्गिरसो महर्षयः कर्मानुष्ठायिनो यदा स्वर्गं गतास्तदानीं यज्ञस्य यन्मूल्यं स्वाधीनत्वकारणसाधनद्रव्यं तदप्येभ्य ऋषिभ्यः प्रददुः । तच्च द्रव्यं हिरण्यमभवत् । ततो हिरण्यशल्कैर्हस्तोद्धृतैः सह प्रोक्षणं यत्तन्मूल्यदानेन यज्ञनिष्क्रयार्थं संपद्यते । अपि च वैकल्यपरिहाररूपं भेषजमग्न्यर्थं संपादयति । अपि च हिरण्यसंबन्धादेनमग्निं रूपसमृद्धं करोति । अत एवान्यत्राऽऽम्नातम्—" यथा ह वै योषा सुवर्णꣳ हिरण्यं पेशलं बिभ्रती रूपाण्यास्ते " इति। अपि चायं यजमानो हिरण्यरूपेणैव ज्योतिषा मार्गं दृष्ट्वा स्वर्गं प्राप्नोति ॥

तस्मिन्प्रोक्षणे सहस्रस्य प्रमेत्यादिमन्त्रं विनियुङ्क्ते—

" साहस्रवता प्रोक्षति साहस्रः प्रजापतिः प्रजापतेराप्त्यै " [ सं० का० ५ प्र० ४ अ० २ ] इति।

साहस्रोऽसीत्येवं साहस्रशब्दो यस्मिन्प्रोक्षणमन्त्रसंघेऽस्ति सोऽयं साहस्रवान् । प्रजापतिश्च सहस्रसंख्याकजगदुत्पादकत्वात्साहस्रः । अतोऽयं मन्त्रः प्रजापतिप्राप्तये भवति ।

कल्पः—" इमा मे अग्न इष्टका धेनवः सन्त्वितीष्टका धेनूर्यजमानः कुरुते " इति ॥

पाठस्तु—

( ऋतव्याख्येष्टकाभिधानम् )

इमा मे अग्न इष्टका धेनवः सन्त्वेका च शतं च सहस्रं चायुतं च नियुतं च प्रयुतं चार्बुदं च न्यर्बुदं च समुद्रश्च मध्यं चान्तश्च परार्धश्चेमा मे अग्न इष्टका धेनवः सन्तु षष्टिः सहस्रमयुतमक्षीयमाणा ऋतस्थाः स्थर्तावृधो घृतश्चुतो मधुश्चुत ऊर्जस्वतीः स्वधाविनीस्ता मे अग्न इष्टका धेनवः सन्तु विराजो नाम कामदुघा अमुत्रामुष्मिँल्लोके ॥ , इति ।

हेऽग्न इमा उपहिता इष्टका मे मम धेनवो धेनुवत्प्रीतिहेतवः सन्तु । शतादयः परार्धान्ता दशोत्तराः संख्याविशेषाः । एकशतसहस्रादिसंख्यासंख्येयाः सत्यो मां प्रीणयन्तु । यदा ममैकया प्रीतिस्तदा शतं भूत्वेत्येवं सर्वत्र द्रष्टव्यम् । उत्तरवाक्यसंबन्धार्थमिमा मे अग्न इत्यादेः पुनर्वचनम् । हे इष्टकाः षष्ट्यादिसंख्यासंख्येयाः सत्योऽक्षीयमाणाः क्षयरहिता ऋतस्था यज्ञवर्तिन्यः स्थ, ऋतावृधो यज्ञवर्धयित्र्यो भवत, घृतश्चुतो घृतक्षरणशीला मधुश्चुतो मधुररसक्षरणशीला ऊर्जस्वतीर्बलवत्यः स्वधाविनीरन्नवत्यश्च स्थ भवथ । ता मे अग्न इत्यादि वक्ष्यमाणवाक्यसंबन्धार्थम् । विराजो विविधं राजमानाः । कामदुघाः कामानां दोग्ध्र्यः । अमुत्र सामान्येन स्वर्गमात्रेऽमुष्मिँल्लोके विशेषत इन्द्रादिलोके धेनवः सन्त्वित्यन्वयः ॥

मन्त्रस्य तात्पर्यं दर्शयति—

" इमा मे अग्न इष्टका धेनवः सन्त्वित्याह धेनुरेवैनाः कुरुते ता एनं कामदुघा अमुत्रामुष्मिँल्लोक उप तिष्ठन्ते " [ सं० का० ५ प्र० ४ अ० २ ] इति ।

अत्र विनियोगसंग्रहः—

मधुश्च द्वादशर्तव्या अग्नेरित्यनुषज्यते ।
संयच्चोग्रा ध्रुवा धर्त्री प्राची पञ्चेष्टका इमाः ॥ १ ॥
षष्ठ्यां चितौ सर्वशेषस्ते त इत्यादिको मतः ।
सहस्रपञ्चभिर्मन्त्रैर्दिक्षु मध्ये च तां चितिम् ॥ २ ॥
सहस्रस्वर्णशकलैः प्रोक्ष्येत्तत इमामि ( इ ) ति ।
स्वामी धेनूः करोत्येतास्त्रयोविंशतिमन्त्रकाः ॥ ३ ॥

---

१ ख. च. भवत ।

अथ मीमांसा ।

चतुर्थाध्यायस्य चतुर्थपादे चिन्तितम्—

नित्या षष्ठी चितिर्नो वा पञ्चापूर्व(पेक्ष) त्वतोऽग्रिमः ।
अपवृ+त्तावप्रतिष्ठां निमित्तीकृत्य नोऽग्रिमः ।

अग्नौ श्रूयते " योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्त्यथ षष्ठीं चितिं चिनुते " इति । लाङ्गलेन कृष्टे व्याममात्रे भूप्रदेशे नानाविधाभिरिष्टकाभिः पक्ष्याकारेण स्थण्डिलं निष्पाद्यते, सेयं चितिः । तादृश्यः पञ्च चितयः पूर्वाः क्रियन्ते । अथ षष्ठी चितिः । तत्र षण्णां पूरणी षष्ठीति व्युत्पत्तौ पूर्वाः पञ्च चितयोऽपेक्ष्यन्ते । अन्यथा षट्संख्यापूरकत्वासंभवात् । तस्मादेकप्रयोगनियमादितरचितिवन्नित्येति चेन्मैवम् । अग्निं चित्वेति पूर्वाभिरेव पञ्चभिश्चितिभिर्नित्यस्याग्निचयनस्य समाप्तौ सत्यां पश्चाद्यो न प्रतितिष्ठति असौ षष्ठीं चितिं चिनुत इति कर्तृसमानाधिकृतेन यच्छब्देनाप्रतिष्ठां निमित्तीकृत्य विधानात्षष्ठी नैमित्तिकी । ततः पञ्चचितीको नित्योऽग्निर्नैमित्तिकस्त्वेकचितीक इति न प्रयोगैक्यं, पूरणप्रत्ययस्तु अभिधानापेक्षयोपपद्यते । पूर्वाः पञ्च चितयोऽभिहिता अभिधास्यमानां षष्ठीं चितिं चिनुत इति वचनव्यक्तिः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ चतुर्थाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः । )

---

समिद्दिशामाशया नः सुवर्विन्मधोरतो माधवः पात्वस्मान् । अग्निर्देवो दुष्टरीतुरदाभ्य इदं क्षत्रꣳ रक्षतु पात्वस्मान् । रथंतरꣳ सामभिः पात्वस्मान्गायत्री छन्दसां विश्वरूपा । त्रिवृन्नो विष्ठया स्तोमो अह्नाꣳ समुद्रो वात

---

\+ न्यायमालाविस्तरे तु ' अपवृक्तावप्रतिष्ठानिमित्तीकृतितोऽन्तिमः ' इति पाठः ।

---

१ क. °ष्टे सप्तपुरुषमा° । २ घ. ङ. °ति प्र° ।

इदमोजः पिपर्तु । उग्रा दिशामभिभूतिर्वयोधाः शुचिः शुक्रे अहन्योजसीना । इन्द्राधिपतिः पिपृतादतो नो महि (१) क्षत्रं विश्वतो धारयेदम् । बृहत्साम क्षत्रभृद्वृद्धवृष्णियं त्रिष्टुभौजः शुभितमुग्रवीरम् । इन्द्र स्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्ष । प्राची दिशाᳪ सहयशा यशस्वती विश्वे देवाः प्रावृषाऽह्नाᳪ सुवर्वती । इदं क्षत्रं दुष्टरमस्त्वोजोऽनाधृष्टᳪ सहस्रियᳪ सहस्वत् । वैरूपे सामन्निह तच्छकेम जगत्यैनं विक्ष्वा वेशयामः । विश्वे देवाः सप्तदशेन (२) वर्च इदं क्षत्रᳪ सलिलवातमुग्रम् । धर्त्री दिशां क्षत्रमिदं दाधारोपस्थाऽऽशानां मित्रवदस्त्वोजः । मित्रावरुणा शरदाऽह्नां चिकित्नू अस्मै राष्ट्राय महि शर्म यच्छतम् । वैराजे सामन्नधि मे मनीषाऽनुष्टुभा संभृतं वीर्यᳪ सहः । इदं क्षत्रं मित्रवदार्द्रदानु मित्रावरुणा रक्षतमाधिपत्यैः । सम्राड्दिशाᳪ सहसाम्नी सहस्वत्यृतुर्हेमन्तो विष्ठया नः पिपर्तु । अवस्युवाताः (३) बृहतीर्नु शक्वरीरिमं यज्ञमवन्तु नो घृताचीः । सुवर्वती

सुदुघा नः पयस्वती दिशां देव्यवतु नो घृताची । त्वं गोपाः पुरएतोत पश्चाद्बृहस्पते याम्यां युङ्ग्धि वाचम् । ऊर्ध्वा दिशाꣳ रन्तिराशौषधीनाꣳ संवत्सरेण सविता नो अह्नाम् । रेवत्सामातिच्छन्दा उ छन्दोऽजातशत्रुः स्योना नो अस्तु । स्तोमत्रयस्त्रिꣳशे भुवनस्य पत्नि विवस्वद्वाते अभि नः (४) गृणाहि । घृतवती सवितराधिपत्यैः पयस्वती रन्तिराशा नो अस्तु । ध्रुवा दिशां विष्णुपत्न्यघोराऽस्येशाना सहसो या मनोता । बृहस्पतिर्मातरिश्वोत वायुः संध्रुवाना वाता अभि नो गृणन्तु । विष्टम्भो दिवो धरुणः पृथिव्या अस्येशाना जगतो विष्णुपत्नी । विश्वव्यचा इषयन्ती सुभूतिः शिवा नो अस्त्वदितिरुपस्थे । वैश्वानरो न ऊत्या पृष्टो दिव्यनु नोऽद्यानुमतिरन्विदनुमते त्वं कया नश्चित्र आ भुवत्को अद्य युङ्क्ते (५) ॥

( मर्हि सप्तदशोनावस्युर्वाता अभि नोऽनु नश्चतुर्दश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( याज्यानुवाक्याभिधानम् )

रश्मी राड्यंस्त्वयं पुरो हरिकेशोऽग्निर्मूर्धेन्द्राग्निभ्यां बृहस्पतिर्भूयस्कृदंस्य-
श्विना विश्वाषाट् प्रजापतिः कृत्तिका मधुः समिद्दिशां द्वादंश ॥ १२ ॥

रश्मिरांसि प्रतिधेनुरसि स्तनयित्नुसनिरस्यादित्यानां॑ सप्तत्रिंशत् ॥३७॥

## इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके चतुर्थः प्रपाठकः ॥ ४ ॥

---

( अथ चतुर्थाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः । )

---

समिदिति सम्—इत् । दिशाम् । आशया । नः ।
सुवर्विदिति सुवः—वित् । मधोः । अतः । माधवः ।
पातु । अस्मान् । अग्निः । देवः । दुष्टरीतुः ।
अदाभ्यः । इदम् । क्षत्रम् । रक्षतु । पातु । अस्मान् ।
रथंतरमिति रथं—तरम् । सामभिरिति साम—भिः ।
पातु । अस्मान् । गायत्री । छन्दसाम् । विश्वरू-
पेति विश्व—रूपा । त्रिवृदिति त्रि—वृत् । नः ।
विष्ठयेति वि—स्थया । स्तोमः । अह्नाम् । समुद्रः ।
वातः । इदम् । ओजः । पिपर्तु । उग्रा । दिशाम् ।
अभिभूतिरित्यभि—भूतिः । वयोधा इति वयः—
धाः । शुचिः । शुक्रे । अहनि । ओजसीना । इन्द्रं ।
अधिपतिरित्यधि—पतिः । पिपृतात् । अतः । नः ।
महि ( १ ) । क्षत्रम् । विश्वतः । धारय । इदम् ।

बृहत् । सामं । क्षत्रभृदितिं क्षत्र—भृत् । वृद्धवृंष्णियमितिं वृद्ध—वृष्णियम् । त्रिष्टुभां । ओजंः । शुभितम् । उग्रवीरमित्युग्र—वीरम् । इन्द्र । स्तोमेन । पञ्चदशेनेतिं पञ्च—दुशेनं । मध्यंम् । इदम् । वातेन । सगरेण । रक्ष । प्राचीं । दिशाम् । सहयंशा इतिं सह—यशाः । यशंस्वती । विश्वें । देवाः । प्रावृषां । अह्नांम् । सुर्ववतीति सुवः—वती । इदम् । क्षत्रम् । दुष्टरंम् । अस्तु । ओजंः । अनाधृष्टमित्यनां—धृष्टम् । सहस्रियंम् । सहंस्वत् । वैरूपे । सामंन् । इह । तत् । शकेम । जगंत्या । एनम् । विक्षु । एतिं । वेशयामः । विश्वें । देवाः । सप्तदशेनेतिं सप्त—दशेनं ( २ ) । वर्चः । इदम् । क्षत्रम् । सलिलवांतमितिं सलिल—वातम् । उग्रम् । धर्त्री । दिशाम् । क्षत्रम् । इदम् । दाधार । उपस्थेत्युंप—स्था । आशांनाम् । मित्रवदितिं मित्र—वत् । अस्तु । ओजंः । मित्रांवरुणेति मित्रा—वरुणा । शरदां । अह्नांम् । चिकित्नू इतिं । अस्मै । राष्ट्राय । महिं । शर्मं । यच्छतम् । वैराजे । सामंन् । अधीतिं । मे । मनीषा । अनुष्टुभेत्यंनु—स्तुभां । संभृतमिति सं—भृतम् । वीर्यंम् । सहंः । इदम् । क्षत्रम् । मित्रवदितिं

मित्र—वत् । आर्द्रदान्वित्यार्द्र—दानु । मित्रावरुणेति मित्रा—वरुणा । रक्षतम् । आधिपत्यैरित्याधि—पत्यैः । सम्राडिति सम्—राट् । दिशाम् । सहसाम्नीति सह—साम्नी । सहस्वती । ऋतुः । हेमन्तः । विष्ठयेति वि—स्थया । नः । पिपर्तु । अवस्युवाता इत्यव-स्यु—वाताः ( ३ )। बृहतीः । नु । शक्करीः । इमम् । यज्ञम् । अवन्तु । नः । घृताचीः । सुवर्व-तीति सुवः—वती । सुदुघेति सु—दुघा । नः । पय-स्वती । दिशाम् । देवी । अवतु । नः । घृताची । त्वम् । गोपा इति गो—पाः । पुरएतेति पुरः—एता । उत । पश्चात् । बृहस्पते । याम्याम् । युङ्ग्धि । वाचम् । ऊर्ध्वा । दिशाम् । रन्तिः । आशा । ओष-धीनाम् । संवत्सरेणेति सं—वत्सरेण । सविता । नः । अह्नाम् । रेवत् । साम । अतिच्छन्दा इत्यति—छन्दाः । उ । छन्दः । अजातशत्रुरित्यजात—शत्रुः । स्योना । नः । अस्तु । स्तोमत्रयस्त्रिंश इति स्तोम—त्रयस्त्रिंशे । भुवनस्य । पत्नि । विवस्वद्वात इति विवस्वत्—वाते । अभीति । नः ( ४ )। गृणाहि । घृतवतीति घृत—वती । सवितः । आधिपत्यैरित्या-धि—पत्यैः । पयस्वती । रन्तिः । आशा । नः ।

अस्तु । ध्रुवा । दिशाम् । विष्णुपत्नीति विष्णु—पत्नी । अघोरा । अस्य । ईशाना । सहसः । या । मनोता । बृहस्पतिः । मातरिश्वा । उत । वायुः । संधुवाना इति सं—धुवानाः । वाताः । अभीति । नः । गृणन्तु । विष्टम्भ इति वि—स्तम्भः । दिवः । धरुणः । पृथिव्याः । अस्य । ईशाना । जगतः । विष्णुपत्नीति विष्णु—पत्नी । विश्वव्यचा इति विश्व—व्यचाः । इषयन्ती । सुभूतिरिति सु—भूतिः । शिवा । नः । अस्तु । अदितिः । उपस्थ इत्युप—स्थे । वैश्वानरः । नः । ऊत्या । पृष्टः । दिवि । अन्विति । नः । अद्य । अनुमतिरित्यनु—मतिः । अन्विति । इत् । अनुमत इत्यनु—मते । त्वम् । कया । नः । चित्रः । एति । भुवत् । कः । अद्य । युङ्क्ते ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके चतुर्थः प्रपाठकः ॥ ४ ॥

---

( याज्यानुवाक्याभिधानम् )

( अथ चतुर्थकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः । )

---

एकादशानुवाक ऋतव्याद्या इष्टका उक्ताः । तावता चितयः समाप्ताः । अथान्तिमे द्वादशे याज्यानुवाक्या उच्यन्ते ।

अश्वमेधप्रकरणे कल्पः पठ्यते—" अग्नये गायत्रायेति दशहविषं[1] सर्वपृष्ठां निर्वपति समिद्दिशामिति यथालिङ्गं याज्यानुवाक्याः " इति ॥

तत्राग्नये गायत्राय त्रिवृते राथंतराय वासन्तायाष्टाकपाल इत्यस्य पुरोनुवाक्यामाह—

समिद्दिशामाशया नः सुवर्विन्मधोरतो माधवः पात्वस्मान् । अग्निर्देवो दुष्टरीतुरदाभ्य इदं क्षत्त्रꣳ रक्षतु पात्वस्मान् ।, इति ।

दिशां मध्ये या दिक्समित्समिन्धनहेतुः । तदेव कथमिति तदुच्यते—सुवर्वित्स्वर्गस्थमादित्यं विन्दते लभत इति सुवर्वित् । आदित्योदयस्थानत्वात्प्राच्या दिशः समिन्धनहेतुत्वम् । तादृशी दिङ्नोऽस्मानाशया पातु । अस्माकं धनादिविषया या काचिदाशा विद्यते तस्याः पूरणेनास्मात्रक्षत्वित्यर्थः । मधुश्चैत्रमासः । माधवो वैशाखः । तावुभावपि पूर्वदिग्वत्समिन्धनहेतू । तयोर्मासयोरादित्यस्यातितीक्ष्णप्रकाशत्वात् । तत्राप्यतोऽस्मान्मधोश्चैत्रमासादधिकप्रकाशो यो माधवो वैशाखमासः सोऽस्मान्संतापभयात्पातु । दुःखेन स्तरीताऽऽच्छादयिता दुष्टरीता यो वैरी प्रावरणवस्त्रेणेव दुःखेनाऽऽच्छादयति तस्यापि दुःखकारिणो वैरिणोऽदाभ्यो दम्भितुं हिंसितुमशक्यो योऽग्निर्देवः सोऽयमिदं क्षत्रमस्मदीयमिदं बलमस्मांश्च रक्षतु ॥

तत्रैव याज्यामाह—

रथंतरꣳ सामभिः पात्वस्मान्गायत्री छन्दसां विश्वरूपा । त्रिवृन्नो विष्ठया स्तोमो अह्नाꣳ समुद्रो वात इदमोजः पिपर्तु ।, इति ।

यद्रथंतरं साम तदन्यैः सामभिः सहास्मान्पातु । छन्दसां मध्ये गायत्री विश्वरूपा यवमध्यपिपीलिकामध्यादिभेदैर्बहुरूपा, सा नोऽस्मात्रक्षतु । त्रिवृदाख्यो यः स्तोमोऽह्नामेकाहादीनां संवधिन्या विष्ठया विविधया स्थित्या युक्तः, अहःसु विविधं प्रयुज्यत इत्यर्थः । तादृशोऽस्मान्पातु । समुद्राख्यो यो

---

१ ख. च. 'विषां स' ।

वातोऽस्ति “ समुद्राय त्वा वाताय स्वाहा ” “ समुद्रोऽसि नभस्वान् ” इत्यादावाम्नातस्तादृशो वायुरिदमोजोऽस्मदीयं बलं पिपर्तु पालयतु पूरयतु वा ॥

अथेन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्मायैकादशकपाल इत्यस्य पुरोनुवाक्यामाह—

उग्रा दिशामभिभूतिर्वयोधाः शुचिः शुक्रे
अहन्योजसीना । इन्द्राधिपतिः पिपृतादतो
नो महि क्षत्रं विश्वतो धारयेदम् ।, इति ।

दिशां मध्ये येयमुग्रादक्षिणा दिक्, उग्रत्वे हेतुः—अभिभूतिः, पापानामभिभवहेतुत्वादुग्रत्वं, सा वयोधा वय आयुष्यं तस्मिन्नतीते सति मृतान्पुरुषान्यमलोके दधाति स्थापयतीति वयोधाः । वयसोऽन्ते दधातीति मध्यमपदलोपो द्रष्टव्यः । शुचिराषाढमासः शुक्रो ज्येष्ठस्तयोः संबन्धिनि दिवसे यदौष्ण्यमस्ति ततोऽपि शुचिरोजसीनाऽतिशयेनौष्ण्यरूपौजोयुक्तः । हे इन्द्र परमैश्वर्ययुक्त त्वमधिपतिस्तस्या उग्राया दिशस्तयोरत्युष्णयोश्च स्वामी । तादृशस्त्वमत उभयस्मान्नोऽस्मान्पिपृतात्पालय । किंच विश्वतो महि सर्वस्मान्महदिदं क्षत्रं बलं धारय संपादय ॥

तत्रैव याज्यामाह—

बृहत्साम क्षत्रभृद्वृद्धवृष्णियं त्रिष्टुभौजः
शुभितमुग्रवीरम् । इन्द्र स्तोमेन पञ्चदशेन
मध्यमिदं वातेन सगरेण रक्ष ।, इति ।

बृहदाख्यं यत्साम तत्त्रिष्टुभा छन्दसा सह[१] पिपर्त्वित्यनुवर्तते । अस्मान्पालयत्वित्यर्थः । कीदृशं साम, क्षत्रभृद्बलस्य धारयितृ, वृद्धवृष्णियमुत्थितपुंस्कम्, ओजो बलप्रदं, शुभितं शोभमानम्, उग्रवीरं तीव्रपुत्रप्रदम् । हे इन्द्र पञ्चदशाख्येन स्तोमेन सगराख्येन वातेन सहितः सन्निदं मध्यं रक्ष । अतीतानागतयोर्मध्ये स्थितमिदमस्मदीयं शरीरं पालय ॥

अथ विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो द्वादशकपाल इत्यस्य पुरोनुवाक्यामाह—

प्राची दिशा॑ सहयशा यशस्वती विश्वे

---

१ क. 'ह नः पि' ।

( याज्यानुवाक्याभिधानम् )

देवाः प्रावृषाऽह्नाꣳ सुवर्वती । इदं क्षत्रं दुष्टर-
मस्त्वोजोऽनाधृष्टꣳ सहस्रियꣳ सहस्वत् ।, इति।

अत्र प्रशब्दः प्रतिशब्दार्थे वर्तते। तथा सति दिशां मध्ये या प्राची पश्चिमा दिगित्यर्थः। सा च सहयशा अस्मासु संपाद्यमानेन यशसा सहिता स्वयमपि यशस्वती। सा च सुवर्वती स्वर्गनिवासिनी सूर्येणास्तमयकालभाविना युक्ता। तथाविधा दिगस्मान्पात्विति शेषः। तथा विश्वे देवाः प्रावृषा वर्षर्तुना तदीयानामह्नां समूहेन सहिताऽस्मान्पालयन्त्विति शेषः। इदं क्षत्रमस्मत्परिपालकं राजशरीरं केनाप्यन्येन वैरिणा तरितुं लङ्घयितुमशक्यमस्तु। ओजो मदीयं बलमनाधृष्टं केनाप्यतिरस्कृतमस्तु। तथा सहस्रियं सहस्रसंख्यायोग्यं सहस्वत्प्रबलं धामास्तु ॥

तत्रैव याज्यामाह—

वैरूपे सामन्निह तच्छकेम जगत्यैनं
विक्ष्वा वेशयामः। विश्वे देवाः सप्तदशेन
वर्च इदं क्षत्रꣳ सलिलवातमुग्रम् ।,इति ।

वैरूपाख्यं यत्सामास्ति तस्मिन्नाश्रिता वयमिह कर्मणि यत्फलमपेक्षितं तच्छकेम संपादयितुं शक्ताः स्मः । तथा जगत्याख्यया छन्दोदेवतयाऽनुगृहीता वयमेनं यजमानं विक्षु प्रजास्वावेशयामः प्रजानां स्वामिनं कुर्म इत्यर्थः। हे विश्वे देवाः सप्तदशाख्येन स्तोमेन युष्माभिश्चानुगृहीतमिदं क्षत्रमस्मत्पालकं राजशरीरं वर्चस्तेजोयुक्तं सलिलाख्येन वायुविशेषेणानुगृहीतम्[1]। सं[2] च वायुः “सलिलाय त्वा वाताय स्वाहा” इत्याम्नातः । उग्रं वैरितिरस्कारक्षममस्तु ॥

अथ “मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविꣳशाभ्यां वैराजाभ्याꣳ शारदाभ्यां पयस्या” इत्यस्य पुरोनुवाक्यामाह—

धर्त्री दिशां क्षत्रमिदं दाधारोपस्थाऽऽशानां
मित्रवदस्त्वोजः। मित्रावरुणा शरदाऽह्नां चिकि-
त्नू अस्मै राष्ट्राय महि शर्म यच्छतम् ।, इति।

दिशां मध्ये धर्त्र्यस्माकं धारयित्रीयमुदीची दिगिदं क्षत्रमस्मत्पालकं क्षत्रियशरीरं दाधार पोषयामास। कीदृशी, आशानामुपस्था[3], अस्माकं धना-

१ ख. घ. ङ. च. सलि° । २ ख. घ. ङ. च. °य त्वेति, उ° । ३ ख. च. °पस्थेयाऽस्मा° ।
४ क. घ. ङ. °स्था, याऽस्मा° ।

दिविषयाणामाशानां सिद्ध्यर्थं सेव्या । य(त)स्या दिशः प्रसादादस्मदीय-मोजो बलं मित्रवदस्तु बहुभिर्मित्रैरुपेतमस्तु । हे मित्रावरुणा शरदा शरन्नाम-केनर्तुना तदीयानामह्नां चिकित्नू ज्ञातारौ युवामस्मा इदानीं वर्तमानाय राष्ट्राय महि शर्म यच्छतं महत्सुखं संपादयतम् ॥

तत्रैव याज्यामाह—

वैराजे सामन्नधि मे मनीषाऽनुष्टुभा संभृतं
वीर्यꣳ सहः । इदं क्षत्रं मित्रवदार्द्र-
दानु मित्रावरुणा रक्षतमाधिपत्यैः।,इति ।

वैराजाख्यं यत्सामास्ति तस्मिन्मे मदीया मनीषा बुद्धिराश्रिताऽस्त्विति[1] शेषः । तथा वीर्यमस्मदीयं शरीरव्यवहारसामर्थ्यं सहो वैरितिरस्कारकं बलं चानुष्टुभा छन्दोदेवतया संभृतं संपादितमस्तु । मित्रावरुणा हे मित्रावरुणाविदं क्षत्रं राजशरीरं मित्रवन्मित्रैर्बहुभिरुपेतमार्द्रदानु आर्द्रस्य जलसंपूर्णस्य क्षेत्रा-देर्दातृ[2] यथा भवति तथा युवामाधिपत्यै रक्षतमाधिपत्याद्विदित्वा (दि दत्त्वा) पालयतम् ॥

अथ " बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय हैमन्तिकाय चरुः " इत्यस्य पुरोनुवाक्यामाह—

सम्राड्दिशाꣳ सहसाम्नी सहस्वत्यृतुर्हेमन्तो
विष्ठया नः पिपर्तु । अवस्युवाता बृहतीर्नु
शक्वरीरिमं यज्ञमवन्तु नो घृताचीः ।,इति ।

दिशां मध्ये सम्यग्राजत इति सम्राडूर्ध्वा दिक्, सा च सहसाम्नी सामभिः सहिता सहस्वती बलवती नोऽस्मान्पिपर्तु पालयतु । तथा हेमन्ताख्य ऋतु-र्विष्ठया विशिष्टया स्थित्या नः पिपर्तु । अवस्युवाता अवस्यवो रक्षयितारो वाता वायवो यासां बृहतीनामृचां ता अवस्युवाता बृहतीर्बृहत्याख्यच्छ-न्दोयुक्ताः शक्वरीर्नु शाक्वरसाम्नो योनिभूता ऋचोऽपि घृताचीर्घृताहुतियुक्ताः सत्यो नोऽस्मदीयमिमं यज्ञमवन्तु ॥

तत्रैव याज्यामाह—

सुवर्वती सुदुघा नः पयस्वती दिशां देव्य-

---

१ क. ख. घ. ङ. च. 'ता तथाऽस्त्वि' । २ ख. घ. ङ. च. 'दर्धातृ ।

वतु नो घृताची। त्वं गोपाः पुरएतोत पश्चा-
द्बृहस्पते याम्यां युङ्ग्धि वाचम्। , इति।

दिशां स्वामिभूता देवी सुवर्वती स्वर्गयुक्ता स्वर्गप्रदेत्यर्थः। नोऽस्मान्प्रति सुदुघा कामधेनुवत्सुष्ठु दोहनशीला। अत एव पयस्वती क्षीरादिरसद्रव्य-पूर्णा विशेषतो घृताची घृतं प्राप्नुवती। हे बृहस्पते त्वं पुरएता पुरतो गन्ता सन्गोपा रक्षक उतापि च पश्चात्पृष्ठतो[१]ऽपि[२] रक्षकस्तादृशस्त्वं याम्यां यममर्यो वाचं युङ्ग्धि योजय, एवमेवं वर्तस्वेत्यादिशेत्यर्थः॥

अथ 'सवित्र आतिच्छन्दसाय त्रयस्त्रिंशाय रैवताय शैशिराय द्वादशक-पालः' इत्यस्य पुरोनुवाक्यामाह—

ऊर्ध्वा दिशाꣳ रन्तिराशौषधीनाꣳ संवत्सरेण
सविता नो अह्नाम्। रेवत्सामातिच्छन्दा
उ छन्दोऽजातशत्रुः स्योना नो अस्तु। , इति।

दिशां मध्ये येयमूर्ध्वा दिक्सा रन्तिः प्रीतिहेतुः। सा चौषधीनां वृष्टिद्वारा संपादिकेति शेषः। तादृशी नोऽस्मान्प्रति स्योना सुखदाऽस्तु। तथाऽह्नां समूहरूपेण संवत्सरेण सह सविता सुखप्रदोऽस्तु। तथा रेवद्रैवताख्यं यत्सामा-तिच्छन्दा उ अतिच्छन्दोयुक्तर्गपि तथा तस्यामृचि वर्तमानं छन्दश्चेत्येष समू-होऽजातशत्रुरस्तु, अस्मदीयः शत्रुर्यथा नोत्पद्यते तथा करोत्वित्यर्थः॥

तत्रैव याज्यामाह—

स्तोमत्रयस्त्रिꣳशे भुवनस्य पत्नि विवस्व-
द्वाते अभि नो गृणाहि। घृतवती सवितरा-
धिपत्यैः पयस्वती रन्तिराशा नो अस्तु।, इति।

हे स्तोमत्रयस्त्रिंशे त्रयस्त्रिंशाख्यः स्तोमो यस्या ऊर्ध्वाया दिशः सा स्तोम-त्रयस्त्रिंशा, तत्संबोधनमिदम्। भुवनस्य पत्नि भूतजातस्य पत्नी पालयित्री [तत्संबोधनमिदम्]। हे विवस्वद्वाते विवस्वन्नामको वातो वायुर्यस्याः सा विवस्वद्वाता तत्संबोधनमिदम्। विवस्वते त्वा वाताय स्वाहेत्यन्यत्राऽऽ-म्नातम्। तथाविधा नोऽभिगृणाह्यस्मान्प्रति हितमुपदिश। हे सवितरियमाशा दिङ्नोऽस्मान्प्रति घृतवती बहुलघृतसंपादिकाऽऽधिपत्यैरधिकपालनशक्तिभि-र्योजयित्री पयस्वती क्षीरसंपादिका रन्तिः प्रीतिहेतुरस्तु॥

१ ख. 'मेव व'। च. 'मेवमेव व'। २ ख. घ. ङ. च. 'र्तस्वाऽऽदि'।

अथादित्यै विष्णुपत्न्यै चरुरित्यस्य पुरोनुवाक्यामाह—

ध्रुवा दिशां विष्णुपत्न्यघोराऽस्येशाना सहसो या मनोता। बृहस्पतिर्मातरिश्वोत वायुः संधुवाना वाता अभि नो गृणन्तु।, इति।

दिशां मध्ये या ध्रुवा स्थिरा सूर्यगतिसापेक्षप्राच्यादिविभागरहिता समानरूपा दिग्यश्च बृहस्पतिर्योऽपि मातरिश्वाख्यो मुख्यवायुर्ये चान्ये संधुवानाः सम्यक्तत्र तत्र कम्पयन्तो वातास्ते सर्वेऽपि नोऽभिगृणन्त्वस्मान्प्रति हितमुपदिशन्तु। कीदृशी ध्रुवा, विष्णुपत्नी विष्णुः पतिः पालको यस्याः सा विष्णुपत्नी, अघोरा शान्तरूपा, अस्य सहसः सर्वस्य बलस्येशाना नियामिका, मनोता मनस्यूता पूजितेत्यर्थः॥

तत्रैव याज्यामाह—

विष्टम्भो दिवो धरुणः पृथिव्या अस्येशाना जगतो विष्णुपत्नी। विश्वव्यचा इषयन्ती सुभूतिः शिवा नो अस्त्वदितिरुपस्थे।, इति।

अदितिरखण्डनीया दिक्सामान्यरूपा देवतोपस्थे स्वोत्सङ्गे स्थिता[1] नोऽस्मान्प्रति शिवाऽस्तु शान्ता सुखकरी भवतु। कीदृश्यदितिः, दिवो विष्टम्भो द्युलोकस्याऽऽधारभूता पृथिव्या धरुणो भूमेर्धारयित्री, अस्य जगत ईशाना सर्वस्य जगतः स्वामिभूता, विष्णुः पतिः[2] पालको यस्याः सा विष्णुपत्नी, विश्वव्यचा जगद्व्यापिनी, इषयन्तीषमन्नं कुर्वती, सुभूतिः शोभनैश्वर्योपेता॥

अथाग्नये वैश्वानराय द्वादशकपाल इत्यस्य याज्यानुवाक्ययोः प्रतीके दर्शयति—

वैश्वानरो न ऊत्या पृष्टो दिवि, इति।

वैश्वानरो न ऊत्येति पुरोनुवाक्या। पृष्टो दिवीति याज्या। एतच्चोभयं प्रथमकाण्डस्य पञ्चमप्रपाठकस्यान्त्यानुवाके व्याख्यातम्॥

अथानुमत्यै चरुरित्यस्य याज्यानुवाक्ययोः प्रतीके दर्शयति—

अनु नोऽद्यानुमतिरन्विदनुमते त्वम्, इति।

अनु नोऽद्यानुमतिरिति पुरोनुवाक्या। अन्विदनुमते त्वमिति याज्या एतच्चोभयमिदं वामास्ये हविरित्यनुवाके व्याख्यातम्॥

---

१ क. घ. ङ. 'ता नोऽस्मा'। २ क. घ. ङ. 'न्न सर्वस्य कु'।

( चित्याग्निहोमोक्तिः )

अथ काय एककपाल इत्यस्य याज्यानुवाक्ययोः प्रतीके दर्शयति—

कया नश्चित्र आ भुवत्को अद्य युङ्क्ते ॥, इति ॥

कया नश्चित्र आ भुवदिति पुरोनुवाक्या । को अद्य युङ्क्ष इति याज्या । एतच्चोभयमिन्द्राग्नी रोचनेत्यस्मिन्ननुवाके व्याख्यातम् ॥

अत्र विनियोगसंग्रहः—

अथाश्वमेधे या त्विष्टिर्हविर्भिर्दशभिर्युता ।
विधीयतेऽग्नये गायेत्यनुवाकेन तत्र च ॥ १ ॥
द्वे द्वे याज्यानुवाक्ये स्तामित्यृचो विंशतिस्त्विह ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके
द्वादशोऽनुवाकः ॥ १२ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ २ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य
श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विर-
चिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
चतुर्थकाण्डे चतुर्थः प्रपाठकः ॥ ४ ॥

---

( अथ चतुर्थाष्टके पञ्चमः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

नम॑स्ते रुद्र म॒न्यव॑ उ॒तो त॒ इष॑वे॒ नमः॑ ।
नम॑स्ते अस्तु॒ धन्व॑ने बा॒हुभ्या॑मु॒त ते॒ नमः॑ ।
या त॒ इषुः॑ शि॒वत॑मा शि॒वं ब॒भूव॑ ते॒ धनुः॑ ।
शि॒वा श॑र॒व्या॑ या तव॒ तया॑ नो रुद्र मृडय ।

या ते रुद्र शिवा तनूरघोराऽपापकाशिनी । तया नस्तनुवा शंतमया गिरिशन्ताभि चाकशीहि । यामिषुं गिरिशन्त हस्ते ( १ ) बिभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् । शिवेन वचसा त्वा गिरिशाच्छा वदामसि । यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत् । अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् । अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः । असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चेमां रुद्रा अभितो दिक्षु ( २ ) श्रिताः सहस्रशोऽवैषां हेड ईमहे । असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृशन्नदृशन्नुदहार्यः । उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः । नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः । प्र मुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् । याश्च ते हस्त इषवः ( ३ ) परा ता भगवो वप । अवतत्य धनुस्त्वं सहस्राक्ष शतेषुधे । निशीर्य शल्यानां मुखा शिवो नः सुमना भव ।

( चित्याग्निहोमोक्तिः )

विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ उत। अनेशन्नस्येषव आभुरस्य निषङ्गथिः। या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः। तयाऽस्मान्विश्वतस्त्वमयक्ष्मया परि ब्भुज। नमस्ते अस्त्वायुधायानाततायधृष्णवे। उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने। परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः। अथो य इषुधिस्तवारे अस्मन्नि धेहि तम् (४)॥

( हस्ते दिक्ष्विषव उभाभ्यां द्वाविꣳशतिश्च। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके पञ्चमप्रपाठके प्रथमोऽनुवाकः॥ १॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठके प्रथमोऽनुवाकः। )

---

नमः। ते। रुद्र। मन्यवे। उतो इति। ते। इषवे। नमः। नमः। ते। अस्तु। धन्वने। बाहुभ्यामिति बाहु—भ्याम्। उत। ते। नमः। या। ते। इषुः। शिवतमेति शिव—तमा। शिवम्। बभूव। ते। धनुः। शिवा। शरव्या। या। तव। तया। नः। रुद्र। मृडय। या। ते। रुद्र। शिवा। तनूः। अघोरा। अपापकाशिनीत्यपाप—काशिनी।

तया । नः । तनुवा । शंतमयेति शं—तमया । गिरि-
शन्तेति गिरि—शन्त । अभीति । चाकशीहि । या-
म् । इषुम् । गिरिशन्तेति गिरि—शन्त । हस्ते ।
( १ ) । बिभर्षि । अस्तवे । शिवाम् । गिरित्रेति
गिरि—त्र । ताम् । कुरु । मा । हिंसीः । पुरुषम् ।
जगत् । शिवेन । वचसा । त्वा । गिरिश । अच्छ ।
वदामसि । यथा । नः । सर्वम् । इत् । जगत् ।
अयक्ष्मम् । सुमना इति सु—मनाः । असत् । अधी-
ति । अवोचत् । अधिवक्तेत्यधि—वक्ता । प्रथमः ।
दैव्यः । भिषक् । अहीन् । च । सर्वान् । जम्भयन् ।
सर्वाः । च । यातुधान्य इति यातु—धान्यः । असौ ।
यः । ताम्रः । अरुणः । उत । बभ्रुः । सुमङ्गल इति
सु—मङ्गलः । ये । च । इमाम् । रुद्राः । अभितः ।
दिक्षु ( २ ) । श्रिताः । सहस्रश इति सहस्र—शः ।
अवेति । एषाम् । हेडः । ईमहे । असौ । यः । अ-
वसर्पतीत्यव—सर्पति । नीलग्रीव इति नील—ग्रीवः ।
विलोहित इति वि—लोहितः । उत । एनम् । गोपा
इति गो—पाः । अदृशन् । अदृशन् । उदहार्य
इत्युद—हार्यः । उत । एनम् । विश्वा । भूतानि ।
सः । दृष्टः । मृडयाति । नः । नमः । अस्तु । नील-

( चित्यग्निहोमोक्तिः )

ग्रीवायेति नील—ग्रीवाय । सहस्राक्षायेति सहस्र—अक्षाय । मीढुषे । अथो इति । ये । अस्य । सत्वानः । अहम् । तेभ्यः । अकरम् । नमः । प्रेति । मुञ्च । धन्वनः । त्वम् । उभयोः । आर्त्नियोः । ज्याम् । याः । च । ते । हस्ते । इषवः ( ३ ) । परेति । ताः । भगव इति भग—वः । वप । अवतत्येत्यव—तत्य । धनुः । त्वम् । सहस्राक्षेति सहस्र—अक्ष । शतेषुध इति शत—इषुधे । निशीर्येति नि—शीर्य । शल्यानाम् । मुखा । शिवः । नः । सुमना इति सु—मनाः । भव । विज्यमिति वि—ज्यम् । धनुः । कपर्दिनः । विशल्य इति वि—शल्यः । बाणवानिति बाण—वान् । उत । अनेशन् । अस्य । इषवः । आभुः । अस्य । निषङ्गथिः । या । ते । हेतिः । मीढुष्टमेति मीढुः—तम । हस्ते । बभूव । ते । धनुः । तया । अस्मान् । विश्वतः । त्वम् । अयक्ष्मया । परीति । भुज । नमः । ते । अस्तु । आयुधाय । अनाततायेत्यना—तताय । धृष्णवे । उभाभ्याम् । उत । ते । नमः । बाहुभ्यामिति बाहु—भ्याम् । तव । धन्वने । परीति । ते । धन्वनः । हेतिः । अस्मान् । वृणक्तु । विश्वतः ।

अथो इति । यः । इषुधिरितीषु—धिः । तव । आरे । अस्मत् । नीति । धेहि । तम् ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठके प्रथमोऽनुवाकः । )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
इष्टकाचितयः सर्वाश्चतुर्थे हि समापिताः ।
रुद्राध्याये पञ्चमे तु चित्यग्नौ होम उच्यते ॥ २ ॥
कर्मप्रकरणे पाठात्कर्माङ्गत्वमपीष्यते ।
ज्ञानहेतुत्वमप्यस्य[1] सर्वोपनिषदीरितम् ॥ ३ ॥
किं जप्येनामृतत्वं नो ब्रूहीत्युक्तो[2] मुनिर्जगौ ।
शतरुद्रीयकेणेति जाबाला आमनन्ति हि[3] ॥ ४ ॥
स्मृत्यागमपुराणेषु रुद्राध्यायप्रशंसनम् ।
बह्वस्ति तद्विस्तरेण रुद्रकल्पेऽभिधास्यते ॥ ५ ॥
इह कर्माङ्गता यादृग्वर्णिता ब्राह्मणेन ताम् ।
बोध्दुं शब्दार्थमात्रस्य विवृतिः क्रियते स्फुटा ॥ ६ ॥

कल्पः—“ शतरुद्रीयं जुहोति जर्तिलयवाग्वा वा गवीधुकयवाग्वा वा[4] ज[5]र्तिलगवीधुकसक्तुभिर्वा कुशयवसर्पिषाऽजाक्षीरेण मृगीक्षीरेण वाऽर्कपर्णेनोदङ्तिष्ठन्नुत्तरस्य प[6]क्षस्य उत्तरापरस्यां स्रक्त्यां विकर्ण्यां स्वयमातृण्णायामनुपरिचारं ( क्रामं ) वा नमस्ते रुद्र मन्यव इत्येताननुवाकांस्त्रेधा विभज्यापि वप्रथमादुपक्रम्य नमस्तक्षभ्य इति जानुदघ्ने धारयमाणो रथकारेभ्य इत्युपक्रम्य नमः स्वायुधायेति नाभिदघ्ने शेषेण प्रागवसानेभ्य आ[7]स्यदघ्ने हुत्वा सहस्राणि सहस्रश इति दशावदानानि हुत्वाऽन्वारोहाञ्जुहोति नमो रुद्रेभ्यो ये पृथिव्या-

---

१ ख. °स्य तथोप° । २ ख. च. °त्युक्ते मु° । ३ ख. च. तत् । ४ ख. च. वा जुहुयाज्जर्ति° । घ. ङ. वा स° । ५ ख. च. °र्तिलैर्गवी° । ६ क. पक्षस । ७ घ. ङ. आरभ्याऽऽस्य° ।

( चित्यग्निहोमोक्तिः )

मिति जानुदघ्ने धारयमाणो नमो रुद्रेभ्यो येऽन्तरिक्ष इति नाभिदघ्ने नमो रुद्रेभ्यो ये दिवीत्यास्यदघ्ने हुत्वैतानेव यजमानं वाचयित्वैतानेव विपरीतान्प्रत्यवरोहान्हुत्वा संचरे पशूनामर्कपर्णमुदस्यति यं द्विष्यात्तस्य संचर इति " इति ॥

तत्र प्रथमानुवाके प्रथमामृचमाह—

नमस्ते रुद्र मन्यव उतो त इषवे नमः। नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः।, इति।

हे रुद्र ते त्वदीयो यो मन्युः कोपस्तस्मै नमोऽस्तु। स मन्युरस्मद्वैरिष्वेव प्रसरतु नत्वस्मासु। उतापि च ते तवेषवे नमः। त्वदीयाय बाणाय नमोऽस्तु। तथा ते धन्वने त्वदीयाय धनुषे नमोऽस्तु। उतापि च ते बाहुभ्यां त्वदीयाभ्यां धनुर्बाणोपेताभ्यां हस्ताभ्यां नमोऽस्तु। एतत्सर्वं वैरिष्वेव प्रवर्ततां नतु मयीत्यभिप्रायः ॥

द्वितीयामृचमाह—

या त इषुः शिवतमा शिवं बभूव ते धनुः। शिवा शरव्या या तव तया नो रुद्र मृडय।, इति।

हे रुद्र ते त्वदीया येयमिषुः शिवतमा शान्ततमा बभूव, तथा ते त्वदीयं यद्धनुः शिवं शान्तं बभूव, तथा या च तव शरव्या तवेषुधिस्तया शान्तयेष्वा तेन च शान्तेन धनुषा तया च शान्तया शरव्यया नोऽस्मान्मृडय सुखय। भक्तेषु प्रवृत्त्यभावात्तेषां[1] शान्तत्वम् ॥

अथ तृतीयामृचमाह—

या ते रुद्र शिवा तनूरघोराऽपापकाशिनी। तया नस्तनुवा शंतमया गिरिशन्ताभि चाकशीहि।, इति।

द्वे हि रुद्रस्य तनू। तथा चोपरिष्टादाम्नायते—" रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोराऽन्या शिवाऽन्या " इति। हिंसिका घोराऽनुग्राहिका शिवा। हे रुद्र ते तव या तनूः शिवाऽस्मास्वनुग्रहकारिण्यत एवाघोरा हिंसिका न भवति। अघोरत्वमेव स्पष्टी क्रियते—अपापकाशिनी पापं हिंसारूपमनिष्टं काशयतीति पापकाशिनी, तादृशी न भवतीत्यपापकाशिनी। गिरौ कैलासे स्थित्वा नित्यं प्राणिभ्यो यः शं सुखं तनोति स गिरिशंत-

---

१ ख. च. °भावस्तेषां।

स्तस्य संबोधनं हे गिरिशंत। तथाविध हे रुद्र शंतमयाऽतिशयेन सुखकारिण्या तया तनुवाऽभिचाकशीहि मामभिलक्ष्य प्रकाशं कुरु। एतादृशीं त्वदीयां तनुं प्रकाश्य मां सुखिनं कुर्वित्यर्थः ॥

अथ चतुर्थीमृचमाह—

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे। शिवां गिरित्र तां कुरु मा हिंꣳसीः पुरुषं जगत्।, इति।

हे गिरिशंत यामिषुं बाणमस्तवे वैरिषु प्रक्षेप्तुं हस्ते बिभर्षि। कैलासाख्यं गिरिं त्रायते पालयतीति गिरित्रस्तत्संबोधनं हे गिरित्र। तथाविध हे रुद्र तां हस्ते धृतामिषुं शिवामस्मासु शान्तां कुरु। पुरुषमस्मदीयं मनुष्यं जगन्मनुष्य-व्यतिरिक्तमपि जङ्गमं गवादिकं मा हिंसीः ॥

अथ पञ्चमीमाह—

शिवेन वचसा त्वा गिरिशाच्छा वदामसि। यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत्।, इति।

गिरौ कैलासे शेते तिष्ठतीति गिरिशः। हे गिरिश त्वामच्छ प्राप्तुं शिवेन मङ्गलेन स्तुतिरूपेण वचसा वदामसि वयं प्रार्थयामहे। यथा येन प्रकारेण नोऽस्मदीयं सर्वमिज्जगत्सर्वमपि मनुष्यपश्वादिकं जङ्गमजातमयक्ष्मं रोगरहितं सुमना असत्सौमनस्योपेतं भवति तथा कुरु ॥

अथ षष्ठीमाह—

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्। अहीꣳश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः।, इति।

यो रुद्रोऽधिवक्ताऽधिकोऽयमित्येवं सर्वेषामग्रे मां प्रति वक्तुं क्षमस्तेनोक्ते सति मम सर्वाधिक्यं तदानीमेव सिध्यति। अतस्तादृशो रुद्रोऽध्यवोचन्मां सर्वाधिकं वदतु। कीदृशोऽधिवक्ता, प्रथमो देवानां मध्ये मुख्यो दैव्यः सर्वान्देवानर्हति स्वयं देवान्पालयितुं क्षम इत्यर्थः। भिषगेतस्य ध्यानमात्रेण सर्वरोगोपशमनादयं चिकित्सकः। किं कुर्वन्, अहींश्च सर्वान्सर्पव्याघ्रादीन्सर्वानपि सर्वाश्च यातुधान्यः सर्वा अपि राक्षसजातीर्जम्भयन्विनाशयन् ॥

अथ सप्तमीमाह—

असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः।

(चित्यग्निहोमोक्तिः)

ये चेमाꣳ रुद्रा अभितो दिक्षु श्रिताः
सहस्रशोऽवैषाꣳ हेड ईमहे।, इति।

यो रुद्रोऽसौ मण्डलस्थादित्यरूपः। स च ताम्र उदयकालेऽत्यन्तरक्तोऽरुण उदयादूर्ध्वमीषद्रक्तः। उतापि च बभ्रुस्ततोऽप्यूर्ध्वं पिङ्गलः। एवमन्येऽपि वर्णास्तत्तत्कालगता उन्नेयाः। सुमङ्गलो नानावर्णः संस्तदा तदाऽन्धकारादिनिवर्तकत्वादत्यन्तं मङ्गलः। ये चान्ये रश्मिरूपा रुद्रा इमामभितोऽस्या भूमेः परितो दिक्षु श्रिताः प्राच्यादिदिक्ष्ववस्थिताः। ते च सहस्रशोऽनेकसहस्रसंख्याकाः। एषामादित्यतद्रश्मिरूपाणां सर्वेषां रुद्राणां हेडः क्रोधसदृशं तीक्ष्णत्वमवेमहे भक्तिनमस्कारादिना निवारयामः॥

अथाष्टमीमाह—

असौ योऽवसर्पति नीलग्रीवो विलोहितः।
उतैनं गोपा अदृशन्नदृशन्नुदहार्यः। उतैनं
विश्वा भूतानि स दृष्टो मृडयाति नः।, इति।

यो रुद्रो नीलग्रीवः कालकूटविषधारणेन नीलवर्णा ग्रीवा यस्यासौ नीलग्रीवः। स एव विलोहितो विशेषेण लोहितवर्णः सन्नसौ मण्डलवर्ती भूत्वाऽवसर्पत्युदयास्तमयौ संपादयितुं प्रवर्तते। तस्य च रुद्रस्य मण्डलवर्तिस्वरूपधारणे प्रयोजनमुच्यते—उतापि च गोपा वेदशास्त्रसंस्काररहिता गोपाला अप्येनं मण्डलवर्तिनमादित्यरूपिणं रुद्रमदृशन्पश्यन्ति। उदहार्य उदकानां हारिण्यो योषितोऽप्येनमदृशन्पश्यन्ति। उतापि चैनमादित्यरूपिणं रुद्रं विश्वा भूतानि गोमहिष्यादयः सर्वेऽपि प्राणिनः पश्यन्ति। सर्वेषां दर्शनार्थमेव हि रुद्रस्याऽऽदित्यमूर्तिधारणम्। कैलासादिवर्ति रुद्रस्य रूपं तु वेदशास्त्राभिज्ञैरेव दृश्यते नान्यैः। तादृशो रुद्रो दृष्टः सन्नोऽस्मान्मृडयाति सुखिनः करोत्वित्यर्थः॥

अथ नवमीमाह—

नमो अस्तु नीलग्रीवाय सहस्रा-
क्षाय मीढुषे। अथो ये अस्य
सत्त्वानोऽहं तेभ्योऽकरं नमः।, इति।

यः पूर्वोक्तरीत्या नीलग्रीवः स एवेन्द्रमूर्तिधारणेन सहस्राक्षः। स पुनः पर्जन्यमूर्तिधारणेन मीढ्वान्सेचको वृष्टिकर्तेत्यर्थः। तादृशाय रुद्राय नमोऽस्तु।

अथो अपि च ये केचिदस्य रुद्रस्य सत्त्वानो भृत्यरूपाः प्राणिनस्तेभ्यः सर्वेभ्योऽहं नमोऽकरं नमस्करोमि ॥

अथ दशमीमाह—

प्र मुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् । याश्च
ते हस्त इषवः परा ता भगवो वप । , इति ।

हे भगवो भगवन्पूजावन्महदैश्वर्यसंपन्न रुद्र त्वं धन्वनस्त्वदीयस्य धनुष उभयोरार्त्नियोः कोट्योरवस्थितां ज्यां मौर्वीं प्रमुञ्चावरोपय । याश्च ते हस्त इषवो वर्तन्ते ता अपि परावप परित्यज ॥

अथैकादशीमाह —

अवतत्य धनुस्त्वꣳ सहस्राक्ष शतेषुधे । निशीर्य
शल्यानां मुखा शिवो नः सुमना भव । ,इति ।

इन्द्ररूपेण सहस्रसंख्याकान्यक्षीणि यस्यासौ सहस्राक्षः । शतसंख्याका इषुधयो बाणस्थापनकोशा यस्यासौ शतेषुधिः । तादृश हे रुद्र धनुरवतत्यावरोपितज्याकं कृत्वा शल्यानां मुखा मुखानीषुगतलोहानामग्राणि निशीर्येषुधिषु न्यग्भावेन शीर्णानि कृत्वा नोऽस्मान्प्रति सुमना अनुग्रहयुक्तः सञ्शिवः शान्तो भव ॥

अथ द्वादशीमाह—

विज्यं धनुः कपर्दिनो विशल्यो बाणवाꣳ उत ।
अनेशन्नस्येषव आभुरस्य निषङ्गथिः । , इति ।

कपर्दो जटाजूटः सोऽस्यास्तीति कपर्दी रुद्रस्तस्य धनुर्विज्यं विगतज्याकमस्तु । उतापि च बाणा अस्मिंस्तिष्ठन्तीति बाणवानिषुधिः । स च विशल्योऽस्तु इषुगतानां शल्यानां तदुदरे गोपितत्वेन बहिराविर्भूतशल्यरहितोऽस्तु । अस्य रुद्रस्येषवो बाणा इषुधौ प्रक्षिप्ता अनेशन्वेद्धुमसमर्था भवन्तु । अस्य रुद्रस्य निषङ्गथिर्बाणाधार आभुरस्त्वीषत्प्रभुरस्तु । कुड्यनिखातशङ्कावासञ्जितत्वेन बाणान्धारयितुमेव प्रभवतु न तु बाणाकर्षणयोग्य इत्यर्थः । अथवा निषङ्गथिः खड्गकोशः । सोऽपि पूर्ववत्कचिदारोपितत्वेन खड्गं धारयितुमेव प्रभवतु नतु खड्गाकर्षणसमर्थः ॥

अथ त्रयोदशीमाह—

---

१ घ. ङ. °वन्रुद्र ।

( चित्यग्निहोमोक्तिः )

या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः। तयाऽ-
स्मान्विश्वतस्त्वमयक्ष्मया परि ब्भुज।, इति।

हे मीढुष्टमातिशयेन कामाभिवर्षक या ते हेतिस्तव संबन्धि खड्गादिरूपं यदायुधं, यदपि ते तव हस्ते धनुर्बभूव, अयक्ष्मयाऽनुपद्रवकारिण्या तया हेत्या तथाविधेन धनुषा च त्वमस्मान्विश्वतः परिब्भुज सर्वतः परिपालय॥

अथ चतुर्दशीमाह—

नमस्ते अस्त्वायुधायानातताय धृष्णवे। उभा-
भ्यामुत ते नमो बाहुभ्यां तव धन्वने।, इति।

हे रुद्र ते त्वदीयायाऽऽयुधाय बाणरूपाय नमोऽस्तु। कीदृशायाऽऽयुधाय, अनातताय धनुषि संधानाभावादप्रसारिताय, धृष्णवे स्वरूपेण प्रहर्तुं प्रगल्भाय। किंच ते त्वदीयाभ्यामुभाभ्यां बाहुभ्यां नमोऽस्तु। तथा तव त्वदीयाय धन्वने नमोऽस्तु॥

अथ पञ्चदशीमाह—

परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः। अथो
य इषुधिस्तवाऽऽरे अस्मन्नि धेहि तम्।, इति॥

हे रुद्र ते त्वदीयस्य धन्वनो हेतिर्बाणशल्यरूपाऽस्मान्विश्वतः सर्वतः परिवृणक्तु वर्जितान्करोतु मा बाधतामित्यर्थः। अथो अपि च यस्तवेषुधिस्तमस्मदारेऽस्मत्तो दूरे निधेहि स्थापय॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके
प्रथमोऽनुवाकः॥ १॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः। )

---

नमो हिरण्यबाहवे सेनान्ये दिशां च
पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां
पतये नमो नमः सस्पिञ्जराय त्विषीमते पथीनां
पतये नमो नमो बभ्लुशाय विव्याधिनेऽ-

न्नानां पतये नमो नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो नमो भवस्य हेत्यै जगतां पतये नमो नमो रुद्रायाऽऽततत्राविने क्षेत्राणां पतये नमो नमः सूतायाहन्त्याय वनानां पतये नमो नमः ( १ ) रोहिताय स्थपतये वृक्षाणां पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो नम उच्चैर्घोषायाऽऽक्रन्दयते पत्तीनां पतये नमो नमः कृत्स्नवीताय धावते सत्वनां पतये नमः ( २ ) ॥

( वनानां पतये नमो नम एकान्नत्रिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः । )

---

नमः । हिरण्यबाहव इति हिरण्य—बाहवे । सेनान्य इति सेना—न्ये । दिशाम् । च । पतये । नमः । नमः । वृक्षेभ्यः । हरिकेशेभ्य इति हरि—केशेभ्यः । पशूनाम् । पतये । नमः । नमः । सस्पिञ्जराय । त्विषीमत इति त्विषि—मते । पथीनाम् ।

पतये। नमः। नमः। बभ्लुशाय। विव्याधिन इति वि—व्याधिने। अन्नानाम्। पतये। नमः। नमः। हरिकेशायेति हरि—केशाय। उपवीतिन इत्युप—वीतिने। पुष्टानाम्। पतये। नमः। नमः। भवस्य। हेत्यै। जगताम्। पतये। नमः। नमः। रुद्राय। आतताविन इत्या—तताविने। क्षेत्राणाम्। पतये। नमः। नमः। सूताय। अहन्त्याय। वनानाम्। पतये। नमः। नमः (१)। रोहिताय। स्थपतये। वृक्षाणाम्। पतये। नमः। नमः। मन्त्रिणे। वाणिजाय। कक्षाणाम्। पतये। नमः। नमः। भुवन्तये। वारिवस्कृतायेति वारिवः—कृताय। ओषधीनाम्। पतये। नमः। नमः। उच्चैर्घोषायेत्युच्चैः—घोषाय। आक्रन्दयत इत्या—क्रन्दयते। पत्तीनाम्। पतये। नमः। नमः। कृत्स्नवीतायेति कृत्स्न—वीताय। धावते। सत्त्वनाम्। पतये। नमः (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

( अथ चतुर्थकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः। )

---

प्रथमानुवाके भगवतो रुद्रस्य या प्रधानभूता तनुस्तां बहुधा प्रसाद्य तस्य ये लीलाविग्रहा जगन्निर्वाहहेतवस्तेऽष्टभिरनुवाकैः प्रसाद्यन्ते। तेष्वनुवाकेषु

सर्वाण्यपि यजूंषि। तानि च द्विविधानि, उभयतोनमस्काराण्यन्यतरतोनमस्काराणि च। तत्र त्रिष्वनुवाकेषु नमस्कारादिकं नमस्कारान्तमेकैकं यजुः। इतरेषु पञ्चस्वनुवाकेषु नमस्कारादिकमेकैकं यजुः। तत्र द्वितीयेऽनुवाके त्रयोदश यजूंषि ॥

तत्र प्रथमं यजुराह—

नमो हिरण्यबाहवे सेनान्ये
दिशां च पतये नमः, इति।

हिरण्यनिर्मितान्याभरणानि बाह्वोर्यस्यासौ हिरण्यबाहुः। स च सङ्ग्रामेषु सेनां नयतीति सेनानीः। तादृशमूर्तिधरो यो रुद्रस्तस्मै नमोऽस्तु। यश्च दिशां पालको रुद्रस्तस्मै नमोऽस्तु ॥

अथ द्वितीयं यजुराह—

नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमः, इति।

हरितवर्णाः केशाः पर्णरूपा येषां वृक्षाणां ते हरिकेशास्तादृशेभ्यो वृक्षेभ्यो वृक्षाकाररुद्रमूर्तिभ्यो नमोऽस्तु। यो रुद्रः पशूनां पालकस्तस्मै नमोऽस्तु ॥

अथ तृतीयं यजुराह—

नमः सस्पिञ्जराय त्विषीमते पथीनां पतये नमः, इति।

सस्पिशब्दो बालतृणवाची। पीतरक्तसंकीर्णवर्णवाची पिञ्जरः। बालतृणवत्पिञ्जरः सस्पिञ्जरः। पृषोदरादित्वात्साधुः। स च त्विषीमान्दीप्तिमान्। तथाविधरुद्रमूर्तये नमोऽस्तु। पथीनां शास्त्रोक्तदक्षिणोत्तरतृतीयमार्गाणां पतिः पालको यो रुद्रस्तस्मै रुद्राय नमोऽस्तु ॥

अथ चतुर्थं यजुराह—

नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमः, इति।

बिभर्ति रुद्रमिति बभ्रुर्वृषभः। स एव बभ्लुः। रलयोर्भेदाभावः। तस्मिञ्शेते तिष्ठतीति बभ्लुशः। स च विद्वेषिणो विशेषेण विध्यतीति विव्याधी तथाविधाय विव्याधिने नमोऽस्तु। यश्चान्नानां पालको रुद्रस्तस्मै नमोऽस्तु

अथ पञ्चमं यजुराह—

नमो हरिकेशायोपवीतिने पुष्टानां पतये नमः, इति।

नीलमूर्धजाय पलितरहितायोपवीतिने मङ्गलार्थं यज्ञोपवीतधारिणे रुद्राय नमोऽस्तु। पुष्टानां परिपूर्णगुणानां पुरुषाणां पतये स्वामिने नमोऽस्तु ॥

(चित्यग्निहोमोक्तिः)

अथ षष्ठं यजुराह—

नमो भवस्य हेत्यै जगतां पतये नमः, इति।

भवः संसारस्तस्य हेतिरायुधं, संसारच्छेत्रे रुद्राय नमोऽस्तु। जगतां पालको यो रुद्रस्तस्मै नमोऽस्तु॥

अथ सप्तमं यजुराह—

नमो रुद्रायाऽऽततायिने क्षेत्राणां पतये नमः, इति।

आततेन विस्तारितेन धनुषाऽवति रक्षतीत्याततावी, तस्मै रुद्राय नमोऽस्तु। क्षेत्राणां पालको यो रुद्रस्तस्मै नमोऽस्तु॥

अथाष्टमं यजुराह—

नमः सूतायाहन्त्याय वनानां पतये नमः, इति।

सूतः सारथिः। अहन्त्यो वैरिभिर्हन्तुमशक्यः। तादृशाय रुद्राय नमोऽस्तु। यो वनानां पालकस्तस्मै रुद्राय नमोऽस्तु॥

अथ नवमं यजुराह—

नमो रोहिताय स्थपतये वृक्षाणां पतये नमः, इति।

रोहितो लोहितवर्णः। स्थपतिः प्रभुः। तस्मै रुद्राय नमोऽस्तु। वृक्षाणां यः पालकस्तस्मै नमोऽस्तु॥

अथ दशमं यजुराह—

नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमः, इति।

राजसभायां मन्त्रालोचनकुशलो मन्त्री। स च वणिजां स्वामित्वेन वाणिजस्तस्मै नमोऽस्तु। वनगता गुल्मादयः कक्षास्तेषां पालकाय नमोऽस्तु॥

अथैकादशं यजुराह—

नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमः, इति।

भुवं तनोतीति भुवंतिः। वरिवो धनं तस्य कर्ता वरिवस्कृत्स एव वारिवस्कृतस्तस्मै नमोऽस्तु। ओषधीनां ग्राम्यारण्यानां पालकस्तस्मै नमोऽस्तु॥

अथ द्वादशं यजुराह—

नम उच्चैर्घोषायाऽऽक्रन्दयते पत्तीनां पतये नमः, इति।

युद्धकाल उच्छ्रितो घोषो ध्वनिर्यस्यासावुच्चैर्घोषस्तस्मै। आक्रन्दयन्वैरिणां रोदयिता तस्मै रुद्राय नमोऽस्तु। पत्तीनां पादचारिणो योधाः पत्तिशब्दवाच्यास्तेषां पालकाय नमोऽस्तु॥

अथ त्रयोदशं यजुराह—

नमः कृत्स्नवीताय धावते सत्वनां पतये नमः ।, इति ॥

कृत्स्नं सैन्यं वीतं वेष्टितं येनासौ कृत्स्नवीतस्तस्मै । धावते पलायमानानां परकीयसैन्यानां पृष्ठतो गच्छन्धावंस्तस्मै नमोऽस्तु । सत्त्वानः सात्त्विकाः शरणागतास्तेषां पालकाय नमोऽस्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके
द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः । )

---

नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमो नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमो नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निचेरवे परिचरायारण्यानां पतये नमो नमः सृकाविभ्यो जिघांसद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्यो नक्तं चरद्भ्यः प्रकृन्तानां पतये नमो नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो नमः ( १ ) इषुमद्भ्यो धन्वाविभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमोनमोऽस्यद्भ्यो विध्यद्भ्यश्च वो

(चित्संग्रिहोमोक्तिः)

नमो नम आसीनेभ्यः शयानेभ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः (२)॥

(कुलुञ्चानां पतये नमो नमोऽश्वपतिभ्यस्त्रीणि च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

(अथ चतुर्थाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः।)

---

नमः। सहमानाय। निव्याधिन इति नि—व्याधिने। आव्याधिनीनामित्या—व्याधिनीनाम्। पतये। नमः। नमः। ककुभाय। निषङ्गिण इति नि—सङ्गिने। स्तेनानाम्। पतये। नमः। नमः। निषङ्गिण इति नि—सङ्गिने। इषुधिमत इतीषुधि—मते। तस्कराणाम्। पतये। नमः। नमः। वञ्चते। परिवञ्चत इति परि—वञ्चते। स्तायूनाम्। पतये। नमः। नमः। निचेरव इति नि—चेरवे। परिचरायेति परि—चराय। अरण्यानाम्। पतये। नमः। नमः। सृकाविभ्य इति सृकावि—भ्यः। जिघांसद्भ्य इति जिघांसत्—भ्यः। मुष्णताम्। पतये।

नमः । नमः । असिमद्भ्य इत्यसिमत्—भ्यः । नक्तम् । चरद्भ्य इति चरत्—भ्यः । प्रकृन्तानामिति प्र—कृन्तानाम् । पतये । नमः । नमः । उष्णीषिणे । गिरिचरायेति गिरि—चराय । कुलुञ्चानाम् । पतये । नमः । नमः ( १ ) । इषुमद्भ्य इतीषुमत्—भ्यः । धन्वाविभ्य इति धन्वावि—भ्यः । च । वः । नमः । नमः । आतन्वानेभ्य इत्या—तन्वानेभ्यः । प्रतिदधानेभ्य इति प्रति—दधानेभ्यः । च । वः । नमः । नमः । आयच्छद्भ्य इत्यायच्छत्—भ्यः । विसृजद्भ्य इति विसृजत्—भ्यः । च । वः । नमः । नमः । अस्यद्भ्य इत्यस्यत्—भ्यः । विध्यद्भ्य इति विध्यत्—भ्यः । च । वः । नमः । नमः । आसीनेभ्यः । शयानेभ्यः । च । वः । नमः । नमः । स्वपद्भ्य इति स्वपत्—भ्यः । जाग्रद्भ्य इति जाग्रत्—भ्यः । च । वः । नमः । नमः । तिष्ठद्भ्य इति तिष्ठत्—भ्यः । धावद्भ्य इति धावत्—भ्यः । च । वः । नमः । नमः । सभाभ्यः । सभापतिभ्य इति सभापति—भ्यः । च । वः । नमः । नमः । अश्वेभ्यः । अश्वपतिभ्य इत्यश्वपति—भ्यः । च । वः । नमः (२) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( चित्यग्निहोमोक्तिः )

( अथ चतुर्थकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः । )

---

द्वितीयानुवाक उभयतोनमस्काराणि कानिचिद्यजूंष्युक्तानि । अथापराणि तथाविधान्येव तृतीयेऽस्पष्टार्थानि द्वादश यजूंष्युच्यन्ते ॥

तत्र प्रथमं यजुराह—

**नमः सहमानाय निव्याधिन आ-**
**व्याधिनीनां पतये नमः,** इति।

सहमानो विरोधिनोऽभिभवन् । नितरां विरोधिनो विध्यतीति निव्याधी, तादृशाय रुद्राय नमः । आ समन्ताद्विध्यन्तीत्याव्याधिन्यः शूराः सेनास्तासां पालकाय नमः ॥

अथ द्वितीयं यजुराह—

**नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमः,** इति।

ककुभाय ककुभसदृशाय प्रधानभूतायेत्यर्थः । निषङ्गी खड्गहस्तस्तस्मै नमः । स्तेना गुप्तचोरास्तेषां पालकाय नमः । रुद्रो हि लीलया नट इव तत्तद्वेषं धत्ते । यद्वा तस्य सर्वजगदात्मकत्वाद्ये यत्र यथा वर्तन्ते तत्र तथारूपेण रुद्रो वर्तत इति रुद्रस्य सार्वात्म्यमनुसंधातुं मन्त्रैरेवमुच्यते । स्तेनादिशरीरेषु रुद्रो द्वेधा वर्तते जीवरूपेणेश्वररूपेण च । तत्र च यज्जीवरूपं तत्स्तेनादिशब्दानां वाच्योऽर्थः । स एव शास्त्रेषु निन्द्यः । यत्त्वीश्वररूपं तत्स्तेनादिशब्दैरुपलक्ष्यते । तदनुसंधानं तु पापक्षयहेतुत्वेन परमपुरुषार्थ इति लक्ष्यार्थविवक्षया मन्त्रेषु लौकिकाः शब्दाः प्रयुज्यन्त इति द्रष्टव्यम् । उपलक्षकवाच्यार्थद्वारेण लक्ष्यार्थो मुग्धैरपि सहसा सम्यग्बोद्धुं शक्यते । यथा शाखाग्रे चन्द्र इत्यत्र । तस्माल्लक्ष्यार्थस्यैव विवक्षायामपि सुखावबोधद्वारत्वेन मुख्यार्थवाचकाः शब्दाः प्रयोक्तव्याः ॥

अथ तृतीयं यजुराह—

**नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमः,** इति।

धनुषि संधातुं हस्ते धृतो बाणो निषङ्गः । पृष्ठे बद्धो बाणाधार इषुधिः । तदुभययुक्ताय नमः । तस्कराः प्रकटचोरास्तेषां पालकाय नमः ॥

---

१ क. 'ये द्वा' । च. 'ये कानिचिदुच्य' । २ ख. 'श स्पष्टार्थानि पञ्च कानिचिदुच्य' । ३ घ. ङ. 'जूंष्याह—। ४ ख. च. 'कुत्सदृ' ।

अथ चतुर्थं यजुराह—

नमो वञ्चते परिवञ्चते स्तायूनां पतये नमः, इति।

स्वामिन आप्तो भूत्वा तदीयक्रयविक्रयादिव्यवहारेषु यत्र क्वापि यत्किंचिद्द्रव्यापह्नवो वञ्चनम्। सर्वेष्वपि व्यवहारेष्वपह्नवः परिवञ्चनं, तदुभयरूपाय नमः। गुप्तचोरा द्विविधाः—दूरादागत्य रात्रावज्ञाताः सन्तः कपाटोद्घाटनेन ये द्रव्यापहर्तारस्ते स्तेनाः। स्वकीया एव भूत्वा रात्रावह्नि वाऽन्यैरज्ञाताः सन्तोऽपहर्तारो ये ते स्तायवः। तेषां स्तायूनां पालकाय नमः॥

अथ पञ्चमं यजुराह—

नमो निचेरवे परिचरायारण्यानां पतये नमः, इति।

स्वामिगृह एव कदाऽपहरिष्यामीत्यनया बुद्ध्या सावधानो निरन्तरं चरणशीलो निचेरुः, परित आपणवीथिप्रवाटिकादावपहारबुद्ध्या चरणशीलः परिचरस्तदुभयरूपाय नमः। मार्गे गन्तुर्द्रव्यापहारेण बाधितुं निरन्तरमरण्ये वर्तमानाश्चोरा अरण्यास्तेषां पालकाय नमः॥

अथ षष्ठं यजुराह—

नमः सृकाविभ्यो जिघांसद्भ्यो
मुष्णतां पतये नमः, इति।

सृकशब्दो वज्रवाची। तेन स्वशरीरमवन्ति रक्षन्तीति सृकाविनः, प्राणिनो हन्तुमिच्छन्तश्चोरा जिघांसन्तस्तदुभयरूपाय नमः। कृषिकाः सन्तः स्वामिधान्यानामपहर्तारो मुष्णन्तस्तेषां पालकाय नमः॥

अथ सप्तमं यजुराह—

नमोऽसिमद्भ्यो नक्तं चरद्भ्यः
प्रकृन्तानां पतये नमः, इति।

असिमन्तः खड्गधारिणश्चोराः। ये रात्रौ चरन्तो वीथ्यां निर्गतान्प्राणिनः बाधमानाश्चोरास्ते नक्तं चरन्तः। तदुभयरूपाय नमः। हत्वैवापहरन्तः प्रकृन्तास्तेषां पालकाय नमः॥

अथाष्टमं यजुराह—

---

१ ख. च. °पाटाद्युद्गधा°। २ ख. एवंभूता रा°। च. एवं। ३ ख. च. गन्तृन्द्रव्या°।

( चित्यग्निहोमोक्तिः )

नम उष्णीषिणे गिरिचराय कुलु-
ञ्चानां पतये नमः , इति।

शिरोवेष्टनवानुष्णीषी ग्राम्यजनवदुष्णीषेण शिरो वेष्टयित्वा तन्मध्ये प्रविश्य वर्तमानश्चोर उष्णीषी, गिरौ काष्ठादिसंपादकानां वस्त्रादिकमपहर्तुं चरतीति गिरिचरस्तदुभयरूपाय नमः। कुं भूमिं गृहक्षेत्रादिरूपां लुञ्चन्त्यपहरन्तीति कुलुञ्चास्तेषां पालकाय नमः॥

अथ नवमं यजुराह—

नम इषुमद्भ्यो धन्वाविभ्यश्च वो नमः, इति।

भीषयितुं हस्ते बाणधारिण इषुमन्तः। तथा भीषयितुं हस्ते धनुर्धारिणो धन्वाविनः। तदुभयरूपा हे रुद्रा वो युष्मभ्यं नम इति विशेषणद्वयेन वाक्यं भेत्तुं द्विर्नमस्कारः॥

अथ दशमं यजुराह—

नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमः , इति।

धनुषि ज्यामारोपयन्त आतन्वानास्तद्रूपेभ्यो युष्मभ्यं रुद्रेभ्यो नमः। धनुषि बाणं संदधानाः प्रतिदधानास्तद्रूपेभ्यो युष्मभ्यं नमः॥

अथैकादशं यजुराह—

नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमः, इति।

ज्याकर्षणं कुर्वन्त आयच्छन्तो बाणं मुञ्चन्तो विसृजन्तः। शेषं पूर्ववद्व्याख्येयम्॥

अथ द्वादशं यजुराह—

नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमः , इति।

मुक्तस्य बाणस्य लक्ष्यपर्यन्तं गमनमसनं तस्य कर्तारोऽस्यन्तः। लक्ष्यसमीपं गतस्य बाणस्य लक्ष्ये प्रवेशो वेधस्तस्य कर्तारो विध्यन्तः॥

अथ त्रयोदशयजुरारभ्य सप्तदशयजुःपर्यन्तानि स्पष्टार्थानि यजूंष्याह—

नम आसीनेभ्यः शयानेभ्यश्च वो नमो
नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो
नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो

---

१ क. घ. ङ. च. 'षं सर्वत्र पू'।

नमः सभाभ्यः सभापतिभ्यश्च वो नमो
नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः॥, इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके
तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः । )

---

नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो
नमो नम उगणाभ्यस्तृंहतीभ्यश्च वो नमो
नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो
नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो
गणेभ्यो गणपतिभ्यश्च वो नमो नमो विरू-
पेभ्यो विश्वरूपेभ्यश्च वो नमो नमो महद्भ्यः
क्षुल्लकेभ्यश्च वो नमो नमो रथिभ्योऽरथेभ्यश्च
वो नमो नमो रथेभ्यः ( १ ) रथपतिभ्यश्च
वो नमो नमः सेनाभ्यः सेनानिभ्यश्च वो नमो
नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नम-
स्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुला-
लेभ्यः कर्मारेभ्यश्च वो नमो नमः पुञ्जिष्टेभ्यो
निषादेभ्यश्च वो नमो नम इषुकृद्भ्यो धन्व-
कृद्भ्यश्च वो नमो नमो मृगयुभ्यः श्वनिभ्यश्च

वो नमो नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ( २ ) ॥

( रथेभ्यः श्वपतिभ्यश्च द्वे च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः । )

---

नमः । आव्याधिनीभ्य इत्या—व्याधिनीभ्यः । विविध्यन्तीभ्य इति वि—विध्यन्तीभ्यः । च । वः । नमः । नमः । उगणाभ्यः । तृंहतीभ्यः । च । वः । नमः । नमः । गृत्सेभ्यः । गृत्सपतिभ्य इति गृत्स-पति—भ्यः । च । वः । नमः । नमः । व्रातेभ्यः । व्रातपतिभ्य इति व्रातपति—भ्यः । च । वः । नमः । नमः । गणेभ्यः । गणपतिभ्य इति गणपति—भ्यः । च । वः । नमः । नमः । विरूपेभ्य इति वि—रूपेभ्यः । विश्वरूपेभ्य इति विश्व—रूपेभ्यः । च । वः । नमः । नमः । महद्भ्य इति महत्—भ्यः । क्षुल्लकेभ्यः । च । वः । नमः । नमः । रथिभ्य इति रथि—भ्यः । अरथेभ्यः । च । वः । नमः । नमः । रथेभ्यः ( १ ) । रथपतिभ्य इति रथपति—भ्यः । च । वः । नमः । नमः । सेनाभ्यः । सेनानिभ्य

इति सेनानि—भ्यः । च । वः । नमः । नमः । क्षत्तृभ्य इति क्षत्तृ—भ्यः । संग्रहीतृभ्य इति संग्रही-तृ—भ्यः । च । वः । नमः । नमः । तक्षभ्य इति तक्ष—भ्यः । रथकारेभ्य इति रथ—कारेभ्यः । च । वः । नमः । नमः । कुलालेभ्यः । कर्मारेभ्यः । च । वः । नमः । नमः । पुञ्जिष्टेभ्यः । निषादेभ्यः । च । वः । नमः । नमः । इषुकृद्भ्य इतीषुकृत्—भ्यः । धन्वकृद्भ्य इति धन्वकृत्—भ्यः । च । वः । नमः । नमः । मृगयुभ्य इति मृगयु—भ्यः । श्वनिभ्य इति श्वनि—भ्यः । च । वः । नमः । नमः । श्वभ्य इति श्व—भ्यः । श्वपतिभ्य इति श्वपति—भ्यः । च । वः । नमः ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ चतुर्थकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः । )

---

तृतीयानुवाके यान्युभयतोनमस्काराणि यजूंष्युक्तानि तेभ्योऽन्यानि कानिचिदुभयतोनमस्काराणि यजूंषि चतुर्थेऽभिधीयन्ते ॥

तत्र प्रथमं यजुराह—

**नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमः,** इति ।

आ समन्ताद्वेद्धुं शक्ताः स्त्रीमूर्तय आव्याधिन्यो विशेषेण वेद्धुं शक्ता विविध्यन्त्यस्ताभ्यो नमः ॥

( चित्याग्निहोमोक्तिः )

अथ द्वितीयं यजुराह—

नम उगणाभ्यस्तृꣳहतीभ्यश्च वो नमः, इति।

उत्कृष्टगणरूपाः सप्तमातृकाद्याः स्त्रिय उगणाः, हिंसितुं समर्था दुर्गाद्या उग्रदेवतास्तृंहत्यस्ताभ्यो नमः॥

अथ तृतीयं यजुराह—

नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः, इति।

गर्धनशीला गृत्सा विषयलम्पटा इत्यर्थः। तेषां पालका गृत्सपतयस्तेभ्यो नमः॥

अथ चतुर्थं यजुराह—

नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः, इति।

नानाजातीयानां संघा व्रातास्तेषां पालका व्रातपतयस्तेभ्यो नमः॥

अथ पञ्चमं यजुराह—

नमो गणेभ्यो गणपतिभ्यश्च वो नमः, इति।

देवस्यानुचरा भूतविशेषा गणास्तेषां पालका गणपतयस्तेभ्यो नमः।

अथ षष्ठं यजुराह—

नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः, इति।

विरूपा विकृतरूपा नग्नमुण्डादयः। विश्वरूपास्तुरंगगजवक्त्रादिनानाविधरूपधारिणो भृत्यास्तेभ्यो नमः॥

अथ सप्तमं यजुराह—

नमो महद्भ्यः क्षुल्लकेभ्यश्च वो नमः, इति।

अणिमाद्यैश्वर्योपेता महान्तस्तद्रहिताः क्षुल्लकास्तेभ्यो नमः॥

अथाष्टमं यजुराह—

नमो रथिभ्योऽरथेभ्यश्च वो नमः, इति।

रथमारूढा रथिनस्तद्रहिता अरथास्तेभ्यो नमः।

अथ नवममारभ्य सप्तदशपर्यन्तानि स्पष्टार्थानि यजूंष्याह—

नमो रथेभ्यो रथपतिभ्यश्च वो नमो नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नमस्तक्षभ्यो रथकारे-

भ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमो नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो नमो मृगयुभ्यः श्वनिभ्यश्च वो नमो नमः श्वभ्यः श्वपतिभ्यश्च वो नमः॥, इति ॥

पक्षिपुञ्जानां घातकाः पुञ्जिष्टाः । मत्स्यघातिनो निषादाः । शुनां गलेषु बद्धानां पाशानां धारकाः श्वनयः । अत्र द्वितीयानुवाको लीलार्थदेवतामूर्तिप्राधान्येन स्तोतुं प्रवृत्तः । तृतीयानुवाकश्चोरमूर्तिप्राधान्येन स्तोतुं प्रवृत्तः । चतुर्थोऽनुवाको नानाजातिमूर्तिप्राधान्येनेति विभागो द्रष्टव्यः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके
चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः । )

---

नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च संवृध्वने च (१) नमो अग्रियाय च प्रथमाय च नमं

आशवे चाजिराय च नमः शीघ्रियाय च शी- भ्याय च नम ऊर्म्याय चावस्वन्याय च नमः स्रोतस्याय च द्वीप्याय च (२) ॥

(संवृध्वने च पञ्चविंशतिश्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

(अथ चतुर्थाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः।)

---

नमः। भवाय। च। रुद्राय। च। नमः। श- र्वाय। च। पशुपतय इति पशु—पतये। च। नमः। नीलग्रीवायेति नील—ग्रीवाय। च। शिति- कण्ठायेति शिति—कण्ठाय। च। नमः। कपर्दिने। च। व्युप्तकेशायेति व्युप्त—केशाय। च। नमः। सहस्राक्षायेति सहस्र—अक्षाय। च। शतधन्वन इति शत—धन्वने। च। नमः। गिरिशाय। च। शिपिविष्टायेति शिपि—विष्टाय। च। नमः। मीढु- ष्टमायेति मीढुः—तमाय। च। इषुमत इतीषु— मते। च। नमः। ह्रस्वाय। च। वामनाय। च। नमः। बृहते। च। वर्षीयसे। च। नमः। वृद्धा- य। च। संवृध्वन इति सं—वृध्वने। च (१)। नमः। अग्रियाय। च। प्रथमाय। च। नमः। आशवे।

च । अजिरायं । च । नमः । शीघ्रियाय । च । शीभ्याय । च । नमः । ऊर्म्याय । च । अवस्वन्या इत्यंव—स्वन्यांय । च । नमः । स्रोतस्याय । च । द्वीप्याय । च ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ चतुर्थकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः । )

---

चतुर्थेऽनुवाक उभयतोनमस्काराणि यजूंषि समापितानि । अथ पञ्चममारभ्य नवमान्तेष्वनुवाकेषु नमस्कारोपक्रमाण्येव यजूंष्याम्नायन्ते ॥ तत्र पञ्चमानुवाके प्रथमं यजुरारभ्य पञ्चदश[1] यजूंष्याह—

नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च संवृध्वने च नमो अग्रियाय च प्रथमाय च नम आशवे चाजिराय च नमः शीघ्रियाय च शीभ्याय च नम ऊर्म्याय चावस्वन्याय च नमः स्रोतस्याय च द्वीप्याय च ।, इति ।

भवन्ति प्राणिनोऽस्मादिति भवः । रुद्रोदनहेतुभूतं दुःखं द्रावयतीति रुद्रः ।

---

१ ख. च. 'दशान्तानि य' ।

( चित्यग्निहोमोक्तिः )

शृणाति हिनस्ति पापमिति शर्वः । पशुसमानानज्ञानिनः पुरुषान्पालयतीति पशुपतिः । कालकूटधारणेन नीलवर्णो ग्रीवैकदेशो यस्यासौ नीलग्रीवः । शितिः श्वेतवर्णोऽवशिष्टः कण्ठप्रदेशो यस्यासौ शितिकण्ठः । कपर्दो जटाजूटो यस्यास्तीति कपर्दी। मुण्डितकेशो व्युप्तकेशः। पाशुपतादिवेषेण कपर्दित्वम्। यत्यादिवेषेण मुण्डितकेशत्वम् । इन्द्रवेषेण सहस्राक्षत्वम् । सहस्रभुजावतारित्वेन शतसंख्याकैर्धनुर्भिरुपेतत्वम्। गिरौ कैलासे शेते तिष्ठतीति गिरिशः। विष्णुमूर्तिधारी शिपिविष्टः । "विष्णुः शिपिविष्टः" इति श्रुतेः । मेघरूपेणात्यन्तं वर्षयिता मीढुष्टमः । बाणधारक इषुमान् । शरीरेऽल्पप्रमाणत्वं ह्रस्वत्वम् । अङ्गुल्याद्यवयवसंकोचाद्वामनत्वम् । आकारेण प्रौढो बृहन् । गुणैः समृद्धो वर्षीयान् । वयसाऽधिको वृद्धः । सम्यक्स्तुतिभिर्वर्धितः संवृध्वा । जगदुत्पत्तेः पूर्वमवस्थितोऽग्रियः । सभायां मुख्यः प्रथमः । आशुर्व्यापी । अजिरो गमनकुशलः । शीघ्रियः शीघ्रगामी । शीभशब्द उदकप्रवाहवाची, तत्रावस्थितः शीभ्यः । ऊर्मौ तरङ्गे स्थित ऊर्म्यः । अवस्वने ध्वनिरहिते स्थिरजलेऽवस्थितोऽवस्वन्यः । स्रोतसि प्रवाहे स्थितः स्रोतस्यः । द्वीपे वारिमध्यवर्तिभूमौ स्थितो द्वीप्यः । अत्रैकैकस्मिन्यजुषि चतुर्थ्यन्ताभ्यां पदाभ्या नमःशब्दं पृथगन्वेतुं समुच्चयार्थौ चकारौ पठितौ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

---

नमो॑ ज्ये॒ष्ठाय॑ च कनि॒ष्ठाय॑ च॒ नमः॑ पूर्व॒जाय॑ चापर॒जाय॑ च॒ नमो॑ मध्य॒माय॑ चापग॒ल्भाय॑ च॒ नमो॑ जघ॒न्या॑य च॒ बुध्नि॑याय च॒ नमः॑ सो॒भ्या॑य च प्रतिस॒र्या॑य च॒ नमो॒ याम्या॑य च॒ क्षेम्या॑य च॒ नम॑ उर्व॒र्या॑य च॒ खल्या॑य च॒ नमः॒ श्लोक्या॑य चावसा॒न्या॑य च॒ नमो॒ व-

न्यांय च कक्ष्यांय च नमः श्रवायं च प्रतिश्र-
वायं च ( १ ) नम आशुषेणाय चाऽऽशुर-
थाय च नमः शूरांय चावभिन्दते च नमो
वर्मिणे च वरूथिने च नमो बिल्मिने च कव-
चिने च नमः श्रुतायं च श्रुतसेनायं च (२) ॥

( प्रतिश्रवायं च पञ्चविंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके
पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

---

नमः । ज्येष्ठायं । च । कनिष्ठायं । च । नमः ।
पूर्वजायेतिं पूर्व—जायं । च । अपरजायेत्यंपर—जा-
यं । च । नमः । मध्यमायं । च । अपगल्भायेत्यं-
प—गल्भायं । च । नमः । जघन्यांय । च । बुध्निं-
याय । च । नमः । सोभ्यांय । च । प्रतिसर्यायेतिं
प्रति—सर्याय । च । नमः । याम्यांय । च । क्षे-
म्यांय । च । नमः । उर्वर्यांय । च । खल्यांय ।
च । नमः । श्लोक्यांय । च । अवसान्यायेत्यंव—
सान्यांय । च । नमः । वन्यांय । च । कक्ष्यांय ।
च । नमः । श्रवायं । च । प्रतिश्रवायेतिं प्रति—

( चित्यग्निहोमोक्तिः )

श्रवाय। च (१)। नमः। आशुषेणायेत्याशु—सेनाय। च। आशुरथायेत्याशु—रथाय। च। नमः। शूराय। च। अवभिन्दत इत्यव—भिन्दते। च। नमः। वर्मिणे। च। वरूथिने। च। नमः। बिलिमने। च। कवचिने। च। नमः। श्रुताय। च। श्रुतसेनायेति श्रुत—सेनाय। च (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ चतुर्थकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः। )

---

पञ्चमेऽनुवाके कानिचिदन्यतरतोनमस्काराणि यजूंष्युक्तानि। अथ षष्ठे तथाविधान्येवान्यानि[1] कानिचिद्यजूंष्युच्यन्ते ॥

तत्र विद्यमानानि पञ्चदश यजूंष्याह—

नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्नियाय च नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नम उर्वर्याय च खल्याय च नमः श्लोक्याय चावसान्याय च नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नम आशुषेणाय चाऽऽशुरथाय च नमः शूराय चावभिन्दते च नमो वर्मिणे च वरूथिने च नमो बिलिमने च कवचिने च नमः श्रुताय च श्रुतसेनाय च।, इति।

---

१ ख. च. 'न्येव का'।

विद्यैश्वर्यादिभिरधिको ज्येष्ठः। तै रहितोऽल्पः कनिष्ठः। पूर्वं जगदादौ हिरण्यगर्भरूपेणोत्पन्नः पूर्वजः। अपरास्मिञ्जगदवसानकाले संहर्तुं कालाग्न्यादिरूपेणोत्पन्नोऽपरजः। मध्यकाले देवतिर्यगादिरूपेणोत्पन्नो मध्यमः। अपगल्भोऽप्ररूढेन्द्रियो बालः। जघने गवादीनां पश्चाद्भागे वत्सादिरूपेण भवो जघन्यः। बुध्ने वृक्षादीनां मूले शाखादिरूपेणोत्पन्नो बुध्नियः। उभाभ्यां पुण्यपापाभ्यां सह वर्तत इति सोभो मनुष्यलोकः। अत एवाऽऽथर्वणिका आमनन्ति—'पुण्येन पुण्यं लोकं जयति पापेन पापमुभाभ्यामेव मनुष्यलोकम्' इति। तत्र भवः सोभ्यः। प्रतिसरो विवाहादौ हस्ते धार्यमाणो रक्षाबन्धस्तमर्हतीति प्रतिसर्यः। यमलोके पापिशिक्षकरूपेणोत्पन्नो याम्यः। क्षेमो मोक्षस्तमर्हतीति क्षेम्यः। उर्वरा सर्वसस्याढ्या भूमिस्तामर्हति धान्यविशेषरूपेणेत्युर्वर्यः। खलो धान्यविवेचनदेशस्तमर्हति मेढ्यादिरूपेणेति खल्यः। श्लोका वैदिकमन्त्रास्तत्प्रतिपाद्यत्वेन तत्र भवः श्लोक्यः। अवसानं वेदान्तस्तत्प्रतिपाद्यत्वेन तत्र भवोऽवसान्यः। वने वृक्षादिरूपेण भवो वन्यः। कक्षे लतादिरूपेण भवः कक्ष्यः। श्रूयत इति श्रवः शब्दः। प्रतिश्रवः प्रतिध्वनिः। आशुः शीघ्रगामिनी सेना यस्यासावाशुषेणः। आशुः शीघ्रगामी रथो यस्यासावाशुरथः। शूरो युद्धे धैर्यवान्। अवभिन्दन्वैरिणां प्रहर्ता। वर्मी कञ्चुकोपेतः। वरूथी गृहोपेतः। बिल्मं बिलोपेतं युद्धे शिरोरक्षकं तदस्यास्तीति बिल्मी। कवचः शरीररक्षकः सोऽस्यास्तीति कवची। श्रुतो वेदेषु प्रसिद्धः। श्रुता वेदेषु प्रसिद्धा सेना यस्यासौ श्रुतसेनः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः॥ ६॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः। )

---

नमो दुन्दुभ्याय चाऽऽहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषङ्गिणे चेषुधिमते च नमः-

---

१ ख. च. 'ल्भोऽप्रौढे'। २ ख. च. नयति।

स्तीक्ष्णेषवे चाऽऽयुधिने च नमः स्वायुधाय च सुधन्वने च नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः सूद्याय च सरस्याय च नमो नाद्याय च वैशन्ताय च (१) नमः कूप्याय चावट्याय च नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च नम ईध्रियाय चाऽऽतप्याय च नमो वात्याय च रेष्मियाय च नमो वास्तव्याय च वास्तुपाय च (२) ॥

(वैशन्ताय च त्रिंशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

(अथ चतुर्थाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः।)

---

नमः। दुन्दुभ्याय। च। आहनन्यायेत्या—हनन्याय। च। नमः। धृष्णवे। च। प्रमृशायेति प्र—मृशाय। च। नमः। दूताय। च। प्रहितायेति प्र—हिताय। च। नमः। निषङ्गिण इति नि—सङ्गिने। च। इषुधिमत इतीषुधि—मते। च। नमः। तीक्ष्णेषव इति तीक्ष्ण—इषवे। च। आयुधिने। च। नमः। स्वायुधायेति सु—आयुधाय। च।

सुधन्वन इति सु—धन्वने । च । नमः । स्रुत्याय । च । पथ्याय । च । नमः । काट्याय । च । नीप्याय । च । नमः । सूद्याय । च । सरस्याय । च । नमः । नाद्याय । च । वैशन्ताय । च (१)। नमः । कूप्याय । च । अवट्याय । च । नमः । वर्ष्याय । च । अवर्ष्याय । च । नमः । मेघ्याय । च । विद्युत्यायेति वि—द्युत्याय । च । नमः । ईध्रियाय । च । आतप्यायेत्या—तप्याय । च । नमः । वात्याय । च । रेष्मियाय । च । नमः । वास्तव्याय । च । वास्तुपायेति वास्तु—पाय । च (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ चतुर्थकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः । )

---

षष्ठेऽनुवाके यान्यन्यतरतोनमस्काराणि यजूंष्युक्तानि तेभ्योऽन्यानि कानिचिद्यजूंषि सप्तमेऽभिधीयन्ते ॥

तत्र विद्यमानानि षोडश यजूंष्याह—

नमो दुन्दुभ्याय चाऽऽहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चाऽऽयुधिने च नमः स्वायुधाय च सुधन्वने च नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः सूद्याय

च सरस्याय च नमो नाद्याय च वैशन्ताय च नमः कूप्याय चावट्याय च नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च नम ईध्रियाय चाऽऽतप्याय च नमो वात्याय च रेष्मियाय च नमो वास्तव्याय च वास्तुपाय च ॥, इति ॥

दुन्दुभौ भेर्यां भवः शब्दो दुन्दुभ्यः। आहन्यते ताड्यतेऽनेनेत्याहननं दुन्दुभ्याघातार्थो दण्डस्तत्र ताडनरूपेणोत्पन्न आहनन्यः। धृष्णुर्युद्धे पलायनरहितः। प्रमृशः परसैन्यवृत्तान्तपरामर्शकः। दूतस्तद्वृत्तान्तज्ञापनकुशलः। प्रहितः स्वामिना प्रेषितः पुरुषः। निषङ्गी खड्ग[1]युक्तः। इषुधिमान्बाणाधारयुक्तः। तीक्ष्णा इषवो यस्यासौ तीक्ष्णेषुः। बहून्यायुधानि यस्य सन्तीत्यायुधी। शोभनमायुधं त्रिशूलरूपं यस्यासौ स्वायुधः। शोभनं धन्व पिनाकरूपं यस्यासौ सुधन्वा। स्रुतिः पादसंचारमात्रयोग्यः क्षुद्रमार्गस्तमर्हतीति स्रुत्यः। पन्था रथाश्वादिसंचारक्षमः प्रौढो मार्गस्तमर्हतीति पथ्यः। कुत्सितमटति जलमत्रेति काटोऽल्पप्रवाहयोग्यः कुल्याप्रदेशस्तत्र जलरूपेण भवः काट्यः। यस्मिन्प्रदेशे पर्वताग्राज्जलं न्यग्भावेन पतति स प्रदेशो नीपस्तत्र जलरूपेणावस्थितो नीप्यः। सूदः कर्दमप्रदेशस्तत्रत्यजलरूपः सूद्यः। सरः प्रसिद्धं, तत्रत्यजलरूपः सरस्यः। नदीगतजलरूपो नाद्यः। अल्पसरो वेशन्तस्तत्रत्यजलरूपो वैशन्तः। कूपस्थजलरूपः कूप्यः। अवटस्थजलरूपोऽवट्यः। वर्षजलरूपो वर्ष्यः। वर्षनिरपेक्षजलरूपोऽवर्ष्यः। मेघेषु स्थितो मेघ्यः। विद्युता स[2]ह चरतीति विद्युत्यः। ईध्रं निर्मलत्वेन दीप्यमानं शरदभ्रं तत्र भव ईध्रियः। आतपेन सह वृष्ट आतप्यः। वातेन सह वृष्टो वात्यः। रिष्यन्ति विनश्यन्ति भूतान्यत्रेति रेष्मः प्रलयकालस्तत्र भवः शर्करापाषाणादिसहितो वृष्टिजलविशेषो रेष्मियः। वस्तु धनं ( न ) गवाश्वादिपदार्थरूपं तत्र तत्कार्यरूपेणावस्थितो वास्तव्यः। गृहनिर्माणार्था भूमिर्वास्तु[3] तत्पालको वास्तुपः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

१ ख. च. खड्गहस्तः। २ ख. च. °ह चरितो वि°। ३ ख. च. °स्तुस्तत्पा°।

( अथ चतुर्थाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः । )

---

नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमः शङ्गाय च पशुपतये च नम उग्राय च भीमाय च नमो अग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय नमः शंभवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च ( १ ) नमस्तीर्थ्याय च कूल्याय च नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नम आतार्याय चाऽऽलाद्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय च प्रवाह्याय च ( २ ) ॥

( शिवतराय च त्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ चतुर्थकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः । )

---

नमः । सोमाय । च । रुद्राय । च । नमः । ताम्राय । च । अरुणाय । च । नमः । शङ्गाय । च । पशुपतय इति पशु—पतये । च । नमः । उग्राय ।

च। भीमार्य। च। नमः। अग्रेवधायेत्यंग्रे—वधार्य। च। दूरेवधायेति दूरे—वधार्य। च। नमः। हन्त्रे। च। हनीयसे। च। नमः। वृक्षेभ्यः। हरिकेशेभ्य इति हरि—केशेभ्यः। नमः। तारार्य। नमः। शंभव इति शं—भवे। च। मयोभव इति मयः—भवे। च। नमः। शंकरायेति शं—करार्य। च। मयस्करायेति मयः—करार्य। च। नमः। शिवार्य। च। शिवतरायेति शिव—तराय। च (१)। नमः। तीर्थ्याय। च। कूल्याय। च। नमः। पार्याय। च। अवार्याय। च। नमः। प्रतरणायेति प्र—तरणाय। च। उत्तरणायेत्युत्—तरणाय। च। नमः। आतार्यायेत्या—तार्याय। च। आलाद्यायेत्या—लाद्याय। च। नमः। शष्प्याय। च। फेन्याय। च। नमः। सिकत्याय। च। प्रवाह्यायेति प्र—वाह्याय। च (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके
पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ चतुर्थकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः। )

---

सप्तमेऽनुवाके यान्यन्यतरतोनमस्काराणि यजूंष्युक्तानि तेभ्योऽन्यानि कानिचिदन्यतरतोनमस्काराण्यष्टमेऽनुवाके कथ्यन्ते ॥

तत्र विद्यमानानि सप्तदश यजूंष्याह—

नमः सोमाय च रुद्राय च नमस्ताम्राय चारु- णाय च नमः शङ्गाय च पशुपतये च नम उग्राय च भीमाय च नमो अग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय नमः शंभवे च मयोभवे च नमः शंकराय च मयस्क- राय च नमः शिवाय च शिवतराय च नमस्ती- र्थ्याय च कूल्याय च नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नम आतार्याय चाऽऽलाद्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय च प्रवाह्याय च ॥, इति ॥

उमया सह वर्तत इति सोमः । रुद्रोदनहेतुर्दुःखं तद्द्रावयति विनाशयतीति रुद्रः । आदित्यरूपेणोदयकालेऽत्यन्तं रक्तस्ताम्रः । उदयादूर्ध्वमीषद्रक्तोऽरुणः । शं सुखं गमयति प्रापयतीति शंगः । पशूनां पालयिता पशुपतिः । विरोधिनो नाशयितुं क्रोधयुक्त उग्रः । दर्शनमात्रेण विरोधिनां भयहेतुर्भीमः । अग्रे पुरतो वधोऽस्येत्यग्रेवधः । एवं दूरेवधः । पुरतो दूरे वा वर्तमानं विरोधिनमनायासे- नैव हन्तीत्यर्थः । लोकेऽपि यो यत्र विरोधिनं हन्ति तत्र तद्रूपेणायमेव हन्ता । अत एवेश्वरेणार्जुनं प्रत्युक्तम्—

" मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् " इति ।

संहारकालेऽतिशयेन च सर्वेषां हन्ता हनीयान् । हरितवर्णानि केशस- दृशानि पर्णानि येषां ते हरिकेशास्तथाविधा ये वृक्षाः कल्पतरुप्रभृतयस्त- द्रूपोऽयं रुद्र इत्यर्थः । तारः प्रणवप्रतिपाद्यः । शं सुखं भावयत्युत्पादयतीति शंभुः । मयः सुखं भावयतीति मयोभूः । एकं विषयसुखमपरं मोक्षसुखमिति तयोर्विवेकः । पित्रादिरूपेण शं लौकिकसुखं करोतीति शंकरः । आचार्य- शास्त्रादिरूपेण मोक्षसुखं करोतीति मयस्करः । साक्षात्सुखकारित्वमेताभ्यां पदा- भ्यामुक्तमेतन्मुखेन कारयितृत्वं पूर्वाभ्यां पदाभ्यामिति विवेकः । शिवः कल्या-

( चित्यग्निहोमोक्तिः )

णरूपः स्वयं निष्कल्मष इत्यर्थः। अतिशयेन शिवः शिवतरः स्वभक्तानपि निष्कल्मषान्करोतीत्यर्थः। तीर्थे प्रयागादौ संनिहितस्तीर्थ्यः। कूले नदीतीरे प्रतिष्ठापितलिङ्गरूपेणात्रतिष्ठत इति कूल्यः। पारे संसारसमुद्रस्य परतीरे मुमुक्षुभिर्ध्येयत्वेनावतिष्ठत इति पार्यः। अवारेऽर्वाक्तीरे संसारमध्ये काम्यफलप्रदत्वेनावतिष्ठत इत्यवार्यः। प्रकृष्टेन मन्त्रजपादिरूपेण पापतरणहेतुः प्रतरणः। तत्त्वज्ञानरूपेण कृत्स्नसंसारोत्तरणहेतुरुत्तरणः। संभवत्यपि संसारोत्तरणहेतौ तत्त्वज्ञाने तदुपेक्ष्य काम्यकर्मानुष्ठानेन संसारे पुनरागमनमातारस्तमर्हतीत्यातार्यः, काम्यफलप्रद इत्यर्थः। अलं संपूर्णं यथा भवति तथा कर्मफलमत्तीत्यलादो जीवः। "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति श्रुतेः। तस्य प्रेरकत्वेन तत्संबन्धित्वादालाद्यः। शष्पं बालतृणं गङ्गातीरादावुत्पन्नं कुशाङ्कुरादि तदर्हतीति शष्प्यः। नदीमध्यगतं फेनमर्हतीति फेन्यः। सिकतामर्हतीति सिकत्यः। प्रवाहमर्हतीति प्रवाह्यः। यः पुरुषः श्रद्धालुः सन्स्नानादितत्परो निरन्तरं गङ्गादितीरे वर्तते तद्रूप इति शष्प्यादिशब्दानां चतुर्णां तात्पर्यार्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः॥ ८॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः। )

---

नम॑ इरि॒ण्या॑य च प्रप॒थ्या॑य च॒ नमः॑ किꣳशि॒ला॑य च॒ क्षय॑णाय च॒ नमः॑ कप॒र्दिने॑ च पुल॒स्तये॑ च॒ नमो॒ गोष्ठ्या॑य च॒ गृह्या॑य च॒ नम॒स्तल्प्या॑य च॒ गेह्या॑य च॒ नमः॑ काट्या॑य च गह्व॒रेष्ठाय॑ च॒ नमो॑ ह्रद॒य्या॑य च निवे॒ष्प्या॑य च॒ नमः॑ पाꣳस॒व्या॑य च रज॒स्या॑य च॒ नमः॒ शुष्क्या॑य च हरि॒त्या॑य च॒ नमो॒ लो-

प्याय चोलप्याय च ( १ ) नमं ऊर्व्याय च सूर्म्याय च नमः पर्ण्याय च पर्णशद्याय च नमोऽपगुरमाणाय चाभिघ्नते च नमं आक्खिदते च प्रक्खिदते च नमो वः किरिकेभ्यो देवानाः हृदयेभ्यो नमो विक्षीणकेभ्यो नमो विचिन्वत्केभ्यो नमं आनिर्हतेभ्यो नमं आमीवत्केभ्यः ( २ ) ।

( उलप्याय च त्रयंस्त्रिंः शच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः । )

---

नमः । इरिण्याय । च । प्रपथ्यायेति प्र—पथ्याय । च । नमः । किःशिलाय । च । क्षयणाय । च । नमः । कपर्दिने । च । पुलस्तये । च । नमः । गोष्ठ्यायेति गो—स्थ्याय । च । गृह्याय । च । नमः । तल्प्याय । च । गेह्याय । च । नमः । काट्याय । च । गह्वरेष्ठायेति गह्वरे—स्थाय । च । नमः । ह्रदय्याय । च । निवेष्प्यायेति नि—वेष्प्याय । च । नमः । पाःसव्याय । च । रजस्याय । च । नमः ।

शुष्क्यांय । च । हरित्यांय । च । नमः । लोप्यांय । च । उलप्यांय । च ( १ ) । नमः । ऊर्व्यांय । च । सूर्म्यांय । च । नमः । पर्ण्यांय । च । पर्णशद्यांयेतिं पर्ण—शद्यांय । च । नमः । अपगुरमांणायेत्यंप—गुरमांणाय । च । अभिघ्नत इत्यंभि—घ्नते । च । नमः । आक्खिदत इत्यां—खिदते । च । प्रक्खिदत इतिं प्र—खिदते । च । नमः । वः । किरिकेभ्यः । देवानांम् । हृदयेभ्यः । नमः । विक्षीणकेभ्य इतिं वि—क्षीणकेभ्यः । नमः । विचिन्वत्केभ्य इतिं वि—चिन्वत्केभ्यः । नमः । आनिर्हतेभ्य इत्यांनिः—हतेभ्यः । नमः । आमीवत्केभ्य इत्यां—मीवत्केभ्यः(२) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ चतुर्थकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः । )

---

अष्टमानुवाके यान्यन्यतरतोनमस्काराणि यजूंष्युक्तानि तेभ्योऽप्यन्यानि कानिचिन्नवमेऽनुवाक उच्यन्ते ॥

तत्र विद्यमानान्येकोनविंशतिसंख्याकानि यजूंष्याह—

नम इरिण्याय च प्रपथ्याय च नमः किंशिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नमो गोष्ठ्याय च गृह्याय च नमस्तल्प्याय च गेह्याय च नमः काट्याय च

गह्वरेष्ठाय च नमो ह्रदय्याय च निवेष्प्याय च नमः पाꣳसव्याय च रजस्याय च नमः शुष्क्याय च हरित्याय च नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्म्याय च नमः पर्ण्याय च पर्णशद्याय च नमोऽपगुरमाणाय चाभिघ्नते च नम आक्खिदते च प्रक्खिदते च नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यो नमो विक्षीणकेभ्यो नमो विचिन्वत्केभ्यो नम आनिर्हतेभ्यो नम आमीवत्केभ्यः ॥ , इति ॥

इरिणमूषरं तत्र भव इरिण्यः । प्रपथो बहुभिः सेवितो मार्गस्तत्र भवः प्रपथ्यः । कुत्सिताः क्षुद्राः शिला यत्र प्रदेशे तादृशः शार्करिलः प्रदेशः किंशिलः । क्षयणो निवासयोग्यो देशः । कपर्दी जटाबन्धवान् । भक्तानां पुरतस्तिष्ठतीति पुलस्तिः । गवां स्थानं गोष्ठं तत्र भवो गोष्ठ्यः । गृहे भवो गृह्यः । तल्पे खट्वायां शयानस्तल्प्यः । गेहे प्रासादे भवो गेह्यः । कुत्सितमटति कण्टकलतादिपूर्णतया दुष्प्रवेशत्वं प्राप्नोतीति दुर्गमोऽरण्यविशेषः काटस्तत्र भवः काट्यः । गह्वरे विषमे गिरिगुहादौ तिष्ठतीति गह्वरेष्ठः । ह्रदेष्वगाधजलेषु भवो ह्रदय्यः । निवेष्पं नीहारजलं तत्र भवो निवेष्प्यः । पांसुषु परमाणुष्ववस्थितः पांसव्यः । रजसि विस्पष्टायां धूल्यामवस्थितो रजस्यः । शुष्केषु काष्ठेषु भवः शुष्क्यः । हरितमार्द्रं तत्र भवो हरित्यः । लुप्यते तृणादिकमस्मिन्निति लोपः कठिनप्रदेशस्तत्र भवो लोप्यः । उलपा बल्वजतृणादयस्तत्र भव उलप्यः । उर्व्यां पृथिव्यां भव ऊर्व्यः । शोभना ऊर्मयो यस्यां नद्यां सेयं सूर्मिस्तत्र भवः सूर्म्यः । पर्णेषु पत्रेषु भवः पर्ण्यः । शुष्काणां पर्णानां संघातः पर्णशदस्तत्र भवः पर्णशद्यः । अपगुरमाण उद्यतायुधः । अभिघ्नन्प्रहरन् । आक्खिदन्नीषत्खेदयन् । प्रक्खिदन्नत्यन्तं खेदयन् । किरन्ति भक्तेभ्यो धनानीति किरिका उदारा रुद्रावताराः । ते च देवानां हृदयभूताः सर्वदेवप्रियत्वात्तादृशेभ्यो वो युष्मभ्यं नमः । क्षीणकेभ्यो विपरीता विक्षीणकाः कदाचिदपि क्षयरहिता इत्यर्थः । विचिन्वन्त्यपेक्षितमर्थं संपादयन्तीति विचिन्वत्काः । आ समन्तान्निःशेषेण हतं पापं यैस्त आनिर्हताः । आ समन्तान्मीवन्ति स्थूलीभावं प्राप्नुवन्तीत्यामीवत्काः ।

( चित्यग्निहोमोक्तिः )

अत्र विक्षीणकविचिन्वत्कानिर्हतामीवत्केषु देवानाꣳ हृदयेभ्य इत्यनुषज्जते। पञ्चमानुवाकमारभ्य नवमान्तेष्वनुवाकेष्वन्यतरतोनमस्काराणि बहूनि यजूंष्यभिहितानि। तैः सर्वैः परमेश्वरस्य सार्वात्म्यं प्रतिपादयितुमेकैकेन यजुषा स्थावरं जङ्गमं चैकैकं रूपमभिहितम्। अनुवाकभेदस्तु क्रतोर्बहिः प्रयोगे मन्त्रभेदाभिप्रायेण द्रष्टव्यः। एकैकोऽनुवाक एकैको मन्त्रः। तत्र तस्य पुरश्चरणादिप्रकारस्तु रुद्रकल्पेऽभिधास्यते।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके
नवमोऽनुवाकः ॥ ९ ॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः । )

---

द्रापे अन्धसस्पते दरिद्रन्नीललोहित। एषां पुरुषाणामेषां पशूनां मा भेर्माऽरो मो एषां किं चनाऽऽममत्। या ते रुद्र शिवा तनूः शिवा विश्वाहभेषजी। शिवा रुद्रस्य भेषजी तया नो मृड जीवसे। इमाꣳ रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतिम्। यथा नः शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन् ( १ ) अनातुरम्। मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते। यच्छं च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ। मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम्। मा नो

वधीः पितरं मोत मातरं प्रिया मा नस्तनुवः ( २ ) रुद्र रीरिषः । मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते । आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मे ते अस्तु । रक्षा च नो अधि च देव ब्रूह्यधा च नः शर्म यच्छ द्विबर्हाः । स्तुहि ( ३ ) श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् । मृडा जरित्रे रुद्र स्तवानो अन्यं ते अस्मन्नि वपन्तु सेनाः । परि णो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः । अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय । मीढुष्टम शिवतम शिवो नः सुमना भव । परमे वृक्ष आयुधं निधाय कृत्तिं वसान आ चर पिनाकम् ( ४ ) बिभ्रदा गहि । विकिरिद विलोहित नमस्ते अस्तु भगवः । यास्ते सहस्रं हेतयोऽन्यमस्मन्नि वपन्तु ताः । सहस्राणि सहस्रधा बाहुवोस्तव हेतयः । तासामीशानो भगवः पराचीना मुखा कृधि ( ५ ) ॥

( विल्वमिहोमोक्तिः )

( अस्मिꣳस्तनुवः स्तुहि पिनाकमेकान्नत्रिꣳशच्च )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः । )

---

द्रापे । अन्धसः । पते । दरिद्रत् । नीलंलोहितेति नीलं—लोहित । एषाम् । पुरुषाणाम् । एषाम् । पशूनाम् । मा । भेः । मा । अरः । मो इति । एषाम् । किम् । चन । आममत् । या । ते । रुद्र । शिवा । तनूः । शिवा । विश्वाहभेषजीति विश्वाहं—भेषजी । शिवा । रुद्रस्य । भेषजी । तया । नः । मृड । जीवसे । इमाम् । रुद्राय । तवसे । कपर्दिने । क्षयद्वीरायेति क्षयत्—वीराय । प्रेति । भरामहे । मतिम् । यथा । नः । शम् । असत् । द्विपद इति द्वि—पदे । चतुष्पद इति चतुः—पदे । विश्वम् । पुष्टम् । ग्रामे । अस्मिन् ( १ ) । अनातुरमित्यना—तुरम् । मृड । नः । रुद्र । उत । नः । मयः । कृधि । क्षयद्वीरायेति क्षयत्—वीराय । नमसा । विधेम । ते । यत् । शम् । च । योः । च । मनुः । आयज इत्या—यजे । पिता । तत् । अश्याम । तव । रुद्र । प्रणीताविति प्र—नीतौ । मा । नः । महा-

न्तम् । उत । मा । नः । अर्भकम् । मा । नः । उक्ष-
न्तम् । उत । मा । नः । उक्षितम् । मा । नः । वधीः ।
पितरम् । मा । उत । मातरम् । प्रियाः । मा । नः ।
तनुवः ( २ ) । रुद्र । रीरिषः । मा । नः । तोके ।
तनये । मा । नः । आयुषि । मा । नः । गोषु ।
मा । नः । अश्वेषु । रीरिषः । वीरान् । मा । नः ।
रुद्र । भामितः । वधीः । हविष्मन्तः । नमसा ।
विधेम । ते । आरात् । ते । गोघ्न इति गो—घ्ने ।
उत । पूरुषघ्न इति पूरुष—घ्ने । क्षयद्वीरायेति क्षय-
त्—वीराय । सुम्नम् । अस्मे इति । ते । अस्तु ।
रक्ष । च । नः । अधीति । च । देव । ब्रूहि । अध ।
च । नः । शर्म । यच्छ । द्विबर्हा इति द्वि—बर्हाः ।
स्तुहि ( ३ ) । श्रुतम् । गर्तसदमिति गर्त—सदम् ।
युवानम् । मृगम् । न । भीमम् । उपहत्नुम् । उग्र-
म् । मृड । जरित्रे । रुद्र । स्तवानः । अन्यम् । ते ।
अस्मत् । नीति । वपन्तु । सेनाः । परीति । नः ।
रुद्रस्य । हेतिः । वृणक्तु । परीति । त्वेषस्य । दुर्म-
तिरिति दुः—मतिः । अघायोरित्यघ—योः । अवेति ।
स्थिरा । मघवद्भ्य इति मघवत्—भ्यः । तनुष्व ।
मीढ्वः । तोकाय । तनयाय । मृडय । मीढुष्टमेति

मीढुः—तम। शिवंतमेति शिवं—तम। शिवः। नः। सुमना इति सु—मनाः। भव। परमे। वृक्षे। आयुधम्। निधायेति नि—धाय। कृत्तिम्। वसानः। एति। चर। पिनाकम् (४)। बिभ्रत्। एति। गहि। विकिरिदेति वि—किरिद। विलोहितेति वि—लोहित। नमः। ते। अस्तु। भगव इति भग—वः। याः। ते। सहस्रम्। हेतयः। अन्यम्। अस्मत्। नीति। वपन्तु। ताः। सहस्राणि। सहस्रधेति सहस्र—धा। बाहुवोः। तव। हेतयः। तासाम्। ईशानः। भगव इति भग—वः। पराचीना। मुखा। कृधि (५)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः॥ १०॥

---

(अथ चतुर्थकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः।)

---

द्वितीयमारभ्य नवमान्तेष्वनुवाकेषु विविधानि यजूंष्युभयतोनमस्काराण्यन्यतरतोनमस्काराणि चोक्तानि। अथ दशमेऽनुवाक ऋग्रूपा मन्त्रा उच्यन्ते॥

तत्र प्रथमामृचमाह—

द्रापे अन्धसस्पते दरिद्रन्नीललोहित।
एषां पुरुषाणामेषां पशूनां मा भेर्माऽरो
मो एषां किं चनाऽऽममत्।, इति।

द्रापयति कुत्सितां गतिं प्रापयतीति द्रापिः पापिनो नरकप्रदानेन क्लेश-

यतीत्यर्थः। अन्धोऽन्नं तस्य पतिः पालकः, भक्तानामन्नं पालयतीत्यर्थः। दरिद्रदकिंचनः स्वयं विरक्तः केवल इत्यर्थः। " एकमेवाद्वितीयं ब्रह्म नेह नानाऽस्ति किंचन " इति श्रुतेः। कण्ठे नीलोऽन्यत्र लोहित इति नीललोहितः। एतैः शब्दैः संबोध्यमान हे रुद्रैषामस्मदीयानां पुरुषाणां पुत्रपौत्रादीनामेषामस्मदीयानां पशूनां गोमहिष्यादीनां च समूहं मा भेर्मा भीषय। एषामुक्तानां सर्वेषां मध्ये किंचनैकमपि वस्तु माऽरो मा गच्छतु मा विनश्यत्वित्यर्थः। मो आममन्मैव रुग्णमभूत् ॥

अथ द्वितीयामाह—

या ते रुद्र शिवा तनूः शिवा विश्वा-
हभेषजी । शिवा रुद्रस्य भेषजी
तथा नो मृड जीवसे ।, इति।

हे रुद्र ते त्वदीया शिवा शान्ता तनूर्या विद्यते तया तन्वा नोऽस्माञ्जीवसे जीवयितुं मृड सुखय। कथं तन्वाः शिवत्वं, तदुच्यते—यस्मादेवं विश्वाहभेषजी सर्वेष्वहःसु रोगदारिद्र्यादेरौषधवद्विनाशहेतुस्तस्माच्छिवा। किंच, यस्माद्रुद्रस्य तादात्म्यप्राप्तये भेषज्यौषधरूपा ज्ञानप्रदानेन जन्ममरणादिदुःखं निवारयति तस्मादप्येषा शिवा ॥

अथ तृतीयामाह—

इमाꣳ रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र
भरामहे मतिम् । यथा नः शमसद्द्विपदे चतु-
ष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ।, इति।

यथा येन प्रकारेण नोऽस्मदीयाय द्विपदे पुत्रपौत्रादिरूपाय मनुष्याय चतुष्पदे गोमहिष्यादिरूपाय पशवे च शमसत्सुखं स्यात्। किंचास्मिन्ग्रामे विश्वं सर्वं प्राणिजातं पुष्टं सुखपूर्णमनातुरमुपद्रवरहितं च यथा भवति तथा वयं रुद्राय रुद्रार्थं इमां मतिं पूजाध्यानादिविषयां बुद्धिं प्रभरामहे प्रकर्षेण पोषयामः। कीदृशाय रुद्राय, तवसे बलयुक्तायास्मदपेक्षितं कर्तुं समर्थायेत्यर्थः। कपर्दिने जटाबन्धयुक्ताय तापसवेषायेत्यर्थः। क्षयद्वीराय क्षीयमाणप्रतिपक्षपुरुषायान्यथाभानरूपपापविनाशहेतव इत्यर्थः ॥

अथ चतुर्थीमाह—

( चित्यग्निहोमोक्तिः )

मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय
नमसा विधेम ते। यच्छं च योश्च मनुरायजे
पिता तदश्याम तव रुद्र प्रणीतौ।, इति।

हे रुद्र नोऽस्मान्मृडयेह लोके सुखय। उतापि च नोऽस्माकं परलोकेऽपि मयः सुखं कृधि कुरु। क्षयद्वीराय क्षपितास्मदीयपापाय ते तुभ्यं नमसा नमस्कारेण विधेम परिचरेम। पिता पालको मनुः प्रजापतिः शं च सुखं च योश्च दुःखपृथग्भावं च यदायजे यत्किंचित्संपादितवांस्तत्सर्वं वयं हे रुद्र तव प्रणीतौ प्रणये स्नेहातिशये सत्यश्याम प्राप्नुयाम॥

अथ पञ्चमीमाह—

मा नो महान्तमुत मा नो अर्भकं मा
न उक्षन्तमुत मा न उक्षितम्। मा
नो वधीः पितरं मोत मातरं प्रिया
मा नस्तनुवो रुद्र रीरिषः।, इति।

हे रुद्र नोऽस्मदीयं महान्तं स्थविरं पुरुषं मा रीरिषो मा हिंसीः। उतापि च नोऽस्मदीयमर्भकं बालं मा रीरिषः। किं च नोऽस्मदीयमुक्षन्तं सेचनसमर्थं युवानं पुरुषं मा रीरिषः। उतापि च नोऽस्मदीयमुक्षितं गर्भस्थं पुरुषं मा रीरिषः। नोऽस्मदीयं पितरं मा वधीः। उतापि च मातरं मा वधीः। नोऽस्मदीयाः प्रियाश्च तनुवः शरीराणि मा रीरिषः॥

अथ षष्ठीमाह—

मा नस्तोके तनये मा न आयुषि
मा नो गोषु मा नो अश्वेषु रीरिषः।
वीरान्मा नो रुद्र भामितो वधीर्ह-
विष्मन्तो नमसा विधेम ते।, इति।

हे रुद्र नोऽस्मदीये तोकेऽपत्यमात्रे तनये विशेषतः पुत्रे मा रीरिषो हिंसां मा कुरु। नोऽस्मदीय आयुषि मा रीरिषः। नोऽस्मदीयेषु गोषु मा रीरिषः। नोऽस्मदीयेष्वश्वेषु मा रीरिषः। भामितः क्रुद्धः सन्नोऽस्मदीयान्वीरान्भृत्यान्मा वधीः। वयं हविष्मन्तो हविर्युक्तास्ते तुभ्यं नमसा नमस्कारेण विधेम परिचरेम॥

अथ सप्तमीमाह—

आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्न-
मस्मे ते अस्तु । रक्षा च नो अधि च देव
ब्रूह्यधा च नः शर्म यच्छ द्विबर्हाः ।, इति ।

गोघ्ने गोघ्नस्य पूरुषघ्ने पुत्रपौत्रादिपुरुषघ्नस्य क्षयद्वीराय क्षपितभृत्यस्य ते तवोग्ररूपमारादस्तु दूरे तिष्ठतु । यत्तु सुम्नं त्वदीयं सुखकरं रूपं तदस्मे अस्मास्वस्तु । घोराऽन्या शिवाऽन्येति यच्छरीरद्वयमुक्तं तयोर्द्वयोर्मध्ये यद्घोरं शरीरं तद्दूरे गच्छतु । शिवं शरीरमत्राऽऽगच्छत्वित्यर्थः । किं च नोऽस्मान्रक्ष सर्वतः पालय । किं च हे देवाधिब्रूह्यस्मानितरेभ्यो यजमानेभ्योऽधिकान्देवेषु ब्रूहि । अध चापि च द्विबर्हा द्वयोर्लोकयोर्वर्धयिता त्वं शर्म यच्छ सुखं देहि ॥

अथाष्टमीमाह—

स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीम-
मुपहत्नुमुग्रम् । मृडा जरित्रे रुद्र स्तवानो
अन्यं ते अस्मन्नि वपन्तु सेनाः ।, इति ।

हे मदीयवचः श्रुतं प्रसिद्धं रुद्रं स्तुहि । कीदृशम्, गर्तसदं गर्तसदृशे हृदयपुण्डरीके सर्वदा तिष्ठन्तम् ।

" ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति " इति स्मृतेः ॥

युवानं नित्यतरुणम् । उपहत्नुमुग्रं प्रलयकाले सर्वं जगत्संहर्तुमुग्ररूपिणम् । तत्र दृष्टान्तः—भीमं मृगं न भयंकरं सिंहमिव, यथा गजविदारणायोग्रः सिंहो भवति तद्वत् । हे रुद्र स्तवानोऽस्मद्वचसा स्तूयमानो जरित्रे जरणशीले दिने दिने क्षीयमाणेऽस्मच्छरीरे मृड सुखं कुरु । ते त्वदीयाः सेना अस्मदन्यं वैरिणं निवपन्तु विनाशयन्तु ॥

अथ नवमीमाह—

परि णो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य
दुर्मतिरघायोः । अव स्थिरा मघवद्भ्यस्त-
नुष्व मीढ्वस्तोकाय तनयाय मृडय ।, इति ।

हन्यतेऽनयेति हेतिरायुधं, रुद्रस्य हेतिर्नोऽस्मान्परिवृणक्तु परितो वर्जितान्करोतु कदाचिदपि मा विध्यत्वित्यर्थः । त्वेषस्य क्रोधोज्ज्वलितस्याघायोरघं पापं प्रहाररूपमिच्छतो रुद्रस्य या दुर्मतिरुग्रबुद्धिः साऽप्यस्मान्परिवृ-

(चित्यग्निहोमोक्तिः)

णकु। स्थिरा विरोधिनाशनाय या दृढा दुर्मतिरस्ति तां मघवद्भ्यो हविर्लक्षणान्नयुक्तेभ्यो यजमानेभ्यः सकाशादवतनुष्वावततामपनीतां कुरु। हे मीढ्वः कामानामभिवर्षक तोकायास्मत्पुत्राय तनयाय तदीयपुत्राय च मृडय सुखं देहि॥

अथ दशमीमाह—

मीढुष्टम शिवतम शिवो नः सुमना भव।
परमे वृक्ष आयुधं निधाय कृत्तिं वसान
आ चर पिनाकं बिभ्रदा गहि।, इति।

हे मीढुष्टमातिशयेन सेचक कामानामभिवर्षक, हे शिवतमातिशयेन शान्तस्वरूप नोऽस्मान्प्रति शिवः शान्तः सुमनाः सौमनस्येन स्नेहेन युक्तश्च भव। आयुधं त्रिशूलादिकं परमेऽत्युन्नते वृक्षे वटाश्वत्थादिरूपे निधाय यथाऽस्माभिर्न दृश्यते तथाऽवस्थाप्य कृत्तिं वसानो व्याघ्रचर्ममात्रं परिदधान आचरास्मदाभिमुख्येनाऽऽगच्छ। आगच्छन्नपि पिनाकं विभ्रद्भूषणार्थं धनुर्मात्रं हस्ते धारयन्बाणादिकं परित्यज्याऽऽगह्यागच्छ॥

अथैकादशीमाह—

विकिरिद विलोहित नमस्ते अस्तु भगवः। यास्ते सहस्रं हेतयोऽन्यमस्मन्नि वपन्तु ताः।, इति।

कीर्यन्ते भक्तानां संनिधौ बहुधा प्रक्षिप्यन्त इति किरयो धनानि तानि ददातीति किरिदः। विशेषेण किरिदो विकिरिदः। विलोहितो लौहित्यरहितः श्वेत इत्यर्थः। अत एव मान्त्रिकाः पञ्चाक्षरध्याने स्मरन्ति—

"ध्येयो मुक्तापरागामृतरसकलिताद्रिप्रभः" इति।

यद्वा विशेषेण लोहितो विलोहितः॥

अत एवाष्टाक्षरध्याने स्मरन्ति—"काञ्चनाभो ध्येयः पद्मासनस्थः" इति॥

भगवो भगवन्षड्गुणसंपन्न। भगशब्दस्य षड्गुणवाचित्वं स्मर्यते—

"ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" इति॥

प्रकारान्तरेण भगवच्छब्दनिर्वचनं च—

"उत्पत्तिं च विनाशं च भूतानामागतिं गतिम्।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" इति॥

यथोक्तविशेषणत्रयविशिष्ट हे रुद्र ते तुभ्यं नमोऽस्तु । ते तव सहस्रं सहस्रसंख्याका हेतयो यान्यायुधानि सन्ति ताः सर्वा अस्मदन्यं विरोधिनं निवपन्तु विनाशयन्तु ॥

अथ द्वादशीमाह—

सहस्राणि सहस्रधा बाहुवोस्तव
हेतयः । तासामीशानो भगवः
पराचीना मुखा कृधि ।, इति ॥

हे रुद्र तव बाहुवोर्हस्तयोर्हेतयः सहस्रधा सहस्रप्रकाराः सहस्राणि सहस्रसंख्याका विद्यन्ते । धनुः खड्गस्त्रिशूलमित्येवं जातिभेदेन सहस्रप्रकारत्वम् । एकैकस्यां जातौ बहवः सहस्रसंख्याकाः । हे भगवः षड्गुणोपेत त्वमीशानः समर्थः संस्तासां हेतीनां मुखा मुखानि शल्यानि पराचीना कृध्यस्मत्तः पराङ्मुखानि कुरु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके
दशमोऽनुवाकः ॥ १० ॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः । )

---

सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम् ।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि । अ-
स्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि । नील-
ग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः ।
नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा उपश्रिताः ।
ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः ।
ये भूतानामधिपतयो विशिखासः कपर्दिनः ।
ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ।

( चित्यग्निहोमोक्तिः )

ये प॒थां प॑थि॒रक्ष॑य ऐलबृ॒दा य॑व्यु॒धः। ये ती॒र्थानि॑ (१) प्र॒चर॑न्ति सृ॒काव॑न्तो निष॒ङ्गिणः॑। य ए॒ताव॑न्तश्च भू॒यां॑सश्च॒ दिशो॑ रु॒द्रा वि॑त॒स्थि॒रे। तेषा॑ं सहस्रयोज॒नेऽव॒ धन्वा॑नि तन्मसि। नमो॑ रु॒द्रेभ्यो॒ ये पृ॑थि॒व्यां येऽन्तरि॑क्षे॒ ये दि॒वि येषा॒मन्नं॒ वातो॑ व॒र्षमिष॑व॒स्तेभ्यो॒ दश॒ प्राची॒र्दश॑ द॒क्षिणा दश॑ प्र॒ती॒ची॒र्दशोदी॑ची॒र्दशो॒र्ध्वास्तेभ्यो॒ नम॒स्ते नो॑ मृडयन्तु॒ ते यं द्वि॒ष्मो यश्च॑ नो॒ द्वेष्टि॒ तं वो॒ जम्भे॑ दधामि ( २ )॥

( ती॒र्थानि॒ यश्च॒ षट्च॑। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः॥ ११॥

---

नम॑स्ते॒ नमो॒ हिर॑ण्यवाहवे॒ नमः॒ सह॑मानाय॒ नम॒ आव्या॒धिनी॑भ्यो॒ नमो॑ भ॒वाय॑ च॒ नमो॑ ज्येष्ठाय॑ च॒ नमो॑ दुन्दु॒भ्याय॑ च॒ नमः॒ सोमा॑य च॒ नम॒ इरि॒ण्याय च॒ द्रापे॑ स॒हस्रा॒ण्येका॑दश॥ ११॥

नम॑स्ते॒ नमो॑ भ॒वाय॑ च॒ द्रोपे॑ स॒प्तवि॑ंशतिः॥ २७॥

हरिः॑ ॐ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके पञ्चमः प्रपाठकः॥ ५॥

---

( अथ चतुर्थाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः। )

---

स॒हस्रा॑णि। स॒ह॒स्र॒श इति॑ सहस्र—शः। ये।

रुद्राः । अधीति । भूम्याम् । तेषाम् । सहस्रयोजन इति सहस्र—योजने । अवेति । धन्वानि । तन्मसि । अस्मिन् । महति । अर्णवे । अन्तरिक्षे । भवाः । अधि । नीलग्रीवा इति नील—ग्रीवाः । शितिकण्ठा इति शिति—कण्ठाः । शर्वाः । अधः । क्षमाचराः । नीलग्रीवा इति नील—ग्रीवाः । शितिकण्ठा इति शिति—कण्ठाः । दिवम् । रुद्राः । उपश्रिता इत्युप—श्रिताः । ये । वृक्षेषु । सस्पिञ्जराः । नीलग्रीवा इति नील—ग्रीवाः । विलोहिता इति वि—लोहिताः । ये । भूतानाम् । अधिपतय इत्यधि—पतयः । विशिखास इति वि—शिखासः । कपर्दिनः । ये । अन्नेषु । विविध्यन्तीति वि—विध्यन्ति । पात्रेषु । पिबतः । जनान् । ये । पथाम् । पथिरक्षय इति पथि—रक्षयः । ऐलबृदाः । यव्युधः । ये । तीर्थानि (१) । प्रचरन्तीति प्र—चरन्ति । सृकावन्त इति सृका—वन्तः । निषङ्गिण इति नि—सङ्गिनः । ये । एतावन्तः । च । भूयांसः । च । दिशः । रुद्राः । वितस्थिर इति वि—तस्थिरे । तेषाम् । सहस्रयोजन इति सहस्र—योजने । अवेति । धन्वानि । तन्मसि । नमः । रुद्रेभ्यः । ये । पृथिव्याम् । ये । अन्तरिक्षे ।

( चित्यग्निहोमोक्तिः )

ये । दिवि । येषाम् । अन्नम् । वातः । वर्षम् । इषं-वः । तेभ्यः । दश । प्राचीः । दश । दक्षिणा । दश । प्रतीचीः । दश । उदीचीः । दश । ऊर्ध्वाः । तेभ्यः । नमः । ते । नः । मृडयन्तु । ते । यम् । द्विष्मः । यः । च । नः । द्वेष्टि । तम् । वः । जम्भे । दधामि ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके पञ्चमः प्रपाठकः ॥ ५ ॥

---

( अथ चतुर्थकाण्डे पञ्चमप्रपाठक एकादशोऽनुवाकः । )

---

दशमेऽनुवाक ऋग्रूपाः केचिन्मन्त्रा उक्ताः । अथैकादशे शिष्टा ऋचः शिष्टानि यजूंषि चोच्यन्ते ॥

तत्राऽऽदौ दशसंख्याका ऋचः । तासु प्रथमामाह—

सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम् ।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ।, इति ।

भूम्यामधि भूमेरुपरि ये रुद्राः सहस्रशः सहस्रप्रकारः सहस्राणि सहस्रसंख्याकाः सन्ति, सहस्रश इति जात्युक्तिः । विनायकप्रथम(मथ)शैलादयो जातिभेदाः, ते सर्वेऽपि रुद्रविशेषाः । तत्राप्येकस्यां जातौ बहुभिः सहस्रैः संख्याता मूर्तिविशेषाः । तेषां सर्वेषां धन्वानि धनूंषि सहस्रयोजनेऽस्मत्तः सहस्रयोजनव्यवहितदेशेऽवतन्मसि अवततज्याकानि स्थापयामः ॥

अथ द्वितीयामाह—

**अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि ।,** इति ।

अस्मिन्दृश्यमाने महत्यर्णवे महासमुद्रसदृशे प्रौढेऽन्तरिक्षेऽधिश्रित्य वर्तमाना भवा रुद्रमूर्तिविशेषा ये सन्ति, तेषां सहस्रयोजन इत्याद्युक्तार्थमुत्तरार्धं द्विती- यादिषु नवमान्तास्वृक्षु अनुषज्जते । तदनुषङ्गद्योतनायैव दशम्यामृचि पुनः पठितम् ॥

अथ तृतीयामाह—

**नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः ।,** इति ।

ग्रीवायामेकस्मिन्प्रदेशे नीलवर्णा नीलग्रीवाः । प्रदेशान्तरे श्वेतवर्णाः शिति- कण्ठाः । तादृशाः शर्वा रुद्रमूर्तिविशेषाः । कीदृशाः, अधःक्षमाचरा भूमेरधस्ता- त्पातालेषु संचरन्ति । तेषामित्यादि पूर्ववत् ॥

अथ चतुर्थीमाह—

**नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा उपश्रिताः ।,** इति ।

दिवमुपश्रिताः स्वर्गे वर्तमानाः ॥

अथ पञ्चमीमाह—

**ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः ।,** इति ।

यथा लोकेष्ववस्थिता रुद्रास्तथा वृक्षेष्ववस्थिताः । तेषु केचित्सस्पिञ्जराः शष्पवद्बालतृणवत्पिञ्जरवर्णाः । नीलग्रीवा नीलवर्णग्रीवाः । केचिद्ग्रीवादेशे नीलवर्णोपेताः । अपरे पुनर्विलोहिता विशेषेण रक्तवर्णाः । ईदृशा ये सन्ति तेषामित्यादि ॥

अथ षष्ठीमाह—

**ये भूतानामधिपतयो विशिखासः कपर्दिनः ।,** इति ।

भूतशब्देनान्तर्हितशरीराः सन्तो मनुष्योपद्रवकारिणो गणविशेषा उच्यन्ते तेषामधिपतयो ये रुद्रास्तेषु केचिद्विशिखासो मुण्डितमूर्धानः । अपरे कपर्दिनो जटाबन्धोपेतास्तेषामित्यादि ॥

अथ सप्तमीमाह—

**ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ।,** इति ।

ये रुद्रा अन्नेषु भुज्यमानेषु गूढत्वेनावस्थिताः सन्तो जनान्विवि-

( चित्यग्निहोमोक्तिः )

ध्यन्ति विशेषेण धातुवैषम्यादिना बाधन्ते । तथा पात्रेषु पातव्येषु क्षीरोदकादिषु गूढत्वेनावस्थिताः पिबतो जनान्विविध्यन्ति, तेषामित्यादि ॥

अथाष्टमी माह—

ये पथां पथिरक्षय ऐलबृदा यव्युधः ।, इति ।

ये रुद्राः पथिरक्षयो लौकिकवैदिकमार्गाणां रक्षकाः । नात्र केषांचिदेव मार्गाणां किंतु सर्वेषां पथां ते च रक्षकाः । ऐलबृदा इराऽन्नं तस्य समूह ऐरम् । ऐरमेवैलं तद्बिभ्रतीत्यैलभृतः । ऐलभृत एवैलबृदा अन्नप्रदानेन पोषका इत्यर्थः । ते च यव्युधः, यौति मिश्री भवति विरोधं करोतीति युः शत्रुः । युभिः शत्रुभिः सह युध्यन्तीति यव्युधः । असमदनिष्टनिवारका इत्यर्थः । तेषामित्यादि ॥

अथ नवमीमाह—

ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः ।, इति ।

ये रुद्रास्तीर्थानि काशीप्रयागादीनि रक्षितुं प्रचरन्ति । कीदृशा रुद्राः, सृकावन्तः सृकाश्छुरिका[1] हस्ते धार्यमाणास्तीक्ष्णाग्रा आयुधविशेषास्तद्युक्ताः केचित् । अपरे निषङ्गिणः खड्गयुक्तास्तेषामित्यादि ॥

अथ दशमीमाह—

य एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा
वितस्थिरे । तेषाꣳ सहस्रयो-
जनेऽव धन्वानि तन्मसि ।, इति ।

ये रुद्रा एतावन्तश्च सहस्राणि सहस्रश इत्याद्यृग्भिर्यावन्त उक्तास्तावन्तोऽपि भूयांसश्चैतोऽप्यधिका अन्ये बहवोऽपि दिशो वितस्थिरे सर्वा दिशः प्रविश्य स्थितास्तेषामित्यादि ॥

इत्थं दशसंख्याका ऋच उक्ताः । अथ त्रीणि यजूंष्युच्यन्ते—

नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवि
येषामन्नं वातो वर्षमिषवस्तेभ्यो दश प्राची-
र्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वा-
स्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो
यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥, इति ॥

---

1 क. ख. घ. ङ. सृकाः क्षुरि ।

अत्र पृथिव्यादिलोकभेदादिषु भेदाच्च यजुस्त्रयं द्रष्टव्यम् । तदेवं पाठः संपद्यते—नमो रुद्रेभ्य इत्युपक्रम्य ये पृथिव्यां येषामन्नमिषव इत्याद्यो मन्त्रः । येऽन्तरिक्षे येषां वात इषव इति द्वितीयो मन्त्रः । ये दिवि येषां वर्षमिषव इति तृतीयो मन्त्रः । तेभ्यो दश प्राचीरित्यादि सर्वत्र समानम् । ये रुद्राः पृथिव्यां वर्तन्ते तेष्वपि रुद्रेषु येषां रुद्रविशेषाणामन्नमेवेषवो बाणाः, अपथ्यान्नभक्षणे प्रवर्त्य वाऽन्नार्थं चौर्यं कारयित्वा वा यान्हिंसन्ति तान्प्रति हिंसकानां रुद्राणामन्नमेवेषवस्तेभ्यः पृथिव्यां स्थितेभ्योऽन्नबाणकेभ्यश्च रुद्रेभ्यो नमोऽस्तु । तथा ये रुद्रा अन्तरिक्षे वर्तन्ते तेषामपि मध्ये येषां वात इषवस्तीव्रेण वायुना रोगानुत्पाद्य हिंसन्ति तेभ्योऽन्तरिक्षवर्तिभ्यो वातेषुभ्यश्च रुद्रेभ्यो नमोऽस्तु । तथा ये रुद्रा दिवि वर्तन्ते तेष्वपि येषां रुद्रविशेषाणां वर्षमेवेषवोऽतिवृष्ट्यनावृष्टिभ्यां प्राणिनो हिंसन्ति तेभ्यो दिवि स्थितेभ्यो वर्षेषुभ्यो रुद्रेभ्यो नमोऽस्तु । कीदृशो नमस्कार इति स एव विशेष्यते—दश प्राचीः, प्राङ्मुखत्वेनाञ्जलिकरणे दशाङ्गुलयः प्रागग्रा भवन्ति । एवं दक्षिणादिपूर्ध्वान्तेषु योज्यम् । ईदृशैरञ्जलिविशेषैस्तेभ्यो रुद्रेभ्यो नमोऽस्तु । ते च रुद्रा नोऽस्मान्मृडयन्तु सुखयन्तु । ते च वयं नमस्कृतरुद्राः सन्तो यं वैरिणं तूष्णीमवस्थितमपि द्विष्मः, यश्च वैरी नोऽस्मांस्तूष्णीमवस्थितानपि द्वेष्टि तमुभयविधं वैरिणं हे रुद्रा वो युष्माकं जम्भे विदारितास्ये दधामि स्थापयामि ॥

तमिममेकादशानुवाकात्मकं रुद्राध्यायं विनियुङ्क्ते—

" रुद्रो वा एष यदग्निः स एतर्हि जातो यर्हि सर्वश्चितः स यथा वत्सो जातः स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति तस्मै यदाहुतिं न जुहुयादध्वर्युं च यजमानं च ध्यायेच्छतरुद्रीयं जुहोति भागधेयेनैवैनꣳ शमयति नाऽऽर्तिमार्छत्यध्वर्युर्न यजमानः " [ सं० का० ५ प्र० ४ अ० ३ ] इति ।

यस्मिन्काले चीयमानोऽग्निरशेषचितिनिष्पादनेन सर्वश्चितो भवति, एतस्मिन्कालेऽयमग्निरुत्पन्नो भवति । सोऽयमुत्पन्नोऽग्निरेव रुद्र इत्युच्यते । देवैः स्वकीयवामवस्वदाने सति रोदनाद्वा प्राणिनां रोदनहेतुदुःखस्य द्रावणाद्वाऽग्निरेव रुद्रः । यथा लोके जातो वत्सस्तदानीमेव स्तनं प्राप्तुमिच्छति, एवमेवैतस्मिंश्चितिसंपूर्तिकाले समुत्पन्नो रुद्रनामकोऽग्निः स्वकीयं भागमिच्छति तस्मा अग्नये कस्याश्चिदाहुतेरहोमेऽध्वर्युं यजमानं च भक्षयितुं ध्यायेदग्निः । अतस्तत्परिहाराय शतरुद्रीयं जुहुयात् । शतमित्यपरिमितत्वं लक्ष्यते । अपरिमिता रुद्रा यस्मिन्नध्याये प्रतिपाद्यन्ते सोऽध्यायः शतरुद्रीयः । तेन होमे सति स्वकीयभागेन रुद्रस्य तुष्टत्वादध्वर्युयजमानौ न म्रियेते ॥

(चित्यग्निहोमोक्तिः)

अथ होमद्रव्यं विधत्ते—

"यद्ग्राम्याणां पशूनां पयसा जुहुयाद्ग्राम्यान्पशूञ्छुचाऽर्पयेद्यदारण्यानामारण्याञ्जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा न ग्राम्यान्पशून्हिनस्ति नाऽऽरण्यान्" [सं० का० ५ प्र० ४ अ० ३] इति।

शुचाऽर्पयेत्संतापेन रोगेण योजयेत्। जर्तिला आरण्यतिलाः। गवीधुका आरण्यगोधूमाः॥

पक्षान्तरं विधत्ते—

"अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोत्याग्नेयी वा एषा यदजाऽऽहुत्यैव जुहोति न ग्राम्यान्पशून्हिनस्ति नाऽऽरण्यान्" [सं० का० ५ प्र० ४ अ० ३] इति।

अदनीयं यद्द्रव्यं तदेवाऽऽहुतियोग्यं, 'यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः' इति न्यायात्। जर्तिला गवीधुकाश्च मनुष्यैर्नाद्यन्ते, तस्मादाहुतियोग्या न भवन्तीत्याहुः पूर्वपक्षोपन्यासादूर्ध्वमाहुः। तस्मादुभयं परित्यज्या+जाक्षीरेण जुहुयात्। अजाग्न्योरुभयोः प्रजापतिमुखजन्यत्वेन साजात्यादियमजाऽऽग्नेयी। अत आहुतियोग्यैव। अतस्तत्क्षीरद्रव्येण जुहोति। ग्राम्यारण्यपयसोः स्वीकारात्तेऽपि पशवो न हिंस्यन्ते॥

होमसाधनभूतां जुहूमपवदितुं साधनान्तरं विधत्ते—

"अङ्गिरसः सुवर्गं लोकं यन्तोऽजायां घर्मं प्रासिञ्चन्त्सा शोचन्ती पर्णं पराऽजिहीत सोऽर्कोऽभवत्तदर्कस्यार्कत्वमर्कपर्णेन जुहोति सयोनित्वाय" [सं० का० ५ प्र० ४ अ० ३] इति।

प्रवर्ग्यकाले महावीरे संतप्तं घृतं क्षीरसहितं घर्मस्तं घर्मं प्रयाणव्यग्रा अङ्गिरसः प्रमादादजायां प्रकर्षेणासिञ्चन्। सा शोचन्ती साऽप्यजा तेनोष्णघृतेन तप्यमाना पर्णसदृशं स्वकीयं रोमसंघं भूमाववपातयत्। स च रोमसंघातोऽर्कः प्रसिद्धार्करूपेण प्ररूढः। अर्चनीयेन पूज्येन प्रवर्ग्यघृतेन तथाविधेनाजारोमसंघातेन चोत्पन्नत्वादस्य स्थावरस्यार्कनाम संपन्नम्। तेनार्कपर्णेन होमे सति पर्णक्षीरयोरुभयोरप्यनन्यकार्यत्वात्समानयोनित्वं संपाद्यते॥

होमकाले कंचिद्विशेषं विधत्ते—

"उदङ्ङिष्ठङ्जुहोत्येषा वै रुद्रस्य दिक्स्वायामेव दिशि रुद्रं निरवदयते चरमायामिष्टकायां जुहोत्यन्तत एव रुद्रं निरवदयते" [सं० का० ५ प्र० ४ अ० ३] इति।

---

+ ख. पुस्तकटिप्पणिकायाम् 'अजक्षीरेणेति पाठो भवितुं युक्तः' इति वर्तते।

अन्त्यप्रदेशवर्तिनी चरमेष्टका। सा च सूत्रकारेण दर्शिता—" उत्तरस्य पक्षस्योत्तरापरस्याꣳ स्रक्त्यां विकर्ण्याꣳ स्वयमातृण्णायाम् " इति । अन्त्यदेशगतेन होमेन क्रूरमिमं रुद्रमन्तत एव निःसारयति ॥

रुद्राध्याये होमसाधनं मन्त्रविभागं विधत्ते—

" त्रेधाविभक्तं जुहोति त्रय इमे लोका इमानेव लोकान्त्समावद्वीर्यान्करोति " [ सं० का० ५ प्र० ४ अ० ३ ] इति ।

तत्र त्रेधाविभाग एवं करणीयः—नमस्ते रुद्रेत्यारभ्य सभापतिभ्यश्च वो नम इत्यन्तः प्रथमो भागः । नमो अश्वेभ्य इत्यारभ्यावार्याय चेत्यन्तो द्वितीयो भागः । नमः प्रतरणाय चेत्यारभ्य य एतावन्तश्चेत्यृचा सहितस्तृतीयो भागः ॥

त्रिष्वप्याहुतिषु क्रमेण जानुदघ्नादिदेशेषु स्रुग्धारणं हस्ताभिनयेन विधत्ते-

" इयत्यग्रे जुहोत्यथेयत्यथेयति त्रय इमे लोका एभ्य एवैनं लोकेभ्यः शमयति " [ सं० का० ५ प्र० ४ अ० ३ ] इति ॥

नमो रुद्रेभ्यो ये पृथिव्यामित्यादियजुस्त्रयसाध्यं होमं विधत्ते—

तिस्र उत्तरा आहुतीर्जुहोति षट्संपद्यन्ते षड्वा ऋतव ऋतुभिरेवैनꣳ शमयति " [ सं० का० ५ प्र० ४ अ० ३ ] इति ॥

पूर्वोत्तरपक्षभङ्ग्याऽनुपरिक्रम्य होमं विधत्ते--

"यदनुपरिक्रामं जुहुयादन्तरवचारिणꣳ रुद्रं कुर्यादथो खल्वाहुः कस्यां वाऽह दिशि रुद्रः कस्यां वेत्यनुपरिक्राममेव होतव्यमपरिवर्गमेवैनꣳ शमयति " [ सं० का० ५ प्र० ४ अ० ३ ] इति ।

अनुपरिक्राममनुक्रमेण परितो भ्रमणं कृत्वा यदि जुहुयात्तदानीं तं रुद्रमन्तरवचारिणमग्निक्षेत्रस्य मध्ये प्रविश्य चरन्तं कुर्यात् । स च प्रविष्टः क्रूरत्वादुपद्रवं करोत्येव । तस्मात्परिभ्रमणं न कर्तव्यमिति पूर्वः पक्षः । अथोशब्दः सिद्धान्तोपक्रमार्थः । अभिज्ञास्त्वेवमाहुः । खलुअहशब्द उपन्यस्तपक्षनिराकरणद्योतनार्थः । यदुक्तं पूर्वपक्षिणा तन्न भवतीत्यर्थः । अयं रुद्रः सर्वत्र संचरन्कद कस्यां दिशि वर्तते कस्यां वा न वर्तत इति को ज्ञातुं समर्थः । अतो रुद्रमन्वे मनुक्रमेण परिभ्रमणं कृत्वैव होतव्यम् । तथा सति परितो यत्र क्वापि स्थि रुद्रमवर्जयित्वैव शान्तं करोति । शान्तत्वादेवान्तः प्रविश्यायं रुद्रः सन्नन्त संचरन्नोपद्रवं करोतीत्यर्थः ॥

नमो रुद्रेभ्य इत्यादिमन्त्राणां यजमानवाचनं विधत्ते—

---

१ क. 'वर्तनी । २ क. घ. ङ. 'धनम' ।

( चित्यग्निहोमोक्तिः )

" एता वै देवताः सुवर्ग्या या उत्तमास्ता यजमानं वाचयति ताभिरेवैनꣳ सुवर्गं लोकं गमयति " [ सं० का० ५ प्र० ४ अ० ३ ] इति।

एतैर्यजुर्भिः प्रतिपाद्या या देवताः सन्ति ताः स्वर्गहेतवोऽत एवोत्तमा उत्कृष्टाः। चरममन्त्रप्रतिपाद्यत्वाद्वोत्तमत्वम्। ता अध्वर्युर्यजमानं वाचयेत्तत्प्रतिपादकानि यजूंषि पाठयेदित्यर्थः। तथा सति ताभिरेव देवताभिरेनं यजमानं स्वर्गं प्रापयति ॥

अर्कपर्णस्य परित्यागदेशं विधत्ते—

" यं द्विष्यात्तस्य संचरे पशूनां न्यस्येद्यः प्रथमः पशुरभितिष्ठति स आर्तिमार्छति " [ सं० का० ५ प्र० ४ अ० ३ ] इति।

यं पुरुषं यजमानो द्विष्यात्तस्य पशूनां संचरप्रदेशे तदर्कपर्णं परित्यजेत्। तत्त्यक्तं पर्णं यः पशुः प्रथम इतरेभ्यः पशुभ्यः पूर्वः सन्नभिक्रम्य तिष्ठति स म्रियेत ॥

अत्र विनियोगसंग्रहः—

प्रश्ने तु पञ्चमे प्रोक्तः शतरुद्रीयहोमकः ॥
सभापतिभ्य इत्यन्त एको मन्त्रः प्रकीर्तितः ॥ १ ॥
अवार्यायेत्यन्त एकस्तन्मसीत्यन्त उत्तरः।
नमो रुद्रेभ्य इत्येष पृथिव्यादिविभेदतः ॥
त्रेधा भिन्नस्ततो होमे षण्मन्त्रा इह कीर्तिताः ॥ २ ॥

अथ मीमांसा।

दशमाध्यायस्याष्टमपादे चिन्तितम्—

जर्तिलोक्तेश्चतुर्धा किं विकल्पोऽथ पयःश्रु(स्तु)तिः।
विकल्पः पूर्ववन्नैवं वाक्यैक्यात्पयसा सह ॥

अग्नौ श्रूयते—" जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा न ग्राम्यान्पशून्हिनस्ति नाऽऽरण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोत्याग्नेयी वा एषा यदजाऽऽहुत्यैव जुहोति " इति। जर्तिला आरण्यतिला गवीधुका आरण्यगोधूमास्तयोरुभयोर्विकल्पः श्रौत एव। अनाहुतिरिति पूर्वयोः पक्षयोर्दूषितत्वाद्धोमाभावस्तृतीयः पक्षः। न चात्र जर्तिलगवीधुकयोरनाहुतित्ववचनेन पर्युदासः संभवति। आहुतिपदान्वितस्य नञ्पदस्य जर्तिलगवीधुकपदान्वयायोगात्। पयोविधिश्चतुर्थः पक्षः। एतेषां परस्परविरुद्धानां चतुर्णां गत्यन्तराभावेन षोडशिग्रहणवद्विकल्पे प्राप्ते ब्रूमः—पयोवि-

---

१ ख. च. 'कल्प इति प्रा'।

धिना सह जर्तिलादेरेकवाक्यत्वेनार्थवादत्वं युक्तम् । ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्तयोरपि जर्तिलगवीधुकयोरग्निहोमं प्रत्याहुतित्वं नास्ति । पयसस्तु तदस्ति । इत्थं महाभागं पय इति । तस्मादर्थवादः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठक
एकादशोऽनुवाकः ॥ ११ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य
श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विर-
चिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
चतुर्थकाण्डे पञ्चमः प्रपाठकः ॥ ५ ॥

---

( अथ चतुर्थाष्टके षष्ठः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

अश्मन्नूर्जं पर्वते शिश्रियाणां वाते पर्जन्ये वरुणस्य शुष्मे । अद्भ्य ओषधीभ्यो वनस्पतिभ्योऽधि संभृतां तां न इषमूर्जं धत्त मरुतः सꣳ रराणाः । अश्मꣳस्ते क्षुदमुं ते शुगृच्छतु यं द्विष्मः । समुद्रस्य त्वाऽवाकयाऽग्ने परि व्ययामसि । पावको अस्मभ्यꣳ शिवो भव । हिमस्य त्वा जरायुणाऽग्ने परि व्ययामसि । पावको अस्मभ्यꣳ शिवो भव । उप ( १ )

( परिषेचनविकर्षणाद्यभिधानम् )

ज्म॒न्नुप॑ वेत॒से॑ऽव॑त्तरं न॒दीष्वा । अग्ने॑ पि॒त्तम॒पाम॑-
सि । मण्डू॑कि॒ ताभि॒रा ग॑हि॒ सेमं नो॑ य॒ज्ञम् ।
पा॒व॒कव॑र्णꣳ शि॒वं कृ॑धि । पा॒व॒क आ चि॒तय॑-
न्त्या कृ॒पा । क्षाम॑न्रु॒रुच उ॒षसो॒ न भा॒नुना॑ ।
तूर्व॑न्न याम॒न्नेत॑शस्य॒ नू रण॒ आ यो घृ॒णे ।
न त॑तृ॒षाणो॑ अ॒जरः॑ । अग्ने॑ पावक रो॒चिषा॑
म॒न्द्रया॑ देव जि॒ह्वया॑ । आ दे॒वान् ( २ ) व॒क्षि
यक्षि॑ च । स नः॑ पावक दीदि॒वोऽग्ने॑ दे॒वाꣳ
इ॒हाऽऽ व॑ह । उप॑ य॒ज्ञꣳ ह॒विश्च॑ नः । अ॒पा-
मि॒दं न्यय॑नꣳ समु॒द्रस्य॑ नि॒वेश॑नम् । अ॒न्यं ते॑
अ॒स्मत्त॑पन्तु हे॒तयः॑ पाव॒को अ॒स्मभ्य॑ꣳ शि॒वो
भ॑व । नम॑स्ते॒ हर॑से शो॒चिषे॒ नम॑स्ते अस्त्व॒-
र्चिषे॑ । अ॒न्यं ते॑ अ॒स्मत्त॑पन्तु हे॒तयः॑ पाव॒को
अ॒स्मभ्य॑ꣳ शि॒वो भ॑व । नृ॒षदे॒ वट् ( ३ )
अ॒प्सु॒षदे॒ वड्व॑न॒सदे॒ वड्ब॑र्हि॒षदे॒ वट्सु॑व॒र्विदे॒
वट् । ये दे॒वा दे॒वानां॑ य॒ज्ञिया॑ य॒ज्ञिया॑नाꣳ
सं॒व॒त्स॒रीण॒मुप॑ भा॒गमास॑ते । अ॒हु॒तादो॑ ह॒विषो॑
य॒ज्ञे अ॒स्मिन्त्स्व॒यं जु॑हुध्वं॒ मधु॑नो घृ॒तस्य॑ । ये
दे॒वा दे॒वेष्वधि॑ दे॒व॒त्वमाय॒न्ये ब्रह्म॑णः पुर॒एतारो॑
अ॒स्य । येभ्यो॒ नर्ते॑ पव॑ते॒ धाम॒ किं च॒न न ते

दिवो न पृथिव्या अधि स्नुषु। प्राणदाः (४)
अपानदा व्यानदाश्चक्षुर्दा वर्चोदा वरिवोदाः ।
अन्यं ते अस्मत्तपन्तु हेतयः पावको अस्म-
भ्यꣳ शिवो भव । अग्निस्तिग्मेन शोचिषा
यꣳसद्विश्वं न्यत्रिणम् । अग्निर्नो वꣳसते
रयिम् । सैनाऽनीकेन सुविदत्रो अस्मे यष्टा
देवाꣳ आयजिष्ठः स्वस्ति । अदब्धो गोपा
उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि (४)॥

( उप देवान्वट्प्राणदाश्चतुश्चत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके
षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ चतुर्थाष्टके षष्ठः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

अश्मन् । ऊर्जम् । पर्वते । शिश्रियाणाम् ।
वाते । पर्जन्ये । वरुणस्य । शुष्मे । अद्भ्य इत्यत्—
भ्यः । ओषधीभ्य इत्योषधि—भ्यः । वनस्पतिभ्य
इति वनस्पति—भ्यः । अधीति । संभृतामिति सं—
भृताम् । ताम् । नः । इषम् । ऊर्जम् । धत्त । मरु-
तः । सꣳरराणा इति सं—रराणाः । अश्मन् । ते ।

क्षुत्। अमुम्। ते। शुक्। ऋच्छतु। यम्। द्विष्मः। समुद्रस्यं। त्वा। अवाकंया। अग्ने। परीतिं। व्यु-यामसि। पावकः। अस्मभ्यमित्यस्म—भ्यम्। शि-वः। भव। हिमस्यं। त्वा। जरायुंणा। अग्ने। परीतिं। व्ययामसि। पावकः। अस्मभ्यमित्यस्म—भ्यम्। शिवः। भव। उपेतिं (१)। ज्मन्। उपेतिं। वेतसे। अवंत्तरमित्यवंत्—तरम्। नदीषुं। आ। अग्ने। पित्तम्। अपाम्। असि। मण्डूंकि। ताभिः। एतिं। गहि। सा। इमम्। नः। यज्ञम्। पावकवंर्णमितिं पावक—वर्णम्। शिवम्। कृधि। पावके। एतिं। चितयंन्त्या। कृपा। क्षामंन्। रुरुचे। उषसंः। न। भानुनां। तूर्वंन्। न। याम-न्। एतंशस्य। नु। रणें। एतिं। यः। घृणे। न। ततृषाणः। अजरंः। अग्ने। पावक। रोचिषां। मन्द्रयां। देव। जिह्वयां। एतिं। देवान् (२)। वक्षि। यक्षि। च। सः। नः। पावक। दीदिवः। अग्ने। देवान्। इह। एतिं। वह। उपेतिं। यज्ञम्। हविः। च। नः। अपाम्। इदम्। न्ययंनमितिं नि—अयंनम्। समुद्रस्यं। निवेशंनमितिं नि—वे-शंनम्। अन्यम्। ते। अस्मत्। तपन्तु। हेतयंः।

पावकः । अस्मभ्यमित्यस्म—भ्यम् । शिवः । भव । नमः । ते । हरसे । शोचिषे । नमः । ते । अस्तु । अर्चिषे । अन्यम् । ते । अस्मत् । तपन्तु । हेतयः । पावकः । अस्मभ्यमित्यस्म—भ्यम् । शिवः । भव । नृषद इति नृ—सदे । वट् ( ३ ) । अप्सुषद इत्यप्सु—सदे । वट् । वनसद इति वन—सदे । वट् । बर्हिषद इति बर्हि—सदे । वट् । सुवर्विद इति सुवः—विदे । वट् । ये । देवाः । देवानाम् । यज्ञियाः । यज्ञियानाम् । संवत्सरीणमिति सं—वत्सरीणम् । उपेति । भागम् । आसते । अहुताद इत्यहुत—अदः । हविषः । यज्ञे । अस्मिन् । स्वयम् । जुहुध्वम् । मधुनः । घृतस्य । ये । देवाः । देवेषु । अधीति । देवत्वमिति देव—त्वम् । आयन् । ये । ब्रह्मणः । पुरएतार इति पुरः—एतारः । अस्य । येभ्यः । न । ऋते । पवते । धाम । किम् । चन । न । ते । दिवः । न । पृथिव्याः । अधीति । स्नुषु । प्राणदा इति प्राण—दाः ( ४ ) । अपानदा इत्यपान—दाः । व्यानदा इति व्यान—दाः । चक्षुर्दा इति चक्षुः—दाः । वर्चोदा इति वर्चः—दाः । वरिवोदा इति वरिवः—दाः । अन्यम् । ते । अस्मत् । तप-

न्तु । हेतयः । पावकः । अस्मभ्यमित्यस्म—भ्यम् । शिवः । भव । अग्निः । तिग्मेन । शोचिषा । यम्-संव् । विश्वम् । नीति । अत्रिणम् । अग्निः । नः । वंसते । रयिम् । सः । एना । अनीकेन । सुवि-दत्र इति सु—विदत्रः । अस्मे इति । यष्टा । देवान् । आयजिष्ठ इत्या—यजिष्ठः । स्वस्ति । अदब्धः । गोपा इति गो—पाः । उत । नः । परस्पा इति परः—पाः । अग्ने । द्युमदिति द्यु—मत् । उत । रेवत् । दिदीहि ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ चतुर्थकाण्डे षष्ठः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रपाठके पञ्चमे हि चितिसंपूर्त्यनन्तरम् ।
वर्णितो रुद्रहोमोऽथ षष्ठे वाच्याऽग्निसंस्कृतिः ॥ २ ॥
परिषेचनमारभ्य संस्कारा ये चिकीर्षिताः ।
ते पञ्चस्वनुवाकेषु प्रोक्ताः शेषोऽश्वमेधगः ॥ ३ ॥

तत्र प्रथमानुवाके परिषेचनविकर्षणादयोऽभिधीयन्ते ।

कल्पः—“ उदकुम्भमादायाध्वर्युरश्मन्नूर्जमिति त्रिः प्रदक्षिणमग्निं परिषिञ्चन्पर्येति ” इति ।

---

१ क घ. ङ. °मेधिकः । त° ।

पाठस्तु—

अश्मन्नूर्जं पर्वते शिश्रियाणां वाते पर्जन्ये वरुणस्य शुष्मे । अद्भ्य ओषधीभ्यो वनस्पतिभ्योऽभि संभृतां तां न इष-मूर्जं धत्त मरुतः सꣳरराणाः ।, इति ।

हे मरुतः संरराणाः सम्यग्दानशीला यूयमग्न्यादिगतामूर्जं बलहेतुमिषमन्नं नोऽस्मभ्यं धत्त संपादयत। कीदृशमिषम्, अश्मन्पाषाणे पर्वते मेरुविन्ध्यहिमवदादौ वाते प्रचण्डवायौ पर्जन्ये वर्षणक्षमे प्रौढे मेघे वरुणस्य शुष्मे वरुणसंबन्धिनि बले च शिश्रियाणामाश्रितामूर्जं सारभूतां, तथाऽद्भ्यो जलेभ्य ओषधीभ्यो व्रीहियवादिभ्यो वनस्पतिभ्य उदुम्बरादिभ्यः सकाशादधिसंभृतामधिकत्वेन सम्यक्संपादिताम् । यदन्नमश्मादिष्वाश्रित्य सारत्वेनावतिष्ठते, यच्च जलादिभ्यः संपाद्यते, यदप्यस्माकं बलहेतुस्तथाविधमन्नं प्रयच्छ ॥

तमेतं मन्त्रं विनियुङ्क्ते—

" अश्मन्नूर्जमिति परि षिञ्चति मार्जयत्येवैनमथो तर्पयत्येव स एनं तृप्तोऽक्षुध्यन्नशोचन्नमुष्मिँल्लोक उप तिष्ठते " [ सं० का० ५ प्र० ४ अ० ४ ] इति ।

एनमग्निं मार्जयति शुद्धं करोति । अपि च तर्पयति । स तृप्तोऽग्निः स्वर्गलोके क्षुत्पीडारहितः संतापरहितः सन्नेनं यजमानं सेवते ॥

एतद्वेदनं प्रशंसति—

" तृप्यति प्रजया पशुभिर्य एवं वेद " [ सं० का० ५ प्र० ४ अ० ४ ] इति ।

मन्त्रस्य चतुर्थपाद ऊर्जं मरुत इति पदद्वयस्य तात्पर्यं प्रदर्शयति—

" तां न इषमूर्जं धत्त मरुतः सꣳरराणा इत्याहान्नं वा ऊर्गन्नं मरुतोऽन्नमेवाव रुन्धे " [ सं० का० ५ प्र० ४ अ० ४ ] इति ।

ऊर्ग्बलहेतुरन्नमेव, मरुतोऽप्यन्नसंपादकत्वादन्नम् । अत उभयोः पठनादन्नं प्राप्नोति ॥

कल्पः—" अश्मꣳस्ते क्षुदमुं ते शुगृच्छत्विति त्रिरपरिषिञ्चन्प्रति पर्येति " इति ।

पाठस्तु—

अश्मꣳस्ते क्षुदमुं ते शुगृच्छतु यं द्विष्मः ।, इति ।

---

१ ख. च. 'ति त्रिः प' । २ घ. ङ. 'ञ्चन्पर्ये' ।

( परिषेचनविकर्षणाद्यभिधानम् )

हेऽश्मन्निष्टकाभिर्दृढं निष्पादितत्वात्पाषाणसदृशाग्ने यत्ते क्षुत्त्वदीया क्षुत्पीडा या च ते शुक्त्वदीयः संतापस्तदुभयमपि यं वैरिणं द्विष्मः, अमुं द्वेष्य-मृच्छतु प्राप्नोतु ॥

अस्य मन्त्रस्य तात्पर्यं दर्शयति—

" अश्मꣳस्ते क्षुदमुं ते शुगृच्छतु यं द्विष्म इत्याह यमेव द्वेष्टि तमस्य क्षुधा च शुचा चार्पयति " [ सं० का० ५ प्र० ४ अ० ४ ] इति ॥

परिषेचनकाले प्रदक्षिणावृत्तिं विधत्ते—

" त्रिः परिषिञ्चन्पर्येति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्य शुचꣳ शमयति " [ सं० का० ५ प्र० ४ अ० ४ ] इति ।

अग्नेराहवनीयादिरूपेण त्रिगुणत्वम् ॥

परिषेचनरहिताम*प्रदक्षिणावृत्तिं विधत्ते—

" त्रिः पुनः पर्येति षट्सं पद्यन्ते षड्वा ऋतव ऋतुभिरेवास्य शुचꣳ शम-यति " [ सं० का० ५ प्र० ४ अ० ४ ] इति ।

पूर्वेण प्रदक्षिणत्रयेण सह षट्संख्यासंपत्तिः ॥

कल्पः—" अवकां वेतसशाखां मण्डूकं च दीर्घवंशे प्रबध्य समुद्रस्य त्वाऽ-वाकयेति सप्तभिरष्टभिर्वाऽग्निं विकर्षति " इति ।

तत्र प्रथमामाह—

समुद्रस्य त्वाऽवाकयाऽग्ने परि व्ययामसि ।
पावको अस्मभ्यꣳ शिवो भव । , इति ।

[१]अवका शैवालम् । हेऽग्ने त्वां समुद्रस्यावाकया समुद्रसंबन्धिना शैवालेन परिव्ययामसि परितः संवृणोमि उपरिभागे सर्वत्र विकर्षामीत्यर्थः । त्वं चास्मभ्यमस्मदर्थं पावकः शोधकः शिवः शान्तश्च भव ॥

अथ द्वितीयामाह—

हिमस्य त्वा जरायुणाऽग्ने परि व्ययामसि ।
पावको अस्मभ्यꣳ शिवो भव । , इति ।

हेऽग्ने त्वां हिमस्य शैत्यस्य जरायुणा जरायुवदुत्पत्तिस्थानीयेन शैवालेन । शेषं पूर्ववत् ॥

अथ तृतीयामाह—

* ख. पुस्तकटिप्पणिकायां ' परिषेचनरहितां प्रदक्षिणावृत्तिमिति पाठो भवितुं युक्तः । ' इति ।

१ ख. अवाका ।

उप ज्मन्नुप वेतसेऽवत्तरं नदीष्वा ।
अग्ने पित्तमपामसि । , इति ।

हेऽग्ने ज्मा पृथिवी तस्यामुपगतो वर्तसे । तथा वेतसे वञ्जुलक उपगतो वर्तसे तथा नदीष्वा नदीजलेष्वपि अवत्तरमतिशयेन रक्षकत्वं यथा भवति तथोपागतो¹ वर्तसे । तथा त्वमपां पित्तमसि तेजोऽसि ॥

अथ चतुर्थीमाह—

मण्डूकि ताभिरा गहि सेमं नो
यज्ञम् । पावकवर्णं शिवं कृधि।, इति ।

हे मण्डूकि मण्डूकजातीये ताभिः समनन्तरोक्ताभिर्ऋग्भिः सहाऽऽगह्याऽऽगच्छ । सा त्वमिममनुष्ठीयमानं नोऽस्मदीयं यज्ञं पावकवर्णमग्निसमानतेजस्कं शिवं फलप्रदत्वेन शान्तं कृधि कुरु ॥

अथ पञ्चमीमाह—

पावक आ चितयन्त्या कृपा । क्षाम-
न्रुरुच उषसो न भानुना । , इति ।

हे मण्डूकि पावकेऽस्मिन्नग्नौ विषयभूते सति चितयन्त्या चिन्वानया कृपा कृपया सामर्थ्येन युक्ता सत्या, इहाऽऽगच्छ । त्वय्यागतायां सत्यामयमग्निः क्षामन्क्षाम्नि पृथिव्यां रुरुचे दीप्तवान्² । तत्र दृष्टान्तः—उषसो न भानुना । उषःकालसंबन्धिना प्रकाशेन यथा पदार्था दीप्यन्ते तद्वत् ॥

अथ षष्ठीमाह—

तूर्वन्न यामन्नेतशस्य नू रण आ यो
घृणे । न ततृषाणो अजरः ।, इति ।

योऽग्निरेतशस्य गमनकुशलस्याश्वस्य यामन्नियामके रणे युद्धे तूर्वन्न परबलानि हिंसन्निवाऽऽघृणे नु सर्वतो दीप्यते खलु सोऽग्निरजरो जरारहितस्ततृषाणो न तृष्णायुक्तो न भवति । यथा लोके शीघ्रगमनस्वभावमश्वं वामहस्तगतेन खलीनेन दृढं नियम्य रणे प्रवर्तमानः पुरुषः परबलानि हिंसन्त्वरत एवमयमग्निः प्रज्वलति न कदाचिज्जीर्यति, नाप्यसौ तृष्णायुक्तः किंतु तृप्त इत्यर्थः ॥

अथ सप्तमीमाह—

---

१ ख. च. 'थोपग' । २ ख. च. दीप्तिमान् ।

( परिषेचनविकर्षणाद्यभिधानम् )

अग्ने पावक रोचिषा मन्द्रया देव जि-
ह्वया । आ देवान्वक्षि यक्षि च । , इति ।

हे पावक शोधक देव द्योतनात्मकाग्ने रोचिषा दीप्तिमत्या मन्द्रया श्लक्ष्णया जिह्वया वाचा देवानावक्षि आवह यक्षि यज ॥

अथाष्टमीमाह—

स नः पावक दीदिवोऽग्ने देवाꣳ इहाऽऽ
वह । उप यज्ञꣳ हविश्च नः । , इति ।

हे पावक शोधक दीदिवो दीप्यमानाग्ने नोऽस्मदर्थं देवानिह कर्मण्यावह, अस्माकमिमं यज्ञं हविश्चोप देवसमीपे प्रापय ॥

एतैरष्टभिर्मन्त्रैः साध्यं विकर्षणं विधत्ते—

" अपां वा एतत्पुष्पं यद्वेतसोऽपाꣳ शरोऽवका वेतसशाखया चावकाभिश्च वि कर्षत्यापो वै शान्ताः शान्ताभिरेवास्य शुचꣳ शमयति " [ सं० का० ५ प्र० ४ अ० ४ ] इति ।

योऽयं वेतसः सोऽयमपां पुष्पस्थानीयोऽप्सु जायमानत्वात् । याश्चावकाः शैवालाभिधास्ता अपां शरः सारं दध्नो मण्डमिव । तस्मादेताभ्यामग्निं विकर्षेत्, चितेरुपरि नानादिक्षु विविधमेतदुभयमाकर्षेदित्यर्थः । आपो दाहनिवारकत्वाच्छान्ताः । अप्संबन्धिना द्रव्यद्वयेन विकर्षणे सति शान्ताभिरद्भिरेवास्याग्नेः शुचं शमयति ॥

पूर्वोक्तद्रव्यद्वयेन सह मण्डूकस्यापि विकर्षणसाधनत्वं विधत्ते—

" यो वा अग्निं चितं प्रथमः पशुरधिक्रामतीश्वरो वै तꣳ शुचा प्रदहो मण्डूकेन वि कर्षत्येष वै पशूनामनुपजीवनीयो न वा एष ग्राम्येषु पशुषु हितो नाऽऽरण्येषु तमेव शुचाऽर्पयति " [ सं० का० ५ प्र० ४ अ० ४ ] इति ।

गोमहिषाजादीनां मध्ये यः पशुरिममिष्टकाभिश्चितमग्निं प्रथममधिरुह्य पादेनाऽऽक्रामति तं पशुं संतापेन प्रदग्धुमयमग्निः प्रभुर्भवति । तस्मात्पश्वन्तरेण विकर्षणं न कुर्यात्किंतु मण्डूकेन कुर्यात् । मण्डूकश्च यागयोग्येषु ग्राम्येष्वारण्येषु च पशुष्वनन्तर्भावाल्लोकेऽपि गोमहिषादिवदुपयोगादर्शनाच्च केनाप्युपजीव्यो न भवति । अतस्तेन विकर्षणे तमेव मण्डूकं संतापेन योजयति ॥

तस्मिन्विकर्षणे समुद्रस्य त्वेत्यादीन्मन्त्रान्विनियुङ्क्ते—

" अष्टाभिर्वि कर्षत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तस्य शुचꣳ शमयति " [ सं० का० ५ प्र० ४ अ० ४ ] इति ॥

सामान्यतो विहितान्मन्त्रान्विशेषतो विधत्ते—

" पावकवतीभिरन्नं वै पावकोऽन्नेनैवास्य शुचꣳ शमयति " [ सं० का० ५ प्र० ४ अ० ४ ] इति ।

पावको अस्मभ्यꣳ शिवो भवेत्येवं पावकशब्दो यास्वृक्षु वर्तते ताः पावकवत्य इत्यर्थः । ताभिर्विकर्षतीत्यनुवर्तते । पावकस्याग्नेरन्नवचनहेतुत्वादन्नत्वम् ।

कल्पः—" अपामिदं न्ययनं नमस्ते हरसे शोचिष इति द्वाभ्यामग्निमधिरोहति " इति ।

तत्र प्रथमामाह—

अपामिदं न्ययनꣳ समुद्रस्य निवे-
शनम् । अन्यं ते अस्मत्तपन्तु हेतयः
पावको अस्मभ्यꣳ शिवो भव ।, इति ।

इदं चित्याग्निस्थानमपां न्ययनं नियमेन प्राप्तिस्थानं यागद्वाराऽप्यापः प्राप्यन्ते । अत एवापां बहुलत्वात्समुद्रस्य निवेशनं गृहस्थानीयम् । तद्रूप हेऽग्ने ते त्वदीया हेतयोऽस्मत्तोऽन्यं विरोधिनं पुरुषं तपन्तु क्लेशयन्तु । अस्मभ्यमस्मदर्थं पावकः शुद्धः शिवः शान्तश्च भव ॥

अथ द्वितीयामाह—

नमस्ते हरसे शोचिषे नमस्ते अस्त्व-
र्चिषे । अन्यं ते अस्मत्तपन्तु हेतयः
पावको अस्मभ्यꣳ शिवो भव ।, इति ।

हेऽग्ने ते तव हरसे रसानां हन्त्रे शोचिषे शोषणहेतवे तेजसे नमोऽस्तु । किंच, ते तवार्चिषे पदार्थान्प्रकाशयित्रे तेजसे नमोऽस्तु । अन्यमित्यादि पूर्ववत् ॥

एतन्मन्त्रसाध्यादधिरोहणात्पूर्वमुपानत्प्रतिमोचनं विधत्ते—

" मृत्युर्वा एष यदग्निर्ब्रह्मण एतद्रूपं यत्कृष्णाजिनं कार्ष्णी उपानहावुपमुञ्चते ब्रह्मणैव मृत्योरन्तर्धत्ते " [ सं० का० ५ प्र० ४ अ० ४ ] इति ।

अग्नेर्दाहकत्वान्मृत्युत्वं प्रसिद्धं, कृष्णाजिनं तु ब्रह्मणो वेदस्य रूपम् । अत एव दीक्षाप्रकरणे समाम्नायते—"ऋक्सामे वै देवेभ्यो यज्ञायातिष्ठमाने कृष्णो रूपं कृत्वाऽपक्रम्यातिष्ठताम् " इति । कृष्णाजिननिर्मिते उपानहौ कार्ष्णी, तयोः प्रतिमोके सति वेदेनैव मृत्युरन्तर्हितो भवति ॥

उपानद्द्वयस्य प्रतिमोकाप्रतिमोकयोर्दोषसद्भावादेकस्या एव प्रतिमोकं विधत्ते—

" अन्तर्मृत्योर्धत्तेऽन्तरन्नाद्यादित्याहुरन्यामुपमुञ्चतेऽन्यां नान्तरेव मृत्योर्धत्तेऽवान्नाद्यꣳ रुन्धे " [ सं० का० ५ प्र० ४ अ० ४ ] इति ।

उभयोरप्यप्रतिमोकतया मृत्युबाधः । प्रतिमोकेन मृत्योरन्तर्धानं मृत्युरुपशाम्यति । अस्ति त्वन्यो दोषः—यथा मृत्योरन्तर्धानमेवमन्नाद्यादप्यन्तर्हितो भवतीत्येवमभिज्ञा आहुः । अतस्तत्परिहारायैकामुपानहमुपमुञ्चत इतरां नोपमुञ्चेत । तथा सत्युपमोकेन मृत्योरन्तर्धानं भवति । अनुपमोकेन चान्नाद्यं प्राप्नोति ॥

उपानदुपमोकादूर्ध्वं यच्चितेरधिरोहणं तदङ्गभूते द्वितीयेऽस्मिन्मन्त्रे प्रथमार्धस्य तात्पर्यं दर्शयति—

" नमस्ते हरसे शोचिष इत्याह नमस्कृत्य हि वसीयाꣳसमुपचरन्ति " [ सं० का० ५ प्र० ४ अ० ४ ] इति ।

लोके हि योऽतिशयेन वसुमान्भवति तं भृत्या आदौ नमस्कृत्य पश्चादुपचरन्ति । ततोऽग्नेरप्यत्र नमस्कारो युक्तः ॥

तृतीयपादस्य तात्पर्यं दर्शयति—

" अन्यं ते अस्मत्तपन्तु हेतय इत्याह यमेव द्वेष्टि तमस्य शुचाऽर्पयति " [ सं० का० ५ प्र० ४ अ० ४ ] इति ।

तं द्वेष्यमस्याग्नेः संतापेन योजयति ॥

चतुर्थपादस्य तात्पर्यं दर्शयति—

"पावको अस्मभ्यꣳ शिवो भवेत्याहान्नं वै पावकोऽन्नमेवाव रुन्धे" [ सं० का० ५ प्र० ४ अ० ४ ] इति ॥

अपामिदं न्ययनमित्यादिमन्त्रसंख्याविशिष्टमधिरोहणं विधत्ते—

" द्वाभ्यामधि क्रामति प्रतिष्ठित्यै " [सं० का० ५ प्र० ४ अ० ४] इति॥

सामान्येन विनियुक्तौ मन्त्रौ पुनर्विशेषाकारेण विनियुङ्क्ते—

" अपस्यवतीभ्याꣳ शान्त्यै " [ सं० का० ५ प्र० ४ अ० ४ ] इति ।

अपामिदमित्येवमप्शब्दो ययोर्ऋचोस्ते अपस्यवत्यौ । ताभ्यामधिरोहणे सत्यग्नितापस्य शान्तिर्भवति ॥

कल्पः—" नृषदे वडिति पञ्चभिरुत्तरवेदिवदग्निं स्वयमातृण्णां वा व्याघार्य " इति ।

---

१ घ. ङ. 'मुपमुञ्चेतेतरां ।

पाठस्तु—

नृषदे वडप्सुषदे वड्वनसदे वड्-
बर्हिषदे वट्सुवर्विदे वट् ।, इति ।

नृषु मनुष्येषु जाठराग्निरूपेण सीदतीति नृषत्, तस्मै वड्ढविर्दत्तम् । वाड-वरूपेणाप्सु सीदतीत्यप्सुषत् । दावाग्निरूपेण वने सीदतीति वनसत् । आह-वनीयादिरूपेण बर्हिषि यज्ञे सीदतीति बर्हिषत् । आदित्यरूपेण स्वर्गं विन्दते लभत इति सुवर्वित् ॥

एतान्मन्त्रान्विनियुङ्क्ते—

" नृषदे वडिति व्याघारयति पङ्क्त्याऽऽहुत्या यज्ञमुखमा रभते " [ सं० का० ५ प्र० ४ अ० ५ ] इति ।

पञ्चसंख्योपेतयाऽऽहुत्या यज्ञे मुख्यमङ्गमुपक्रान्तवान्भवति ॥

अथ दक्षिणमंसमुत्तरां श्रोणिमित्यादिकं वक्तव्यं विधत्ते—

" अक्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रति-ष्ठित्यै " [ सं० का० ५ प्र० ४ अ० ५ ] इति ॥

मन्त्रगतं वट्शब्दं प्रशंसति—

" यद्वषट्कुर्याद्यातयामाऽस्य वषट्कारः स्याद्यन्न वषट्कुर्याद्रक्षाꣳसि यज्ञꣳ हन्युर्वडित्याह परोक्षमेव वषट्करोति नास्य यातयामा वषट्कारो भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति " [ सं० का० ५ प्र० ४ अ० ५ ] इति ।

एतच्च वाक्यं सं ते वायुर्मातरिश्वा दधात्वितिमन्त्रे तस्मै च देवि वषडस्तु तुभ्यमित्यस्य पदस्य व्याख्यानरूपत्वं ब्राह्मणेनोदाहृत्य सम्यग्विवृतम् ॥

कल्पः—" ये देवा देवानामिति द्वाभ्यामनुपरिचारं दध्ना मधुमिश्रेण दर्भ-मुष्टिनाऽग्निं व्यवोक्षति " इति ।

तत्र प्रथमामाह—

ये देवा देवानां यज्ञिया यज्ञियानाꣳ संवत्सरी-
णमुप भागमासते । अहुतादो हविषो यज्ञे
अस्मिन्त्स्वयं जुहुध्वं मधुनो घृतस्य ।, इति ।

द्विविधा देवा हविर्भुज इन्द्रवरुणादयः शरीरनिर्वाहकाः प्राणात्मकाः प्राणापानादयश्च । दीव्यन्तीति व्युत्पत्तिरुभयत्रापि संभवति । उभयेऽप्ये यज्ञियाः । तत्रेन्द्रादयो देवा यज्ञेन पूज्यत्वाद्यज्ञियाः । प्राणादयस्तु यज्ञेन पूज-

---

१ ख. च. 'स्य व्या' ।

कत्वाद्यज्ञियाः। एवं सति यज्ञियानामिन्द्रादीनां देवानां संबन्धिनः प्राणरूपा ये यज्ञियानां (स्ते) संवत्सरीणं संवत्सरेण साध्यं चित्याग्निभागं भजनीयमुपासते सेवन्ते प्राणाद्या अहुतादः। हुतं स्वाहाकारेण समर्पितमदन्तीति हुताद इन्द्रादयस्तद्विपरीतत्वात्प्राणा अहुतादः। तथाविधा हे प्राणा अस्मिन्यज्ञे हविषोऽस्माभिर्हूयमानस्य मधुनो मधुरस्य [ घृतस्य ] भागं स्वयं जुहुध्वं मदीयेन स्वाहाकारसमर्पणेन विना स्वयमेव स्वी कुरुत ॥

अथ द्वितीयामाह—

ये देवा देवेष्वधि देवत्वमायन्ये ब्रह्मणः पुरएतारो अस्य। येभ्यो नर्ते पवते धाम किं चन न ते दिवो न पृथिव्या अधि स्नुषु।, इति।

ये प्राणा देवेष्विन्द्रादिष्वप्यधि अधिष्ठातृत्वेन देवत्वमायन्प्राप्ताः प्राणैरधिष्ठिता एवेन्द्रादिविग्रहा व्यवहरन्तीत्यर्थः। किं च ये प्राणा अस्य ब्रह्मणश्चीयमानस्याग्नेः परिवृढस्य पुरएतारः पुरतो गन्तारो निर्वाहका इत्यर्थः। न खलु प्राणैर्विना चीयमानोऽग्निर्वोढुं शक्यते। किं च येभ्य ऋते यान्विना किंचन धाम विशां न पवते न शुद्धं भवति, ते प्राणरूपा देवा दिवो न दिव्यपि न तिष्ठन्ति, पृथिव्यां न भूमावपि न तिष्ठन्ति, किं तर्हि स्नुषु पर्वतसानुसदृशेषु शरीरगतचक्षुरादिगोलकेष्वाश्रित्य वर्तन्ते ॥

एतन्मन्त्रद्वयं विनियुङ्क्ते—

“हुतादो वा अन्ये देवा अहुतादोऽन्ये तानग्निचिदेवोभयान्प्रीणाति ये देवा देवानामिति दध्ना मधुमिश्रेणावोक्षति हुतादश्चैव देवानहुतादश्च यजमानः प्रीणाति ते यजमानं प्रीणन्ति दध्नैव हुतादः प्रीणाति मधुषाऽहुतादो ग्राम्यं वा एतदन्नं यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेणावोक्षत्युभयस्यावरुद्ध्यै” [ सं० का० ५ प्र० ४ अ० ५ ] इति।

हुताद इन्द्रादयोऽहुतादः प्राणाः। तानुभयानपि देवानयमग्निचित्प्रीणयितुमर्हति। अतो मधुमिश्रेण दध्नाऽवोक्षणं कुर्यात्। तेन चोभये प्रीताः सन्तो यजमानमपि प्रीणयन्ति। तत्रापीन्द्रादीनां दध्ना प्रीतिः, प्राणानां मधुना प्रीतिः। किंच, दध्नो ग्राम्यत्वान्मधुनश्चाऽऽरण्यत्वादुभाभ्यामवोक्षणे सत्युभयमपि संपादितं भवति ॥

अवोक्षणसाधनं प्रौढदर्भमुष्टिं विधत्ते—

“ग्रुमुष्टिनाऽवोक्षति प्राजापत्यो वै ग्रुमुष्टिः सयोनित्वाय” [ सं० का० ५ प्र० ४ अ० ५ ] इति।

गुरुः स्थूलो दर्भमुष्टिर्ग्रुमुष्टिः । तस्य प्रजापतिवत्प्रौढत्वात्प्राजापत्यत्वम् । अतस्तेनावोक्षणं सयोनित्वाय भवति । अग्निरपि प्रजापतिनोत्पादितत्वात्प्राजापत्यः । तेन समानयोनित्वम् ॥

मन्त्रद्वित्वं प्रशंसति—

" द्वाभ्यां प्रतिष्ठित्यै " [ सं० का० ५ प्र० ४ अ० ५ ] इति ॥

अवोक्षणकाले परितो भ्रमणं विधत्ते—

" अनुपरिचारमवोक्षत्यपरिवर्गमेवैनान्प्रीणाति " [ सं० का० ५ प्र० ४ अ० ५ ] इति ।

अनुपरिचारमनुक्रमेण परितश्चरित्वाऽपरिवर्गमेवाग्न्यवयवेषु कस्यापि वर्जनमकृत्वैवैनानग्न्यवयवान्प्रीणाति ॥

कल्पः—" प्राणदा अपानदा इति प्रत्यवरोह्य " इति ।

पाठस्तु—

प्राणदा अपानदा व्यानदाश्चक्षुर्दा वर्चोदा
वरिवोदाः । अन्यं ते अस्मत्तपन्तु हेतयः
पावको अस्मभ्यꣳ शिवो भव । , इति ।

यजमानाय प्राणं ददातीति प्राणदाः प्राणं सुस्थिरं करोतीत्यर्थः । एवमुत्तरत्रापि । वर्चो बलं, वरिवः प्र(पू)जा । अन्यमित्यादि पूर्ववत् ॥

प्राणादिदानप्रसक्तिपूर्वकं मन्त्रं व्याचष्टे—

" वि वा एष प्राणैः प्रजया पशुभिर्ऋध्यते योऽग्निं चिन्वन्नधिक्रामति प्राणदा अपानदा इत्याह प्राणानेवाऽऽत्मन्धत्ते वर्चोदा वरिवोदा इत्याह प्रजा वै वर्चः पशवो वरिवः प्रजामेव पशूनात्मन्धत्ते " [ सं० का० ५ प्र० ४ अ० ५ ] इति ।

यो यजमानोऽग्निचयनकालेऽग्निमधिरोहत्येष प्राणादिभिर्वियुज्यते । अ[त:] प्राणादिदानं प्रार्थनीयमिति मन्त्रः प्रवर्तते । तत्र पूर्वभागेन(ण) प्राणा[-] न्स्वात्मनि सुस्थितान्करोति । उत्तरभागेन(ण) बलवाचिना वर्चःशब्दे[न] पुत्रपौत्रादिरूपाः प्रजा उपलक्षिताः । तासु हि सतीषु व्यवहर्तुं प्रब[ल-] त्वात् । पूजावाचिना वरिवःशब्देन पशव उपलक्षिताः । तेषु सत्सु क्षीरा[दि-] संपत्त्या पूज्यो भवति ॥

कल्पः—"अग्निस्तिग्मेनेति द्वाभ्यामग्नयेऽनीकवत एकामाहुतिं हुत्वा"इति ।

तत्र प्रथमामाह—

( परिषेचनविकर्षणाद्यभिधानम् )

अग्निस्तिग्मेन शोचिषा यꣳसद्विश्वं न्यत्रि-
णम् । अग्निर्नो वꣳसते रयिम् । , इति ।

अयं चीयमानोऽग्निस्तिग्मेन शोचिषा तीक्ष्णया ज्वालयाऽत्रिणं राक्षसादिं विश्वं सर्वं विरोधिनं नियंसन्नियमयतु विनाशयत्वित्यर्थः । अत्रमदनशीलं बाधकमनिष्टं तदस्यास्तीत्यत्री तं विनाशयतु । किंचायमग्निर्नोऽस्मदर्थं रयिं धनं वंसते वसितुं संभाजयितुमिच्छतु ॥

अथ द्वितीयामाह—

सैनाऽनीकेन सुविदत्रो अस्मे यष्टा देवाꣳ
आयजिष्ठः स्वस्ति । अदब्धो गोपा उत नः
परस्पा अग्ने द्युमदुत रेवद्दिदीहि ॥, इति ॥

हेऽग्ने स त्वं द्युमद्दीप्यमानमुतापि च रेवद्बहुधनयुक्तं गृहक्षेत्रादिकं दिदीहि प्रकाशय । कीदृशस्त्वम्, एनाऽनीकेन सुविदत्रोऽनेन ज्वालासमूहेन सुष्ठु वेदिता, अस्मे देवान्यष्टाऽस्मदर्थं देवानुद्दिश्य यागनिष्पादकः, स्वस्ति विघ्न-राहित्यं यथा भवति तथाऽऽयजिष्ठोऽतिशयेन कृत्स्नयागसमाप्तिकारी, अदब्धः केनाप्यहिंसितः, गोपा मन्त्रस्य गोप्ता, उतापि च नोऽस्माकं परस्पा अतिश-येन पालयिता ॥

अत्र विनियोगसंग्रहः—

षष्ठे पञ्चानुवाकाः स्युरग्निशेषस्ततः परे ।
चत्वारो ह्यश्वमेधार्था अश्मेति परिषिञ्चति ॥ १ ॥
अश्मंस्ते प्रतिपर्येति समुद्रेत्यग्निमष्टभिः ।
विकर्षेदित्यपां द्वाभ्यामारोहति चितिं नृषत् ॥ २ ॥
व्याघारः पञ्चभिर्ये दे द्वाभ्यामग्निमवोक्षति ।
प्राणदा अवरुह्याग्निस्तिग्मेनेत्याहुतिद्वयम् ॥
प्रथमे त्वनुवाकेऽस्मिन्मन्त्रा द्वाविंशतिरीरि(तिः स्थि)ताः ॥ ३ ॥

अथ मीमांसा ।

नवमाध्यायस्य प्रथमपादे चिन्तितम्—

" विकर्षप्रोक्षणे कार्ये प्रतीष्टकमुतैकधा ।
आद्योऽवयव्यसत्त्वेन मैवं भूदेशसत्त्वतः ॥

" इष्टकाभिरग्निं चिनुते " इति श्रूयते । तत्रेदमाम्नायते—" मण्डूकेनाग्निं विकर्षति । वेतसशाखया चावकाभिश्चाग्निं विकर्षति । हिरण्यशकलसहस्रेणाग्निं

प्रोक्षति " इति । शाखाग्रे मण्डूकं बद्ध्वा तेन विकर्षतीत्यर्थः । ते च विकर्षणप्रोक्षणे प्रतीष्टकं कर्तव्ये । कुतः, चिताभ्य इष्टकाभ्यः पृथगग्निशब्दार्थस्य कस्यचिदवयविद्रव्यस्याभावादिति चेन्मैवम् । उपहिताभिरिष्टकाभिः संयुक्तस्य प्रदेशस्यावयविद्रव्यत्वात् । तस्य चाग्न्याधारत्वेनाग्निशब्दार्थत्वम् । तस्मादग्नेरेकत्वात्सकृदेव विकर्षणप्रोक्षणे कुर्यात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ चतुर्थाष्टके षष्ठप्रपाठके द्वितीयोऽनुवाकः । )

---

य इमा विश्वा भुवनानि जुह्वदृषिर्होता निषसादा पिता नः । स आशिषा द्रविणमिच्छमानः परमच्छदो वर आ विवेश । विश्वकर्मा मनसा यद्विहाया धाता विधाता परमोत संदृक् । तेषामिष्टानि समिषा मदन्ति यत्र सप्तर्षीन्पर एकमाहुः । यो नः पिता जनिता यो विधाता यो नः सतो अभ्या सज्जजान ( १ ) । यो देवानां नामधा एक एव तꣳ संप्रश्नं भुवना यन्त्यन्या । त आऽयजन्त द्रविणꣳ समस्मा ऋषयः पूर्वे जरितारो न भूना । असूर्ता सूर्ता रजसो विमाने ये भूतानि समकृण्वन्निमानि । न तं विदाथ य इदं जजानान्यद्युष्माकमन्तरं भवाति । नीहारेण प्रा-

( सूक्ताभ्यां होमाभिधानम् )

वृता जल्प्यां चासुतृपं उक्थशासंश्चरन्ति । परो दिवा पर एना ( २ ) पृथिव्या परो देवेभिरसुरैर्गुहा यत् । कः स्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे । तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे । अजस्य नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधि श्रितम् । विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद्द्वितीयः । तृतीयः पिता जनितौषधीनाम् ( ३ ) अपां गर्भं व्यदधात्पुरुत्रा । चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नन्नमाने । यदेदन्ता अददृंहन्त पूर्व आदिद्द्यावापृथिवी अप्रथेताम् । विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् । सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन्देव एकः । किꣳ स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्किमासीत् । यदी भूमिं जनयन् ( ४ ) विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः । किꣳ स्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदु तद्यदध्य-

तिष्ठद्भुवनानि धारयन् । या ते धामानि पर-
माणि याऽवमा या मध्यमा विश्वकर्मन्नुतेमा ।
शिक्षा सखिभ्यो हविषि स्वधावः स्वयं
यजस्व तनुवं जुषाणः । वाचस्पतिं विश्वकर्मा-
णमूतये ( ५ ) मनोयुजं वाजे अद्या हुवेम ।
स नो नेदिष्ठा हवनानि जोषते विश्वशंभूरवसे
साधुकर्मा । विश्वकर्मन्हविषा वावृधानः स्वयं
यजस्व तनुवं जुषाणः । मुह्यन्त्वन्ये अभितः
सपत्ना इहास्माकं मघवा सूरिरस्तु ।
विश्वकर्मन्हविषा वर्धनेन त्रातारमिन्द्रमकृणो-
रवध्यम् । तस्मै विशः समनमन्त पूर्वीरयमुग्रो
विहव्यो यथाऽसत् । समुद्राय वयुनाय सि-
न्धूनां पतये नमः । नदीनाꣳ सर्वासां पित्रे
जुहुता विश्वकर्मणे विश्वाऽहाऽमर्त्यꣳ हविः(६)॥

( जजानैनौषधीनां भूमिं जनयन्नुतये नमो नव च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके
षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ चतुर्थाष्टके षष्ठप्रपाठके द्वितीयोऽनुवाकः । )

---

यः । इमा । विश्वा । भुवनानि । जुह्वत् ।
ऋषिः । होता । निषसादेति नि—ससाद । पिता ।

नः । सः । आशिषेत्या—शिषा । द्रविणम् । इच्छ- मानः । परमच्छद इति परम—छदः । वरे । एति । विवेश । विश्वकर्मेति विश्व—कर्मा । मनसा । यत् । विहाया इति वि—हायाः । धाता । विधातेति वि— धाता । परमा । उत । संदृगिति सं—दृक् । तेषाम् । इष्टानि । समिति । इषा । मदन्ति । यत्र । सप्तर्षी- निति सप्त—ऋषीन् । परः । एकम् । आहुः । यः । नः । पिता । जनिता । यः । विधातेति वि—धाता । यः । नः । सतः । अभि । एति । सत् । जजान (१) । यः । देवानाम् । नामधा इति नाम—धाः । एकः । एव । तम् । संप्रश्नमिति सं—प्रश्नम् । भुवना । यन्ति । अन्या । ते । एति । अयजन्त । द्रविणम् । समिति । अस्मै । ऋषयः । पूर्वे । जरितारः । न । भूना । असूर्ता । सूर्ता । रजसः । विमान इति वि—माने । ये । भूतानि । समकृण्वन्निति सम्— अकृण्वन् । इमानि । न । तम् । विदाथ । यः । इदम् । जजान । अन्यत् । युष्माकम् । अन्तरम् । भवाति । नीहारेण । प्रावृताः । जल्प्या । च । असु- तृप इत्यसु—तृपः । उक्थशास इत्युक्थ—शासः । चरन्ति । परः । दिवा । परः । एना ( २ ) । पृथि-

व्या । परः । देवेभिः । असुरैः । गुहा । यत् । कम् । स्वित् । गर्भम् । प्रथमम् । दध्रे । आपः । यत्र । देवाः । समगच्छन्तेति सम्—अगच्छन्त । विश्वे । तम् । इत् । गर्भम् । प्रथमम् । दध्रे । आपः । यत्र । देवाः । समगच्छन्तेति सम्—अगच्छन्त । विश्वे । अजस्य । नाभौ । अधीति । एकम् । अर्पितम् । यस्मिन् । इदम् । विश्वम् । भुवनम् । अधीति । श्रितम् । विश्वकर्मेति विश्व—कर्मा । हि । अजनिष्ट । देवः । आत् । इत् । गन्धर्वः । अभवत् । द्वितीयः । तृतीयः । पिता । जनिता । ओषधीनाम् ( ३ )। अपाम् । गर्भम् । वीति । अदधात् । पुरुत्रेति पुरु—त्रा । चक्षुषः । पिता । मनसा । हि । धीरः । घृतम् । एने इति । अजनत् । नम्नमाने इति । यदा । इत् । अन्ताः । अदद्दृंहन्त । पूर्वे । आत् । इत् । द्यावापृथिवी इति द्यावा—पृथिवी । अप्रथेताम् । विश्वतश्चक्षुरिति विश्वतः—चक्षुः । उत । विश्वतोमुख इति विश्वतः—मुखः । विश्वतोहस्त इति विश्वतः—हस्तः । उत । विश्वतस्पादिति विश्वतः—पात् । समिति । बाहुभ्यामिति बाहु—भ्याम् । नमति । समिति । पतत्रैः । द्यावापृथिवी इति द्यावा—पृथिवी ।

( सूक्ताभ्यां होमाभिधानम् )

जनयन्॑ । दे॒वः । एकः॑ । किम् । स्वि॒त् । आ॒सी॒त् । अ॒धि॒ष्ठान॒मित्य॑धि—स्थान॑म् । आ॒रम्भ॑ण॒मित्या॑—रम्भ॑णम् । क॒त॒मत् । स्वि॒त् । किम् । आ॒सी॒त् । यदि॑ । भूमि॑म् । ज॒नय॑न् (४)। वि॒श्वक॒र्मेति॒ वि॒श्व—क॒र्मा॒ । वीति॑ । द्याम् । और्णो॑त् । म॒हि॒ना । वि॒श्वच॑क्षा॒ इति॑ वि॒श्व—च॒क्षाः । किम् । स्वि॒त् । वन॑म् । कः । उ॒ । सः । वृ॒क्षः । आ॒सी॒त् । यतः॑ । द्यावा॑पृथि॒वी इति॒ द्यावा॑—पृ॒थि॒वी । नि॒ष्टत॒क्षुरिति॒ निः—त॒त॒क्षुः । मनी॑षिणः । मन॑सा । पृ॒च्छत॑ । इत् । उ॒ । तत् । यत् । अ॒ध्यति॑ष्ठदित्य॑धि—अति॑ष्ठत् । भुव॑नानि । धा॒रय॑न् । या । ते॒ । धामा॑नि । प॒र॒माणि॑ । या । अ॒व॒मा । या । म॒ध्य॒मा । वि॒श्व॒क॒र्म॒न्निति॑ वि॒श्व—क॒र्म॒न् । उ॒त । इ॒मा । शिक्ष॑ । सखि॑भ्य॒ इति॒ सखि॑—भ्य॒ः । ह॒विषि॑ । स्व॒धा॒व॒ इति॑ स्वधा—व॒ः । स्व॒यम् । य॒ज॒स्व । त॒नुव॑म् । जु॒षा॒णः । वा॒चः । पति॑म् । वि॒श्वक॑र्मा॒णमिति॑ वि॒श्व—क॒र्मा॒ण॒म् । ऊ॒तये॑ (५)। म॒नो॒यु॒जमिति॑ मनः—यु॒जम् । वाजे॑ । अ॒द्य । हु॒वे॒म । सः । नः॒ । नेदि॑ष्ठा । हव॑नानि । जो॒ष॒ते॒ । वि॒श्वशं॑भू॒रिति॑ वि॒श्व—शं॒भू॒ । अव॑से । सा॒धु॒क॒र्मेति॑ सा॒धु—क॒र्मा॒ । वि॒श्व॒क॒र्म॒न्निति॑ वि॒श्व—क॒र्म॒न् । ह॒विषा॑ । वा॒वृ॒धा॒नः । स्व॒यम् । य॒ज-

स्व । तनुवम् । जुषाणः । मुह्यन्तु । अन्ये । अभितः । सपत्नाः । इह । अस्माकम् । मघवेति मघ—वा । सूरिः । अस्तु । विश्वकर्मन्निति विश्व—कर्मन् । हविषा । वर्धनेन । त्रातारम् । इन्द्रम् । अकृणोः । अवध्यम् । तस्मै । विशः । समिति । अनमन्त । पूर्वीः । अयम् । उग्रः । विहव्य इति वि—हव्यः । यथा । असत् । समुद्राय । वयुनाय । सिन्धूनाम् । पतये । नमः । नदीनाम् । सर्वासाम् । पित्रे । जुहुत । विश्वकर्मण इति विश्व—कर्मणे । विश्वा । अहा । अमर्त्यम् । हविः ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ चतुर्थकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः । )

---

प्रथमानुवाके परिषेचनादिकमुक्तम् । अथ द्वितीयानुवाके सूक्ताभ्यां होमा उच्येते ।

कल्पः—" षोडशगृहीतेन स्रुचं पूरयित्वा वैश्वकर्मणानि जुहोति य इमा विश्वा भुवनानि जुह्वच्चक्षुषः पिता मनसा हि धीर इति नानासूक्ताभ्यां आहुती यं कामयेत चिरं पाप्मनो निर्मुच्येतेत्येकैकं तस्येत्युक्तम् " इति ।

तत्र प्रथमसूक्ते प्रथमामृचमाह—

य इमा विश्वा भुवनानि जुह्वदृषिर्होता निषसादा पिता नः । स आशिषा द्रविणमिच्छमानः परमच्छदो वर आ विवेश ।, इति ।

( सूक्ताभ्यां होमाभिधानम् )

यो विश्वकर्मा परमेश्वर इमा विश्वा भुवनानि जुह्वत्प्रलयकाले पृथिव्यादी- निमान्सर्वाँल्लोकान्स्वात्मन्याहुतिप्रक्षेपवत्संहरन्नृषिरतीन्द्रियद्रष्टा सर्वज्ञो होता संसार[1]होमकर्ता नोऽस्माकं पिता जनको निषसाद स्वयं स्थितवान्, प्रलय- काले प्राप्ते सति सर्वाँल्लोकान्संहृत्यास्माकमपि संहर्ता पुनः स्रष्टा च सन्स- र्वज्ञोऽयं परमेश्वरः स्वयमेक एवाऽऽसीत्। अत एव सर्वा अप्युपनिषद एव- माहुः—" आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्सदेव सोम्येे- दमग्र आसीत्। एकमेवाद्वितीयम् " इत्याद्याः। स तादृशः परमेश्वर आशिषा बहु[3] स्यां प्रजायेयेत्येवंरूपया पुनःसिसृक्षया द्रविणमिच्छमानो धनोपलक्षितं जगद्भोगमपेक्षमाणः परमच्छदः परमं स्वकीयमेवाद्वितीयं[4] परमार्थरूपमावृण्व- न्वरे स्वेन सृष्टे शरीरमध्यवर्तिनि पुण्डरीकस्थान आविवेश जीवरूपेण प्रविष्टः। एतच्च सर्वमुपनिषद्याम्नातम्—" सोऽकामयत। बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इद्ँ सर्वमसृजत। यदिदं किंच। तत्सृष्ट्वा। तदेवानुप्राविशत् " इति। एवमन्या अप्युपनिषद उदाहार्याः॥

अथ द्वितीयामृचमाह—

विश्वकर्मा मनसा यद्विहाया धाता विधाता परमोत संदृक्। तेषामिष्टानि समिषा मद- न्ति यत्र सप्तर्षीन्पर एकमाहुः। , इति।

विश्वविषयाणि कर्माणि सृष्टिस्थितिसंहाररूपाणि यस्यासौ विश्वकर्मा। तस्य च तेषु कर्मसु सत्यत्वादय एव साधनं सत्यसंकल्पत्वात्। यद्यस्मादयं मनसा संकल्पमात्रेण विश्वकर्मा तस्माद्धाता विधाता विहाया इति चोच्यते। धातोत्पादकः। विधाता पोषकः। विशेषेण जहाति परित्यजतीति विहायाः संहर्तेत्यर्थः। उतापि चात एव परमा परमः सर्वेभ्य उत्कृष्टः सम्यक्पश्यतीति संदृक्सर्वज्ञ इत्यर्थः। यत्र यस्मिन्परे परस्मिन्नीश्वरे सप्तर्षीनेकमाहुः, य एते मरीच्यत्रिप्रमुखाः सप्तर्षयो विविधा दृश्यन्ते ते सर्वे सृष्टेः प्राक्परस्मिन्नेकीभूता इति वेदान्तपारगा आहुः। स च परमेश्वरस्तेषां सप्तर्षिप्रभृतीनामिष्टान्यपेक्षि- तानि स्थानानीषा स्वेच्छामात्रेण संपादयतीति। तेन च ते महर्षयो हृष्यन्ति॥

अथ तृतीयामृचमाह—

यो नः पिता जनिता यो विधाता यो नः

---

१ क. घ. ङ. °ररूपस्य हो°। २ क. घ. ङ. °मस्य क°। ३ च. वहुः। ४ ख. घ. ङ. च. °यं पार°।

सतो अभ्या सज्जजान । यो देवानां नामधा
एक एव तꣳ संप्रश्नं भुवना यन्त्यन्या ।, इति ।

यो विश्वकर्मा नोऽस्माकं पिता पालयिता न केवलं पालक उत्पादकोऽपि किमनेनास्माकमुत्पादक इति संकोचेन, यो विधाता सर्वस्य जगत उत्पादको यो विश्वकर्मा नोऽस्माकमुत्पन्नानां सद्वतमार्नमिदं भोग्यजातं सतो जजान सदेव सोम्येतिश्रुत्युक्तात्स्वस्वरूपादुत्पादयामास । यश्च विश्वकर्मा देवानां नामधाः स्वयमेव सर्वदेवरूपेणाऽऽविर्भूयेन्द्रमित्रादिदेवतानामानि धारयति । अत एवान्यत्राऽऽम्नातम्—" इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः" इति । अत एव बहूनां देवानां नामानि धारयन्नपि वस्तुतः स्वयमेक एव, तं विश्वकर्माणं परमेश्वरमन्या भुवना तस्मादन्यानि सृष्टानि सर्वाणि भुवनानि संप्रश्नं यथा भवति तथा यन्ति प्रलयकाल एकत्वं प्राप्नुवन्ति । एकीभावयुक्ते प्रलये क ईश्वरः कानि भुवनानीत्येवं प्रश्नः संप्रधारणं प्रवर्तते विभागाभावेन श्रुत्यनभिज्ञैर्ज्ञातुमशक्यत्वात् ॥

अथ चतुर्थीमृचमाह—

त आऽयजन्त द्रविणꣳ समस्मा ऋषयः पूर्वे
जरितारो न भूना । असूर्ता सूर्ता रजसो वि-
माने ये भूतानि समकृण्वन्निमानि ।, इति ।

पूर्वोदाहृतेन विश्वकर्मणा प्रथममुत्पादिता ये स्रष्टार इमानि भूतानि सर्वानेतान्प्राणिनः समकृण्वन्सम्यगुत्पादितवन्तः, ते पूर्वे स्रष्टारोऽस्मै सृष्टाय जगते द्रविणं धनरूपं भोग्यजातं समायजन्त सम्यक्संपादितवन्तः । कीदृशास्ते, ऋषयोऽतीन्द्रियद्रष्टारः सर्वज्ञा इत्यर्थः । भूना जरितारो न भूम्ना स्वकीयेन महत्त्वेन कदाचिदपि जीर्णा न भवन्ति । कीदृशानि भूतानि, असूर्ताऽसुभिः प्राणैरीरितानि प्राणयुक्तानीत्यर्थः । तथा रजसो विमाने सूर्ता रञ्जनात्मकस्य विशेषेण प्रमितौ स्वस्वकर्मभिः सुष्ठु प्रेरितानि ॥

अथ पञ्चमीमृचमाह—

न तं विदाथ य इदं जजानान्यद्युष्मा-
कमन्तरं भवाति । नीहारेण प्रावृता ज-
ल्प्या चासुतृप उक्थशासश्चरन्ति ।, इति ।

( सूक्ताभ्यां होमाभिधानम् )

यो विश्वकर्मेदं जजानोत्पादितवांस्तं विश्वकर्माणं न विदाथ तेन सृष्टा हे जीवा यूयं न जानीथ। देवदत्तोऽहं यज्ञदत्तोऽहमित्येवं सर्वेऽपि वयमात्मानं विश्वकर्माणं जानीम इति यद्युच्येत तदसत्। न ह्यहंप्रत्ययगम्यं जीवरूपं विश्वकर्मणः परमेश्वरस्य, किंतु युष्माकमहंप्रत्ययगम्यादतिरिक्तं सर्ववेदान्तवेद्यमीश्वरतत्त्वं भवति विद्यते। तथाऽपि जीवरूपवत्कुतो न जानीम इति चेत्। नीहारेण प्रावृता भवन्तो नीहारसदृशेनाज्ञानेनाऽऽवृतत्वान्न जानन्ति। यथा नीहारो नात्यन्तमसन्, दृष्टेरावरकत्वात्, नाप्यत्यन्तं सन्, काष्ठपाषाणादिरूपान्तरेण संवद्धुमयोग्यत्वात्, एवमज्ञानमपि नात्यन्तमसदीश्वरतत्त्वावरकत्वात्। नापि सद्बाधमात्रनिवर्त्यत्वात्। ईदृशेनानिर्वचनीयेनाज्ञानेन भवन्तः सर्वे जीवाः प्रावृताः। न केवलं तत्त्वं [ न जानन्तः ] किंतु जल्प्या च देवोऽहं मनुष्योऽहं ममेदं क्षेत्रमित्याद्यनृतजल्पनपराश्च। किंचासुतृपः, असुषु तृप्यन्तीत्यसुतृपः, केनापि प्रकारेण प्राणान्पोषयित्वा तावतैव तृप्यन्ति भवन्तो न तु परमेश्वरतत्त्वं विचारयितुं प्रवर्तन्ते न केवलमिह लोके भोगमात्रतृप्तिः किंतूक्थशासः परलोकेऽपि भोगं संपादयितुं नानाविधेषु यज्ञेषूक्थानि शस्त्राणि शंसन्तीत्युक्थशासः। तादृशा भूत्वा भवन्तश्चरन्ति ऐहिकामुष्मिकभोगे सर्वदा प्रवर्तन्ते। तस्मादज्ञानमिथ्याज्ञानपराधीनानां भवतां नास्ति तत्त्वज्ञानमित्यर्थः॥

अथ षष्ठीमृचमाह—

परो दिवा पर एना पृथिव्या परो देवेभिरसु-
रैर्गुहा यत्। कꣳ स्विद्गर्भं प्रथमं दध्र आपो
यत्र देवाः समगच्छन्त विश्वे।, इति।

यदीश्वरतत्त्वं गुहा हृदयपुण्डरीके गूढं दिवा परो द्युलोकादपि दूरे तिष्ठति, एना पृथिव्या परोऽस्याः पृथिव्या अपि दूरे तिष्ठति, देवेभिरसुरैः परो देवेभ्योऽसुरेभ्यश्च दूरे तिष्ठति। सकारान्तः परःशब्दो दूरवाची। दूरत्वं नाम विलक्षणत्वं सर्वजगद्विलक्षणत्वाद्गुरुशास्त्रमुखैर्ज्ञायत इत्यर्थः। किंच, यत्र यस्मिन्गर्भे विश्वे सर्वेऽपि देवाः समगच्छन्त संगताः संभूय वर्तन्ते, तं कंस्विद्गर्भमापः प्रथमं दध्रे। अद्भिः पूर्वं धृते गर्भे देवमनुष्यादयः सर्वे प्राणिनो वर्तन्त इत्येवं शास्त्रप्रसिद्धिः। सोऽपि गर्भः क इति न ज्ञायते। यदा स्थूलोऽप्ययं जगदाधारो न ज्ञातस्तदाऽत्यन्तसूक्ष्मतरत्त्वं न ज्ञायत इति किमु वक्तव्यमित्यभिप्रायः॥

अथ सप्तमीमृचमाह—

तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समग-

च्छन्त विश्वे । अजस्य नाभावध्येकमर्पितं
यस्मिन्निदं विश्वं भुवनमधि श्रितम् ।, इति ।

इदानीं गुरुशास्त्रानुशासनोपेतेषु पुरुषेषु विद्यमानस्तुतिरनयाऽभिधीयते— यत्र यस्मिन्ब्रह्माण्डगर्भे विश्वे देवाः समगच्छन्त तमित्तमेव गर्भमापः प्रथमं दध्रे धृतवत्यः । तद्धारणप्रकार एव स्पष्टी क्रियते—अजस्य जन्मरहितस्य परमेश्वरतत्त्वस्य नाभौ नाभिस्थानीये स्वरूपमध्य एकं किंचिद्बीजमध्यर्पितमधिकत्वेन स्थापितं, यस्मिन्बीज इदं विश्वं सर्वमपि भुवनमधिश्रितमधिकत्वेन स्थापितं तद्बीजमर्पितम् । तथा च स्मर्यते—

" अप एव ससर्जाऽऽदौ तासु वीर्यमवासृजत् ।
तदण्डमभवद्धैमं कोटिसूर्यसमप्रभम् " इति ॥

अथाष्टमीमृचमाह—

विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद्द्वितीयः । तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात्पुरुत्रा ।, इति ।

ब्रह्माण्डमध्यगतानामुत्पत्तिरुच्यते—अण्डमध्ये प्रथमं विश्वकर्मा देवतिर्यगादिविश्वभेदस्य कर्ता सत्यलोकनिवासी चतुर्मुखो देवोऽजनिष्टोत्पन्नः । आदिदनन्तरमेव तदपेक्षया द्वितीयो गन्धर्वोऽभवदुत्पन्नः । तत ऊर्ध्वमोषधीनां पिता पालको जनितो+त्पादकः सोमः पूर्वोक्तद्वयापेक्षया तृतीयोऽभवत् । तदेवमपां गर्भं ब्रह्माण्डं परमेश्वरः पुरुत्रा व्यदधाद्बहुधा व्यक्तं कृतवान् । इत्थमेकं सूक्तं समाप्तम् ॥

अथ द्वितीयसूक्ते प्रथमामृचमाह—

चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने । यदेदन्ता अददृंहन्त पूर्व आदिद्द्यावापृथिवी अप्रथेताम् ।, इति ।

चक्षुषश्चक्षुरादेः प्राणसमुदायस्य पितोत्पादको धीरो धैर्यवान् । मनसा स्वेच्छया घृतं घृतवत्प्राणिनामुपभोगसाधनभूते एने द्यावापृथिव्यौ परस्परानुकूल्येन नम्नमाने नमनोपेते अजनदुत्पादितवान् । यदेद्यदैव पूर्वे प्रथ-

---

+ अत्र सर्वपुस्तकेषु ' जनिता य उत्पादकः ' इति पाठो वर्तते स न युक्तः ।

---

१ ख. च. °सु बीजम° ।

( सूक्ताभ्यां होमाभिधानम् )

अन्ता अननयुक्ताश्चेष्टावन्तश्चक्षुरादिप्राणा अदृंहन्त दृढा अभवन्। आदिदनन्तरमेव द्यावापृथिवी अप्रथेतां द्यावापृथिव्यौ विस्तृते अभूताम् ॥

अथ द्वितीयामृचमाह—

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त
उत विश्वतस्पात्। सं बाहुभ्यां नमति सं
पतत्रैर्द्यावापृथिवी जनयन्देव एकः। ,इति।

चक्षुरादिप्राणानां द्यावापृथिव्योश्चोत्पत्तेरूर्ध्वं विश्वरूपधरः परमेश्वर एवं भासते। कथमिति तदुच्यते—विश्वतः सर्वतश्चक्षूंषि यस्यासौ विश्वतश्चक्षुः। परमेश्वरस्य सर्वप्राण्यात्मकत्वाद्यस्य प्राणिनो ये चक्षुषी ते तदुपाधिकस्य परमेश्वरस्यैवेति सर्वत्रास्य चक्षूंषि संपद्यन्ते। एवं मुखहस्तपादेष्वपि योजनीयम्। स तादृश एको देवो द्यावापृथिवी जनयन्बाहुभ्यां बाहुस्थानीयाभ्यां धर्माधर्माभ्यां निमित्तकारणाभ्यां संनमति जगत्सर्वं सम्यङ्नतं स्वाधीनं करोति। तथा पतत्रैः पतनशीलैरनित्यैः पञ्चभूतैरुपादानकारणैः संनमति जगत्स्वाधीनं करोति ॥

अथ तृतीयामृचमाह—

किꣳ स्विदासीदधिष्ठानमारम्भणं कतम-
त्स्वित्किमासीत्। यदी भूमिं जनयन्विश्व-
कर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः।,इति।

लोके हि घटं चिकीर्षुः कुलालो गृहादिकं किंचित्स्थानमधिष्ठाय मृद्द्रव्येण चक्रादिरूपैरुपकरणसाधनैर्घटं निष्पादयति। ईश्वरस्य निरपेक्षत्वात्सर्वमत्राऽऽक्षिप्यते—द्यावापृथिव्योरुत्पादनवेलायामीश्वरस्याधिष्ठानं निवासस्थानं किंस्विदासीत्किं नामाभून्न किंचिदित्यर्थः। तथाऽऽरम्भणं कतमत्स्वित्किमासीत्। आरभ्यतेऽनेनेत्यारम्भणमुपादानकारणं, तदपि कतमद्भवेत्। नहि [द्या]वापृथिव्यौ जनयितुं समर्थं किंचिदुपादानं संभवति। तथा दण्डचक्रादि[नि]मित्तमपि किमासीन्न किंचित्संभवतीत्यर्थः। विश्वचक्षाः सर्वद्रष्टा विश्वकर्मा यदि यस्मिन्काले भूमिं भूलोकं जनयन्वर्तते तस्मिन्काले हि महिना [म]हिम्नैव साधनान्तरं विनैव विशेषेण द्यामौर्णोत्स्रष्ट्वा द्यावापृथिव्यावाच्छादितवान्। अचिन्त्यशक्तिरयं परमेश्वरः ॥

अथ चतुर्थीमृचमाह—

---

१ क. घ. ङ. 'हिम्ना स च सा'।

किंᳬ स्विद्वनं क उ स वृक्ष आसीद्यतो द्यावा-
पृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छ-
तेदु तद्यदध्यतिष्ठद्भुवनानि धारयन् ।, इति।

लोके हि प्रौढं प्रासादं निर्मिमाणः कस्मिंश्चित्प्रौढे वने कंचिन्महान्तं वृक्षं छित्त्वा तक्षणादिना काष्ठैः प्रासादमुच्चैस्तरं संपादयति । इह तु परमेश्वरो जगत्सृष्टिं यतो यस्माद्वनाद्यं वृक्षमादाय द्यावापृथिवी निष्टतक्षुस्तक्षणेन द्यावापृथिव्यौ निष्पादितवांस्तद्वनं किंस्वित्किंनाम स्यान्न किंचित्तादृशं संभवति । तथा क उ स वृक्षस्तादृशः स प्रौढवृक्षोऽपि कः स्यान्न कश्चित्संभवति । हे मनीषिणो विद्वांसो मनसा स्वकीयेन विचिन्त्य पृच्छतेदिदं सर्वं पृच्छतैव, किंचेश्वरो भुवनानि धारयन्यदध्यतिष्ठद्यत्स्थानमधिष्ठितवांस्तदपि सर्वथा पृच्छत । एतस्य प्रश्नस्य सर्वस्याप्युत्तरं ब्राह्मणग्रन्थे सूक्तप्रपाठके ब्रह्म वनं ब्रह्म स वृक्ष आसीदित्येतस्यामृच्याम्नातम् । स्वरूपव्यतिरिक्तवस्त्वादिनिरपेक्षत्वमेवास्योत्तरस्याभिप्रायः । अतोऽत्रापि किंस्विद्वनमित्याद्याक्षेपपरत्वेनैव योजितम् । पृच्छतेदित्यस्याप्ययमभिप्रायः—भवद्भिः पृष्टेऽपि निरपेक्षत्वमेवाभिज्ञा वदिष्यन्तीति ॥

अथ पञ्चमीमृचमाह—

या ते धामानि परमाणि याऽवमा या मध्यमा
विश्वकर्मन्नुतेमा । शिक्षा सखिभ्यो हविषि
स्वधावः स्वयं यजस्व तनुवं जुषाणः ।, इति।

हे विश्वकर्मंस्ते त्वदीयानि परमाणि यानि धामान्युत्कृष्टानि सन्ति, यानि मध्यमान्यवमानि च धामानि स्थानानि सन्ति, तानीमानि सर्वाणि स्थानानि साखिभ्यः सखिवत्प्रियेभ्यो हविषि हविष्प्रदाननिमित्तं शिक्षोपदिश । हे स्वधावः स्वधोपलक्षितहविर्लक्षणान्नवन्विश्वकर्मंस्तनुवं जुषाणो यजमानशरीरं सेवमानः स्वयं यजस्व त्वदनुग्रहमन्तरेण को वाऽन्यो यष्टुं शक्त इत्यर्थः ॥

अथ षष्ठीमृचमाह—

वाचस्पतिं विश्वकर्माणमूतये मनोयुजं वाजे
अद्या हुवेम । स नो नेदिष्ठा हवनानि
जोषते विश्वशंभूरवसे साधुकर्मा ।, इति।

विश्वकर्माणं परमेश्वरमद्यास्मिन्दिने वाजेऽन्ने निमित्तभूते सति ऊतये भक्ष-

णाय हुवेमाऽऽह्वयाम । कीदृशं विश्वकर्माणम्, वाचस्पतिं मन्त्ररूपाया वाचः पालकं कर्मण्यस्मन्मनसो योजयितारम् । स विश्वकर्मा नोऽस्मदीयानि नेदिष्ठान्यत्यन्तसमीपवर्तीनि हवनानि हवींष्याह्वानानि वा जोषते सेवते । किमर्थम्, अवसेऽस्मानवितुं रक्षितुम् । कीदृशः सः, विश्वशंभूः सर्वस्मिञ्जगति सुखस्य भावयिता साधुकर्माऽस्मदनुकूलव्यापारवान् ॥

अथ सप्तमीमृचमाह—

विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व
तनुवं जुषाणः । मुह्यन्त्वन्ये अभितः सपत्ना
इहास्माकं मघवा सूरिरस्तु ।, इति ।

हे विश्वकर्मन्नस्मदीयेन हविषा वावृधानोऽतिशयेन वर्धमानस्तनुवं जुषाणः शरीरं स्वीकुर्वाणः स्वयं यजस्व, अस्मत्तोऽन्ये सपत्ना इह कर्मणि मुह्यन्तु भ्रान्ता भवन्तु । अस्माकं तु मघवाऽन्नयुक्तः सूरिर्विद्वान्पुत्रोऽस्तु ॥

अथाष्टमीमृचमाह—

विश्वकर्मन्हविषा वर्धनेन त्रातारमिन्द्रमकृ-
णोरवध्यम् । तस्मै विशः समनमन्त
पूर्वीरयमुग्रो विहव्यो यथाऽसत् ।, इति ।

हे विश्वकर्मन्नस्मदीयेन हविषा त्वं वर्धनेन युक्त इमं यजमानं त्रातारमन्येषां रक्षकमिन्द्रं परमैश्वर्योपेतमवध्यं केनापि हिंसितुमशक्यमकृणोः कुरु । तस्मै यजमानाय पूर्वीर्विशो वृद्ध्या विततमानाः प्रजाः समनमन्त सम्यङ्नता एतदधीना भवन्तु । अयं यजमान उग्रस्तीव्रशक्तिः सन्केनाप्यपरिभूतो विहव्यो विविधयागयोग्यो यथाऽसद्यथा भवति तथा कुरु ॥

कल्पः—" यद्येनमुदकेऽभिविन्देदुदकाञ्जलिमादाय समुद्राय वयुनायेत्यप्सु जुहुयादिति अयज्ञसंयुक्तः कल्पः " इति ।

पाठस्तु—

समुद्राय वयुनाय सिन्धूनां पतये नमः ।
नदीनाꣳ सर्वासां पित्रे जुहुता विश्व-
कर्मणे विश्वाऽहाऽमर्त्यꣳ हविः ॥, इति ॥

यो विश्वकर्मा समुद्ररूपेणावतीर्णस्तस्मै समुद्राय नमोऽस्तु । कीदृशाय, वयुनाय कान्ताय सिन्धूनां पतये स्यन्दमानानां भर्त्रे । समुद्राकारेण भर्ता विश्व-

कर्माकारेण सर्वासां नदीनां पितोत्पादकः। तादृशाय विश्वकर्मणे हे ऋत्वि ग्यजमाना विश्वाऽहा सर्वाण्यहानि निरन्तरमित्यर्थः। अमर्त्यमविनश्वरं हवि जुहुत ॥

अग्निस्तिग्मेनेति मन्त्रद्वयेन 'य इमा विश्वा' इति सूक्तद्वयेन च साध्यं होमं विधातुं प्रस्तौति—

" इन्द्रो वृत्रमहन्तं वृत्रो हतः षोडशभिर्भोगैरसिनात्स एतामग्नयेऽनीकवत आहुतिमपश्यत्तामजुहोत्तस्याग्निरनीकवान्त्स्वेन भागधेयेन प्रीतः षोडशधा वृत्रस्य भोगानप्यदहद्वैश्वकर्मणेन पाप्मनो निरमुच्यत " [ सं० का० ५ प्र० ४ अ० ५ ] इति।

इन्द्रो यदा वृत्रं वज्रेण प्रहृतवांस्तदा वज्रप्रहृतः स वृत्र आसुरमायया सहसा षोडश सर्पाकाराणि शरीराणि स्वी चकार। स्वीकृत्य च भोगशब्दाभिधेयैस्तैः सर्पाकारशरीरैस्तमिन्द्रं हस्तपादाद्यवयवेषु बहुधाऽसिनाद्भक्ष. तदानीमिन्द्रः प्रतीकारं विचार्यानीकेन सैन्येन युक्तायाग्नय एतामग्निस्तिग्मेनेति मन्त्रद्वयेन साध्यामाहुतिं दृष्ट्वा हुतवान्। ततः सोऽग्निरनीकवांस्तुष्टः वृत्रस्य षोडश सर्पाकाराणि शरीराण्यदहत्। तत ऊर्ध्वमिन्द्रो य इमा विश्वेति सूक्तद्वयसाध्येन वैश्वकर्मणहोमेन वृत्रवधजन्यात्पाप्मनो निर्मुक्तः॥

इदानीं तदुभयं विधत्ते—

" यदग्नयेऽनीकवत आहुतिं जुहोत्यग्निरेवास्यानीकवान्त्स्वेन भागधेयेन प्रीतः पाप्मानमपि दहति वैश्वकर्मणेन पाप्मनो निर्मुच्यते " [ सं० का० ५ प्र० ४ अ० ५ ] इति।

रोगादिरूपदृष्टबाधहेतोः पापस्यानीकवत आहुत्या दाहः। पारलौकिकानरकहेतोः पापाद्वैश्वकर्मणहोमेन निर्मोकः॥

तत्रेदं चिन्त्यते—किमयं वैश्वकर्मणहोमः प्रतिमन्त्रं पृथक्कार्यः, किंवा सूक्तद्वयं सहोच्चार्य सकृदनुष्ठेयः, आहोस्विदेकैकं सूक्तमुच्चार्यानुष्ठेय इति। तत्राऽऽद्यं पक्षद्वयं शाखान्तरगतत्वेनाङ्गी करोति—

" यं कामयेत चिरं पाप्मनो निर्मुच्येतेत्येकैकं तस्य जुहुयाच्चिरमेव पाप्मनो निर्मुच्यते यं कामयेत ताजक्पाप्मनो निर्मुच्येतेति सर्वाणि तस्यानुद्रुत्य जुहुयात्ताजगेव पाप्मनो निर्मुच्यतेऽथो खलु नानैव सूक्ताभ्यां जुहोति नानैव सूक्तयोर्वीर्यं दधात्यथो प्रतिष्ठित्यै " [ सं० का० ५ प्र० ४ अ० ५ ] इति।

एकैकमन्त्रहोमेन शनैः शनैः पापनिर्मोको भवति। सर्वसूक्तहोमेन तु तदा-

---

१ ख. च. 'कै.कं म'।

(अग्निप्रणयनाभिधानम्)

नीमेव पापनिर्मोकः। पृथक्सूक्तद्वयेऽपि सामर्थ्यं पृथक्संपादितं भवति। अपि च, सूक्तद्वित्वं यजमानस्य प्रतिष्ठायै संपद्यते। तस्मादयमेव पक्षः श्रेयानित्यर्थः॥

अत्र विनियोगसंग्रहः—

य इमा चक्षुषो द्वाभ्यां सूक्ताभ्यामाहुतिद्वयम्।
समुद्रेति जले होमो मन्त्राः सप्तदशेरिताः॥ १॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

(अथ चतुर्थाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः।)

---

उदेनमुत्तरां नयाग्ने घृतेनाऽऽहुत। रायस्पोषेण सꣳ सृज प्रजया च धनेन च। इन्द्रेमं प्रतरां कृधि सजातानामसद्वशी। समेनं वर्चसा सृज देवेभ्यो भागधा असत्। यस्य कुर्मो हविर्गृहे तमग्ने वर्धया त्वम्। तस्मै देवा अधि ब्रवन्नयं च ब्रह्मणस्पतिः। उदु त्वा विश्वे देवाः (१) अग्ने भरन्तु चित्तिभिः। स नो भव शिवतमः सुप्रतीको विभावसुः। पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिं बाधमानाः। रायस्पोषे यज्ञपतिमाभजन्तीः। रायस्पोषे अधि यज्ञो अस्थात्समिद्धे अग्नावधि मामहानः। उक्थपत्र ईड्यो गृभीतस्तप्तं

घर्मं परिगृह्यायजन्त । ऊर्जा यद्यज्ञमशमन्त देवा दैव्याय धर्त्रे जोष्ट्रे । देवश्रीः श्रीमणाः शतपयाः (२) परिगृह्य देवा यज्ञमायन् । सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाꣳ अजस्रम् । तस्य पूषा प्रसवे याति देवः संपश्यन्विश्वा भुवनानि गोपाः । देवा देवेभ्यो अध्वर्यन्तो अस्थुर्वीतꣳ शमित्रे शमिता यजध्यै । तुरीयो यज्ञो यत्र हव्यमेति ततः पावका आशिषो नो जुषन्ताम् । विमान एष दिवो मध्य आस्त आपप्रिवान्रोदसी अन्तरिक्षम् । स विश्वाचीरभि (३) चष्टे घृताचीरन्तरा पूर्वमपरं च केतुम् । उक्षा समुद्रो अरुणः सुपर्णः पूर्वस्य योनिं पितुरा विवेश । मध्ये दिवो निहितः पृश्निरश्मा वि चक्रमे रजसः पात्यन्तौ । इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः । रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिम् । सुम्नहूर्यज्ञो देवाꣳ आ च वक्षद्यक्षदग्निर्देवो देवाꣳ आ च वक्षत् । वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् । अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाधराꣳ अकः । उद्ग्राभं च

निग्राभं च ब्रह्म देवा अवीवृधन् । अथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् ( ४ )॥

( विश्वे देवाः शतपया अभि वाजस्य षड्विंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ चतुर्थाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः । )

---

उदिति । एनम् । उत्तरामित्युत्—तराम् । नय । अग्ने । घृतेन । आहुतेत्या—हुत । रायः । पोषेण । समिति । सृज । प्रजयेति प्र—जया । च । धनेन । च । इन्द्र । इमम् । प्रतरामिति प्र—तराम् । कृधि । सजातानामिति स—जातानाम् । असत् । वशी । समिति । एनम् । वर्चसा । सृज । देवेभ्यः । भागधा इति भाग—धाः । असत् । यस्य । कुर्मः । हविः । गृहे । तम् । अग्ने । वर्धय । त्वम् । तस्मै । देवाः । अधीति । ब्रवन् । अयम् । च । ब्रह्मणः । पतिः । उदिति । उ । त्वा । विश्वे । देवाः ( १ ) । अग्ने । भरन्तु । चित्तिभिरिति चित्ति—भिः । सः । नः । भव । शिवतम इति शिव—तमः । सुप्रतीक इति सु—प्रतीकः । विभावसुरिति विभा—वसुः । पञ्च । दिशः । दैवीः । यज्ञम् । अवन्तु ।

देवीः । अपेति । अमतिम् । दुर्मतिमिति दुः—मतिम् । बाधमानाः । रायः । पोषे । यज्ञपतिमिति यज्ञ—पतिम् । आभजन्तीरित्या—भजन्तीः । रायः । पोषे । अधीति । यज्ञः । अस्थात् । समिद्ध इति सम्—इद्धे । अग्नौ । अधीति । मामहानः । उक्थपत्र इत्युक्थ—पत्रः । ईड्यः । गृभीतः । तप्तम् । घर्मम् । परिगृह्येति परि—गृह्य । अयजन्त । ऊर्जा । यत् । यज्ञम् । अशमन्त । देवाः । दैव्याय । धर्त्रे । जोष्ट्रे । देवश्रीरिति देव—श्रीः । श्रीमणा इति श्री—मनाः । शतपया इति शत—पयाः (२) । परिगृह्येति परि—गृह्य । देवाः । यज्ञम् । आयन् । सूर्यरश्मिरिति सूर्य—रश्मिः । हरिकेश इति हरि—केशः । पुरस्तात् । सविता । ज्योतिः । उदिति । अयान् । अजस्रम् । तस्य । पूषा । प्रसवमिति प्र—सवम् । याति । देवः । संपश्यन्निति सं—पश्यन् । विश्वा । भुवनानि । गोपा इति गो—पाः । देवाः । देवेभ्यः । अध्वर्यन्तः । अस्थुः । वीतम् । शमित्रे । शमिता । यजध्यै । तुरीयः । यज्ञः । यत्र । हव्यम् । एति । ततः । पावकाः । आशिष इत्या—शिषः । नः । जुषन्ताम् । विमान इति वि—मानः । एषः । दिवः । मध्ये । आस्ते । आपप्रिवानित्या—

( अग्निप्रणयनाभिधानम् )

पप्रिवान् । रोदसी इति । अन्तरिक्षम् । सः ।
विश्वाचीः । अभीति ( ३ ) । चष्टे । घृताचीः ।
अन्तरा । पूर्वम् । अपरम् । च । केतुम् । उक्षा ।
समुद्रः । अरुणः । सुपर्ण इति सु—पर्णः । पूर्वस्य ।
योनिम् । पितुः । एति । विवेश । मध्ये । दिवः ।
निहित इति नि—हितः । पृश्निः । अश्मा । वीति ।
चक्रमे । रजसः । पाति । अन्तौ । इन्द्रम् । विश्वाः ।
अवीवृधन् । समुद्रव्यचसमिति समुद्र—व्यचसम् ।
गिरः । रथीतममिति रथि—तमम् । रथीनाम् ।
वाजानाम् । सत्पतिमिति सत्—पतिम् । पतिम् ।
सुम्नहूरिति सुम्न—हूः । यज्ञः । देवान् । एति । च ।
वक्षत् । यक्षत् । अग्निः । देवः । देवान् । एति ।
च । वक्षत् । वाजस्य । मा । प्रसवेनेति प्र—सवेन ।
उद्ग्राभेणेत्युत्—ग्राभेण । उदिति । अग्रभीत् । अथ ।
सपत्नान् । इन्द्रः । मे । निग्राभेणेति नि—ग्राभे-
ण । अधरान् । अकः । उद्ग्राभमित्युत्—ग्राभम् ।
च । निग्राभमिति नि—ग्राभम् । च । ब्रह्म । देवाः ।
अवीवृधन् । अथ । सपत्नान् । इन्द्राग्नी इतीन्द्र—
अग्नी । मे । विषूचीनान् । वीति । अस्यताम् (४) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके
षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

(अथ चतुर्थकाण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः ।)

द्वितीयेऽनुवाके वैश्वकर्मणहोमोऽभिहितः । अथ तृतीयेऽग्निप्रणयनमुच्यते ।
कल्पः—"उदेनमुत्तरां नयेति तिसृभिरौदुम्बरीः समिधो घृतोपिता-स्तिस्र आधाय पशुबन्धवदग्निं प्रणयति" इति ।

तत्र प्रथमामाह—

उदेनमुत्तरां नयाग्ने घृतेनाऽऽहुत । रायस्पो-
षेण सꣳ सृज प्रजया च धनेन च ।, इति ।

घृतेन द्रव्येणाऽऽहुत सर्वतो हूयमान हेऽग्न एनं यजमानमुत्तरामत्युत्कृष्ट-मैश्वर्यं प्रत्युन्नयोत्कर्षेण प्रापय शीघ्रं प्रापयेत्यर्थः । उत्कृष्टमैश्वर्यमेव प्रपञ्चयते—रायस्पोषेण धनसमृद्ध्या संसृज संयोजय । तथा प्रजया पुत्रपौत्रादिरूपया धनेन च गवाश्वादिरूपेण संसृज ॥

अथ द्वितीयामाह—

इन्द्रेमं प्रतरां कृधि सजातानामसद्वशी । समेनं
वर्चसा सृज देवेभ्यो भागधा असत् ।, इति ।

हे इन्द्र परमैश्वर्ययुक्ताग्न इमं यजमानं प्रतरां कृधि अतिशयेन प्रकृष्टं कुरु । तदेव प्रकृष्टत्वं विशदी क्रियते—सजातानां सहोत्पन्नानां ज्ञातीनां वश्यसम्पादनसमर्थो भवतु । किंचैनं वर्चसा बलेन संसृज । अयं यजमानो देवेभ्यो भागधा असद्यज्ञेषु भागप्रदो भवतु ॥

अथ तृतीयामाह—

यस्य कुर्मो हविर्गृहे तमग्ने वर्धया त्वम् । तस्मै
देवा अधि ब्रवन्नयं च ब्रह्मणस्पतिः ।, इति ।

वयमृत्विजो यस्य यजमानस्य गृहे हविः कुर्मः, हेऽग्ने त्वं तं यजमानं वर्धय । देवाश्च तस्मै यजमानायाधिब्रवन्नयं यजमानः सर्वेभ्योऽधिक इति ब्रुवन्तु । अयं च यजमानो ब्रह्मणस्पतिर्वैदिकस्य कर्मणः पालको भवतु ॥

तानेतान्मन्त्रान्विनियुङ्क्ते—

"उदेनमुत्तरां नयेति समिध आ दधाति यथा जनं यतेऽवसं करोति तादृगेव तत्" [ सं० का० ५ प्र० ४ अ० ६ ] इति ।

---

१ क. घ. ङ. °येत्यौदु । २ क. घ. ङ. °तास्तिसृभिस्ति° ।

(अग्निप्रणयनाभिधानम्)

यथा लोके दूरदेशे ग्रामान्तरवर्तिनं प्रति यते गच्छते पुरुषायावसं मार्गरक्षाकरं पाथेयं संपादयति, तत्समिदाधानं प्रणेष्यमाणाग्नये तादृगेव भवति ॥

समित्संख्यां विधत्ते—

"तिस्र आ दधाति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्मै भागधेयं करोति" [सं० का० ५ प्र० ४ अ० ६] इति।

आहवनीयादिभेदेन त्रिगुणत्वम् ॥

समिद्द्रव्यं विधत्ते—

"औदुम्बरीर्भवन्त्यूर्ग्वा उदुम्बर ऊर्जमेवास्मा अपि दधाति" [सं०का० ५ प्र० ४ अ० ६] इति ॥

कल्पः—"उदु त्वा विश्वे देवा इत्यग्निमुद्यम्य" इति।

पाठस्तु—

उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः।
स नो भव शिवतमः सुप्रतीको विभावसुः।[1]इति।

हेऽग्ने विश्वे सर्वेऽपि देवाः प्राणरूपाश्चित्तिभिरुद्यमनकुशलाभिरिन्द्रियवृत्तिभिरुदु ऊर्ध्वमेव त्वां भरन्तु धारयन्तु। स त्वं नोऽस्माकं शिवतमः शान्ततमः सुप्रतीकः सुमुखो विभावसुः प्रभविता वासयिता च भव ॥

अस्य मन्त्रस्य प्रथमपादे विश्वदेवशब्दार्थं दर्शयति—

"उदु त्वा विश्वे देवा इत्याह प्राणा वै विश्वे देवाः प्राणैरेवैनमुद्यच्छते" [सं० का० ५ प्र० ४ अ० ६] इति।

दीव्यन्ति स्वस्वकार्येषु व्यवहरन्तीति देवाः प्राणाः ॥

द्वितीयपादेऽग्न्यादिशब्दान्परित्यज्य चित्तिशब्दस्य तात्पर्यं दर्शयति—

"अग्ने भरन्तु चित्तिभिरित्याह यस्मा एवैनं चित्तायोद्यच्छते तेनैवैनꣳ समर्धयति" [सं० का[2]० ५ प्र० ४ अ० ६] इति।

चित्तिशब्देन *चित्तिमात्रगतेन चित्तमभिप्रेतकार्यं सूच्यते। तथा सति यस्मै कार्यायेदमुद्यमनं तेनैव कार्येणैनमग्निं समृद्धं करोति ॥

कल्पः—"पञ्च दिशो दैवीरिति पञ्चभिर्हरत्याग्नीध्रात्" इति।

तत्र प्रथमामाह—

पञ्च दिशो दैवीर्यज्ञमवन्तु देवी-

* ख. पुस्तकटिप्पण्यां 'चितिमन्त्रगतेनेति पाठो भवितुं युक्तः।' इति वर्तते।

1 ख. च. इत्युद्यम्'। 2 ख. घ. ङ. च. चित्तमा'।

रपामतिं दुर्मतिं बाधमानाः । राय-
स्पोषे यज्ञपतिमाभजन्तीः ।, इति ।

इमाः प्राच्यादयः पञ्च दिशो दैवीरिन्द्रयमादीनां देवानां संबन्धिन्यो देवीः स्वयमपि देवतारूपा अमतिमस्मदीयं प्रज्ञामान्द्यं दुर्मतिं दुष्टां पापविषयां बुद्धिं चापबाधमाना विनाशयन्त्यो रायस्पोषे धनसमृद्धौ यज्ञपतिं यजमानमा समन्तात्सेवमाना इमं यज्ञमवन्तु रक्षन्तु ॥

अथ द्वितीयामाह—

रायस्पोषे अधि यज्ञो अस्थात्समिद्धे
अग्नावधि मामहानः । उक्थपत्र ईड्यो
गृभीतस्तप्तं घर्मं परिगृह्यायजन्त ।, इति ।

अयं यज्ञो रायस्पोषे धनसमृद्धावध्यस्थादधिकमवस्थितः सन्सर्वदा धनपुष्टिं ददातीत्यर्थः । कीदृशो यज्ञः, समिद्धे सम्यक्प्रज्वलितेऽग्नावधि मामहानोऽधिकं पुनः पुनः पूज्यमानः, उक्थपत्र उक्थानि शस्त्राणि पत्रं वाहनं यस्यासावुक्थपत्रः, ईड्यः स्तुत्यः, गृभीत ऋत्विग्यजमानैः परिगृहीतः । ते च तप्तं प्रज्वलितं घर्ममग्निं परिगृह्यायजन्त सर्वदा यजन्ति ॥

अथ तृतीयामाह—

ऊर्जा यद्यज्ञमशमन्त देवा दैव्याय
धर्त्रे जोष्ट्रे । देवश्रीः श्रीमणाः शत-
पयाः परिगृह्य देवा यज्ञमायन् ।, इति ।

देवा दीव्यन्तो व्यवहरन्त ऋत्विग्यजमाना धर्त्रादिविशेषणैर्विशेषितायाग्नये यद्यस्मिन्काल ऊर्जा हविःस्वरूपेणान्नेन यज्ञमशमन्त शान्तं तुष्टिहेतुमकुर्वत, कीदृशायाग्नये, दैव्याय देवानां हिताय धर्त्रे यागद्वारा जगतो धारयित्रे जोष्ट्रेऽस्माभिर्दीयमानस्य हविषः सेवित्रे । तस्मिन्कालेऽयमग्निरीदृग्भवति । कीदृश इति तदुच्यते—देवश्रीर्देवानेव श्रयति हविर्वहनेनेति देवश्रीः । श्रीमणाः श्रयते सेवत इति श्रीर्यजमानस्तस्मिन्ननुग्रहरूपं मनो यस्यासौ श्रीमणाः । शतपयाः शतसंख्याकानि पयःप्रभृतीनि हवींषि यस्यासौ शतपयाः । तादृशमग्निं परिगृह्य देवा ऋत्विग्यजमाना इमं यज्ञमायन्प्राप्नुवन्त्यनुतिष्ठन्तीत्यर्थः ॥

---

१ ख. च. 'दातिरस्य' । २ ख. च. 'न्त य' ।

( अग्निप्रणयनाभिधानम् )

अथ चतुर्थीमाह—

सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योति-
रुदयाꣳ अजस्रम् । तस्य पूषा प्रसवे याति
देवः संपश्यन्विश्वा भुवनानि गोपाः ।, इति ।

दारिद्र्यं हरतीति हरिर्हिरण्यं, हिरण्यवर्णाः केशस्थानीयाः शिखा यस्यासौ हरिकेशोऽग्निः । स च सूर्यरश्मिर्भूत्वा सविता प्राणिनां तत्तद्व्यवहारेषु प्रेरको ज्योतिर्मण्डलरूपः सन्पूर्वस्यां दिश्यजस्रं प्रतिदिनमुदयानुदेति । यस्मिन्नुदये सति पूषा पोषकः स देवस्तस्य प्रसवे जगतः प्रेरणे याति प्राप्नोति । कीदृशो देवः, गोपा रक्षकः । किं कुर्वन्, विश्वा भुवनानि संपश्यन्सर्वाँल्लोकानवलोकयन् ॥

अथ पञ्चमीमाह—

देवा देवेभ्यो अध्वर्यन्तो अस्थुर्वीतꣳ शमित्रे
शमिता यजध्यै । तुरीयो यज्ञो यत्र हव्यमेति
ततः पावका आशिषो नो जुषन्ताम् । , इति ।

पशुबन्धरूपो यज्ञश्चतुर्भागः । तत्रोपाकरणान्तः प्रथमः । उपाकृतस्य शामित्रदेशे स्थितिर्द्वितीयः । यागार्थं यत्संस्कारं करोति स तृतीयः । हविष्प्रदानान्तश्चतुर्थः । तदिदं भागचतुष्टयं क्रमेणात्राभिधीयते । देवा ऋत्विग्यजमाना देवेभ्यो हविःस्वीकर्तृभ्योऽध्वर्यन्तो यागं कर्तुमिच्छन्तोऽस्थुस्तिष्ठन्ति उपाकरणान्तमनुतिष्ठन्तीत्यर्थः । तत ऊर्ध्वं शमित्रे वीतं शामित्रदेशे प्रापितं पशुरूपं हविर्भवति । तत ऊर्ध्वं शमिता यजध्यै यागार्थं संस्करोति स तृतीयः । उपरितनश्चतुर्थो यज्ञभागः । यत्र यस्मिन्भागचतुष्टयोपेते यज्ञे हव्यमेति देवता हविः प्राप्नोति ततस्तस्माद्भागचतुष्टयोपेताद्यज्ञात्पावका आहवनीयादयोऽग्नयो नोऽस्मदीया आशिषोऽपेक्षितान्फलविशेषाञ्जुषन्तां संपादयन्त्वित्यर्थः ॥

एषु मन्त्रेषु प्रथममन्त्रे प्रथमपादस्य तात्पर्यं दर्शयति—

“ पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरित्याह दिशो ह्येषोऽनु प्रच्यवते” [ सं० का० ५ प्र० ४ अ० ६ ] इति ।

एष यजमानः प्राच्याद्याः पञ्च दिशोऽनुक्रमेण यज्ञरक्षार्थं प्रेरयति ॥

द्वितीयपादस्य तात्पर्यं दर्शयति—

“ अपामतिं दुर्मतिं बाधमाना इत्याह रक्षसामपहत्यै ”[ सं० का० ५ प्र० ४ अ० ६ इति ।

रपामतिं दुर्मतिं बाधमानाः । राय-
स्पोषे यज्ञपतिमाभजन्तीः । , इति ।

इमाः प्राच्यादयः पञ्च दिशो दैवीरिन्द्रयमादीनां देवानां संबन्धिन्यो देवीः स्वयमपि देवतारूपा अमतिमस्मदीयं प्रज्ञामान्द्यं दुर्मतिं दुष्टां पापविषयां बुद्धिं चापबाधमाना विनाशयन्त्यो रायस्पोषे धनसमृद्धौ यज्ञपतिं यजमानमा समन्तात्सेवमाना इमं यज्ञमवन्तु रक्षन्तु ॥

अथ द्वितीयामाह—

रायस्पोषे अधि यज्ञो अस्थात्समिद्धे
अग्नावधि मामहानः । उक्थपत्र ईड्यो
गृभीतस्तप्तं घर्मं परिगृह्यायजन्त । , इति ।

अयं यज्ञो रायस्पोषे धनसमृद्धावध्यस्थादधिकमवस्थितः सन्सर्वदा धनपुष्टिं ददातीत्यर्थः । कीदृशो यज्ञः, समिद्धे सम्यक्प्रज्वलितेऽग्नावधि मामहानोऽधिकं पुनः पुनः पूज्यमानः, उक्थपत्र उक्थानि शस्त्राणि पत्रं वाहनं यस्यासावुक्थपत्रः, ईड्यः स्तुत्यः, गृभीत ऋत्विग्यजमानैः परिगृहीतः । ते च तप्तं प्रज्वलितं घर्ममग्निं परिगृह्यायजन्त सर्वदा यजन्ति ॥

अथ तृतीयामाह—

ऊर्जा यद्यज्ञमशमन्त देवा दैव्याय
धर्त्रे जोष्ट्रे । देवश्रीः श्रीमणाः शत-
पयाः परिगृह्य देवा यज्ञमायन् ।, इति ।

देवा दीव्यन्तो व्यवहरन्त ऋत्विग्यजमाना धर्त्रादिविशेषणैर्विशेषितायाग्नये यद्यस्मिन्काल ऊर्जा हविःस्वरूपेणान्नेन यज्ञमशमन्त शान्तं तुष्टिहेतुमकुर्वत, कीदृशायाग्नये, दैव्याय देवानां हिताय धर्त्रे यागद्वारा जगतो धारयित्रे जोष्ट्रेऽस्माभिर्दीयमानस्य हविषः सेवित्रे । तस्मिन्कालेऽयमग्निरीदृशो भवति । कीदृश इति तदुच्यते—देवश्रीर्देवानेव श्रयति हविर्वहनेनेति देवश्रीः । श्रीमणाः श्रयते सेवत इति श्रीर्यजमानस्तस्मिन्ननुग्रहरूपं मनो यस्यासौ श्रीमणाः । शतपयाः शतसंख्याकानि पयःप्रभृतीनि हवींषि यस्यासौ शतपयाः । तादृशमग्निं परिगृह्य देवा ऋत्विग्यजमाना इमं यज्ञमायन्प्राप्नुवन्त्यनुतिष्ठन्तीत्यर्थः ॥

---

१ ख. च. 'दातिस्त्य' । २ ख. च. 'न्त य' ।

अथ चतुर्थीमाह—

सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योति-
रुदयाꣳ अजस्रम् । तस्य पूषा प्रसवे याति
देवः संपश्यन्विश्वा भुवनानि गोपाः ।, इति ।

दारिद्र्यं हरतीति हरिर्हिरण्यं, हिरण्यवर्णाः केशस्थानीयाः शिखा यस्यासौ हरिकेशोऽग्निः । स च सूर्यरश्मिर्भूत्वा सविता प्राणिनां तत्तद्व्यवहारेषु प्रेरको ज्योतिर्मण्डलरूपः सन्पूर्वस्यां दिश्यजस्रं प्रतिदिनमुदयानुदेति । यस्मिन्नुदये सति पूषा पोषकः स देवस्तस्य प्रसवे जगतः प्रेरणं याति प्राप्नोति । कीदृशो देवः, गोपा रक्षकः । किं कुर्वन्, विश्वा भुवनानि संपश्यन्सर्वाँल्लोकानवलोकयन् ॥

अथ पञ्चमीमाह—

देवा देवेभ्यो अध्वर्यन्तो अस्थुर्वीतꣳ शमित्रे
शमिता यजध्यै । तुरीयो यज्ञो यत्र हव्यमेति
ततः पावका आशिषो नो जुषन्ताम् । , इति ।

पशुबन्धरूपो यज्ञश्चतुर्भागः । तत्रोपाकरणान्तः प्रथमः । उपाकृतस्य शामित्रदेशे स्थितिर्द्वितीयः । यागार्थं यत्संस्कारं करोति स तृतीयः । हविष्प्रदानान्तश्चतुर्थः । तदिदं भागचतुष्टयं क्रमेणात्राभिधीयते । देवा ऋत्विग्यजमाना देवेभ्यो हविःस्वीकर्तृभ्योऽध्वर्यन्तो यागं कर्तुमिच्छन्तोऽस्थुस्तिष्ठन्ति उपाकरणान्तमनुतिष्ठन्तीत्यर्थः । तत ऊर्ध्वं शमित्रे वीतं शामित्रदेशे प्रापितं पशुरूपं हविर्भवति । तत ऊर्ध्वं शमिता यजध्यै यागार्थं संस्करोति स तृतीयः । उपरितनश्चतुर्थो यज्ञभागः । यत्र यस्मिन्भागचतुष्टयोपेते यज्ञे हव्यमेति देवता हविः प्राप्नोति ततस्तस्माद्भागचतुष्टयोपेताद्यज्ञात्पावका आहवनीयादयोऽग्नयो नोऽस्मदीया आशिषोऽपेक्षितान्फलविशेषाञ्जुषन्तां संपादयन्त्वित्यर्थः ॥

एषु मन्त्रेषु प्रथममन्त्रे प्रथमपादस्य तात्पर्यं दर्शयति—

" पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरित्याह दिशो ह्येषोऽनु प्रच्यवते" [ सं० का० ५ प्र० ४ अ० ६ ] इति ।

एष यजमानः प्राच्याद्याः पञ्च दिशोऽनुक्रमेण यज्ञरक्षार्थं प्रेरयति ॥

द्वितीयपादस्य तात्पर्यं दर्शयति—

" अपामतिं दुर्मतिं बाधमाना इत्याह रक्षसामपहत्यै " [ सं० का० ५ प्र० ४ अ० ६ इति ।

अमतेर्दुर्मतेश्च रक्षोभिः संपादितत्वात्तद्बाधेन रक्षांस्येवापहतानि भवन्ति ॥

तृतीयपादे रायस्पोषशब्देन विवक्षितार्थं दर्शयति—

"रायस्पोषे यज्ञपतिमाभजन्तीरित्याह पशवो वै रायस्पोषः पशूनेवाव रुन्धे" [ सं० का० ५ प्र० ४ अ० ६ ] इति ॥

उदु त्वा विश्वे देवा इत्यनेनोद्यमनमन्त्रेण सहितमुत्तरमन्त्रपञ्चकं विनियुङ्क्ते—

" षड्भिर्हरति षड्वा ऋतव ऋतुभिरेवैनꣳ हरति " [ सं० का० ५ प्र० ४ अ० ६ ] इति ॥

रायस्पोषे अधि यज्ञ ऊर्जा यद्यज्ञमिति मन्त्रद्वयं विशेषतः प्रशंसति—

" द्वे परिगृह्यवती भवतो रक्षसामपहत्यै" [ सं० का० ५ प्र० ४ अ० ६ ] इति ।

परिगृह्यायजन्त परिगृह्य देवा यज्ञमायन्नित्येवं परिगृह्यशब्दो ययोर्ऋचोस्ते परिगृह्यवत्यौ । परिग्रहः पृथक्स्वीकारस्तेन यज्ञं विनाशयितुमसमर्थानि रक्षांसि स्वयमेवापहन्यन्ते ॥

षट्सु मन्त्रेषु पञ्चममन्त्रस्य तात्पर्यं दर्शयति—

" सूर्यरश्मिर्हरिकेशः पुरस्तादित्याह प्रसूत्यै " [ सं० का० ५ प्र० ४ अ० ६ ] इति ।

पूषा प्रसवं यातीति तत्राभिधानादयं मन्त्रः प्रसूत्यै संपद्यते ॥

षष्ठमन्त्रस्य चतुर्थपादे पावकशब्दस्य तात्पर्यं दर्शयति—

" ततः पावका आशिषो नो जुषन्तामित्याहान्नं वै पावकोऽन्नमेवाव रुन्धे " सं० का० ५ प्र० ४ अ० ६ ] इति ।

अग्निवाचकः पावकशब्दस्तेन पच्यमानमन्नमुपलक्ष्यते ॥

कल्पः—" विमान एष दिवो मध्य आस्त इति द्वाभ्यामाग्नीध्रेऽश्मानं निधाय " इति ।

तत्र प्रथमामाह—

विमान एष दिवो मध्य आस्त
आपप्रिवान्रोदसी अन्तरिक्षम् ।
स विश्वाचीरभि चष्टे घृताचीर-
न्तरा पूर्वमपरं च केतुम् ।, इति ।

एषोऽश्मा विमानो विविधं जगन्निर्मिमाणः सन्दिवो मध्य आस्त आग्नीध्रस्थानीयस्याऽऽकाशस्य मध्ये तिष्ठति । कीदृशोऽश्मा, रोदसी द्यावापृथि-

( अग्निप्रणयनाभिधानम् )

व्यावन्तरिक्षं चाऽऽपप्रिवान्सर्वतः पूरितवान् । यद्यप्येवमश्मा न किंचिज्जगन्निर्मिमीते नापि लोकत्रयमापूर्य तिष्ठति तथाऽपि परमेश्वरगुणैरस्य स्तूयमानत्वान्न कोऽपि विरोधः । स तथा स्तूयमानो विश्वाचीर्विश्वव्यापिनीर्दिशोऽभिचष्टे सर्वतः प्रकाशयति । तथा घृताचीर्घृतप्राप्तिहेतुभूता धेनूश्चाभिचष्टे । तथाऽन्तरा ब्रह्माण्डस्य पूर्वमपरं च केतुमुदयास्तमयाभ्यां पूर्वापरदिशोश्चिह्नभूतं सूर्यमभिचष्टे ॥

अथ द्वितीयामाह—

उक्षा समुद्रो अरुणः सुपर्णः पूर्वस्य योनिं पितुरा विवेश । मध्ये दिवो निहितः पृश्निरश्मा वि चक्रमे रजसः पात्यन्तौ । , इति ।

अयमश्मोक्षा मेघो यागद्वारेण फलाभिवर्षक इत्यर्थः । समुद्रो बहुफलप्रदत्वात्समुद्रसदृशः । अरुणः पूर्वमन्त्रे सर्वप्रकाशकत्वेनोपचरितत्वात्सूर्यसदृशः । सुपर्णः स्वर्गं प्रत्युद्गमनहेतुत्वात्पक्षिसदृशः । तथाविधोऽश्मा पितुः पालकस्य पूर्वदिग्वर्तिन आहवनीयस्य योनिं कारणभूतमाग्नीध्रमाविवेश प्रविष्टवान् । 'येषां दीक्षितानामाहवनीय उद्वायेदाग्नीध्रादुद्धरेत्' इत्याहवनीययोनित्वमाग्नीध्रस्यान्यत्राऽऽम्नातम् । अयं पृश्निः श्वेतवर्णोऽश्मा दिवो मध्ये निहितः स्थापितः सन्रजसो रञ्जनीयस्य जगतोऽन्तावुत्पत्तिप्रलयरूपं कोटिद्वयं पाति परमेश्वररूपेण पालयति ॥

कल्पः—" इन्द्रं विश्वा अवीवृधन्निति चतसृभिरापुच्छाद्गत्वा " इति ।

तत्र प्रथमामाह—

इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः । रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिम् ।, इति ।

विश्वा गिरः सर्वाः स्तुतय इन्द्रं परमैश्वर्योपेतमग्निमवीवृधन्वर्धितवत्यः । कीदृशमिन्द्रं, समुद्रव्यचसं समुद्रवद्व्यापिनम् । रथीनां रथीतमं रथ एषामस्तीति व्युत्पत्त्या रथिशब्देन राजामात्यादय उच्यन्ते । तेषां मध्येऽतिशयेन रथी रथीतमस्तं वाजानां पतिमन्नानां पालकम् । तथा सत्पतिं सन्मार्गवर्तिनां यजमानानां पालकम् ॥

अथ द्वितीयामाह—

सुम्नहूर्यज्ञो देवाꣳ आ च वक्षद्यक्षदग्निर्देवो देवाꣳ आ च वक्षत् । , इति ।

सुम्नहूः सुम्नस्य प्रजापशुरूपस्य सुखस्याऽऽह्वाता संपादयिता यज्ञश्च देवानावक्षदावहतु । यक्षदग्निश्च पूर्वोक्ताग्निरपि देवानावक्षदाह्वयतु ॥

अथ तृतीयामाह—

वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् । अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाधराꣳ अकः ।, इति ।

इन्द्रः परमैश्वर्ययुक्तोऽग्निर्वाजस्यान्नस्य प्रसूतिनिमित्तेनोद्ग्राभेणोद्ग्रहणसामर्थ्येन मां यजमानमुदग्रभीदुत्कर्षं प्रापितवान् । अथानन्तरमिन्द्रः परमैश्वर्ययुक्तोऽयमग्निर्निग्राभेण निग्रहसामर्थ्येन मे सपत्नान्मदीयान्वैरिणोऽधरानकर्निगृहीतान्करोतु ॥

अथ चतुर्थीमाह—

उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् । अथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् ॥, इति ॥

देवाः सर्वे ब्रह्म परिवृढमुद्ग्राभमस्मदीयमुत्कर्षं निग्राभं च वैरिणो निकर्षं चावीवृधन्वर्धितवन्तः । अथानन्तरमिन्द्राग्नी विषूचीनान्सर्वतः पलायमानान्मे सपत्नान्मदीयान्वैरिणो व्यस्यतां विनाशयताम् ॥

अत्र विनियोगसंग्रहः—

उत्रिभिः समिधो दध्यादुदु त्वोद्यच्छतेऽनलम् ।
पञ्चेति पञ्चभिर्हुत्वा विद्वाभ्यामश्मनः स्थितिः ॥
इन्द्रं चतुर्भिरापुच्छाद्गच्छेत्पञ्चदशेरिताः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ चतुर्थाष्टके षष्ठप्रपाठके चतुर्थोऽनुवाकः । )

---

आशुः शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम् । संक्रन्दनोऽनिमिष एकवीरः शतꣳ सेना अजयत्साकमिन्द्रः । संक्र-

(अप्रतिरथसूक्ताभिधानम्)

न्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना। तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा। स इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा स युध इन्द्रो गणेन। सꣳसृष्टजित्सोमपा बाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता। बृहस्पते परि दीय (१) रथेन रक्षोहाऽमित्राꣳ अपबाधमानः। प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्। गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा। इमꣳ सजाता अनु वीरयध्वमिन्द्रꣳ सखायोऽनु सꣳ रभध्वम्। बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः। अभिवीरो अभिसत्त्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित्। अभि गोत्राणि सहसा गाहमानोऽदायः (२) वीरः शतमन्युरिन्द्रः। दुश्च्यवनः पृतनाषाडयुध्योऽस्माकꣳ सेना अवतु प्र युत्सु। इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः। देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रे। इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरु-

ताꣳ शर्धं उग्रम् । महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् । अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु(३)। अस्माकं वीरा उत्तरे भवन्त्वस्मानु देवा अवता हवेषु । उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां महाꣳसि । उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतामेतु घोषः । उप प्रेत जयता नरः स्थिरा वः सन्तु बाहवः । इन्द्रो वः शर्म यच्छत्वनाधृष्या यथाऽसथ । अवसृष्टा परा पत शरव्ये ब्रह्मसꣳशिता । गच्छामित्रान्प्र ( ४ ) विश मैषां कं चनोच्छिषः । मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजाऽमृतेनाभि वस्ताम् । उरोर्वरीयो वरिवस्ते अस्तु जयन्तं त्वामनु मदन्तु देवाः । यत्र बाणाः संपतन्ति कुमारा विशिखा इव । इन्द्रो नस्तत्र वृत्रहा विश्वाहा शर्म यच्छतु(५)॥

( दीयादायो जयन्त्वमित्रान्प्र चत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अप्रतिरथसूक्ताभिधानम् )

( अथ चतुर्थाष्टके षष्ठप्रपाठके चतुर्थोऽनुवाकः । )

---

आशुः । शिशानः । वृषभः । न । युध्मः । घनाघनः । क्षोभणः । चर्षणीनाम् । संक्रन्दन इति सं—क्रन्दनः । अनिमिष इत्यनि—मिषः । एकवीर इत्येक—वीरः । शतम् । सेनाः । अजयत् । साकम् । इन्द्रः । संक्रन्दनेनेति सं—क्रन्दनेन । अनिमिषेणेत्यनि—मिषेण । जिष्णुना । युत्कारेणेति युत्—कारेण । दुश्च्यवनेनेति दुः—च्यवनेन । धृष्णुना । तत् । इन्द्रेण । जयत । तत् । सहध्वम् । युधः । नरः । इषुहस्तेनेतीषु—हस्तेन । वृष्णा । सः । इषुहस्तैरितीषु—हस्तैः । सः । निषङ्गिभिरिति निषङ्गि—भिः । वशी । सꣳस्रष्टेति सं—स्रष्टा । सः । युधः । इन्द्रः । गणेन । सꣳसृष्टजिदिति सꣳसृष्ट—जित् । सोमपा इति सोम—पाः । बाहुशर्धीति बाहु—शर्धी । ऊर्ध्वधन्वेत्यूर्ध्व—धन्वा । प्रतिहिताभिरिति प्रति—हिताभिः । अस्ता । बृहस्पते । परीति । दीय ( १ ) । रथेन । रक्षोहेति रक्षः—हा । अमित्रान् । अपबाधमान इत्यप—बाधमानः । प्रभञ्जन्निति प्र—भञ्जन् । सेनाः । प्रमृण इति प्र—मृणः । युधा । जयन् । अस्माकम् । एधि । अविता । रथानाम् । गोत्रभि-

दमिति गोत्र—भिदम् । गोविदमिति गो—विदम् । वज्रबाहुमिति वज्र—बाहुम् । जयन्तम् । अज्म । प्रमृणन्तमिति प्र—मृणन्तम् । ओजसा । इमम् । सजाता इति स—जाताः । अन्विति । वीरयध्वम् । इन्द्रम् । सखायः । अनु । समिति । रभध्वम् । बल-विज्ञाय इति बल—विज्ञायः । स्थविरः । प्रवीर इति प्र—वीरः । सहस्वान् । वाजी । सहमानः । उग्रः । अभिवीर इत्यभि—वीरः । अभिसत्वेत्यभि—सत्वा । सहोजा इति सहः—जाः । जैत्रम् । इन्द्र । रथम् । एति । तिष्ठ । गोविदिति गो—वित् । अभीति । गोत्राणि । सहसा । गाहमानः । अदायः ( २ ) । वीरः । शतमन्युरिति शत—मन्युः । इन्द्रः । दुश्च्य-वन इति दुः—च्यवनः । पृतनाषाट् । अयुध्यः । अस्माकम् । सेनाः । अवतु । प्रेति । युत्स्विति युत्—सु । इन्द्रः । आसाम् । नेता । बृहस्पतिः । दक्षिणा । यज्ञः । पुरः । एतु । सोमः । देवसेनाना-मिति देव—सेनानाम् । अभिभञ्जतीनामित्यभि—भ-ञ्जतीनाम् । जयन्तीनाम् । मरुतः । यन्तु । अग्रे । इन्द्रस्य । वृष्णः । वरुणस्य । राज्ञः । आदित्यानाम् । मरुताम् । शर्धः । उग्रम् । महामनसामिति महा—

मनसाम्। भुवनच्यवानामिति भुवन—च्यवानाम्। घोषः। देवानाम्। जयताम्। उदिति। अस्थात्। अस्माकम्। इन्द्रः। समृतेष्विति सम्—ऋतेषु। ध्वजेषु। अस्माकम्। याः। इषवः। ताः। जयन्तु। (३)। अस्माकम्। वीराः। उत्तर इत्युत्—तरे। भवन्तु। अस्मान्। उ। देवाः। अवत। हवेषु। उदिति। हर्षय। मघवन्निति मघ—वन्। आयुधानि। उदिति। सत्वनाम्। मामकानाम्। महांसि। उदिति। वृत्रहन्निति वृत्र—हन्। वाजिनाम्। वाजिनानि। उदिति। रथानाम्। जयताम्। एतु। घोषः। उप। प्रेति। इत। जयत। नरः। स्थिराः। वः। सन्तु। बाहवः। इन्द्रः। वः। शर्म। यच्छतु। अनाधृष्या इत्यना—धृष्याः। यथा। असथ। अवसृष्टेत्यव—सृष्टा। परेति। पत। शरव्ये। ब्रह्मसंशितेति ब्रह्म—संशिता। गच्छ। अमित्रान्। प्रेति (४)। विश। मा। एषाम्। कम्। चन। उदिति। शिषः। मर्माणि। ते। वर्मभिरिति वर्म—भिः। छादयामि। सोमः। त्वा। राजा। अमृतेन। अभीति। वस्ताम्। उरोः। वरीयः। वरिवः। ते। अस्तु। जयन्तम्। त्वाम्। अन्विति। मदन्तु।

देवाः । यत्र । बाणाः । संपतन्तीति सं—पतन्ति । कुमाराः । विशिखा इति वि—शिखाः । इव । इन्द्रः । नः । तत्र । वृत्रहेति वृत्र—हा । विश्वाहेति विश्व—हा । शर्म । यच्छतु ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ चतुर्थकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः । )

---

तृतीयेऽनुवाकेऽग्निप्रणयनमुक्तम् । अथाप्रतिरथसूक्तमुच्यते ।

कल्पः—" आशुः शिशान इति दक्षिणतो ब्रह्मा दशर्चेनान्वेति मैत्रावरुणः प्रतिप्रस्थाता वा " इति ।

तत्र प्रथमामाह—

आशुः शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम् । संक्रन्दनोऽनिमिष एकवीरः शतꣳ सेना अजयत्साकमिन्द्रः ।, इति ।

अयमिन्द्रः परमैश्वर्योपेतः शतं सेनाः शतसंख्याकाः परकीयसेनाः साकमेकमयत्नेनाजयत् । कीदृश इन्द्रः, आशुः शीघ्रकारी, शिशानस्तीक्ष्णोऽत्युग्र इत्यर्थः । तत्र दृष्टान्तः—वृषभो न युध्मः । यथा वृषभो वृषभान्तरेण योद्धुमुत्सुकस्तद्वदयमपि घनाघनोऽतिशयेन शत्रूणां हिंसको घातकः । चर्षणीनां परसेनागतमनुष्याणां क्षोभणः क्षोभहेतुः । संक्रन्दनः समीचीनं क्रन्दनं परभयहेतुर्ध्वनिविशेषो यस्यासौ संक्रन्दनः । अनिमिषः कदाचिदपि निमेषं न क[illegible]त्यत्यन्तसावधान इत्यर्थः । एकवीरः परानपेक्षेण ( क्षः ) स्वयमेक एव समर्थः शूरः ॥

अथ द्वितीयामाह—

संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण

---

१ ख. च. 'मुत्सहते तद्व' ।

दुश्च्यवनेन धृष्णुना। तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा।, इति।

युधो युद्धार्थिनो हे नरो मनुष्या इन्द्रेणानुगृहीताः सन्तस्तत्परबलं जयत वशी कुरुत। वशीकृत्य च तत्सहध्वमभिभवत विनाशयतेत्यर्थः। कीदृशेनेन्द्रेण, संक्रन्दनेनानिमिषेण। पूर्ववद्व्याख्येयम्। जिष्णुना जयशीलेन, युत्कारेण युद्धकारिणा, दुश्च्यवनेन च्यावयितुं दुःशक्येन, धृष्णुना भीतिरहितेन, इषुहस्तेन बाणाद्यायुधोपेतेन, वृष्णा कामानां वर्षकेण॥

अथ तृतीयामाह—

स इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा स युध इन्द्रो गणेन। सꣳसृष्टजित्सोमपा बाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता।, इति।

इषवो हस्तेषु येषां भटानां त इषुहस्तास्तैः साकं स इन्द्रो वशी परबलं स्ववशं करोति। निषङ्गिणः खड्गहस्तास्तैः साकं स इन्द्रो वशी स्वकीयैर्धानुष्कैः खड्गहस्तैश्चोपेतत्वात्परसैन्यं वशी करोतीत्यर्थः। यद्वा परसैन्यगतैर्धानुष्कैः खड्गहस्तैश्च सहितं तद्वशी करोति। स इन्द्रो युधो योद्धा सन्गणेन परकीयभटसमूहेन संस्रष्टा सहसा गत्वा सम्यङ्मिश्रितो भवति। मिश्रीभूय च ये स्वेन संसृष्टास्तान्सर्वाञ्जयतीति संसृष्टजित्। यजमानानां यागेषु सोमं पिबतीति सोमपा अत एव बाहुशर्धी बाहुबलोपेत ऊर्ध्वधन्वा निरन्तरमुद्यतधनुष्कः प्रतिहिताभिस्तेन धनुषा प्रेरिताभिरिषुभिरस्ता क्षेप्ता विनाशयतीत्यर्थः॥

अथ चतुर्थीमाह—

बृहस्पते परि दीया रथेन रक्षोहाऽमित्राꣳ अपबाधमानः। प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्।, इति।

बृहद्वाक्तस्याः पालको बृहस्पतिरिन्द्रः। अत एव शाखान्तरे समाम्नातम्—"वाग्वै बृहत्तस्या एष पतिस्तस्माद्बृहस्पतिरेषः" इति। व्याकरणकर्तृत्वमिन्द्रस्य वाक्पतित्वम्। तच्चान्यत्राऽऽम्नातम्—"ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति" इति। तथाविध हे इन्द्र त्वं रथेन परिदीय सर्वतो

गच्छ । कीदृश इन्द्रः, रक्षोहा राक्षसानां हन्ता, अमित्राञ्शत्रूनपबाधमानो यथाऽपयन्ति तथा बाधमानः, सेनाः परकीयाः प्रभञ्जन्प्रकर्षेण भग्नाः कुर्वन्, प्रमृणः प्रकर्षेण हिंसको युधा युद्धेन जयन्सर्वत्र विजयमानः । अस्माकमस्मदीयानां रथानामवितैधि रक्षको भव ॥

अथ पञ्चमीमाह—

गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा । इमꣳ सजाता अनु वीरयध्वमिन्द्रꣳ सखायोऽनु सꣳ रभध्वम् ।, इति ।

हे सजाताः समानजन्मानोऽस्मदीया ज्ञातयो यूयमिममिन्द्रमनुवीरयध्वम् । अयमिन्द्रः पुरतो वीरः शूरोऽभवत्पश्चाद्यूयं शूरा भवत । हे सखाय इन्द्रमनुसंरभध्वमिन्द्रः पुरतो युद्धं सम्यगारभतां पश्चाद्भवन्त आरभन्ताम् । कीदृशमिन्द्रं, गोत्रभिदं गोत्रान्पर्वतान्भिनत्ति तदीयपक्षांश्छिनत्तीति गोत्रभित्तं, गां भूमिं विन्दते लभत इति गोवित्तं गोविदं, वज्रो बाहौ यस्य स वज्रबाहुस्तम्, अज्म जयन्तं भूमिराहित्यं शत्रूणां यथा भवति तथा विजयमानम्, ओजसा बलेन प्रमृणन्तं प्रकर्षेण हिंसन्तम् ॥

अथ षष्ठीमाह—

बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः । अभिवीरो अभिसत्त्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित् ।, इति ।

हे इन्द्र त्वं जैत्रं जयशीलं रथमातिष्ठाऽऽरोह । कीदृशस्त्वं, बलं परकीयसामर्थ्यं विजानातीति बलविज्ञायः । स्थविरः पुरातनः । प्रवीरः शूरेष्वप्यतिशूरः । सहस्वान्बलवान् । वाज्यन्नवान् । सहमानः परेषामभिभविता । उग्रो युद्धेषु क्रूरः । अभितो वीराः शूरभटा यस्यासावभिवीरः । अभितः सत्त्वानः परिचारकाः प्राणिनो यस्यासावभिसत्त्वा । सहसो बलाज्जातः सहोजा बलाधिक इत्यर्थः । गां भूमिं विन्दते लभत इति गोवित् ॥

अथ सप्तमीमाह—

अभिगोत्राणि सहसा गाहमानोऽदायो वीरः

---

१ ख. च. रक्षसां ।

(अप्रतिरथसूक्ताभिधानम्)

शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाडयु-
ध्योऽस्माकꣳ सेना अवतु प्र युत्सु ।, इति।

अयमिन्द्रः प्रयुत्सु प्रकृष्टेषु युद्धेषु अस्माकं सेना अवतु रक्षतु। कीदृश इन्द्रः, अभि सर्वतोऽवस्थितानि गोत्राणि युद्धक्षेत्राणि सहसा शीघ्रं गाहमानः प्रविशन्। अदायो दा(द)यारहितः। वीरः शूरः। शतमन्युर्बहुविधक्रोधयुक्तः। दुश्च्यवनश्च्यावयितुं दुःशक्यः। पृतनाषाट्परकीयसेनानामभिभविता। अयुध्यः केनापि योद्धुमशक्यः॥

अथाष्टमीमाह—

इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः
पुर एतु सोमः । देवसेनानामभिभञ्ज-
तीनां जयन्तीनां मरुतो यन्त्वग्रे ।, इति।

याः सेना अस्मदनुग्रहार्थं वैरिषु गच्छन्त्यासां सेनानामिन्द्रो नेता भवतु। यो बृहस्पतिर्या च दक्षिणा देवी यश्च यज्ञो यश्च सोम एतेषामेकैकः पुरतो गच्छतु। याश्चैतत्संबन्धिन्यो देवसेनाः परबलमभिभञ्जयन्त्यो जयन्तीर्नां ता(न्त्यस्ता)सामग्रे मरुतो यन्तु गच्छन्तु॥

अथ नवमीमाह—

इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां
मरुताꣳ शर्ध उग्रम् । महामनसां भुवनच्य-
वानां घोषो देवानां जयतामुदस्थात् ।, इति।

वृष्णः कामाभिवर्षिण इन्द्रस्य राज्ञो राज्यं कुर्वतो वरुणस्य शर्धो बलमुग्रं युद्धेष्वतितीव्रमस्तु। महामनसां युद्धे स्थिरचित्तानां भुवनच्यवानां शत्रून्भुवनेभ्यश्च्यावयितुं समर्थानां जयतां विजयमानानां देवानां घोषो ध्वनिरुदस्थात्सर्वत उत्थितोऽभूत्॥

अथ दशमीमाह—

अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इष-
वस्ता जयन्तु । अस्माकं वीरा उत्तरे भव-
न्त्वस्मानु देवा अवता हवेषु ।, इति।

---

१ ख. घ. ङ. च. ॑त्रम्। म॑।

युद्धार्थं परसैन्यं गतेषु सम्यक्प्राप्तेषु सत्स्वस्माकमिन्द्रो रक्षिता भवत्विति शेषः। तदानीमस्माकं या इषवोऽस्मदीयैर्मुक्तास्ता जयन्तु परसैन्यानि विध्यन्तु। अस्माकं ये वीराः शूरा भटास्त उत्तरे भवन्तु परकीयभटेभ्य उत्कृष्टा भवन्तु। देवा हवेषु युद्धेषु अस्मानु अस्मानेवावतावन्तु रक्षन्तु ॥

इत्थं दशर्चमप्रतिरथसूक्तं समाप्तम् । अथ तत्रैव विकल्पिताः पञ्चर्च उच्यन्ते।

तत्र प्रथमामाह—

उद्धर्षय मघवन्नायुधान्युत्सत्वनां माम-
कानां महांसि। उद्वृत्रहन्वाजिनां वाजि-
नान्युद्रथानां जयतामेतु घोषः ।, इति।

हे मघवन्निन्द्राऽऽयुधान्यस्मदीयान्युद्धर्षय परकीयेभ्य उत्कृष्टानि कृत्वाऽस्मान्हर्षय। मामकानां मदीयानां सत्वनां प्राणिनां महांसि तेजांस्युत्कृष्टानि कृत्वा तान्हर्षय। हे वृत्रहन्वाजिनामस्मदीयानामश्वानां वाजिनानि शीघ्रगमनान्युत्कृष्टानि कृत्वा हर्षय । जयतां विजयं प्राप्नुवतां रथानामस्मदीयानां घोष उदेतु महाध्वनिरुद्गच्छतु ॥

अथ द्वितीयामाह—

उप प्रेत जयता नरः स्थिरा वः सन्तु बाहवः।
इन्द्रो वः शर्म यच्छत्वनाधृष्या यथाऽसथ।, इति।

हे नरोऽस्मदीयाः पुरुषा उपप्रेत परसैन्यस्य समीपे प्रकर्षेण गच्छत । ततो जयत विजयं प्राप्नुत । वो युष्माकं बाहवः स्वकीयायुधैः प्रहरणेषु स्थिराः सन्तु। यथा यूयमनाधृष्या असथ केनाप्यतिरस्कार्या भवथ तथाऽयमिन्द्रो वो युष्माकं शर्म यच्छतु सुखं ददातु ॥

अथ तृतीयामाह—

अवसृष्टा परा पत शरव्ये ब्रह्मसंशिता। गच्छा-
मित्रान्प्र विश मैषां कं चनोच्छिषः ।, इति।

हिंसिका हेतिः शरव्या। हे शरव्ये ब्रह्मणा संशिता तीक्ष्णीकृता त्वमवसृष्टाऽस्माभिर्मुक्ता सती परापत सहसा परसैन्ये पतिता भव । पतित्वा चामित्राञ्शत्रून्गच्छ प्राप्नुहि । प्राप्य च प्रविशैषां शत्रूणां शरीरमध्ये प्रवेशं

---

१ क. घ. ङ. 'क्षितेति। २ ख. च. अधिका। ३ क घ. ङ. 'यान्यायुधान्यु'।

(अप्रतिरथसूक्ताभिधानम्)
कुरु। प्रविश्य चैषां शत्रूणां मध्ये कंचन पुरुषं मोच्छिषोऽवशिष्टं मा कुरु सर्वानपि जहीत्यर्थः॥

अथ चतुर्थीमाह—

मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा
राजाऽमृतेनाभि वस्ताम्। उरोर्वरीयो वरिवस्ते
अस्तु जयन्तं त्वामनु मदन्तु देवाः।, इति।

हे यजमान ते तव मर्माणि वर्मभिः कवचैश्छादयामि। सोमो राजा त्वाममृतेन मरणनिवारकेण केनापि कवचविशेषेणाभिवस्तामभित आच्छादयतु। ते तव वरिवो धनमुरोर्वरीयोऽस्तु अन्यदीयादधिकादप्यत्यन्तमधिकमस्तु। जयन्तं विजयं प्राप्नुवन्तं त्वां देवा अनुमदन्त्वनुकूला भूत्वा हृष्यन्तु॥

अथ पञ्चमीमाह—

यत्र बाणाः संपतन्ति कुमारा
विशिखा इव। इन्द्रो नस्तत्र वृत्रहा
विश्वाहा शर्म यच्छतु॥, इति॥

यत्र यस्मिन्युद्धे बाणाः परैर्मुक्ताः संपतन्तीतश्चेतश्च संभूय पतन्ति। तत्र दृष्टान्तः—कुमारा विशिखा इव, [यथा] मुण्डितशिरस्का विशीर्णकेशा[1] वाऽत्यन्तं बालाश्चपलाः सन्त इतश्चेतश्च गच्छन्ति तद्वत्। तत्र युद्धेऽयमिन्द्रो विश्वाहा परकीयसर्वप्राणिघाती वृत्रहा विशेषतो वैरिघाती सन्नोऽस्मभ्यं शर्म[2] यच्छतु सुखं ददातु॥

आशुः शिशान इत्येतत्सूक्तं विनियुङ्क्ते—

"देवासुराः संयत्ता आसन्ते देवा एतदप्रतिरथमपश्यन्तेन वै तेऽप्रत्यसुरानजयन्तदप्रतिरथस्याप्रतिरथत्वं यदप्रतिरथं द्वितीयो होताऽन्वाहाप्रत्येव तेन यजमानो भ्रातृव्याञ्जयत्यथो अनभिजितमेवाभि जयति" [सं० का० ५ प्र० ४ अ० ६] इति।

यदा देवाश्चासुराश्च युद्धायोद्यतास्तदानीं देवा विजयप्रदत्वेनाप्रतिरथाख्यमेतत्सूक्तमपश्यन्।[3] * तेनैवं यजमानः सर्वान्भ्रातृव्यान्प्रतिकूलराहित्यं यथा

* अत्र तेन वै तेऽप्रत्यसुरानित्यादिहोताऽन्वाहेत्यन्तसंहितावाक्यस्य व्याख्यानं त्रुटितम्।

१ क. घ. ङ. विकीर्ण'। २ क. घ. ङ. 'न्नोऽस्माकं श'। ३ क. 'व देवाश्चायं य'। ख. च. 'त्र देवा निवार्य लौकिको य'।

भवति तथैव जयति । अपि च पूर्वमनभिजितमपि[1] धनं देशविशेषं[2] वा सर्वथाऽभिजयत्येव ॥

सूक्तमन्त्रसंख्यां विधत्ते—

" दशर्चं भवति दशाक्षरा विराड्विराजेमौ लोकौ विधृतावनयोर्लोकयोर्विधृत्या अथो दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रति तिष्ठति " [ सं० का० ५ प्र० ४ अ० ६ ] इति ।

अस्मिन्ननुवाके समाम्नातानामुद्धर्षयेत्यादीनां पञ्चानां विकल्पार्थत्वात्सूक्तगता ऋचो दशैव संपद्यन्ते । विराट्छन्दसो दशाक्षरत्वात्तस्य च्छन्दसः सामर्थ्येनैव लोकयोर्विधृतत्वात्तयोर्विधृत्यर्थमिदं दशर्चं सूक्तं संपद्यते । अपि च दशाक्षरस्य विराट्छन्दसोऽन्नहेतुत्वेनान्नत्वाद्दशसंख्याद्वारा तस्मिन्नन्नाद्ये प्रतितिष्ठति ॥

अथ पूर्वानुवाकोक्तविमान इत्यादिमन्त्रद्वयसाध्यमश्मनिधानं विधत्ते—

" असदिव वा अन्तरिक्षमन्तरिक्षमिवाऽऽग्नीध्रमाग्नीध्रेऽश्मानं नि दधाति सत्त्वाय " [ सं० का० ५ प्र० ४ अ० ६ ] इति ।

भूमिवन्मूर्तस्वरूपाभावादिदमन्तरिक्षमविद्यमानसदृशं भवति । अन्तरिक्षसदृशं चाऽऽग्नीध्रं, हविर्धानशकलग्रहसादनादीनामभावेन शून्यत्वप्रतिभानात् । अतः शून्यत्वनिवारणेन च सुसद्भावाय तत्रापि कंचिदश्मानं निदध्यात् ॥

मन्त्रद्वित्वं प्रशंसति—

" द्वाभ्यां प्रतिष्ठित्यै " [ सं० का० ५ प्र० ४ अ० ६ ] इति ॥

प्रथममन्त्रे विमानशब्दस्य तात्पर्यं दर्शयति—

" विमान एष दिवो मध्य आस्त इत्याह व्येवैतया मिमीते " [ सं० का० ५ प्र० ४ अ० ६ ] इति ।

एतयर्चा पूर्वं शून्यमाग्नीध्रं वस्तु विशिष्टं यथा भवति तथा मिमीत एव प्रमितं करोत्येव ॥

द्वितीयमन्त्रे पृश्निशब्दतात्पर्यं दर्शयति—

" मध्ये दिवो निहितः पृश्निरश्मेत्याहान्नं वै पृश्न्यन्नमेवाव रुन्धे " [ सं० का० ५ प्र० ४ अ० ६ ] इति ।

पक्वं शाल्यन्नं श्वेतं भवति । अतः श्वेतेनाश्मना तादृशमन्नं प्राप्नोति ॥

इन्द्रं विश्वा अवीवृधन्नित्यादिमन्त्रचतुष्टयसाध्यं गमनं विधत्ते—

---

१ क. घ. ङ. ॑पि च घ॑ । २ क. घ. ॑षं स॑ ।

(अप्रतिरथसूक्ताभिधानम्)

"चतसृभिरा पुच्छादेति चत्वारि छन्दाꣳसि छन्दोभिरेव" [सं० का० ५ प्र० ४ अ० ६] इति।

आग्नीध्रान्निर्गत्य पुच्छपर्यन्तमेतैर्मन्त्रैर्गच्छेत्। गायत्र्यादीनां मुख्यच्छन्दसां चतुष्ट्वान्मन्त्रसंख्यायाश्छन्दोभिरेव युक्तो[1] गतवान्भवति॥

प्रथममन्त्रस्य प्रथमपादेऽवीवृधन्निति पदस्य तात्पर्यं दर्शयति--

"इन्द्रं विश्वा अवीवृधन्नित्याह वृद्धिमेवोपावर्तते" [सं० का० ५ प्र० ४ अ० ६] इति॥

तत्रैव चतुर्थपादे वाजशब्दतात्पर्यं दर्शयति--

"वाजानाꣳसत्पतिं पतिमित्याहान्नं वै वाजोऽन्नमेवाव रुन्धे" [सं० का० ५ प्र० ४ अ० ६] इति॥

द्वितीयमन्त्रे सुम्नशब्दतात्पर्यं दर्शयति—

"सुम्नहूर्यज्ञो देवाꣳआ च वक्षदित्याह प्रजा वै पशवः सुम्नं प्रजामेव पशूनात्मन्धत्ते" [सं० का० ५ प्र० ४ अ० ६] इति॥

अस्मिन्नेव मन्त्र उत्तरभागस्य तात्पर्यं दर्शयति—

"यक्षदग्निर्देवो देवाꣳआ च वक्षादित्याह सुवर्गाकृत्यै" [सं० का० ५ प्र० ४ अ० ६] इति।

देवाꣳ आ च वक्षादित्युक्त्या तान्देवान्स्वगतान्स्वाधीनान्करोति॥

तृतीयमन्त्रगतयोरुद्ग्राभनिग्राभशब्दयोस्तात्पर्यं दर्शयति—

"वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीदित्याहासौ वा आदित्य उद्यन्नुद्ग्राभ एष निम्रोचन्निग्राभो ब्रह्मणैवाऽऽत्मानमुद्गृह्णाति ब्रह्मणा भ्रातृव्यं नि गृह्णाति" [सं० का० ५ प्र० ४ अ० ६ इति।

ऊर्ध्वग्रहणवाचिनोद्ग्राभशब्देनोद्गच्छन्निग्राभशब्देनाधो गच्छन्नसावादित्यो लक्ष्यते। अतस्तदुभयप्रतिपादकेन मन्त्रेणाऽऽत्मानमुद्गृह्णाति उत्कर्षं प्रापयति। स्वभ्रातृव्यं निगृह्णाति निग्रहं प्रापयति॥

अत्र विनियोगसंग्रहः—

"आशुरित्यप्रतिरथं होताऽन्वाह दशर्चकम्।
उद्धर्षेति विकल्पार्था मन्त्राः पञ्चदशेरिताः" ॥ १ ॥ इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

१ ख, च. युक्तः सन्गतं।

( अथ चतुर्थाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः । )

---

प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो-अग्निर्भवेह । विश्वा आशा दीद्यानो वि भाह्यूर्जं नो धेहि द्विपदे चतुष्पदे । क्रमध्वमग्निना नाकमुख्यꣳ हस्तेषु बिभ्रतः । दिवः पृष्ठꣳ सुवर्गत्वा मिश्रा देवेभिराध्वम् । पृथिव्या अहमुदन्तरिक्षमाऽरुहमन्तरिक्षाद्दिवमाऽरुहम् । दिवो नाकस्य पृष्ठात्सुवर्ज्योतिरगाम् ( १ ) अहम् । सुवर्यन्तो नापेक्षन्त आ द्याꣳ रोहन्ति रोदसी । यज्ञं ये विश्वतोधारꣳ सुविद्वाꣳसो वितेनिरे । अग्ने प्रेहि प्रथमो देवयतां चक्षुर्देवानामुत मर्त्यानाम् । इयक्षमाणा भृगुभिः सजोषाः सुवर्यन्तु यजमानाः स्वस्ति । नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची । द्यावा क्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयन्द्रविणोदाः । अग्ने सहस्राक्ष ( २ ) शतमूर्धञ्छतं ते प्राणाः सहस्रमपानाः । त्वꣳ साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय स्वाहा । सुपर्णोऽसि गरुत्मान्पृथिव्याꣳ सीद पृष्ठे पृथिव्याः सीद भासाऽन्तरि-

क्षमा पृण ज्योतिषा दिवमुत्तभान तेजसा दिश उद्दृंह। आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वां योनिमा सीद साध्या। अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वे देवाः (३) यजमानश्च सीदत। प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ। त्वाꣳ शश्वन्त उपयन्ति वाजाः। विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे। यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवीꣳषि जुहुरे समिद्धे। ताꣳ सवितुर्वरेण्यस्य चित्रामाऽहं वृणे सुमतिं विश्वजन्याम्। यामस्य कण्वो अदुहत्प्रपीनाꣳ सहस्रधाराम् (४) पयसा महीं गाम्। सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्त धाम प्रियाणि। सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्वा घृतेन। ईदृङ्चान्यादृङ्चैतादृङ्च प्रतिदृङ्च मितश्च संमितश्च सभराः। शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माꣳश्च सत्यश्चर्तपाश्चात्यꣳहाः (५)। ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्चान्त्यमित्रश्च दूरेअमित्रश्च गणः। ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्ता

चं विधर्ता चं विधारयः । ईदृक्षास एतादृक्षास ऊ षु णः सदृक्षासः प्रतिसदृक्षास एतंन । मितासंश्च संमितासश्च न ऊतये सभंरसो मरुतो यज्ञे अस्मिन्निन्द्रं दैवीर्विशो मरुतोऽनुंवर्त्मानो यथेन्द्रं दैवीर्विशो मरुतोऽनुंवर्त्मान एवमिमं यजंमानं दैवींश्च विशो मानुंषीश्चानुंवर्त्मानो भवन्तु ( ६ ) ॥

( अगा३सहस्राक्ष देवाः सहस्रंधारामत्य३ंहा अनुंवर्त्मानः षोडंश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ चतुर्थाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः । )

---

प्राचींम् । अन्विति । प्रदिशामिति प्र—दिशंम् । प्रेति । इहि । विद्वान् । अग्नेः । अग्ने । पुरोअंग्निरिति पुरः—अग्निः । भव । इह । विश्वाः । आशाः । दीद्यांनः । वीति । भाहि । ऊर्जम् । नः । धेहि । द्विपद इति द्वि—पदें । चतुंष्पद इति चतुः—पदे । क्रमंध्वम् । अग्निनां । नाकम् । उख्यम् । हस्तेषु । बिभ्रंतः । दिवः । पृष्ठम् । सुवंः । गत्वा । मिश्राः । देवेभिः । आध्वम् । पृथिव्याः । अहम् । उदिति । अन्तरिंक्षम् । एति । अरुहम् । अन्तरिंक्षात् । दिवंम् ।

( अग्निस्थापनाभिधानम् )

एति। अरुहम्। दिवः। नाकस्य। पृष्ठात्। सुवः। ज्योतिः। अगाम् (१)। अहम्। सुवः। यन्तः। न। अपेति। ईक्षन्ते। एति। द्याम्। रोहन्ति। रोदसी इति। यज्ञम्। ये। विश्वतोधारमिति विश्वतः—धारम्। सुविद्वाꣳस इति सु—विद्वाꣳसः। वितेनिर इति वि—तेनिरे। अग्ने। प्रेति। इहि। प्रथमः। देवयतामिति देव—यताम्। चक्षुः। देवानाम्। उत। मर्त्यानाम्। इयक्षमाणाः। भृगुभिरिति भृगु—भिः। सजोषा इति स—जोषाः। सुवः। यन्तु। यजमानाः। स्वस्ति। नक्तोषासा। समनसेति स—मनसा। विरूपे इति वि—रूपे। धापयेते इति। शिशुम्। एकम्। समीची इति। द्यावा। क्षाम। रुक्मः। अन्तः। वीति। भाति। देवाः। अग्निम्। धारयन्। द्रविणोदा इति द्रविणः—दाः। अग्ने। सहस्राक्षेति सहस्र—अक्ष (२)। शतमूर्धन्निति शत—मूर्धन्। शतम्। ते। प्राणा इति प्र—अनाः। सहस्रम्। अपाना इत्यप—अनाः। त्वम्। साहस्रस्य। रायः। ईशिषे। तस्मै। ते। विधेम। वाजाय। स्वाहा। सुपर्ण इति सु—पर्णः। असि। गरुत्मान्। पृथिव्याम्। सीद। पृष्ठे। पृथिव्याः।

सीद । भासा । अन्तरिक्षम् । एति । पृण । ज्यो- तिषा । दिवम् । उदिति । स्तभान । तेजसा । दिशः । उदिति । दृꣳह । आजुह्वान इत्या—जुह्वानः । सुप्रतीक इति सु—प्रतीकः । पुरस्तात् । अग्ने । स्वाम् । योनिम् । एति । सीद । साध्या । अस्मिन् । सधस्थ इति सध—स्थे । अधीति । उत्तरस्मिन्नि- त्युत्—तरस्मिन् । विश्वे । देवाः ( ३ ) । यजमानः । च । सीदत । प्रेद्ध इति प्र—इद्धः । अग्ने । दीदिहि । पुरः । नः । अजस्रया । सूर्म्या । यविष्ठ । त्वाम् । शश्वन्तः । उपेति । यन्ति । वाजाः । विधेम । ते । परमे । जन्मन् । अग्ने । विधेम । स्तोमैः । अवरे । सधस्थ इति सध—स्थे । यस्मात् । योनेः । उदा- रिथेत्युत्—आरिथ । यजे । तम् । प्रेति । त्वे इति । हवीꣳषि । जुहुरे । समिद्ध इति सम्—इद्धे । ताम् । सवितुः । वरेण्यस्य । चित्राम् । एति । अहम् । वृणे । सुमतिमिति सु—मतिम् । विश्वजन्यामिति विश्व—जन्याम् । याम् । अस्य । कण्वः । अदुहत् । प्रपीनामिति प्र—पीनाम् । सहस्रधारामिति सहस्र— धाराम् ( ४ ) । पयसा । महीम् । गाम् । सप्त । ते । अग्ने । समिध इति सम्—इधः । सप्त । जिह्वाः ।

सप्त । ऋषयः । सप्त । धाम । प्रियाणि । सप्त । होत्राः । सप्तधेति सप्त—धा । त्वा । यजन्ति । सप्त । योनीः । एति । पृणस्व । घृतेन । ईदृङ् । च । अन्यादृङ् । च । एतादृङ् । च । प्रतिदृङ्ङिति प्रति—दृङ् । च । मितः । च । संमित इति सं—मितः । च । सभरा इति स—भराः । शुक्रज्योतिरिति शुक्र—ज्योतिः । च । चित्रज्योतिरिति चित्र—ज्योतिः । च । सत्यज्योतिरिति सत्य—ज्योतिः । च । ज्योतिष्मान् । च । सत्यः । च । ऋतपा इत्यृत—पाः । च । अत्यंहा इत्यति—अंहाः ( ५ ) । ऋताजिदित्यृत—जित् । च । सत्यजिदिति सत्य—जित् । च । सेनजिदिति सेन—जित् । च । सुषेण इति सु—सेनः । च । अन्त्यमित्र इत्यन्ति—अमित्रः । च । दूरेअमित्र इति दूरे—अमित्रः । च । गणः । ऋतः । च । सत्यः । च । ध्रुवः । च । धरुणः । च । धर्ता । च । विधर्तेति वि—धर्ता । च । विधारय इति वि—धारयः । ईदृक्षासः । एतादृक्षासः । उ । स्विति । नः । सदृक्षासः । प्रतिसदृक्षास इति प्रति—सदृक्षासः । एति । इतन । मितासः । च । संमितास इति सं—मितासः । च । नः । ऊतये । सभ-

रस इति स—भरसः । मरुतः । यज्ञे । अस्मिन् । इन्द्रम् । दैवीः । विशः । मरुतः । अनुवर्त्मान इत्यनु—वर्त्मानः । यथा । इन्द्रम् । दैवीः । विशः । मरुतः । अनुवर्त्मान इत्यनु—वर्त्मानः । एवम् । इमम् । यजमानम् । दैवीः । च । विशः । मानुषीः । च । अनुवर्त्मान इत्यनु—वर्त्मानः । भवन्तु ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ चतुर्थकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः । )

---

चतुर्थेऽनुवाकेऽग्निप्रणयनाङ्गमप्रतिरथसूक्तमुक्तम् । अथ पञ्चमेऽग्निस्थापनमुच्यते ।

कल्पः—" प्राचीमनु प्रदिशमिति पञ्चभिरग्निमधिरुह्य " इति ।

तत्र प्रथमामाह—

प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरोअग्निर्भवेह । विश्वा आशा दीद्यानो वि भाह्यूर्जं नो धेहि द्विपदे चतुष्पदे ।, इति ।

अग्न इदानीमानीत हे वह्ने प्राचीं [प्र]दिशं प्रागाख्यां प्रकृष्टां दिशं वि[द्वां]स्त्वमनुप्रेहि अनुक्रमेण प्रकर्षो यथा भवति तथा गच्छ । त्वमग्नेरिष्टकाभि[रु]त्पादितस्य चितिरूपस्य वह्नेरिहास्मिन्कर्मणि पुरोअग्निर्भव पूर्वभागवर्ती वह्नि[र्]भव । यद्वा पुरोगन्ता मुख्योऽग्निर्भवेत्यर्थः । विश्वा आशाः सर्वा अपि दिशो दीद्यानः प्रकाशयन्विभाहि त्वमपि विशेषेण प्रकाशस्व । ततो नोऽस्मदीयाय द्विपदे चतुष्पदे चोर्जमन्नं धेहि संपादय ॥

अथ द्वितीयामाह—

क्रमध्वमग्निना नाकमुख्यꣳ हस्तेषु बिभ्रतः ।
दिवः पृष्ठꣳ सुवर्गत्वा मिश्रा देवेभिराध्वम् ।, इति ।

हे ऋत्विग्यजमाना नाकं स्वर्गसाधनमुख्यमुखायां पूर्वं संपादितमग्निं हस्तेषु बिभ्रतो धारयन्तस्तेनाग्निना सह क्रमध्वमग्नेरुपरि पादान्विक्षिपत । ततो दिवः पृष्ठमाकाशस्योपरि वर्तमानं सुवर्गत्वा स्वर्गलोकं प्राप्य देवेभिर्मिश्रा देवैरेकीभूताः सन्त आध्वमुपविशत ॥

अथ तृतीयामाह—

पृथिव्या अहमुदन्तरिक्षमाऽरुहमन्त-
रिक्षाद्दिवमाऽरुहम् । दिवो नाकस्य
पृष्ठात्सुवर्ज्योतिरगामहम् । , इति ।

अहं यजमानः पृथिव्या उद्गत एतदन्तरिक्षमारुहमारूढोऽस्मि । तस्मादेवान्तरिक्षादुद्गतो दिवमारुहं द्युलोकमारूढोऽस्मि । दिवो द्युलोकसंबन्धी नाको दुःखरहितो यः प्रदेशस्तस्य पृष्ठादुपरिष्टात्स्वर्गलोकवासिज्योतिर्मण्डलमादित्यरूपमहमगां प्राप्तोऽस्मि यद्वा प्राप्स्यामि ॥

अथ चतुर्थीमाह—

सुवर्यन्तो नापेक्षन्त आ द्याꣳ रोह-
न्ति रोदसी । यज्ञं ये विश्वतो-
धारꣳ सुविद्वाꣳसो वितेनिरे ।, इति ।

ये यजमानाः सुविद्वांसः सुष्ठु कर्मानुष्ठानप्रकारं जानन्तो विश्वतोधारं सर्वस्य जगतो धारणहेतुं यमग्निं वितेनिरे विस्तरेणानुतिष्ठन्ति ते यजमाना द्यामन्तरिक्षमारोहन्ति । तथा रोदसी द्यावापृथिव्यावारोहन्ति । ततः सुवर्यन्तः स्वर्गनिवासमादित्यमण्डलं प्राप्नुवन्तोऽन्यत्किमपि स्थानं नापेक्षन्ते ॥

अथ पञ्चमीमाह—

अग्ने प्रेहि प्रथमो देवयतां चक्षुर्देवानामुत
मर्त्यानाम् । इयक्षमाणा भृगुभिः सजोषाः
सुवर्यन्तु यजमानाः स्वस्ति । , इति ।

देवानात्मन इच्छन्तो देवयन्तो यजमानास्तेषामुपकाराय हेऽग्ने त्वं प्रथमः प्रेहि पुरतो गच्छ । यतस्त्वं देवानां मनुष्याणां च चक्षुस्थानीयः । लोके हि

गच्छतः पुरुषस्य दृष्टिः पुरतो याति । इयक्षमाणा यष्टुमिच्छन्तो यजमाना भृगुभिः सजोषा अनुष्ठानपरैर्भृगुनामकैर्मुनिभिः समानप्रियाः सन्तः स्वस्ति कर्मक्षमा यथा भवन्ति तथा सुवर्यन्तु ॥

तत्र प्रथममन्त्रस्य तात्पर्यं दर्शयति—

" प्राचीमनु प्रदिशं प्रेहि विद्वानित्याह देवलोकमेवैतयोपावर्तते " [ सं० का० ५ प्र० ४ अ० ७ ] इति ।

देवलोकमेवोद्दिश्यानयर्चा प्रवृत्तो भवति ॥

द्वितीयमन्त्रस्य तात्पर्यं दर्शयति—

" क्रमध्वमग्निना नाकमित्याहेमानेवैतया लोकान्क्रमते " [ सं० का० ५ प्र० ४ अ० ७ ] इति ।

इमानेव लोकानुद्दिश्यानयर्चा पादविन्यासं करोति ॥

तृतीयमन्त्रस्य तात्पर्यं दर्शयति—

" पृथिव्या अहमुदन्तरिक्षमाऽरुहमित्याहेमानेवैतया लोकान्समारोहति " [ सं० का० ५ प्र० ४ अ० ७ ] इति ।

इमानेव लोकानुद्दिश्यानयर्चा सम्यगारोहति ॥

चतुर्थमन्त्रस्य तात्पर्यं दर्शयति—

" सुवर्यन्तो नापेक्षन्त इत्याह सुवर्गमेवैतया लोकमेति " [ सं० का० ५ प्र० ४ अ० ७ ] इति ।

स्वर्गप्राप्तिप्रतिपादकशब्दस्यात्र सद्भावात्तदृचा स्वर्गप्राप्तिः ॥

पञ्चममन्त्रस्य तात्पर्यं दर्शयति—

" अग्ने प्रेहि प्रथमो देवयतामित्याहोभयेष्वेवैतया देवमनुष्येषु चक्षुर्दधाति " [ सं० का० ५ प्र० ४ अ० ७ ] इति ॥

उभयचक्षुःप्रतिपादकस्य शब्दस्यात्र सद्भावादेतयर्चोभयत्र चक्षुःस्थापनम् ॥

मन्त्रान्विनियुङ्क्ते—

" पञ्चभिरधि क्रामति पाङ्क्तो यज्ञो यावानेव यज्ञस्तेन सह सुवर्गं लोकमेति " [ सं० का० ५ प्र० ४ अ० ७ ] इति ॥

कल्पः—" नक्तोषासाऽग्ने सहस्राक्षेति द्वाभ्यां संहिताभ्यां दध्नः पूर्णामौदुम्बरीं स्वयमातृण्णायां जुहोति " इति ।

तत्र प्रथमामाह—

नक्तोषासा समनसा विरूपे धापयेते शिशु-

---

१ च. 'भ्यां सहि' ।

(अग्निस्थापनाभिधानम्)

मेकꣳ समीची । द्यावा क्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयन्द्रविणोदाः । , इति ।

नक्तं चोषाश्च नक्तोषासा रात्रिदिवसावित्यर्थः । समनसा परस्परमैकमत्ययुक्ते विरूपे रात्रिः कृष्णा दिवसः शुक्ल इत्येवं विलक्षणरूपे समीची समीच्यावनुकूले सत्यावेकं शिशुमग्निरूपं धापयेते यजमानकर्तृकमग्निधारणं संपादयतः । द्यावा द्युलोके क्षामा(म) क्षितावन्तस्तदुभयमध्यवर्तिन्यन्तरिक्षे रुक्मो रोचमानोऽयमग्निर्विभाति विशेषेण प्रकाशते । दीव्यन्ति व्यवहरन्तीति देवाः प्राणास्ते च द्रविणोदा यागद्वारेण धनरूपं फलं प्रयच्छन्ति तादृशा यजमानस्य प्राणा अग्निमेतं धारयन्धृतवन्तः ॥

अथ द्वितीयामाह—

अग्ने सहस्राक्ष शतमूर्धञ्छतं ते प्राणाः सहस्रमपानाः । त्वꣳ साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय स्वाहा । , इति ।

शतसहस्रशब्दा अपरिमिता(तत्वा)भिप्रायेण । विश्वतश्चक्षुरित्यादिमन्त्रोक्तमूर्तिरूपत्वेनायमग्निरत्र स्तूयते । तस्मादक्षिमूर्धप्राणापाना हेऽग्ने तव बहवः । तथा त्वं साहस्रस्य बहुसहस्रसमूहपरिमितस्य रायो धनस्येशिषे प्रभुर्भवासि । तस्मै ते तादृशाय तुभ्यं वाजायान्नसिद्ध्यर्थं विधेम परिचरेम हविषा स्वाहेदं हविः स्वाहुतमस्तु ॥

तत्र प्रथममन्त्रं विनियुङ्क्ते—

"नक्तोषासेति पुरोनुवाक्यामन्वाह प्रत्त्यै" [सं० का० ५ प्र० ४ अ० ७] इति ।

पुरोभवाः (वा) प्रदानमन्त्राः पू (त्रात्पू) र्वमनुक्रमेणोच्यत इति पुरोनुवाक्या, प्रत्त्या उत्तरेण मन्त्रेण हविष्प्रदानायाऽऽदौ तान्ब्रू (तां ब्रू) यात् । पुरोनुवाक्यामनूच्य याज्यया जुहोतीत्यन्यत्राऽऽम्नातत्वात् ॥

द्वितीयमन्त्रस्य वैराजरूपप्रापकत्वं दर्शयति—

"अग्ने सहस्राक्षेत्याह साहस्रः प्रजापतिः प्रजापतेराप्त्यै" [सं० का० ५ प्र० ४ अ० ७] इति ।

---

१ ख. च. 'भवः प्र' । २ ख. 'मन्त्रः पू' ।

सहस्रसंख्याकचक्षुरादिसंबन्धो विश्वरूपधरस्य विराण्मूर्तेः संभवति नान्यस्य। अतोऽयं मन्त्रः प्रजापतिप्राप्तये भवति ॥

अस्य मन्त्रस्य चतुर्थपादे वाजशब्दस्य तात्पर्यं दर्शयति—

" तस्मै ते विधेम वाजाय स्वाहेत्याहान्नं वै वाजोऽन्नमेवाव रुन्धे " [ सं० का० ५ प्र० ४ अ० ७ ] इति ॥

एतन्मन्त्रसाध्यं होमं विधत्ते—

" दध्नः पूर्णामौदुम्बरीꣳ स्वयमातृण्णायां जुहोत्यूर्ग्वै दध्यूर्गुदुम्बरोऽसौ स्वयमातृण्णाऽमुष्यामेवोर्जं दधाति तस्मादमुतोऽर्वाचीमूर्जमुप जीवामः " [ सं० का० ५ प्र० ४ अ० ७ ] इति ।

जुहूसदृशी काचित्स्रुगौदुम्बरी । दध्युदुम्बरयोरन्नरूपत्वात्स्वयमातृण्णायाश्च स्वर्गरूपत्वात्तस्यां तद्धोमेन स्वर्ग एवान्नं स्थापयति । यस्मात्स्वर्ग ऊर्गत्र-स्थिता तस्मादमुतो द्युलोकादर्वाचीं वृष्टिरूपेणाधः पतन्तीमूर्जमन्नं वयमुपजीवामः ॥

कल्पः—" सुपर्णोऽसि गरुत्मानिति तिसृभिः स्वयमातृण्णायामग्निं प्रतिष्ठाप्य " इति ।

तत्र प्रथमामाह—

सुपर्णोऽसि गरुत्मान्पृथिव्याꣳ सीद
पृष्ठे पृथिव्याः सीद, इति ।

हेऽग्ने त्वं सुपर्णः पक्ष्याकारो गरुत्मान्गरुडसमानोऽसि । अतोऽस्यां चितिरूपायां पृथिव्यां सीदोपविश । तत्रापि पृथिव्याः पृष्ठ उपविश ॥

अथ द्वितीयामाह—

भासाऽन्तरिक्षमा पृण ज्योतिषा दिवमु-
त्तभान तेजसा दिश उद्दृꣳह ।, इति ।

भासा स्वकीयेन प्रकाशेनान्तरिक्षमापृण सर्वतः पूरय । ज्योतिषा स्वकीयेन सामर्थ्येन दिवं द्युलोकमुत्तभानोर्ध्वं स्तंम्भितं कुरु । तथा तेजसा स्वकीयेन सामर्थ्येन दिशः प्राच्यादिका उद्दृंहोत्कर्षेण दृढी कुरु ॥

अथ तृतीयामाह—

आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वां

---

१ ख. स्तम्भितां ।

( अग्निस्थापनाभिधानम् )

योनिमा सीद साध्या। अस्मिन्त्सधस्थे अध्युत्त-
रस्मिन्विश्वे देवा यजमानश्च सीदत।, इति।

हेऽग्ने त्वमाजुह्वान आभिमुख्येन हूयमानः सुप्रतीकः सुमुखः सन्पुरस्ता-त्पूर्वस्यां दिशि साध्या साध्वीं समीचीनां स्वां योनिं स्वकीयं स्थानमासी-दाऽऽगत्य प्राप्नुहि। हे विश्वे देवा यूयं यजमानश्चास्मिन्पुरोवर्तिनि सधस्थेऽग्निना सह स्थातुं योग्येऽध्युत्तरस्मिन्नधिकमुत्कृष्टे स्थाने सीदतोपविशत ॥

एतान्मन्त्रान्विनियुङ्क्ते—

"तिसृभिः सादयति त्रिवृद्वा अग्निर्यावानेवाग्निस्तं प्रतिष्ठां गमयति" [सं० का० ५ प्र० ४ अ० ७] इति।

कल्पः—"प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरीं समिधमाद-धाति" इति।

पाठस्तु—

प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या
यविष्ठ। त्वाꣳ शश्वन्त उप यन्ति वाजाः।, इति।

हेऽग्ने प्रेद्धः पूर्वमपि प्रकर्षेण दीप्तस्त्वं पुरो नोऽस्माकं पुरोदेशेऽजस्रया निर-न्तरवर्तिन्या सूर्म्या सूर्मिसमानया ज्वालया दीदिहि पुनरपि दीप्यस्व। ज्वलन्ती लोहमयी स्थूणा सूर्मी। हे यविष्ठ युवतमाग्ने त्वां शश्वन्तो निरन्तरभा-विनो वाजा अन्नान्युपयन्ति सामीप्येन प्राप्नुवन्ति ॥

तमेतं मन्त्रं विनियुङ्क्ते—

"प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरीमादधात्येषा वै सूर्मी कर्णकाव-त्येतया ह स्म वै देवा असुराणाꣳ शततर्हाꣳस्तृꣳहन्ति यदेतया समिधमाद-धाति वज्रमेवैतच्छतघ्नीं यजमानो भ्रातृव्याय प्र हरति स्तृत्या अछम्बट्का-रम्" [सं० का० ५ प्र० ४ अ० ७] इति।

ज्वलन्ती लोहमयी स्थूणा सूर्मी। सा च कर्णकावती छिद्रवत्यन्तरपि ज्वलन्तीत्यर्थः। तत्समानेयमृक्। एकेनैव प्रहारेण शतसंख्याकान्मारयन्तः शूराः शततर्हा असुराणां मध्ये तादृशानेतयर्चा देवा हिंसन्ति। अनया समिदाधाने शतघ्नीमेतामृचं वज्रं कृत्वा वैरिणं प्रहरति। अछम्बट्कारं स्वस्याविनाशो यथा भवति तथेत्यर्थः ॥

कल्पः—"विधेम ते परमे जन्मन्नग्न इति वैकङ्कतीम्" इति। समिधमा-दधातीत्यनुवर्तते।

पाठस्तु—

विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे । यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवीꣳषि जुहुरे समिद्धे । , इति ।

हेऽग्ने ते तव परमे जन्मनि विधेम वयं ज्ञानेन परिचरेम । सधस्थेऽस्माभिः सह स्थातुं योग्येऽवरे निकृष्टे भूलोकवर्तिनि जन्मानि स्तोमैः स्तोत्रैर्विधेम परिचरेम । यस्माद्योनेरिष्टकचितिरूपात्स्थानादुदारिथ त्वमुद्गत आविर्भूतोऽसि तं योनिं यजे पूजयामि । समिद्धे सम्यक्प्रज्वलिते त्वयि हवींषि प्रजुहुर ऋत्विजः प्रकर्षेण जुह्वति ॥

एतं मन्त्रं विनियुङ्क्ते—

" विधेम ते परमे जन्मन्नग्न इति वैकङ्कतीमा दधाति भा एवाव रुन्धे " [ सं० का० ५ प्र० ४ अ० ७ ] इति ।

अग्नेर्भासो विकङ्कते प्रविष्टत्वात्तदीयसमिधा भाः प्राप्यते ॥

कल्पः—" ताꣳ सवितुर्वरेण्यस्य चित्रामिति शमीमयीम् " इति ।

पाठस्तु—

ताꣳ सवितुर्वरेण्यस्य चित्रामाऽहं वृणे सुमतिं विश्वजन्याम् । यामस्य कण्वो अदुहत्प्रपीनाꣳ सहस्रधारां पयसा महीं गाम् । , इति ।

पुरा कदाचित्कण्वाख्यो महर्षिरस्याग्नेर्या सुमतिमनुग्रहकारिणीं बुद्धिमदुहद्दुग्धवान् । तत्र दृष्टान्तः—प्रपीनां प्रभूतः पीनः स्तनसंघो यस्याः सा प्रपीना तां सहस्रसंख्याकाः क्षीरधारा यस्याः सा सहस्रधारा तां महीं पयसा क्षीरेण संपूर्णां गां धेनुं यथा लौकिका दुहन्ति तद्वत् । अयमग्नेः सुमतेरुपदर्शितबुद्धेः स्वाभीष्टं फलं प्राप्तवान् । वरेण्यस्य सर्वैर्वरणीयस्य सवितुः प्रेरकस्याग्नेः संबन्धिनीं तां कण्वेन दुग्धां सुमतिमहमावृणे सर्वतः प्रार्थये । कीदृ[शीं] सुमतिं, चित्रां स्वापेक्षितबहुविधफलप्रदानसमर्थामित्यर्थः । विश्वं जन्य[मु]त्पाद्यं यस्याः सा विश्वजन्या तां जगदुत्पादनसमर्थामित्यर्थः ॥

तमेतं मन्त्रं विनियुङ्क्ते—

" ताꣳ सवितुर्वरेण्यस्य चित्रामिति शमीमयीꣳ शान्त्यै " [ सं० का० ५ प्र० ४ अ० ७ ] इति ।

शम्याः शमनहेतुत्वाच्छान्त्यर्थत्वं युक्तम् ॥

मन्त्रस्य पूर्वार्धे सवितुस्त्वां सुमतिमांवृण इत्यस्य तात्पर्यं दर्शयति—

"अग्निर्वा ह वा अग्निचितं दुहेऽग्निचिद्वाऽग्निं दुहे ता१ सवितुर्वरेण्यस्य चित्रामित्याहैष वा अग्नेर्दोहः" [ सं० का० ५ प्र० ४ अ० ७ ] इति।

द्विविधो मन्त्रदोहः संभवति। अग्निकर्तृको यजमानकर्मक एको दोहः। अग्निर्हि यजमाने संभावितं हविः स्तुत्यादिरूपं दोग्धि। तथा यजमानकर्तृकोऽग्निकर्मको द्वितीयो दोहः। यजमानो ह्यग्नौ संभावितं स्वापेक्षितं फलं दोग्धि। तत्र सवितुः सुमतिमिति वचनेनाग्निकर्मको द्वितीयो दोहो विवक्षितः॥

द्वितीयार्धे कण्वोदाहरणस्य तात्पर्यं दर्शयति—

"तमस्य कण्व एव श्रायसोऽवेत्तेन ह स्मैन१ स दुहे" [ सं० का० ५ प्र० ४ अ० ७ ] इति।

अग्नेः संबन्धिनं तं फलस्वीकाररूपं दोहं कण्वाख्य एव महर्षिः पूर्वं ज्ञातवान्। स च कण्वः श्रयसोऽपत्यं श्रायसः। अतोऽस्मिन्नुत्तरार्धे पठिते सति तेन कण्वमुनिरिवैनमग्निं स यजमानो दुग्धवान्भवति॥

एतन्मन्त्रविशिष्टं समिदाधानं प्रशंसति—

"यदेतया समिधमादधात्यग्निचिदेव तदग्निं दुहे" [ सं० का० ५ प्र० ४ अ० ७ ] इति॥

कल्पः—"द्वादशगृहीतेन स्रुचं पूरयित्वा सप्त ते अग्ने समिधः सप्त जिह्वा इति सप्तवत्या पूर्णाहुतिं जुहोति" इति।

पाठस्तु—

सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः
सप्त धाम प्रियाणि। सप्त होत्राः सप्तधा
त्वा यजन्ति सप्त योनीरा पृणस्वा घृतेन। इति।

हेऽग्ने तव समिधः सप्तसंख्याका अश्वत्थोदुम्बरपलाशशमीविकङ्कताशनिहतवृक्षपुष्करपर्णरूपाः। अत एव सूत्रकार आधानप्रकरणे सप्त संभारान्समन्त्रकाननुक्रम्येति वानस्पत्या इत्युपसंजहार। ज्वालारूपा जिह्वाश्च सप्त। तथा चाऽऽथर्वणिका आमनन्ति—

"काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा।
स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः" इति॥

ऋषयो मन्त्राः। ते च यथोक्तसमित्संपादनार्थाः सप्तसंख्याकाः "अश्वो

---

१ ख. च. 'माऽहं वृ'। २ क. घ. ङ. सुरोहि'। ३ ख. 'वी लेला'।

रूपं कृत्वा यदश्वत्थेऽतिष्ठः " इत्यादयः समाम्नाताः। प्रियाणि धाम स्थानानि आहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्यप्राजहिताग्नीध्रीयाख्यानि सोमयागे वह्निधारकाणि सप्तसंख्याकानि । होत्रा होतृप्रमुखा वषट्कर्तारो होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्रोऽच्छावाकश्चेति सप्तसंख्याकाः त्वां यजमानाः सप्तधा यजन्ति । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यति-रात्रोऽप्तोर्यामो वाजपेयश्चेति सप्त प्रकाराः । तादृशस्त्वं सप्त योनीराहवनीया-दि( व्युत्पत्ति )स्थानानि घृतेन सर्वतः पूरय ॥

अस्य मन्त्रस्य तात्पर्यं दर्शयति—

" सप्त ते अग्ने समिधः सप्त जिह्वा इत्याह सप्तैवास्य साप्तानि प्रीणाति " [ सं० का० ५ प्र० ४ अ० ७ ] इति ।

सप्तसंख्योपेतं द्रव्यस्वरूपं साप्तं, तानि च साप्तानि पुनः सप्तसंख्याकानि । समित्सप्तकमेकं जिह्वासप्तकं द्वितीयमृषिसप्तकं तृतीयं धामसप्तकं चतुर्थं होतृसप्तकं पञ्चमं यजनप्रकारभेदसप्तकं षष्ठं पूरणीययोनिसप्तकमेकम् । अग्नेः संबन्धीनि साप्तानि समिदादिसप्तकानि यानि सन्ति तानि साप्तानि प्रीणयत्येव ॥

एतन्मन्त्रसाध्यं होमं विधत्ते—

" पूर्णया जुहोति पूर्ण इव हि प्रजापतिः प्रजापतेराप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजाना॑ꣳ सृष्ट्यै " [ सं० का० ५ प्र० ४ अ० ७ ] इति ।

द्वादशगृहीतेनाऽऽज्येन पूर्णा या जुहूस्तया जुहुयात् । प्रजापतेः प्राप्तसर्व-कामत्वात्पूर्णत्वम् । अतस्तत्पूर्तिः प्रजापतिप्राप्त्यै भवति । मुख्यकल्पत्वेन पूर्णत्वं विधायानुकल्पत्वेन न्यूनत्वमप्यङ्गी क्रियते । न्यूनादल्पाद्बीजात्प्रजा-पतिः प्रौढानि शरीराण्यसृजत । अतः प्रजासृष्ट्यै न्यूनत्वमङ्गी क्रियते, किमु वक्तव्यं पूर्णत्वमित्यभिप्रायः ॥

होमकाले ध्यानं विधत्ते—

"अग्निर्देवेभ्यो निलायत स दिशोऽनु प्राविशज्जुह्वन्मनसा दिशो ध्यायेत् दिग्भ्य एवैनमव रुन्धे " [ सं० का० ५ प्र० ४ अ० ७ ] इति ।

एनं दिक्षु प्रविष्टमग्निम् ॥

पूर्वमनुष्ठितां दध्याहुतिमिदानीमनुष्ठीयमानामाज्याहुतिं च मिलित्वा प्रशंसति—

---

१ ख. च. 'पतेः प्रा' ।

(अग्निस्थापनाभिधानम्)

" दध्ना पुरस्ताज्जुहोत्याज्येनोपरिष्टात्तेजश्चैवास्मा इन्द्रियं च समीची दधाति " [ सं० का० ५ प्र० ४ अ० ७ ] इति।

अग्निस्थापनात्पूर्वं दधिहोम उपरिष्टाच्चाऽऽज्यहोमः। तत्राऽऽज्यं तेजोरूपं दधि चेन्द्रियरूपं, " तेजो वा आज्यम् " " इन्द्रियं वै दधि " इति श्रुत्यन्तरात्। अतो यजमानार्थमुभयमपि सम्यक्संपादितं भवति॥

कल्पः—" उपांशु मारुतान्सर्वहुतान्जुहोतीदृङ्चान्यादृङ्चेति सप्तभिर्गणैरासीनो हस्तेन गणेन गणमनुद्रुत्य मारुतान्जुहोति मध्येऽरण्येऽनुवाक्येन गणेन जुहोतीत्येके मारुतैः सर्वतो वैश्वानरं परिचिनोतीत्येके स्वतवांश्च प्रघासी च सांतपनश्च गृहमेधी च क्रीडी च साकी चोर्जिषी चेत्येष षष्ठ आम्नातो मितासश्च संमितासश्च न इति सर्वत्रानुषजति " इति।

पाठस्तु—

ईदृङ्चान्यादृङ्चैतादृङ्च प्रतिदृङ्च मितश्च संमितश्च सभराः। शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मा॰श्च सत्यश्चर्तपाश्चात्य॰हाः। ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्चान्त्यमित्रश्च दूरेअमित्रश्च गणः। ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्ता च विधर्ता च विधारयः। ईदृक्षास एतादृक्षास ऊ षु णः सदृक्षासः प्रतिसदृक्षास एतन। मितासश्च संमितासश्च न ऊतये सभरसो मरुतो यज्ञे अस्मिन्निन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानो यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मान एवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु॥, इति॥

अत्र हि मरुतां गणाः पञ्चाऽऽम्नाताः। ईदृङ्ङित्यादीनि सप्त नामानि तैरभिधेयानां मरुतामेको गणः। चकाराः परस्परं समुच्चयार्थाः। तथा शुक्र-

१ ख. च 'वा॰श्चाप्र'।

ज्योतिरित्यादीनि सप्त नामानि तैरभिधेयानां मरुतां गणो द्वितीयः । ऋतजिदित्यादिगणस्तृतीयः । ऋतश्चेत्यादिश्चतुर्थः । ईदृक्षास इत्यादीनि चत्वारि नामधेयानि, सोऽयं पञ्चमो गणः । हे गणपञ्चकस्था मरुत एतेन समुच्चयेन वर्तन्ते ( माना ) यूयं सर्वे समुच्चित्य सुष्ठु नोऽस्मान्प्रत्यागच्छत । मितासश्च गणचतुष्टयेन सप्तसंख्यया प्रमिताः । संमितासश्च पञ्चमगणे चतुःसंख्यया संक्षिप्य प्रमिताः । ऊतये नोऽस्माकं रक्षणाय सभरसो भरेणाऽऽदरेण वर्तन्त इति सभरसः । तादृशा हे मरुतोऽस्मिन्यज्ञ एतनाऽऽगच्छत । दैवीर्विशो देवसंबन्धिन्यः प्रजारूपाः । एते मरुत इन्द्रमनुवर्त्मान इन्द्रं स्वामिनमनुसृत्य तदनुसारेण यथा वर्तन्ते मरुत एवं दैव्यो मानुष्यश्च सर्वाः प्रजा इमं यजमानमनुसृत्य वर्तमाना भवन्तु । एतैर्मन्त्रैः साध्या मारुतहोमा उपरि विधास्यन्ते ॥

एतेभ्यो मारुतपुरोडाशेभ्यः पुरा निर्वपणीयं वैश्वानरमादौ विधत्ते—

“ द्वादशकपालो वैश्वानरो भवति द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्वैश्वानरः साक्षादेव वैश्वानरमव रुन्धे ” [ सं०का० ५प्र० ४अ०७ ] इति ।

उख्याग्नेः संवत्सरधारणेनाग्नेः संवत्सररूपत्वम् ॥

चोदकप्राप्तान्प्रयाजानूयाजानपवदति—

“ यत्प्रयाजानूयाजान्कुर्याद्विकस्तिः सा यज्ञस्य दर्विहोमं करोति यज्ञस्य प्रतिष्ठित्यै ” [ सं० का० ५ प्र० ४ अ० ७ ] इति ।

विशेषेण कस्तिर्नाशो विकस्तिस्तत्परिहारायान्यत्र प्रयाजानूयाजानकृत्वा यथा दर्विहोमं कुर्वन्ति तद्वदत्रापि दर्विहोमं प्रयाजानूयाजरहितं कुर्यात् । ततो विकस्तेरभावाद्यज्ञः प्रतिष्ठितो भवति ॥

वैश्वानरपुरोडाशहोमसमनन्तरमेव मारुतपुरोडाशहोमं विधत्ते—

“ राष्ट्रं वै वैश्वानरो विण्मरुतो वैश्वानरꣳ हुत्वा मारुताञ्जुहोति राष्ट्र एव विशमनु बध्नाति ” [ सं० का० ५ प्र० ४ अ० ७ ] इति ।

राष्ट्रस्थानीयस्य वैश्वानरस्य पूर्वभावित्वात्पश्चाद्भावीयप्रजास्थानीयमारुतहोमेन राष्ट्रे प्रजां योजितवान्भवति ॥

मारुतहोमे मन्दध्वनिं विधत्ते—

“ उच्चैर्वैश्वानरस्याऽऽ श्रावत्युपाꣳशु मारुताञ्जुहोति तस्माद्राष्ट्रं विशमतिवदति ” [ सं० का० ५ प्र० ४ अ० ७ ] इति ।

उच्चध्वनित्वमाश्रावणे चोदकप्राप्तम् । यस्माद्राष्ट्रस्थानीये वैश्वानर उच्चैर्ध्वनिः प्रजास्थानीये मारुत उपांशुत्वं तस्माल्लोकेऽपि प्रजामतिक्रम्य राष्ट्रमेवाधिकं सर्वो जनो वक्ति । सति हि राष्ट्रे प्रजानामन्वेषणम् ॥

(अग्निस्थापनाभिधानम्)

अथ मारुतपुरोडाशान्प्रशंसति—

" मारुता भवन्ति मरुतो वै देवानां विशो देवविशेनैवास्मै मनुष्यविशमव रुन्धे " [ सं० का० ५ प्र० ४ अ० ७ ] इति ।

दैव्येन प्रजासमूहेन यजमानाय मानुषं प्रजासमूहं संपादयति ॥

पुरोडाशानां संख्यां विधत्ते—

" सप्त भवन्ति सप्तगणा वै मरुतो गणश एव विशमव रुन्धे " [ सं०का० ५ प्र० ४ अ० ७ ] इति ।

अत्रत्येषु मन्त्रेष्वाम्नाताः पञ्च गणाः । आरण्यकाण्ड आम्नातो धुनिश्च ध्वान्तश्चेत्यपरो गणः । सूत्रोक्तः स्वतवानित्यादिरेकः । अतः सप्तसंख्याभिश्च बहुविधगणरूपां प्रजां प्राप्नोति ॥

होमकाले मन्त्रोच्चारे कंचिद्विशेषं विधत्ते—

" गणेन गणमनुद्रुत्य जुहोति विशमेवास्मा अनुवर्त्मानं करोति " ] सं० का० ५ प्र० ४ अ० ७ ] इति ।

यदा प्रथमगणेन हुत्वा द्वितीयगणेन जुहोति तदानीं प्रथमगणमुच्चार्य पश्चाद्द्वितीयगणेन जुहोति । तथा द्वितीयगणमुच्चार्य तृतीयगणेन जुहुयात् । एवं सति सर्वां प्रजामस्मै यजमायानुकूलत्वेन वर्तमानां करोति ॥

अत्र विनियोगसंग्रहः—

प्राचीति पञ्चभिः साग्निरारोहेन्निर्मितां चितिम् ।
पूर्णामौदुम्बरीं दध्ना जुहोत्येते ऋचौ तदा ॥ १ ॥
याज्यानुवाक्ये नक्तेति सुपर्णोऽस्यादिभिस्त्रिभिः ।
स्वयमातृण्णकायां[1] तमुख्याग्निं स्थापयेत्ततः ॥ २ ॥
प्रेद्ध औदुम्बरीं दध्याद्विधे वैकङ्कतीं तथा ।
शमीमयीं तु तां सेति सप्ताऽऽज्यं हूयते स्रुचा ॥ ३ ॥
मारुतेषु तु यागेषु प्रोक्ताः पञ्च मरुद्गणाः ।
ईदृङ्चेत्यादयः शेषो मितासश्चेत्युदीरितः ।
अनुवाके पञ्चमेऽस्मिन्नुक्ता एकोनविंशतिः ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

१ ख. 'कायान्तु मु' ।

( अथ चतुर्थाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः । )

---

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे । अनाविद्धया तनुवा जय त्वꣳ स त्वा वर्मणो महिमा पिपर्तु । धन्वना गा धन्वनाऽऽजिं जयेम धन्वना तीव्राः समदो जयेम । धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम । वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियꣳ सखायं परिषस्वजाना । योषेव शिङ्क्ते वितताऽधि धन्वन् ( १ ) ज्या इयꣳ समने पारयन्ती । ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे । अप शत्रून्विध्यताꣳ संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् । बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनाऽवगत्य । इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः । रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः । अभीशूनां महिमानम् ( २ ) पनायत मनः पश्चादनु यच्छन्ति रश्मयः । तीव्रान्घोषान्कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः । अवक्रामन्तः प्रपदै-

( अश्वमेधकर्तृ रथसज्जीकरणभाविकवचस्वीकाराद्यङ्गाभिधानम् )

रमित्राँन्क्षिणन्ति शत्रूꣳरनपव्ययन्तः । रथवाहनꣳ हविरस्य नाम यत्राऽऽयुधं निहितमस्य वर्म । तत्रा रथमुप शग्मꣳ सदेम विश्वाहा वयꣳ सुमनस्यमानाः । स्वादुषꣳसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो गभीराः । चित्रसेना इषुबला अमृध्राः सतोवीरा उरवो व्रातसाहाः । ब्राह्मणासः ( ३ ) पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा । पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशꣳस ईशत । सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सनद्धा पतति प्रसूता । यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यꣳसन् । ऋजीते परि वृङ्ग्धि नोऽश्मा भवतु नस्तनूः । सोमो अधि ब्रवीतु नोऽदितिः ( ४ ) शर्म यच्छतु । आ जङ्घन्ति सान्वेषां जघनाꣳ उप जिघ्नते । अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय । अहिरिव भोगैः पर्येति बाहुं ज्यायां हेतिं परिबाधमानः । हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमाꣳसं परि पातु विश्वतः । वनस्पते वीड्वङ्गो हि भूया अस्म-

त्सखा प्रतरणः सुवीरः । गोभिः संनद्धो असि वीडयस्वाऽऽस्थाता ते जयतु जेत्वानि । दिवः पृथिव्याः परि ( ५ ) ओज उद्भृतं वनस्पतिभ्यः पर्याभृतꣳ सहः । अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रꣳ हविषा रथं यज । इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः । सेमां नो हव्यदातिं जुषाणो देव रथ प्रति हव्या गृभाय । उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् । स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद् ( ६ ) दवीयो अप सेध शत्रून् । आ क्रन्दय बलमोजो न आ धा निष्टनिहि दुरिता बाधमानः । अप प्रोथ दुन्दुभे दुच्छुनाꣳ इत इन्द्रस्य मुष्टिरसि वीडयस्व । आऽमूरज प्रत्यावर्तयेमाः केतुमद्दुन्दुभिर्वावदीति । समश्वपर्णाश्चरन्ति नो नरोऽस्माकमिन्द्र रथिनो जयन्तु ( ७ ) ॥

( धन्वन्महिमानं ब्राह्मणासोऽदितिः पृथिव्याः परि दूरादेकचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

(अश्वमेधकर्तृ रथसज्जीकरणभाविकवचस्वीकाराद्यङ्गाभिधानम्)
(अथ चतुर्थाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः।)

---

जीमूतस्य। इव। भवति। प्रतीकम्। यत्। वर्मी। याति। समदामिति स—मदाम्। उपस्थ इत्युप—स्थे। अनाविद्धयेत्यना—विद्धया। तनुवा। जय। त्वम्। सः। त्वा। वर्मणः। महिमा। पिपर्तु। धन्वना। गाः। धन्वना। आजिम्। जयेम। धन्वना। तीव्राः। समद इति स—मदः। जयेम। धनुः। शत्रोः। अपकाममित्यप—कामम्। कृणोति। धन्वना। सर्वाः। प्रदिश इति प्र—दिशः। जयेम। वक्ष्यन्ती। इव। इत्। एति। गनीगन्ति। कर्णम्। प्रियम्। सखायम्। परिषस्वजानेति परि—सस्वजाना। योषा। इव। शिङ्क्ते। विततेति वि—तता। अधीति। धन्वन् (१)। ज्या। इयम्। समने। पारयन्ती। ते इति। आचरन्ती इत्या—चरन्ती। समना। इव। योषा। माता। इव। पुत्रम्। बिभृताम्। उपस्थ इत्युप—स्थे। अप। इति। शत्रून्। विध्यताम्। संविदाने इति सं—विदाने। आर्त्नी इति। इमे इति। विष्फुरन्ती इति वि—स्फुरन्ती। अमित्रान्। बह्वीनाम्। पिता। बहुः। अस्य। पुत्रः। चिश्चा। कृणोति। समना। अव-

गत्येत्यंव—गत्यं । इषुधिरितींषु—धिः । सङ्काः । पृतनाः । च । सर्वाः । पृष्ठे । निनंद्ध इति नि—नद्धः । जयति । प्रसूंत इति प्र—सूतः । रथे । तिष्ठंन् । नयति । वाजिनंः । पुरः । यत्रंयत्रेति यत्रं—यत्र । कामयंते । सुषारथिरितिं सु—सारथिः । अभीशूंनाम् । महिमानंम् ( २ ) । पनायत । मनंः । पश्चात् । अन्विति । यच्छन्ति । रश्मयंः । तीव्रान् । घोषांन् । कृण्वते । वृषंपाणय इति वृषं—पाणयः । अश्वाः । रथेंभिः । सह । वाजयंन्तः । अवक्रामंन्त इत्यंव—क्रामंन्तः । प्रपदैरिति प्र—पदैः । अमित्रांन् । क्षिणन्ति । शत्रून् । अनंपव्य-यन्त इत्यनंप—व्ययन्तः । रथवाहंनमितिं रथ—वाहंनम् । हविः । अस्य । नामं । यत्रं । आयुं-धम् । निहिंतमिति नि—हितम् । अस्य । वर्मं । तत्रं । रथंम् । उपेतिं । शग्मम् । सदेम । विश्वा-हेतिं विश्वा—अहां । वयम् । सुमनस्यमांना इतिं सु—मनस्यमांनाः । स्वादुषंस्सद इतिं स्वादु—संस्सदंः । पितरंः । वयोधा इतिं वयः—धाः । कृच्छ्रेश्रित इतिं कृच्छ्रे—श्रितंः । शक्तींवन्त इति शक्तिं—वन्तः । गभीराः । चित्रसेंना इतिं चित्र—

(अश्वमेधकर्तू रथसज्जीकरणभाविकवचस्वीकाराद्यङ्गाभिधानम्)

सेनाः । इषुबला इतीषु—बलाः । अमृध्राः । सतोवीरा इति सतः—वीराः । उरवः । व्रात-साहा इति व्रात—साहाः । ब्राह्मणासः (३) । पितरः । सोम्यासः । शिवे इति । नः । द्यावापृथिवी इति द्यावा—पृथिवी । अनेहसा । पूषा । नः । पातु । दुरितादिति दुः—इतात् । ऋतावृध इत्यृत—वृधः । रक्ष । माकिः । नः । अघशंस इत्यघ—शंसः । ईशत । सुपर्णमिति सु—पर्णम् । वस्ते । मृगः । अस्याः । दन्तः । गोभिः । संनद्धेति सं—नद्धा । पतति । प्रसूतेति प्र—सूता । यत्र । नरः । समिति । च । वीति । च । द्रवन्ति । तत्र । अस्म-भ्यमित्यस्म—भ्यम् । इषवः । शर्म । यंसन् । ऋजीते । परीति । वृङ्ग्धि । नः । अश्मा । भवतु । नः । तनूः । सोमः । अधीति । ब्रवीतु । नः । अदितिः (४) । शर्म । यच्छतु । एति । जङ्घन्ति । सानु । एषाम् । जघनान् । उपेति । जिघ्नते । अश्वा-जनीरित्यश्व—अजनि । प्रचेतस इति प्र—चेतसः । अश्वान् । समत्स्विति समत्—सु । चोदय । अहिः । इव । भोगैः । परीति । एति । बाहुम् । ज्यायाः । हेतिम् । परिबाधमान इति परि—बाधमानः । हस्त-

घ्न इति हस्त—घ्नः । विश्वा । वयुनानि । विद्वान् । पुमान् । पुमाꣳ सम् । परीति । पातु । विश्वतः । वनस्पते । वीड्वङ्ग इति वीडु—अङ्गः । हि । भूयाः । अस्मत्सखेत्यस्मत्—सखा । प्रतरण इति प्र—तरणः । सुवीर इति सु—वीरः । गोभिः । संनद्ध इति सं—नद्धः । असि । वीडयस्व । आस्थातेत्या—स्थाता । ते । जयतु । जेत्वानि । दिवः । पृथिव्याः । परीति । ( ५ ) । ओजः । उद्भृतमित्युत्—भृतम् । वनस्पतिभ्य इति वनस्पति—भ्यः । परीति । आभृतमित्या—भृतम् । सहः । अपाम् । ओज्मानम् । परीति । गोभिः । आवृतमित्या—वृतम् । इन्द्रस्य । वज्रम् । हविषा । रथम् । यज । इन्द्रस्य । वज्रः । मरुताम् । अनीकम् । मित्रस्य । गर्भः । वरुणस्य । नाभिः । सः । इमाम् । नः । हव्यदातिमिति हव्य—दातिम् । जुषाणः । देव । रथ । प्रतीति । हव्या । गृभाय । उपेति । श्वासय । पृथिवीम् । उत । द्याम् । पुरुत्रेति पुरु—त्रा । ते । मनुताम् । विष्ठितमिति वि—स्थितम् । जगत् । सः । दुन्दुभे । सजूरिति स—जूः । इन्द्रेण । देवैः । दूरात् ( ६ ) । दवीयः । अपेति । सेध । शत्रून् । एति । क्रन्दय । बलम् ।

ओजः । नः । एति । धाः । निरिति । स्त- निहि । दुरितेति दुः—इता । बाधमानः । अपेति । प्रोथ । दुन्दुभे । दुच्छुनान् । इतः । इन्द्रस्य । मुष्टिः । असि । वीडयस्व । एति । अमूः । अज । प्रत्यावर्त- येति प्रति—आवर्तय । इमाः । केतुमदिति केतु— मत् । दुन्दुभिः । वावदीति । समिति । अश्वपर्णा इत्यश्व—पर्णाः । चरन्ति । नः । नरः । अस्माकम् । इन्द्र । रथिनः । जयन्तु (७) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

(अथ चतुर्थकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः ।)

---

पञ्चमेऽनुवाके चित्यारोहणादयो मारुतहोमान्ता अङ्गविशेषा उक्ताः । अथ षष्ठेऽश्वमेधकर्तू रथसज्जीकरणभावीनि कवचस्वीकारादीन्यङ्गान्यु- च्यन्ते । तस्य चाग्निप्रकरणे संबन्धाभावादित उत्कृष्याश्वमेधप्रकरणे संबन्धो द्रष्टव्यः । अध्ययनार्थमेव केवलमत्र मन्त्रपाठः ।

कल्पः—"जीमूतस्येति कवचमध्यूहते" इति ।

पाठस्तु—

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे । अनाविद्धया तनुवा जय त्वꣳ स त्वा वर्मणो महिमा पिपर्तु ।, इति ।

यद्यदा वर्मी कवचयुक्तो राजा समदां शत्रूणामुपस्थे समीपे याति, अनेन सह मात्सर्येण माद्यन्तीति समदः शत्रवः, तदा जीमूतस्य मेघस्य प्रतीकं मुख-

---

१ क. घ. ङ. ॰भाविनि ।

मिव भवति। सैन्यद्वयं युद्धार्थं यदा मिलति[1] तदानीं वर्षितुं यतस्तत आगताः प्रौढा मेघा यथाऽन्तरिक्षं सर्वमावृण्वन्त्येवं भूमिं सर्वां व्याप्तं[2] भवतीत्यर्थः। तस्मिन्काले हे राजन्ननाविद्धया परकीयप्रहाररहितया तनुवा स्वशरीरेण युक्तो भूत्वा विजयं प्राप्नुहि। वर्मणः कवचस्य तादृशो महिमा त्वां पिपर्तु पालयतु ॥

कल्पः—"धन्वना गा इति धनुः" इति।

पाठस्तु—

धन्वना गा धन्वनाऽऽजिं जयेम धन्वना तीव्राः समदो जयेम। धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम।, इति।

वयं धन्वना धनुषा गा जयेम परकीयान्गवादीनाहराम[3]। तथा धन्वनाऽऽजिं युद्धं जयेम। तथा धनुषा तीव्राः शूरभटोपेताः समदो मदसहिताः परकीयसेना जयेम। इदं धनुः शत्रोरस्मदीयवैरिणोऽपकामं कृणोति कामेभ्योऽपनयोऽपकामस्तं कृणोतु करोतु। किं बहुना सर्वा अपि प्रदिश उत्कृष्टान्सर्वदिग्वर्तिशत्रूञ्जयेम ॥

कल्पः—"वक्ष्यन्तीवेति ज्यामभिमृशति" इति।

पाठस्तु—

वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियꣳ सखायं परिषस्वजाना। योषेव शिङ्क्ते वितताऽधि धन्वञ्ज्या इयꣳ समने पारयन्ती।, इति।

इयं ज्या धनुष्यारोपिता मौर्वी वक्ष्यन्तीव किंचिद्रहस्यं वाक्यं वदिष्यन्तीव कर्णं ( र्णमा ) गनीगन्ति कर्णसमीपमागच्छति। तत्र दृष्टान्तः—प्रियं सखायं परिषस्वजाना प्रीतियुक्तं सखिसमानं विश्रम्भव्यवहारयोग्यं भर्तारमालिङ्गन्ती योषेव शिङ्क्तेऽव्यक्तं शब्दं करोति। सा यथा स्वकीयं योगक्षेमं शनैः कथयति तद्वदियमपि ज्या शब्दयतीत्यर्थः। कीदृशी ज्या, अधिधन्वन्धनुष उपरि वितता विशेषेण प्रसारिता, समने युद्धे पारयन्ती[4] युद्धसमाप्तिं गमयन्ती।

कल्पः—" ते आचरन्ती इति धनोरार्त्नी संमृशति" इति।

पाठस्तु—

---

१ क. घ. ङ. मेलयति। २ क. घ. ङ. व्याप्तो। ३ ख. °हरेम। ४ घ. ङ. °न्ती स°।

ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृ-
तामुपस्थे । अप शत्रून्विध्यताꣳ संविदाने
आर्त्नी इमे विष्फुरन्ती अमित्रान् । , इति।

ते धनुषः कोट्यौ विस्फुरन्ती विस्फुरन्त्यौ पुनः पुनः प्रवर्तमाने सत्यौ संवि-दाने परस्परमैकमत्यं गते अमित्रानत्यन्तविरोधिनः शत्रूनपविध्यताम् । कीदृशे कोट्यौ, समने युद्धे योषेवाऽऽचरन्ती तद्वन्मधुरशब्देन हितं बोधयन्त्यौ। पुनः कीदृशे, उपस्थे बिभृतां माता पुत्रमिव तद्वद्धितकारिण्यावित्यर्थः ॥

कल्पः—"बह्वीनां पिता बहुरस्य पुत्र इति पृष्ठ इषुधिं निनह्यति" इति।

पाठस्तु—

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति
समनाऽवगत्य । इषुधिः सङ्काः पृतनाश्च
सर्वाः पृष्ठे निनद्धो जयति प्रसूतः । , इति।

अयमिषुधिर्बाणाधारः समनाऽवगत्य समने युद्धे प्राप्य चिश्चा कृणोति बाणाकर्षणवेलायामव्यक्तं ध्वनिं करोति । तस्य ध्वनेरनुकरणं चिश्चेति । कीदृश इषुधिः, बह्वीनामिषूणां पालकः । अत एवास्य पितृस्थानीयस्य पुत्र-स्थानीय इषुसंघो बहुविधः । सोऽयमिषुधिः पृष्ठे निनद्धः पृष्ठभागे नितरां बद्धः प्रसूतो धानुष्केण प्रेरितो बाणाकर्षणे सङ्काः सम्यक्प्राप्ताः सर्वा अपि पृतना जयति ॥

कल्पः—"रथे तिष्ठन्नयति वाजिन इति सारथिमभिमन्त्रयते" इति।

पाठस्तु—

रथे तिष्ठन्नयति वाजिनः पुरो यत्र-
यत्र कामयते सुषारथिः । अभीशू-
नां महिमानं पनायत मनः
पश्चादनु यच्छन्ति रश्मयः । , इति।

सुषारथिः सुशिक्षितोऽयं सारथिः स्वयं रथे तिष्ठन्यत्र यत्र कामयते गन्तुं तत्र तत्र पुरः पुरस्ताद्वाजिनोऽश्वान्नयति प्रेरयति । हे ऋत्विग्यजमाना अभीशूना-मश्वधारणहेतूनां रश्मीनां महिमानं पनायत वाचा स्तुतिं कुरुत । अत एव स्तुतिप्रकार उच्यते—रश्मय एते प्रग्रहाः सारथेर्मनोऽनुसृत्य पश्चाद्यच्छन्ति

नियता भवन्ति, सारथेर्यथा मनोवृत्तिः पुरस्तात्प्रवर्तते तेनैव प्रकारेण पश्चादश्वानां नियमं कुर्वन्तीत्यर्थः ॥

कल्पः—" तीव्रान्घोषान्कृण्वते वृषपाणय इत्यश्वान् " इति ।

पाठस्तु—

तीव्रान्घोषान्कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः । अवक्रामन्तः प्रपदैरमित्रान्क्षिणन्ति शत्रूꣳ रनपव्ययन्तः । , इति ।

एतेऽश्वास्तीव्रानत्युच्चान्घोषान्हेषाशब्दान्कृण्वते कुर्वते । कीदृशा अश्वाः, वृषपाणयः, सेचनवाचिना वृषशब्देन शक्तिरुपलक्ष्यते । पाणिशब्दः पादलक्षकः । गन्तुं शक्ताः पादा येषां ते वृषपाणयः । रथेभिः सह वाजयन्तो रथैः सह शीघ्रं गच्छन्तः । प्रपदैः पादाग्रैः खुरैरमित्रान्वैरिणोऽवक्रामन्तः । तादृशा अश्वा अनपव्ययन्तः प्रत्यापत्तिमकुर्वन्तो भीतिरहिता इत्यर्थः । शत्रून्क्षिणन्ति हिंसन्ति ॥

कल्पः—" रथवाहनꣳ हविरस्य नामेति रथवाहने रथमत्याधाय " इति ।

यद्यपीदमत्याधानं रथस्य प्रत्याधानादूर्ध्वभावि तथाऽप्यध्ययनसंप्रदायादयं मन्त्रोऽत्र पठितः ।

तत्पाठस्तु—

रथवाहनꣳ हविरस्य नाम यत्राऽऽयुधं निहितमस्य वर्म । तत्रा रथमुप शग्मꣳ सदेम विश्वाहा वयꣳ सुमनस्यमानाः । , इति ।

यत्र यस्मिन्नल्पे शकटेऽस्य यजमानस्याऽऽयुधं धनुरादिकं वर्म कवचं चेत्येवमादिकं निहितं स्थापितं, य ( अ )स्य शकटस्य रथवाहनमिति नामधेयं, प्रत्यागत्य रथोऽस्मिञ्शकटे स्थाप्यत इति तच्छकटं रथवाहनं, तस्य हविर्वदुपकारकत्वाद्धविष्ट्वं, तत्र तस्मिन्रथवाहने शकटे विश्वाहा सर्वेष्वपि दिनेषु सुमनस्यमानाः सौमनस्यं प्राप्ता वयं शग्मं सुखगमनहेतुं रथमुपसदेमोपेत्य स्थापयाम ॥

कल्पः—" स्वादुषꣳसदः पितरो वयोधा इति तिसृभिः पितॄनुपतिष्ठते " इति ।

तत्र प्रथमामाह—

स्वादुषꣳसदः पितरो वयोधाः कृच्छ्रेश्रितः

( अश्वमेधकर्तृ रथसज्जीकरणभाविकवचस्वीकारायन्त्राभिधानम् )

शक्तीवन्तो गभीराः । चित्रसेना इषुबला अ-
मृध्राः सतोवीरा उरवो व्रातसाहाः । , इति ।

ये पितरोऽस्मदीयाः सन्ति त एतैर्विशेषणैर्विशिष्टाः । कानि विशेषणानीति तान्युच्यन्ते—स्वादुषंसदोऽस्माभिः समर्पिते स्वादुन्यन्ने सम्यक्सीदन्ति तेन तृप्ता इत्यर्थः । वयोधा अस्मदीयस्य वयस आयुषः स्थापयितारः । कृच्छ्रे व्यसने प्राप्ते सति रक्षार्थं श्रीयन्ते प्राणिभिः सेव्यन्त इति कृच्छ्रेश्रितः । शक्तीवन्तः शक्तियुक्ताः । गभीरा अगाधबुद्धयः । चित्रा विविधा हस्त्यश्वादिरूपा सेना येषां ते चित्रसेनाः । इषुभिर्योद्धुमतिप्रबला इषुबलाः । अमृध्राः परैर्योद्धुमशक्याः । सन्विद्यमानो लोके प्रसिद्धो यः शूरस्तस्मादप्यतिशूराः सतोवीराः । उरवो विस्तीर्णा धनसेनादिसमृद्धाः । व्रातं परकीयभटानां संघातं सहन्तेऽभिभवन्तीति व्रातसाहाः ॥

अथ द्वितीयामाह—

ब्राह्मणासः पितरः सोम्यासः
शिवे नो द्यावापृथिवी अनेहसा ।
पूषा नः पातु दुरितादृतावृधो रक्षा
माकिर्नो अघशꣳस ईशत । , इति ।

येऽस्मदीयाः पितरस्ते ब्राह्मणासो ब्रह्म वेदस्तदर्थपरा ब्राह्मणाः । अत एवास्मासु सोम्यासः सोम्या अनुग्रहपरा इत्यर्थः । यथैते पितरस्तथा द्यावापृथिवी उभे अप्यनेहसाऽनेहसि सर्वस्मिन्नपि काले नोऽस्मान्प्रति शिवे शान्ते अनुग्रहपरे भवतामिति शेषः । तथर्तावृधो यज्ञस्य वर्धयिता पूषा पोषको देवो नोऽस्मान्दुरितात्पातु । हे पितृसमूह रक्षास्मान्पालय । नोऽस्माकमघशंसः पापशंसनपरा निन्दका माकिरीशत निन्दितुं समर्था मा भूवन् ॥

अथ तृतीयामाह—

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः संनद्धा
पतति प्रसूता । यत्रा नरः सं च वि च द्रवन्ति
तत्रास्मभ्यमिषवः शर्म यꣳसन् । , इति ।

पितृसंबन्धिनी येयमिषुः प्रशस्यतेऽस्या इषोः सुपर्णं पृष्ठेऽवस्थितं शोभनं

---

१ ख. च. भवत ।

पतन्तं भागं वस्त्त आच्छादयति । अथास्या इषोर्दन्तः शल्यं मृगदन्तवत्तीक्ष्णं, सेयमिषुर्गोभिर्गोसंबन्धिभिः संनद्धा दृढं बद्धा । तादृशेयमिषुः प्रसूता पितृभिः प्रेरिता सती पतति सहसा गच्छति । कुत्रेति तदुच्यते—नरः पुरुषा योद्धारो यत्र यस्मिन्परसैन्ये सं च वि च द्रवन्ति प्रथममुत्सुकाः सन्तः प्राप्नुवन्ति पश्चाद्भीताः सन्तः पलायन्ते च, तत्रेयमिषुः पततीति पूर्वत्रान्वयः । तादृश्यः पितृणामिषवोऽस्मभ्यं शर्म यंसन्सुखं यच्छन्तु ॥

कल्पः—" ऋजीते परि वृङ्ग्धि न इत्यात्मानं प्रत्यभिमृश्य " इति ।

पाठस्तु—

ऋजीते परि वृङ्ग्धि नोऽश्मा भवतु
नस्तनूः । सोमो अधि ब्रवीतु
नोऽदितिः शर्म यच्छतु । , इति ।

ऋजीतिशब्द इषुवाची । हे ऋजीतेऽस्मान्परिवृङ्ग्धि परितो वर्जितान्कुरु । नोऽस्माकं तनूरश्मा भवतु पाषाणवद्दृढा भवतु । सोमो नोऽस्मानधिब्रवीतु अधिका एते मान्या इति कथयतु । अदितिः शर्म यच्छतु सुखं यच्छतु ॥

कल्पः—" आ जङ्घन्तीत्यश्वाजनिमादाय " इति ।

पाठस्तु—

आजङ्घन्ति सान्वेषां जघनाँ उप जिघ्नते । अश्वा-
जनि प्रचेतसोऽश्वान्त्समत्सु चोदय । , इति ।

कशाधारिणः सारथय एषामश्वानां सानु पर्वतसानुसदृशं पार्श्वमाजङ्घन्ति सर्वतस्ताडयन्ति । तथा पृष्ठभागानुपजिघ्नत उपेत्य ताडयन्ति । तथाविधताडनहेतुभूते हेऽश्वाजनि अश्वप्रेरके कशे प्रचेतसस्ताडनेन प्रकृष्टगमने चित्तयुक्तान्समत्सु युद्धेषु चोदय प्रेरय ॥

कल्पः—" अहिरिव भोगैरिति हस्तघ्नमभिमन्त्रयते " इति ।

पाठस्तु—

अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परि-
बाधमानः । हस्तघ्नो विश्वा वयुनानि विद्वा-
न्पुमान्पुमांसं परि पातु विश्वतः । , इति ।

धानुष्कैर्वामहस्तः केनचिद्रूपेण चर्मविशेषेण वेष्ट्यते । तत्रायं दृष्टान्तः— अहिरिव भोगैः, यथा सर्पः स्वकीयशरीरवेष्टनैः पुरुषस्य हस्तं पादं वा वेष्ट

यति तथाऽयं चर्मविशेषः पुरुषस्य बाहुं पर्येति परितो व्याप्नोति। किं कुर्वन्, ज्याया आकर्णमाकृष्य सहसा मुक्ता या हेतिस्तां परिबाधमानः परितो निवारयन्। ज्यायाः प्रहारश्चर्मण्येव लगति न तु बाहौ। हस्ते स्थित्वा ज्याघातेन हन्यमानश्चर्मविशेषो हस्तघ्नः। सोऽस्मान्विश्वतः सर्वस्मादुपद्रवात्पातु। तत्र दृष्टान्तः—विश्वा वयुनानि विद्वान्सर्वान्मार्गानभिजानानः पुमान्पुमांसमन्यं पुरुषं यथा पालयति तद्वदिति शेषः॥

कल्पः—"वनस्पते वीड्वङ्ग इति पञ्चभी रथम्" इति।

तत्र प्रथमामाह—

वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः। गोभिः संनद्धो असि वीडयस्वाऽऽस्थाता ते जयतु जेत्वानि।, इति।

हे वनस्पते वनस्पतिनिष्पन्न रथ वीड्वङ्गो हि दृढाङ्ग एव भूयाः। कीदृशस्त्वम्, अस्मत्सखाऽस्मासु सखिवत्स्निग्धः। प्रतरणः प्रकृष्टगमनसाधनभूतः। सुवीरः शोभनैर्वीरैर्भटैरुपेतः। गोभिः संनद्धोऽसि गवादिचर्मरज्जुभिः सम्यग्बद्धोऽसि। वीडयस्वात्यन्तं दृढो भव। ते तवाऽऽस्थाता जेत्वानि जेतव्यानि परसैन्यानि जयतु॥

अथ द्वितीयामाह—

दिवः पृथिव्याः परि ओज उद्भृतं वनस्पतिभ्यः पर्याभृतꣳ सहः। अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रꣳ हविषा रथं यज।, इति।

हे यजमान त्वं रथमिमं हविषा बलिकर्मणा यज पूजय। कीदृशं रथम्, दिवः पृथिव्याः पर्योज उद्भृतं द्युलोकाद्भूलोकाच्च सर्वतो बलमानीय संपादितं, तथा वनस्पतिभ्योऽपि परितः सहो बलमानीयाऽऽभृतं संपादितम्। तथाऽपामोज्मानमप्संबद्धमोज आनीय निष्पादितं, गोभिर्गवादिविकारैः स्नावभिश्चर्ममयरज्जुभिश्च परित आवृतमिन्द्रस्य वज्रमिव दृढीभूतम्॥

तृतीयामाह—

इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो

---

१ ख. च. फलति।

वरुणस्य नाभिः। सेमां नो हव्यदातिं जुषाणो
देव रथ प्रति हव्या गृभाय । , इति।

यथेन्द्रस्य वज्रोऽत्यन्तं दृढः, यथा च मरुतामनीकं सैन्यं बहुभिर्भटैरुपेतं, यथा मित्रस्य गर्भोऽत्यन्तं सुरक्षितः, यथा वरुणस्य नाभिः केनापि तिरस्कर्तुमशक्यस्तथाविधैर्गुणैरुपेत हे देव रथ नोऽस्मदीयामिमां हव्यदातिं हविर्दानं जुषाणो हव्याऽस्मद्दत्तानि हव्यानि प्रति गृभाय प्रत्येकं गृहाण ॥

चतुर्थीमाह—

उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां
विष्ठितं जगत् । स दुन्दुभे सजूरिन्द्रेण देवै-
र्दूराद्दवीयो अप सेध शत्रून् । , इति।

रथसमीपवर्तिदुन्दुभिरपि एवंमहिमा किमुत रथ इति विवक्षया दुन्दुभिः प्रशस्यते। हे दुन्दुभे पृथिवीमुपश्वासय त्वदीयेन शब्देन पूरय। उतापि च द्यां द्युलोकमप्युपश्वासय। पुरुत्रा पुरुषु द्युलोकभूलोकादिस्थानेषु विष्ठितं विशेषेण स्थितं सर्वं जगत्ते तव शब्दं मनुतां जानातु। स त्वमिन्द्रेणान्यैर्देवैश्च सजूः समानप्रीतिः सञ्शत्रूनस्मदीयान्दूराद्दवीयो दूरादप्यत्यन्तं दूरदेशं प्रत्यपसेधापसारय ॥

पञ्चमीमाह—

आ क्रन्दय बलमोजो न आ धा निष्टनिहि
दुरिता बाधमानः। अप प्रोथ दुन्दुभे दुच्छु-
नाँ इत इन्द्रस्य मुष्टिरसि वीडयस्व । , इति।

हे दुन्दुभे बलं परकीयसैन्यं प्रत्याक्रन्दयाऽऽक्रोशं कुरु अमुं जह्यमुं प्रहरेत्यत्यन्तभीतिहेतुं शब्दं कुरु। नोऽस्माकमोजो बलमाधा आधेहि सम्यक्संपादय। दुरिता बाधमानोऽस्मदीयानि दुरितानि विनाशयन्निष्टनिहि गर्जनसमानमस्मदुत्साहहेतुं शब्दं कुरु । दुच्छुनान्दुष्टचित्तान्पुरुषानितोऽस्मादपप्रोथापसारय। त्वमिन्द्रस्य मुष्टिरसि वज्रधारकमुष्टिसमानोऽस्यतो वीडयस्व दृढो भव। ईदृशैर्दुन्दुभिध्वनिभिः सहितोऽयं रथः प्रवर्तत इति तात्पर्यार्थः ॥

कल्पः—"आऽमूरजेति दुन्दुभिं संह्रादयन्ति" इति।

पाठस्तु—

आऽमूरज प्रत्यावर्तयेमाः केतुमद्दुन्दुभिर्वा-

वदीति । समश्वपर्णाश्चरन्ति नो नरोऽ-
स्माकमिन्द्र रथिनो जयन्तु ॥, इति ॥

हे इन्द्रामूः परकीयसेनाः समन्तादज मेरय पलायिताः कुरु। इमा अस्मदीयाः सेनाः प्रत्यावर्तयाक्षताः सत्यो यथा प्रत्यावृत्ता भवन्ति तथा कुरु। अयं दुन्दुभिः केतुमज्ज्ञानवदस्मदीयो जयो यथा सर्वैर्ज्ञायते तथा वावदीति भृशं ध्वनिं करोति। अश्वपर्णा अश्वपत्रा अश्ववाहनयुक्ता इत्यर्थः। तादृशा नो नरोऽस्मदीयाः पुरुषाः संचरन्ति सम्यग्विश्रम्भेण चरन्तु। अस्माकं संबन्धिनो ये रथिनो मुख्यपुरुषास्ते जयन्तु ॥

अत्र विनियोगसंग्रहः—

अथाश्वमेधे जीमूत कवचं प्रतिमुञ्चति ।
धन्वना धनुरादत्ते वक्ष्यन्ती ज्यामभिस्पृशेत् ॥ १ ॥
ते संमृशेद्धनुष्कोट्यौ बह्वीतीषुधिबन्धनम् ।
रथेति सारथिं तीव्रानश्वानप्यभिमन्त्रयेत् ॥ २ ॥
रथ काले रथः स्थाप्यो भजेत्स्वादुत्रयात्पितॄन् ।
ऋज्यात्मानमभिस्पृश्य ह्वा जङ्घेत्याहरेत्कशाम् ॥ ३ ॥
हस्तं (स्तघ्नं) मन्त्रयतेऽहीति(येचाही) रथंतु वनपञ्चभिः ।
दुन्दुभिं वादयेदाऽमूरत्र मन्त्रास्तु विंशतिः ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

(अथ चतुर्थाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः ।)

---

यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् । श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् । यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत् । गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो

निरतष्ट । असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन । असि सोमेन समया विपृक्तः ( १ ) आहुस्ते त्रीणि दिवि बन्धनानि । त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे । उतेव मे वरुणश्छन्त्स्यर्वन्यत्रा त आहुः परमं जनित्रम् । इमा ते वाजिन्नवमार्जनानीमा शफानां सनितुर्निधाना । अत्रा ते भद्रा रशना अपश्यमृतस्य या अभिरक्षन्ति गोपाः । आत्मानं ते मनसाऽऽरादजानामवो दिवा ( २ ) पतयन्तं पतङ्गम् । शिरो अपश्यं पथिभिः सुगेभिररेणुभिर्जेहमानं पतत्रि । अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः । यदा ते मर्तो अनु भोगमानडादिद्ग्रसिष्ठ ओषधीरजीगः । अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनाम् । अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यम् ( ३ ) ते । हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत् । देवा इदस्य हविरद्यमायन्यो अर्वन्तं प्रथमो अध्यतिष्ठत् । ईर्मान्तासः सिलिकम-

ध्यमासः सꣳशूरणासो दिव्यासो अत्याः । हꣳसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः । तव शरीरं पतयिष्णर्वर्वन्तव चित्तं वात इव ध्रजीमान् । तव शृङ्गाणि विष्ठिता पुरुत्राऽरण्येषु जर्भुराणा चरन्ति । उप (४) प्रागाच्छसनं वाज्यर्वा देवद्रीचा मनसा दीध्यानः । अजः पुरो नीयते नाभिरस्यानु पश्चात्कवयो यन्ति रेभाः । उप प्रागात्परमं यत्सधस्थमर्वाꣳ अच्छा पितरं मातरं च । अद्या देवाञ्जुष्टतमो हि गम्या अथाऽऽशास्ते दाशुषे वार्याणि (५) ॥

( विपृक्तो दिवा वीर्यमुपैकान्नचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ चतुर्थाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः । )

---

यत् । अक्रन्दः । प्रथमम् । जायमानः । उद्यन्नित्युत्–यन् । समुद्रात् । उत । वा । पुरीषात् । श्येनस्य । पक्षा । हरिणस्य । बाहू इति । उपस्तुत्यमित्युप–स्तुत्यम् । महि । जातम् । ते । अर्वन् । यमेन । दत्तम् । त्रितः । एनम् । आयुनक् । इन्द्रः ।

एनम् । प्रथमः । अधीति । अतिष्ठत् । गन्धर्वः । अस्य । रशनाम् । अगृभ्णात् । सूरात् । अश्वम् । वसवः । निरिति । अतष्ट । असि । यमः । असि । आदित्यः । अर्वन् । असि । त्रितः । गुह्येन । व्रतेन । असि । सोमेन । समया । विपृक्त इति वि—पृक्तः ( १ ) । आहुः । ते । त्रीणि । दिवि । बन्धनानि । त्रीणि । ते । आहुः । दिवि । बन्धनानि । त्रीणि । अप्स्वित्यप्—सु । त्रीणि । अन्तः । समुद्रे । उत । इव । मे । वरुणः । छन्त्सि । अर्वन् । यत्र । ते । आहुः । परमम् । जनित्रम् । इमा । ते । वाजिन् । अवमार्जनानीत्यव—मार्जनानि । इमा । शफानाम् । सनितुः । निधानेति नि—धाना । अत्र । ते । भद्राः । रशनाः । अपश्यम् । ऋतस्य । याः । अभिरक्षन्तीत्यभि—रक्षन्ति । गोपा इति गो—पाः । आत्मानम् । ते । मनसा । आरात् । अजानाम् । अवः । दिवा ( २ ) । पतयन्तम् । पतङ्गम् । शिरः । अपश्यम् । पथिभिरिति पथि—भिः । सुगेभिरिति सु—गेभिः । अरेणुभिरित्यरेणु—भिः । जेहमानम् । पतत्रि । अत्र । ते । रूपम् । उत्तममित्युत्—तमम् । अपश्यम् । जिगीषमाणम् । इषः । एति । पदे ।

गोः। यदा। ते। मर्तः। अन्विति। भोगम्। आनट्। आत्। इत्। ग्रसिष्ठः। ओषधीः। अजीगः। अन्विति। त्वा। रथः। अन्विति। मर्यः। अर्वन्। अन्विति। गावः। अन्विति। भगः। कनीनाम्। अन्विति। व्रातासः। तव। सख्यम्। ईयुः। अन्विति। देवाः। ममिरे। वीर्यम् (३)। ते। हिरण्यशृङ्ग इति हिरण्य—शृङ्गः। अयः। अस्य। पादाः। मनोजवा इति मनः—जवाः। अवरः। इन्द्रः। आसीत्। देवाः। इत्। अस्य। हविरद्यमिति हविः—अद्यम्। आयन्। यः। अर्वन्तम्। प्रथमः। अध्यतिष्ठदित्यधि—अतिष्ठत्। ईर्मान्तास इतीर्म—अन्तासः। सिलिकमध्यमास इति सिलिक—मध्यमासः। समिति। शूरणासः। दिव्यासः। अत्याः। हंसाः। इव। श्रेणिश इति श्रेणि—शः। यतन्ते। यत्। आक्षिषुः। दिव्यम्। अज्मम्। अश्वाः। तव। शरीरम्। पतयिष्णु। अर्वन्। तव। चित्तम्। वातः। इव। ध्रजीमान्। तव। शृङ्गाणि। विष्ठितेति वि—स्थिता। पुरुत्रेति पुरु—त्रा। अरण्येषु। जर्भुराणा। चरन्ति। उप (४)। प्रेति। अगात्। शसनम्। वाजी। अर्वा।

देवद्रीचेति देव—द्रीचा । मनसा । दीध्यानः । अजः । पुरः । नीयते । नाभिः । अस्य । अन्विति । पश्चात् । कवयः । यन्ति । रेभाः । उप । प्रेति । अगात् । परमम् । यत् । सधस्थमिति सध—स्थम् । अर्वान् । अच्छ । पितरम् । मातरम् । च । अद्य । देवान् । जुष्टतम इति जुष्ट—तमः । हि । गम्याः । अथ । एति । शास्ते । दाशुषे । वार्याणि ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ चतुर्थकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः । )

---

षष्ठेऽनुवाके कवचादिसंनाहोऽभिहितः । अथ सप्तमाद्यनुवाकत्रये होमोऽभिधीयते ।

कल्पः—" यदक्रन्दः प्रथमं जायमान इत्येतैस्त्रिभिरनुवाकैः षट्त्रिंशतमश्वस्तोमीयाञ्जुहोति " इति ।

तत्र सप्तमानुवाके प्रथमामृचमाह—

यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् । श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् ।, इति ।

हेऽर्वन्यद्यस्मात्कारणाज्जायमान उत्पद्यमान एव प्रथममादावक्रन्दः क्रन्दितवानसि अहो अग्न्यादीनामहं साधनमिति महान्तं शब्दमकरोस्तस्मात्कारणात्ते तव जातं महि महत् । अत एवोपस्तुत्यं समीचीनमिति सर्वैरपि स्तोतव्यमासीत् । जायमानमे(ए)व विशदी क्रियते—समुद्रादुद्यन्समुद्रोपलक्षितादुदकादुत्पद्यमानः । अप्सुयोनिर्वा अश्व इति श्रुतेः । उत वा पुरीषात्, अथ

लौकिकदृष्ट्या पुरीषात्पुंस्त्वशक्तिसंपन्नान्महतोऽश्वादुत्पद्यमानः। जन्मन उपस्तुत्यत्वे दृष्टान्तद्वयमुच्यते—श्येनस्य पक्षा हरिणस्य बाहू। इवशब्दोऽत्राध्याहर्तव्यः। यथा श्येनारव्यस्य पक्षिणः पक्षौ शीघ्रोत्पतनहेतुत्वात्सर्वैरुपस्तुत्यौ, यथा वा हरिणस्य मृगस्य बाहू पादौ शीघ्रगमनहेतुत्वादुपस्तुत्यौ तद्वदित्यर्थः॥

अथ द्वितीयामृचमाह—

यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत्। गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट।, इति।

अत्र यमोऽग्निः। अग्निर्वात्र यम इति श्रुत्यन्तरात्। त्रिषु लोकेषु त्रायते विस्तार्यत इति त्रितो वायुः। यमेनाग्निना दत्तमेनमश्वं त्रितो वायुरायुनग्रथे योजितवान्। तत इन्द्रः प्रथमः सर्वेषु देवेषु मध्ये प्रथमं प्रवृत्तः सन्नेनमश्वमध्यतिष्ठदधिष्ठितवान्योगक्षेमं संपादयितुमभिमानं कृतवानित्यर्थः। गन्धर्वः कश्चिदस्याश्वस्य रशनां बन्धनहेतुं रज्जुमगृभ्णात्स्वीकृतवान्। हे वसवो यूयं सूरादादित्यादिममश्वं निरतष्ट निःशेषेण प्रकाशितवन्तः। यस्याश्वस्याग्निरानेता, वायुर्योजयिता, इन्द्रोऽभिमन्ता, गन्धर्वो रज्जुग्रहीता, सूर्यप्रकाशेन वसवः प्रकाशयितारस्तादृशोऽयमश्व इति स्तूयते॥

अथ तृतीयामृचमाह—

असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन। असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि।, इति।

हेऽर्वन्नश्व त्वं यमाभिधोऽग्निरसि। तथाऽऽदित्योऽसि। तथा त्रितो वायुरसि। पूर्वोक्तप्रकारेण वाय्वादित्ययोरनुगृहीतत्वात्तद्रूपत्वम्। तथा गुह्येन गोप्येनाश्वमेधाख्येन कर्मणा तत्रत्येन सोमेन च समया समये प्राप्तकाले विपृक्तो विशेषेण युक्तोऽसि। ईदृशस्य ते तव द्युलोके बन्धनानि बन्धनसाधनानि दामानि त्रीणीत्येवमभिज्ञा आहुः। वणिजो हि शक्त्याधिक्येनात्युग्रमश्वं विक्रेतुं ग्रामान्तरे नयन्तस्त्रिभिर्दामभिर्बध्नन्ति। दक्षिणवामपार्श्वयोर्दामद्वयमुभौ पुरुषौ गृह्णीतः। यदा दक्षिणभागवर्तिनं द्रष्टुमुद्युङ्क्ते तदा वामभागवर्ती तमाकर्षति। तं चेद्द्रष्टुमुद्युङ्क्ते तदानीमितर आकर्षति। यदा सहसा पुरतः पलायनं करोति तदा तं वारयितुं गले बद्धमेकं दाम गृहीत्वा पृष्ठतः कश्चिदाकर्षति।

तादिदं बन्धनत्रयम् । यद्वा शास्त्रसिद्धं किंचित्कारणत्रयं द्रष्टव्यम् । तदनेन बन्धनत्रयेणाधिकशक्तिरश्व इति स्तुतो भवति ॥

अथ चतुर्थीमृचमाह—

त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु
त्रीण्यन्तः समुद्रे । उतेव मे वरुणश्छन्त्स्य-
र्वन्यत्रा त आहुः परमं जनित्रम् ।, इति ।

यथा द्युलोके तवोच्चैःश्रवोरूपस्य बन्धनत्रयमभिज्ञा आहुस्तथैवाप्सु समुद्रे च । यथा वा वाजपेयेऽप्स्वन्तरमृतमिति मन्त्रेणाश्वानप्सु स्नापयन्ति तथाऽपि पूर्वोक्तरीत्या बन्धनत्रयमपेक्षितं तथा समुद्रमध्ये स्थिताया वडवाया बन्धनत्रयमित्येवमभिज्ञा आहुः । उतापि च हेऽर्वन्नश्व ते तव यत्र यस्मिन्पितृवीर्ये परमं जनित्रमुत्तमं जन्मेत्येवंलक्षणाभिज्ञा आहुः, तत्पितृवीर्यं त्वमेव वरुणस्त्रिभिर्बन्धनैर्निवारणीयो भूत्वा मे मम छन्त्सीव कथयसीव । अयमर्थः—अश्वस्य पितृपक्षभागित्वान्मातरि स्वल्पायामपि सत्यां प्रौढश्चेदश्वो दृश्येत तस्य पिता प्रौढ इत्युत्प्रेक्षितुं शक्यत इति ॥

पञ्चमीमृचमाह—

इमा ते वाजिन्नवमार्जनानीमा शफानाꣳ
सनितुर्निधाना । अत्रा ते भद्रा रशना अप-
श्यमृतस्य या अभिरक्षन्ति गोपाः ।, इति ।

हे वाजिन्नश्व ते तवैमैतानि दृश्यमानानि अवमार्जनानि शरीरशोधनसाधनानि लोहमयानि । यैर्लोहमयैः प्रातःकालादावश्वस्य पांस्वाद्यपनयनाय शरीरं मृज्यते धर्षणेन शोध्यते तान्यवमार्जनानि । तथा शफानां खुराणां सनितुर्दातुः पाषाणबहुले मार्गे प्रक्षेप्य(प्तु)स्तव शफभेदनपरिहारार्थमिमा निधानैतानि लोहमयान्यावरणविशेषरूपाणि निधीयन्ते शफेष्विति निधानानि । राजानो हि महार्हाणां प्रौढानामश्वानां लोहमयैः साधनैः प्रतिदिनं कण्डूरपनयन्ति, शफेषु च लोहपत्राणि कीलयन्ति । किं च ते तव भद्राः सुवर्णादिखचितत्वेन कल्याणरूपा रशनाः खलीनलोहकक्ष्याः पुच्छपक्षे अत्रास्मिन्नेव देशे स्थापिता अहमप्यपश्यम् । कीदृशस्य तव, ऋतस्य सत्यस्य बहुमूल्यार्हस्येत्यर्थः । कीदृश्यो रशना इति ता विशेष्यन्ते—या रशना गोपाः पृष्ठदेशव्यथादिपरिहारेणाश्वं गोपायन्त्योऽभिरक्षन्ति उपर्यारूढं पुरुषमभितः पतनादिभ्यः पालयन्ति ॥

(होमाभिधानम्)

षष्ठीमृचमाह—

आत्मानं ते मनसाऽऽशदजानामवो दिवा
पतयन्तं पतङ्गम्। शिरो अपश्यं पथिभिः
सुगेभिररेणुभिर्जेहमानं पतत्रि।, इति।

हेऽश्व ते तवाऽऽत्मानं स्वरूपमारात्समीप एव मनसा चित्तेनाजानामभिज्ञातवानस्मि। कीदृशमात्मानम्, अवो रक्षकम्। शीघ्रगामी ह्यश्वः परसैन्यभञ्जनेन स्वामिनं रक्षति। तथा दिवा पतयन्तमाकाशेन धावन्तम्। त्वदीयधावनवेलायां वेगातिशयेन भूमेराक्रमणं केनापि द्रष्टुं न शक्यत इत्यर्थः। यस्मादाकाशगामी तस्मादेव च पतङ्गं पक्षिसदृशम्। तथा त्वदीयं शिरोऽप्यहमपश्यम्। कीदृशं शिरः, सुगेभिर्गन्तुं शक्यैररेणुभिर्धूलिरहितैः पथिभिराकाशमार्गैर्जेहमानं शीघ्रगतियुक्तमत एव पतत्रि पक्षिसदृशम्। यदा ह्ययमश्वः प्रायेण भूमिस्पर्शं विनाऽऽकाशमार्गेण धावति तदानीं पाषाणादिरहितत्वादयं मार्गः सुगमो भूमिस्पर्शबाहुल्याभावाद्धूलिरहितश्च। तथाविधमार्गेण धावतोऽश्वस्योपरिवर्ति शिरः सुखेन द्रष्टुं शक्यते, उन्नतदेशवर्तित्वाद्धूल्यावरणाभावाच्चेति। ईदृशवेगवानश्व इति स्तुतिः॥

अथ सप्तमीमृचमाह—

अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष
आ पदे गोः। यदा ते मर्तो अनु भोग-
मानडादिद्ग्रसिष्ठ ओषधीरजीगः।, इति।

हेऽश्व यदा यस्मिन्काले ते तव भोगं घृतमुद्गादिभक्षणरूपमनु मर्तो मनुष्यः परिचारक आनड्भोगं प्राप्तवान्। प्रौढेषु राजगृहादिष्वश्वघासार्थं दत्तैर्घृतमुद्गादिभिः परिचारका अपि जीवन्तीति प्रसिद्धम्। आदिदीदृशवृत्तान्तादनन्तरमेव ग्रसिष्ठोऽतिशयेन ग्रसितुकामस्त्वमोषधीश्चणकाद्या अजीगः प्रापितोऽसि। अत्रास्मिन्नवसरे ते तव रूपमुत्तमं सर्वोत्कृष्टमित्यपश्यमहं निश्चितवानस्मि। कीदृशस्य तव, इषोऽन्नानि आ समन्तात्पदे प्राप्तुं गोर्गच्छतः। कीदृशं रूपम्, जिगीषमाणं जेतुमिच्छायुक्तम्। अयमर्थः—प्रौढराजगृहे त्वदीयभोगमनु अश्ववारा नीचाः सर्वेऽपि सम्यग्भुञ्जते। त्वं च राजाज्ञया केनाप्यनिवारितः संश्चणकादिक्षेत्रेषु स्वेच्छया गच्छसि। अस्मिन्नवसरे त्वन्मुखेन सर्वाण्यन्नानि प्राप्तुं शक्यन्ते, विजयश्च भविष्यति एवं त्वदीयमहिमानं निश्चितवानस्मीति॥

अथाष्टमीमृचमाह—

अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु
भगः कनीनाम् । अनु व्रातासस्तव सख्य-
मीयुरनु देवा ममिरे वीर्यं ते । , इति ।

हेऽर्वंस्त्वामनु रथः प्रवर्तते । नहि त्वया विना रथो गन्तुं शक्तः । मर्यो मर्त्योऽश्ववारस्त्वामनु जीवति । तच्च पूर्वमेवोदाहृतम् । गावोऽपि त्वामनु जीवन्ति, बालस्य तव क्षीरनवनीताद्यर्थं प्रवृद्धस्य तव घृतार्थं च गाः पोषयन्ति । कनीनां कन्यकानां बालानां दासीनां भगः सौभाग्यं त्वामनु संपद्यते । अश्वशालापरिचारार्थं हि ता अन्नवस्त्रदानेन त्वत्स्वामिनः पोषयन्ति । व्रातासो व्राताः सेनारूपा मनुष्यसंघास्तव सख्यमनु त्वदीयं साहाय्यमनु पश्चादीयुर्जयं प्राप्नुवन्ति । देवाः प्रजापत्यादयस्ते वीर्यं त्वदीयं सामर्थ्यमनूपलक्ष्य ममिरे स्वकीयहविष्ट्वेन प्रमितवन्तः । ईदृशोऽयमश्व इति स्तुतिः ॥

अथ नवमीमृचमाह—

हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर
इन्द्र आसीत् । देवा इदस्य हविरद्यमा-
यन्यो अर्वन्तं प्रथमो अध्यतिष्ठत् । , इति ।

अयमश्वो हिरण्यशृङ्गो हिरण्यसमानवर्णः शृङ्गस्थानीयो मूर्धप्रदेशो यस्यासौ हिरण्यशृङ्गो हिरण्याङ्कित इत्यर्थः । अयो लोहवदत्यन्तदृढः । अस्याश्वस्य पादा मनोजवा मनोवृत्तिसदृशेन वेगातिशयेन युक्ताः । एतेनाश्वेनोच्चैःश्रवसा विनेन्द्रोऽप्यवरो निकृष्ट एवाऽऽसीत् । देवा इत्सर्वे हि देवाः स्वयमस्याश्वस्य संबन्धि हविरद्यं हविर्भक्षणमायन्प्राप्तवन्त एतदीयमेव हविरत्तुं योग्यमिति निश्चितवन्तः । प्रथम आद्यो यः प्रजापतिरर्वन्तमेनमश्वमध्यतिष्ठदधिष्ठितवान्स्वकीयत्वेन स्वीकृतवान्सोऽप्येतदीयमेव हविरद्यमिति निश्चितवान् ॥

अथ दशमीमृचमाह—

ईर्मान्तासः सिलिकमध्यमासः सं शूरणासो
दिव्यासो अत्याः । हंसा इव श्रेणिशो
यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः । , इति ।

सर्वेऽप्यश्वा एवंविधाः । कीदृशा इति तदुच्यते—ईर्मान्तासः । गलभागो जघनभागश्चाश्वस्यान्तौ, ताविमौ प्रसृतावुन्नतौ येषां त ईर्मान्तासः ।

सिलिकं संकुचितं निम्नं मध्ये पृष्ठभागे येषां ते सिलिकमध्यमासः । यत्र मनुष्या आरोहन्ति स देशो निम्नः। न तु गजस्येव पृष्ठभाग उन्नतः। संशूरणासो युद्धे जयहेतुत्वेन सम्यक्शूराः । दिव्यासो ग्रामगमनादिरूपव्यवहारनिष्पादकाः। अत्याः संततगमनशीलाः। ते च हंसा इव श्रेणिशः संघशो यतन्ते। यथा हंसाः पङ्क्तिबद्धाः संघीभूयाऽऽकाशे यतन्ते गच्छन्त्येवमश्वा अपि बहवः संहता युद्धाय प्रयतन्ते। यद्यस्मात्कारणादश्वा दिव्यं क्रीडाविजिगीषाद्यर्थमज्मं गमनमाक्षिषुर्व्याप्तवन्तस्तस्मादश्वजातिमात्रस्यैवं प्रशस्तत्वात्स क्रतुनिष्पादकः प्रकृतोऽश्वः प्रशस्त इति किमु वक्तव्यः ॥

अथैकादशीमृचमाह—

तव शरीरं पतयिष्ण्वर्वन्तव चित्तं वात इव ध्रजीमान्। तव शृङ्गाणि विष्ठिता पुरुत्राऽरण्येषु जर्भुराणा चरन्ति।, इति।

हेऽर्वंस्तव शरीरं पतयिष्णु पतनशीलं शीघ्रगमनशीलमित्यर्थः । तव चित्तं वात इव वातसदृशश्च (शं च)। वायुः कीदृशः, ध्रजीमान्वेगवान्। तव शृङ्गाणि शृङ्गस्थानीयानि। उपरि प्रक्षिप्तान्यायुधानि विष्ठिता विशेषेण तत्र[1] तत्र स्थितानि साधितानि। अश्वस्योपरि क्वचिदिषुधिः क्वचित्खड्ग इत्येवं बहून्यायुधानि प्राप्यन्ते। तानि च पुरुषु बहुषु अरण्येषु ग्रामेभ्यो बहिर्भूतेषु युद्धप्रदेशेषु जर्भुराणा परसैन्यान्यतिशयेन भरमाणानि चरन्ति प्रवर्तन्ते ॥

द्वादशीमृचमाह—

उप प्रागाच्छसनं वाज्यर्वा देवद्रीचा मनसा दीध्यानः। अजः पुरो नीयते नाभिरस्यानु पश्चात्कवयो यन्ति रेभाः।, इति।

वाजी क्रतुद्वाराऽन्नहेतुरर्वाऽयमश्वः शसनमस्मिन्क्रतौ विशसनस्थानं प्रत्युपप्रागात्समीपं प्राप्तवान्। किं कुर्वन्, देवद्रीचा मनसा दीध्यानः, देवानञ्चति प्राप्नोतीति देवद्र्यङ्तादृशेन निरन्तरं देवविषयेण मनसा ध्यानं कुर्वन्। अजः प्रजापतिः पुरो नीयतेऽस्मादश्वात्पूर्वमृत्विग्भिर्नीयते, प्रजापतिं पुरतो गच्छन्तमृत्विजो ध्यायन्तीत्यर्थः। यद्वा छाग एवाजः। स ह्यश्वस्य पुरतो[2] नीयते। अस्याश्वस्य नाभिर्नाभ्युपलक्षितं शरीरं प्रजापतिमनु नीयते । अस्याश्वस्य

---

१ ख. घ. ङ. च. 'त्र स्थि'। २ ख. च. पुरो।

पश्चात्पृष्ठभागे कवयो विद्वांस ऋत्विजो रेभा यन्ति स्तुतिं कुर्वाणा गच्छन्ति ॥

त्रयोदशीमृचमाह—

उप प्रागात्परमं यत्सधस्थमर्वाँ२ अच्छा पितरं मातरं च । अद्या देवाञ्जुष्टतमो हि गम्या अथाऽऽ शास्ते दाशुषे वार्याणि ॥, इति ॥

अर्वाञ्शीघ्रगमनवानयमश्वः परममुत्कृष्टं यत्सधस्थं शमितृभिः सह स्थातुं योग्यं यत्स्थानमस्ति तदुपप्रागात्तत्समीपं प्राप्तवान् । किमर्थम्, पितरं मातरं चापि प्राप्तुं, स्वर्गलोके दिव्यो यः पिता या च माता दिव्या तावुभौ प्राप्तुं देवताजन्मन इत्यर्थः । हेऽश्वाद्यास्मिन्दिने जुष्टतमोऽतिशयेन प्रीतः सन्देवान्गम्याः प्राप्नुहि । अथानन्तरं दाशुषे हविर्दत्तवते यजमानाय वार्याणि वरणीयानि फलानि अयमृत्विक्संघ आशास्ते प्रार्थयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके
सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ चतुर्थाष्टके षष्ठप्रपाठकेऽष्टमोऽनुवाकः । )

---

मा नो मित्रो वरुणो अर्यमाऽऽयुरिन्द्र ऋभुक्षा मरुतः परि ख्यन् । यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि । यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति । सुप्राङजो मेम्यद्विश्वरूप इन्द्रापूष्णोः प्रियमप्येति पाथः । एष च्छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः । अभिप्रियं यत्पुरोडाशमर्वता त्वष्टेत् (१)

---

१ क. चाभिप्रा' ।

एनꣳ सौश्रवसाय जिन्वति । यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयन्ति । अत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः । होताऽध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शꣳस्ता सुविप्रः । तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आ पृणध्वम् । यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति । ये चार्वते पचनꣳ संभरन्त्युतो ( २ ) तेषामभिगूर्तिर्न इन्वतु । उप प्रागात्सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः । अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम् । यद्वाजिनो दाम संदानमर्वतो या शीर्षण्या रशना रज्जुरस्य । यद्वा घास्य प्रभृतमास्ये तृणꣳ सर्वा ता ते अपि देवेष्वस्तु । यदश्वस्य क्रविषः ( ३ ) मक्षिकाऽऽश यद्वा स्वरौ स्वधितौ रिप्तमस्ति । यद्धस्तयोः शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु । यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गन्धो अस्ति । सुकृता तच्छमितारः कृण्वन्तूत मेधꣳ शृतपाकं पचन्तु । यत्ते गा-

त्राद॒ग्निना॑ प॒च्यमा॑नाद॒भि शूल॑ं निह॑तस्याव॒-धाव॑ति । मा तद्भू॒म्या॒मा श्रि॑ष॒न्मा तृणे॑षु दे॒वे-भ्य॒स्तदु॒शद्भ्यो॑ रा॒तम॑स्तु ( ४ ) ॥

( इ॒द्रु॒तो क्र॒विषः॑ श्रि॒षत्स॒प्त च॑ । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके षष्ठप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ चतुर्थाष्टके षष्ठप्रपाठकेऽष्टमोऽनुवाकः । )

---

मा । न॒ः । मि॒त्रः । वरु॑णः । अ॒र्य॒मा । आ॒युः । इन्द्र॑ः । ऋ॒भु॒क्षा इत्यृ॑भु—क्षाः । म॒रुत॑ः । परीति॑ । ख्य॒न् । यत् । वा॒जिन॑ः । दे॒वजा॑त॒स्येति॑ दे॒व—जा॒-त॒स्य॒ । सप्ते॑ः । प्र॒व॒क्ष्याम॒ इति॑ प्र—व॒क्ष्याम॑ः । वि॒द-थे॑ । वी॒र्या॑णि । यत् । नि॒र्णिजेति॑ निः—नि॒जा । रेक्ण॑सा । प्रावृ॑तस्य । रा॒तिम् । गृ॒भी॒ताम् । मु॒ख॒तः । न॒यन्ति । सु॒प्रा॒ङिति॑ सु—प्रा॒ङ् । अ॒जः । मेम्य॑त् । वि॒श्वरू॑प॒ इति॑ वि॒श्व—रू॒प॒ः । इ॒न्द्रा॒पू॒ष्णोरिती॑न्द्रा—पू॒ष्णोः । प्रि॒यम् । अपीति॑ । ए॒ति । पाथ॑ः । ए॒षः । छाग॑ः । पु॒रः । अश्वे॑न । वा॒जिना॑ । पू॒ष्णः । भा॒गः । नी॒य॒ते॒ । वि॒श्वदे॑व्य॒ इति॑ वि॒श्व—दे॒व्य॒ः । अ॒भि॒प्रि॒य-मि॒त्य॑भि—प्रि॒यम् । यत् । पु॒रो॒डाश॑म् । अर्व॑ता । त्वष्टा॑ ।

इव (१)। एनम्। सौश्रवसाय। जिन्वति। यत्। हविष्यम्। ऋतुश इत्यृतु—शः। देवयानमिति देव—यानम्। त्रिः। मानुषाः। परीति। अश्वम्। नयन्ति। अत्र। पूषणः। प्रथमः। भागः। एति। यज्ञम्। देवेभ्यः। प्रतिवेदयन्निति प्रति—वेदयन्। अजः। होता। अध्वर्युः। आवया इत्या—वयाः। अग्निमिन्ध इत्यग्निम्—इन्धः। ग्रावग्राभ इति ग्राव—ग्राभः। उत। शꣳस्ता। सुविप्र इति सु—विप्रः। तेन। यज्ञेन। स्वरंकृतेनेति सु—अरंकृतेन। स्विष्टेनेति सु—इष्टेन। वक्षणाः। एति। पृणध्वम्। यूपव्रस्का इति यूप—व्रस्काः। उत। ये। यूपवाहा इति यूप—वाहाः। चषालम्। ये। अश्वयूपायेत्यश्व—यूपाय। तक्षति। ये। च। अर्वते। पचनम्। संभरन्तीति सं—भरन्ति। उतो इति (२)। तेषाम्। अभिगूर्तिरित्यभि—गूर्तिः। नः। इन्वतु। उप। प्रेति। अगात्। सुमदिति सु—मत्। मे। अधायि। मन्म। देवानाम्। आशाः। उपेति। वीतपृष्ठ इति वीत—पृष्ठः। अन्विति। एनम्। विप्राः। ऋषयः। मदन्ति। देवानाम्। पुष्टे। चकृम। सुबन्धुमिति सु—बन्धुम्। यत्। वाजिनः। दाम। संदानमिति सं—दानम्।

अर्वतः । या । शीर्षण्या । रशना । रज्जुः । अस्य । यत् । वा । घ । अस्य । प्रभृतमिति प्र—भृतम् । आस्ये । तृणम् । सर्वा । ता । ते । अपीति । देवेषु । अस्तु । यत् । अश्वस्य । क्रविषः ( ३ ) । मक्षिका । आश । यत् । वा । स्वरौ । स्वधिताविति स्व—धितौ । रिप्तम् । अस्ति । यत् । हस्तयोः । शमितुः । यत् । नखेषु । सर्वा । ता । ते । अपीति । देवेषु । अस्तु । यत् । ऊवध्यम् । उदरस्य । अपवातीत्यप—वाति । यः । आमस्य । क्रविषः । गन्धः । अस्ति । सुकृतेति सु—कृता । तत् । शमितारः । कृण्वन्तु । उत । मेधम् । शृतपाकमिति शृत—पाकम् । पचन्तु । यत् । ते । गात्रात् । अग्निना । पच्यमानात् । अभीति । शूलम् । निहतस्येति नि—हतस्य । अवधावतीत्यव—धावति । मा । तत् । भूम्याम् । एति । श्रिषत् । मा । तृणेषु । देवेभ्यः । तत् । उशद्भ्य इत्युशत्—भ्यः । रातम् । अस्तु ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके षष्ठप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ चतुर्थकाण्डे षष्ठप्रपाठकेऽष्टमोऽनुवाकः । )

---

सप्तमेऽनुवाकेऽश्वस्तोमीयमन्त्राः केचिदुक्ताः । अश्वस्तोत्रमश्वस्तोमस्तत्प्रति-

(केषांचिदश्वस्तोमीयमन्त्राणामभिधानम्)

पादका अश्वस्तोमीयाः । अथाष्टमे त एवान्ये केचिदुच्यन्ते । अनुवाकभेदस्तु सांप्रदायिकोऽयज्ञसंयुक्तेषु प्रयोगेषु मन्त्रभेदार्थो वा ।

तत्राष्टमेऽनुवाके प्रथमामृचमाह—

मा नो मित्रो वरुणो अर्यमाऽऽयुरिन्द्र ऋभुक्षा मरुतः परि ख्यन् । यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि ।, इति ।

मित्रादयः प्रसिद्धाः । एति सर्वदा गच्छती+त्यायुः । ऋभवो देवाः क्षी-(क्षि) यन्ति निवसन्त्यस्मिन्निति ऋभुक्षाः प्रजापतिः । मरुतो देवान्तराणि । ते सर्वेऽपि नोऽस्मान्मा परिख्यन्मा निन्दयन्तु(न्दन्तु) । यद्यस्माद्वाजिनो यागद्वाराऽन्नसाधनस्य देवजातस्य देवार्थमुत्पन्नस्य सप्तेरश्वस्य वीर्याणि सामर्थ्यानि विदथेऽस्मिन्यज्ञे प्रवक्ष्यामो वयं प्रकर्षेण कथयिष्यामस्तस्मादस्मन्निन्दा न युक्तेत्यर्थः ॥

अथ द्वितीयामृचमाह—

यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति । सुप्राङजो मेम्यद्विश्वरूप इन्द्रापूष्णोः प्रियमप्येति पाथः ।, इति ।

निर्णिजा प्रोक्षणादिकृतया शुद्ध्या रेक्णसा सुवर्णरजतादिमणिरूपेण धनेन च प्रावृतस्य प्रकर्षेण सर्वतो वेष्टितस्य, अश्वमेधे हि चत्वार ऋत्विजः समुक्षन्तीति प्रोक्षणं हिरण्ययाः काचा इत्यादिना सुवर्णादिमणिभिरलंकारश्चाभिधीयते । अतस्तथाविधस्य संबन्धिनीं गृभीतां हस्ते स्वीकृतां रातिं हविषो दानं मुखतोऽग्रे यद्यदा नयन्ति ऋत्विजः संपादयन्ति तदानीमजो गतिमानश्वः सुप्राङ्सुष्ठु प्रकृष्टान्देवान्प्राप्नुवन्मेम्यत्, मेम्यदिति हेषाशब्दस्यानुकरणं, विश्वरूपो नानारूपः सन्निन्द्रापूष्णोरिन्द्रपूषप्रभृतीनां देवानां प्रियं पाथोऽप्येति प्रीतिकरमन्नभावं प्राप्नोति ॥

अथ तृतीयामृचमाह—

एष च्छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः । अभिप्रियं यत्पुरोडाशमर्वता त्वष्टेदेनꣳ सौश्रवसाय जिन्वति ।, इति ।

---

+ ख. पुस्तके "आयुर्वायुरित्येवंरूपः क्वचित्पाठो भवितुं युक्तः" इति टिप्पणी ।

वाजिनाऽन्नसाधनेनाश्वेन सह यः कश्चिदजः पुरो नीयते तस्मादश्वात्पूर्वभागे। कीदृशोऽजः, पूष्णो भागः पूषदेवताया भागस्वरूपो विश्वदेव्यो विश्वेभ्यो देवेभ्यो हितः। अभिप्रियं सर्वतः प्रीतिकरं पुरोडाशवत्स्वादुभूतमेनमजमर्वताऽश्वेन सह त्वष्टेत्त्वष्टैव सौश्रवसाय श्रूयते सर्वैरपि जनैः प्रीतिपूर्वकमिति श्रवोऽन्नं सुष्ठु श्रवः सुश्रवस्तस्य भावः सौश्रवसस्तस्मै सम्यक्शोभनभावाय यद्यस्मात्कारणाज्जिन्वति प्रीणयति तस्मादयमजः पुरो नीयते। अश्वमेधप्रकरणे पौष्णमन्वञ्चमित्येवं पूषदेवताकमजं विधास्यति। स पूर्वो नेतव्यः। तद्विषयोऽयं मन्त्रः। अनेन न्यायेन पूर्वमन्त्रोऽप्यजविषयो योजयितव्यः। अश्वमेधप्रकरण ऐन्द्रापौष्णमुपरिष्टादिति व्यासक्तदेवताकस्याजस्य विहितत्वान्मन्त्रे च तस्मिन्नजशब्दस्य मेम्यदिति योग्यशब्दानुकरणस्य श्रूयमाणत्वाच्च॥

अथ चतुर्थीमृचमाह—

यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं
नयन्ति। अत्रा पूष्णः प्रथमो भाग
एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः।, इति।

यद्यत्र मानुषा ऋत्विजोऽश्वं त्रिः परिणयन्ति त्रिवारं प्रदक्षिणी कुर्वन्ति। कीदृशमश्वं, हविष्यं हविषो योग्यम्। ऋतुशो देवयानमृतावृतौ देवान्गच्छन्तम्। अत्रास्मिन्देशेऽजः प्रथम एति। कीदृशोऽजः, पूष्णो भागः। किं कुर्वन्, देवेभ्यो यज्ञं प्रतिवेदयन्, हे देवा यज्ञः प्रवर्तत इत्येवं देवेभ्यो ज्ञापयन्॥

पञ्चमीमृचमाह—

होताऽध्वर्युरावया अग्निमिन्धो ग्रावग्राभ
उत शंस्ता सुविप्रः। तेन यज्ञेन स्वरं-
कृतेन स्विष्टेन वक्षणा आ पृणध्वम्।, इति।

यो यस्मिन्यज्ञे होता विद्यते, यश्चाध्वर्युरावया आ समन्ताद्वेति गच्छति, तत्र तत्रानुष्ठानाय शीघ्रं प्रवर्तत इत्यावयाः, योऽप्यग्निमिन्धोऽग्नेर्दीपक आग्नीध्रः, यश्च ग्रावग्राभो ग्रावस्तुत्, उतापि च शंस्ता यः प्रशास्ता, यश्च सुविप्रः प्रस्तोता, एते सर्वेऽपि स्वरंकृतेन सुष्ठ्वलंकृतेनापेक्षितद्रव्यैः संपूर्णेनेत्यर्थः। स्विष्टेन सुष्ठ्वनुष्ठितेन [ तेन ] यज्ञेनाश्वमेधेन वक्षणाः फलवाहिनीर्घृतकूल्या आपृणध्वं हे होत्रादयो यूयं सर्वेऽप्यापूरयध्वम्॥

---

१ क. योऽयमस्मि। २ घ. ङ. तकुल्या।

(केषांचिदश्वस्तोमीयमन्त्राणामभिधानम्)

अथ षष्ठीमृचमाह—

यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्व-
यूपाय तक्षति । ये चार्वते पचनꣳ संभर-
न्त्युतो तेषामभिगूर्तिर्न इन्वतु ।, इति ।

ये यूपव्रस्का यज्ञार्थं यूपं वृश्चन्ति, उतापि च ये यूपवाहाश्छिन्नं यूपं यज्ञभूमौ वहन्ति, येऽप्यन्येऽश्वयूपार्थं चषालं यूपकटकं तक्षति तक्षणेन संस्कुर्वन्ति, उतो अपि च येऽप्यन्ये पुरुषा अर्वतेऽर्वार्थं पचनं पाकसाधनकाष्ठं संभरन्ति संपादयन्ति, तेषां सर्वेषामभिगूर्तिः संकल्पो नोऽस्मानिन्वतु प्रीणयतु ॥

अथ सप्तमीमृचमाह—

उप प्रागात्सुमन्मेऽधायि मन्म देवानामाशा
उप वीतपृष्ठः । अन्वेनं विप्रा ऋषयो मदन्ति
देवानां पुष्टे चकृमा सुबन्धुम् ।, इति ।

सुष्ठु मदहेतुरंतिहर्षकारणं फलं सुमत्तदस्मानुपप्रागात्समीपे प्राप्नोति । मन्म मननीयं फलं मे मदर्थमधायि देवैः संपादितम् । *उप वीतपृष्ठः कमनीयपृष्ठोऽयमश्वो देवानामाशा देवैराशासनीयानि हवींषि उपप्रागाद्देवहविष्ट्वं प्राप्नोतीत्यर्थः । ऋषयो विप्रा अभिज्ञातार ऋत्विज एनमश्वमनु मदन्ति अनुकूलैः स्तोत्रैर्हर्षयन्तु । देवानां पुष्टे पुष्ट्यर्थं सुबन्धुं चकृमैनमश्वं बन्धुवदत्यन्तप्रियं चकृम ॥

अथाष्टमीमृचमाह—

यद्वाजिनो दाम संदानमर्वतो या शीर्षण्या
रशना रज्जुरस्य । यद्वा घास्य प्रभृतमास्ये
तृणꣳ सर्वा ता ते अपि देवेष्वस्तु ।, इति ।

वाजिनोऽश्वस्य यद्दाम गलबन्धनं, यच्च संदानं पृष्ठपादे बन्धनसाधनं दाम पादसंदानादि, अश्वा गले बद्धा अपि पुनः पृष्ठपादे रज्ज्वन्तरेण बध्यन्ते, या चार्वतोऽश्वस्य शीर्षण्या रशना शिरसि संबद्धा रज्जुः, याऽप्यन्या पुच्छलग्नाऽस्याश्वस्य रज्जुः, यद्वा यदपि आ (अस्याऽऽ) स्ये मुखे प्रभृतं क्षिप्तं तृणं, सर्वा ता तत्सर्वमपि देवेष्वपि प्राप्तमस्य ते तव यजमानस्यास्तु विद्य-

* सर्वपुस्तकेषु उपेत्याधिकम् ।

१ ख. घ. ङ. च. ंप्तमस्य ।

ताम् । यथेह लोके सर्वसाधनसंपूर्णोऽश्वस्तवास्ति तद्वत्परलोकेऽप्यस्त्वित्यर्थः॥

अथ नवमीमृचमाह—

यदश्वस्य क्रविषो मक्षिकाऽऽश यद्वा स्वरौ
स्वधितौ रिप्तमस्ति । यद्धस्तयोः शमितुर्य-
न्नखेषु सर्वा ता ते अपि देवेष्वस्तु ।, इति ।

अस्याश्वस्य क्रविषः क्रव्यं यन्मांसं मक्षिकाऽऽश मक्षिका भक्षितवती, यद्वा यच्च रक्तं स्वरावञ्जनार्थे शकले स्वधितौ छेदनहेतौ शस्त्रे च रिप्तमीषल्लिप्तमस्ति, यदपि शमितुर्हस्तयोर्लिप्तं, यच्च तदीयेषु नखेषु लिप्तं, हेऽश्व ते त्वदीयं सर्वा ता तत्सर्वं देवेष्वप्यस्तु देवेष्वेव हुतं भवतु । यथा पूर्वमन्त्रे नियोजनकालीना गलशिरःपादादिबन्धनरज्जवो देवेषु समर्पिता, एवमत्र मांसलेशोऽपि देवेषु समर्प्यते ॥

अथ दशमीमृचमाह—

यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो
गन्धो अस्ति । सुकृता तच्छमितारः कृण्व-
न्तूत मेधꣳ शृतपाकं पचन्तु ।, इति ।

उदरस्य मध्ये यदूवध्यमर्धजीर्णपक्वं शकृदादि दुर्गन्धरूपेण वायुना सहाऽऽगच्छति, य आमस्यापक्वस्य क्रविषो मांसस्य गन्धो दुःसहोऽस्ति तत्सर्वं सुकृता सुकृतं यथा भवति तथा शमितारः कृण्वन्तु । उतापि च मेधं यज्ञयोग्यं शृतपाकमपाकविपाकौ परित्यज्य सम्यक्पक्वं यथा भवति तथा पचन्तु॥

अथैकादशीमृचमाह—

यत्ते गात्रादग्निना पच्यमानादभि शूलं निह-
तस्यावधावति । मा तद्भूम्यामा श्रिषन्मा
तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥, इति ॥

हेऽश्वाग्निना पच्यमानात्ते तव गात्राच्छरीरावयवसकाशाद्यदल्पमवधावति अशृतं सद्भूमौ पतति, निहतस्य नितरां हन्यमानस्य तवाभि शूलं शूले सक्तं

---

१ ख. घ. ङ. च. 'मर्धं जीर्णं प' ।

( अवशिष्टाश्वस्तोत्रमन्त्राभिधानम् )

यद्यदङ्गमवधावति, तदङ्गं भूम्यामपि मा श्रिषच्छ्लिष्टं लग्नं मा भूत्तृणेष्वपि लग्नं मा भूत्, किंतूशद्भ्यः कामयमानेभ्यो देवेभ्यो रातं दत्तमस्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठकेऽ-ष्टमोऽनुवाकः ॥ ८ ॥

( अथ चतुर्थाष्टके षष्ठप्रपाठके नवमोऽनुवाकः । )

ये वाजिनं परिपश्यन्ति पक्वं य ईमाहुः सुरभिर्निर्हरेति । ये चार्वतो माꣳसभिक्षामुपासत उतो तेषामभिगूर्तिर्न इन्वतु । यन्नीक्षणं माꣳस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि । ऊष्मण्याऽपिधाना चरूणामङ्काः सूनाः परि भूषन्त्यश्वम् । निक्रमणं निषदनं विवर्तनं यच्च पड्बीशमर्वतः । यच्च पपौ यच्च घासिम् ( १ ) जघास सर्वा ता ते अपि देवेष्वस्तु । मा त्वाऽग्निर्ध्वनयिद्धूमगन्धिर्मोखा भ्राजन्त्यभि विक्त जघ्रिः । इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रति गृभ्णन्त्यश्वम् । यदश्वाय वास उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै । संदानमर्वन्तं पड्बीशं प्रिया देवेष्वा यामयन्ति । यत्ते सादे महसा शूकृतस्य पार्ष्णिया वा कशया ( २ ) वा तुतोद ।

स्रुचेव ता हविषो अध्वरेषु सर्वा ता ते ब्रह्मणा सूदयामि । चतुस्त्रिꣳशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति । अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या वि शस्त । एकस्त्वष्टुरश्वस्या विशस्ता द्वा यन्तारा भवतस्तथर्तुः । या ते गात्राणामृतुथा कृणोमि ताता पिण्डानां प्र जुहोम्यग्नौ । मा त्वा तपत् (३) प्रिय आत्माऽपियन्तं मा स्वधितिस्तनुव आ तिष्ठिपत्ते । मा ते गृध्नुरविशस्ताऽतिहाय छिद्रा गात्राण्यसिना मिथू कः । न वा उवेतन्म्रियसे न रिष्यसि देवाꣳ इदेषि पथिभिः सुगेभिः । हरी ते युञ्जा पृषती अभूतामुपास्थाद्वाजी धुरि रासभस्य । सुगव्यं नो वाजी स्वश्वियं पुꣳसः पुत्राꣳ उत विश्वापुषꣳ रयिम् । अनागास्त्वं नो अदितिः कृणोतु क्षत्रं नो अश्वो वनताꣳ हविष्मान् ( ४ ) ॥

( यासि करंया तपद्राथिं नव च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके षष्ठप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

(अवशिष्टाश्वस्तोत्रमन्त्राभिधानम्)

अश्मन्य इमोदेनमाशुः शिशानः प्राचीं जीमूतस्य यदक्रन्दो मा नो मित्रो वरुणो ये वाजिनं नव ॥ ९ ॥

अश्मन्मनोयुजं प्राचीमनु शर्म यच्छतु तेषांमभिगूर्तिः षट्चत्वारिंशत्॥४६॥

हरिः ॐ ।

## इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके षष्ठः प्रपाठकः ॥ ६ ॥

---

(अथ चतुर्थाष्टके षष्ठप्रपाठके नवमोऽनुवाकः ।)

---

ये । वाजिनम् । परिपश्यन्तीति परि—पश्यन्ति । पक्वम् । ये । ईम् । आहुः । सुरभिः । निरिति । हर । इति । ये । च । अर्वन्तः । मांसभिक्षामिति मांस—भिक्षाम् । उपासत इत्युप—आसते । उतो इति । तेषाम् । अभिगूर्तिरित्यभि—गूर्तिः । नः । इन्वतु । यत् । नीक्षणम् । मांस्पचन्याः । उखायाः। या । पात्राणि । यूष्णः । आसेचनानीत्या—सेचनानि । ऊष्मण्या । अपिधानेत्यपि—धाना । चरूणाम् । अङ्काः । सूनाः । परीति । भूषन्ति । अश्वम् । निक्रमणमिति नि—क्रमणम् । निषदनमिति नि—सदनम् । विवर्तनमिति वि—वर्तनम् । यत् । च । पड्बीशम् । अर्वतः । यत् । च । पपौ । यत् । च । घासिम् ( १ ) । जघास । सर्वा । ता । ते । अपीति । देवेषु । अस्तु । मा । त्वा । अग्निः ।

ध्वनयित् । धूमगन्धिरिति धूम—गन्धिः । मा । उखा । भ्राजन्ती । अभीति । विक्त । जघ्रिः । इष्टम् । वीतम् । अभिगूर्तमित्यभि—गूर्तम् । वषट्-कृतमिति वषट्—कृतम् । तम् । देवासः । प्रतीति । गृभ्णन्ति । अश्वम् । यत् । अश्वाय । वासः । उप-स्तृणन्तीत्युप—स्तृणन्ति । अधीवासमित्यधि—वासम् । या । हिरण्यानि । अस्मै । संदानमिति सं—दानम् । अवन्तम् । पड्बीशम् । प्रिया । देवेषु । एति । याम-यन्ति । यत् । ते । सादे । महसा । शूकृतस्येति शू—कृतस्य । पार्ष्ण्या । वा । कशया ( २ ) । वा । तुतोद । स्रुचा । इव । ता । हविषः । अध्व-रेषु । सर्वा । ता । ते । ब्रह्मणा । सूदयामि । चतु-स्त्रिंशदिति चतुः—त्रिंशत् । वाजिनः । देवबन्धो-रिति देव—बन्धोः । वङ्क्रीः । अश्वस्य । स्वधिति-रिति स्व—धितिः । समिति । एत । अच्छिद्रा । गात्रा । वयुना । कृणोत । परुष्परुरिति परुः—परुः । अनु-घुष्येत्यनु—घुष्य । वीति । शस्त । एकः । त्वष्टुः । अश्वस्य । विशस्तेति वि—शस्ता । द्वा । यन्तारा । भवतः । तथा । ऋतुः । या । ते । गात्राणाम् । ऋतुथेत्यृतु—था । कृणोमि । तातेति ता—ता । पिण्डा-

नाम् । प्रेति । जुहोमि । अग्नौ । मा । त्वा । तपत् ( ३ )। प्रियः । आत्मा । अपियन्तमित्यंपि—यन्तम् । मा । स्वधितिरिति स्व—धितिः । तनुवः । एति । तिष्ठिपत् । ते । मा । ते । गृध्नुः । अविश-स्तेत्यंवि—शस्ता । अतिहायेत्यति—हाय । छिद्रा । गात्राणि । असिना । मिथु । कः । न । वै । उ । एतत् । म्रियसे । न । रिष्यसि । देवान् । इत् । एषि । पथिभिरिति पथि—भिः । सुगेभिरिति सु—गेभिः । हरी इति । ते । युञ्जा । पृषती इति । अ-भूताम् । उपेति । अस्थात् । वाजी । धुरि । रासभ-स्य । सुगव्यमिति सु—गव्यम् । नः । वाजी । स्व-श्वियमिति सु—अश्वियम् । पुंसः । पुत्रान् । उत । विश्वापुषमिति विश्व—पुषम् । रयिम् । अनागास्त्व-मित्यनागाः—त्वम् । नः । अदितिः । कृणोतु । क्ष-त्रम् । नः । अश्वः । वनताम् । हविष्मान् ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके षष्ठप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके षष्ठः प्रपाठकः ॥ ६ ॥

( अथ चतुर्थकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः । )

---

अष्टमेऽनुवाके पूर्वानुवाकवदश्वस्तोमीयाः केचिन्मन्त्रा उक्ताः । अथ नवमेऽवशिष्टा अश्वस्तोत्रमन्त्रा उच्यन्ते ।

तत्र प्रथमामृचमाह—

ये वाजिनं परिपश्यन्ति पक्वं य ईमाहुः सुरभिर्निर्हरेति। ये चार्वतो माꣳसभिक्षामुपासत उतो तेषामभिगूर्तिर्न इन्वतु।, इति।

ये पुरुषा वाजिनमेतमश्वं पक्वं पाकं प्राप्तं परिपश्यन्ति परित आगत्याऽऽदरेण पश्यन्ति, य ईं येऽप्यन्ये सुरभिः सुगन्धोऽयमश्वोऽस्मान्निर्हर निष्क्रष्याल्पमाहरेत्याहुः, उतो अपि च ये चान्येऽर्वतोऽश्वस्य संबन्धिनीं मांसभिक्षामुपासते प्रार्थयन्ते, तेषां सर्वेषामभिगूर्तिः संकल्पो न इन्वतु प्राप्नोत्वस्माकं श्रेयसे भवत्वित्यर्थः ॥

अथ द्वितीयामृचमाह—

यन्नीक्षणं माꣳस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि । ऊष्मण्याऽपिधाना चरूणामङ्काः सूनाः परि भूषन्त्यश्वम् ।, इति।

मांसं पच्यते यस्यामुखायां सा मांस्पचनी, तस्या उखाया नीक्षणं नितरामीक्षणमादरेण दर्शनं यदस्ति, यानि च पात्राणि यूष्णो रसस्याऽऽसेचनानि सर्वतः सेचनाधारभूतानि, चरूणां मांसादीनामपिधानाऽऽच्छादनपात्राणि ऊष्मण्योष्मरक्षणार्थानि यानि सन्ति, अङ्का मांसलेशेनाङ्किताः सूनाः स्वधितिवेतसशाखाद्या याः सन्ति, तानि सर्वाण्यश्वं परिभूषन्ति अश्वस्य यत्कार्यं तदेव कुर्वन्तीत्यर्थः ॥

अथ तृतीयामृचमाह—

निक्रमणं निषदनं विवर्तनं यच्च पड्बीशमर्वतः । यच्च पपौ यच्च घासिं जघास सर्वा ता ते अपि देवेष्वस्तु ।, इति।

---

१ क. घ. ङ. च. 'कल्पः क्रतुं प्रा' । २ ख. च. 'चकाधा' । ३ क. च. मांसस्थालीना' । ४ ख. घ. ङ. च. 'लेनाङ्कना' ।

( अवशिष्टाश्वस्तोत्रमन्त्राभिधानम् )

निक्रमणमश्वस्य पादप्रक्षेपस्थानं निषदनं निवासस्थानं विवर्तनं परिवर्तनस्थानं च यदस्ति, यदप्यर्वतोऽश्वस्य पड्वीशं पादबन्धनस्थानं पादक्षुण्णरजो वाऽस्ति, यदप्युदकं पपौ, यच्च घासिं तृणादिकं जघास भक्षितवान्, ते त्वदीयं सर्वा ता तत्सर्वं देवेष्वप्यस्तु देवेष्वेव समर्पितं भवतु ॥

चतुर्थीमृचमाह—

मा त्वाऽग्निर्ध्वनयिद्धूमगन्धिर्मोखा भ्राजन्त्यभि विक्त जघ्रिः । इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रति गृभ्णन्त्यश्वम् । , इति ।

हेऽश्व त्वां धूमगन्धिर्धूमगन्धापादकोऽग्निर्मा ध्वनयित्पाकशब्दोपेतं मा करोतु । काष्ठविशेषयुक्तेन केनचिदग्निना पक्वमोदनादिकं धूमगन्धोपेतं भवति । तथा दुष्पाकेन ( ण ) कुशब्दं यथा भवति तथा पच्यते । तदुभयमत्र मा भूदित्यर्थः । किंच भ्राजन्त्युखा सम्यक्तप्ता स्थाली माऽभिविक्तातिपाकेनाभितो विक्तं विदग्धं मा करोतु । त्वं तु जघ्रिराघ्राणयोग्यः सुगन्धो भ ( न्धिर्भ )वेति शेषः । इष्टमत्यन्तेच्छाविषयं वीतं कान्तं रमणीयपाकमभिगूर्तं देवयोग्यमस्त्विवति यजमानैः संकल्पितं वषट्कृतं वषट्कारेण प्रदत्तमश्वं देवाः प्रतिगृभ्णन्ति देवाः स्वी कुर्वन्तु ॥

अथ पञ्चमीमृचमाह—

यदश्वाय वास उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै । संदानमर्वन्तं पड्बीशं प्रिया देवेष्वा यामयन्ति । , इति ।

हन्यमानस्याश्वस्याधस्ताद्वस्त्रमुपरिष्टाच्च किंचिद्वस्त्रं प्रसारयन्ति, तदुभयमत्र वासःशब्देनाधीवासशब्देन चोच्यते । यद्वासोऽश्वार्थमुपस्तृणन्त्यधः प्रसारयन्ति, यच्चाधि ( धी ) वासमुपर्याच्छादयन्ति, यानि चान्यानि हिरण्यमण्यादीन्यस्मा अश्वार्थं संपादितानि, अर्वन्तमर्वतोऽश्वस्य यत्संदानं बन्धनसाधनं दाम, यच्च पड्वीशं पादबन्धनस्थानगता रज्जुस्तानि सर्वाणि देवेषु प्रिया प्रियाणि भूत्वाऽऽयामयन्ति सर्वतः प्रसारयन्तु ॥

अथ षष्ठीमृचमाह—

यत्ते सादे महसा शूकृतस्य पार्ष्णिया वा

---

१ ख. च. 'रण्मयादी' ।

कशया वा तुतोद। स्रुचेव ता हविषो अध्व-
रेषु सर्वा ता ते ब्रह्मणा सूदयामि । , इति ।

हेऽश्व तत्र सादे गमने [ महसोत्सवेन ] शूकृतस्य शूकारो ध्वन्यनुकरणं, प्रौढस्याश्वस्य शीघ्रगमने शूकारो जायते, तेन शूकारेण युक्तस्य शीघ्रगमनार्थी पर्यारूढः पार्ष्णिया स्वकीयेन पादपृष्ठभागेन हस्तधृतया कशया वा तु (यत्तु) तोद व्यथां चकार, ते त्वदीयं सर्वा ता तत्सर्वं ब्रह्मणा मन्त्रेण सूदयामि जुहोमि । तत्र दृष्टान्तः—अध्वरेषु यागेषु हविःसंबन्धीनि तानि सर्वाण्याज्यादिविशेषरूपाणि स्रुचेव यथा स्रुचाऽऽज्यं जुह्वाति तद्वत् ॥

सप्तमीमाह—

चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य
स्वधितिः समेति । अच्छिद्रा गात्रा वयुना
कृणोत परुष्परुरनुघुष्या वि शस्त । , इति ।

वाजिनोऽन्नसाधनस्य देवबन्धोर्देवप्रियस्य देवार्थं वध्यमानस्याश्वस्य संबन्धिनीर्वङ्क्रीर्वक्राणि पार्श्वद्वयगतान्यस्थीन्येकैकस्मिन्पार्श्वे सप्तदशेत्येवं चतुस्त्रिंशत्संख्याकाः, अन्यस्य तु पशोः षड्विंशतिरेव । अतः सावधाना स्वधितिरश्वं समेति संगच्छताम् । यथाऽस्थिलेशोऽपि हवींषि न मिलति तथा वियुनक्ती- ( क्ति ) त्यर्थः । हे शमितारो गात्रा हृदयाद्यङ्गानि अच्छिद्रा वयुना छिद्ररहितानि यथा भवन्ति तथा कृणोत कुरुत । तत्र चायमुपायः—परुष्परुरनुघुष्य तत्पर्वानुक्रमेण तदीदृशमिति कथमपि ज्ञात्वा विशस्त विशसनं कुरुत ॥

अष्टमीमाह—

एकस्त्वष्टुरश्वस्या विशस्ता द्वा यन्तारा भव-
तस्तथर्तुः । या ते गात्राणामृतुथा कृणोमि
ताता पिण्डानां प्र जुहोम्यग्नौ । , इति ।

त्वष्टुर्दीप्तिमतोऽश्वस्यर्तूपलक्षितकालीन एको विशस्ता हिंसिता । तथा द्वा यन्तारा विशसनकाले यथेतस्ततो न चलति तथा नियामकौ द्वौ । अत एवान्यत्राऽऽम्नातम्—" अध्रिगुश्चापापश्च । उभौ देवानां शमितारौ । " इति । हेऽश्व ते तत्र गात्राणां यान्यङ्गानि ऋतुथर्तूपलक्षिते तत्तत्काले कृणोमि छि-

१ ख. च. हावि[?]षि । २ क. 'मि तत्तच्छि' । ख. 'मि उच्छि' । घ. ङ. च. 'मि तच्छि' ।

(अवशिष्टाश्वस्तोत्रमन्त्राभिधानम्)

नग्नि, पिण्डानां मांसपिण्डानां मध्ये ताता तानि तान्यङ्गानि प्रजुहोम्यग्नौ प्रकर्षेण जुहोमि ॥

नवमीमाह—

मा त्वा तपत्प्रिय आत्माऽपियन्तं मा स्वधितिस्तनुव आ तिष्ठिपत्ते । मा ते गृध्नुरविशस्ताऽतिहाय छिद्रा गात्राण्यसिना मिथू कः । , इति ।

हेऽश्वापियन्तं शरीरं विसृज्य देवान्गच्छन्तं त्वां प्रिय आत्मा प्रीतिहेतुर्विग्रहो मा तपत्संतापं मा कार्षीत् । तथा स्वधितिस्ते तनुवो गात्राणि माऽऽतिष्ठिपन्मैत्र स्थापयतु, किमप्यङ्गमनवशेष्य सर्वं छिनत्त्वित्यर्थः । अविशस्ता विशसनकौशलरहितः केवलं मांसतृष्णायुक्तोऽतिहाय विशसनकौशलरहितप्रकारमतिलङ्घ्य ते गात्राणि तवाङ्गान्यसिना शस्त्रेण मिथु च्छिद्राणि मा कर्मा करोतु ॥

दशमीमाह—

न वा उवेतान्म्रियसे न रिष्यासि देवाꣳ इदेषि पथिभिः सुगेभिः । हरी ते युञ्जा पृषती अभूतामुपास्थाद्वाजी धुरि रासभस्य । , इति ।

शास्त्रानभिज्ञानां लौकिकानां दृष्ट्या त्वमेतत्प्रत्यक्षमेव म्रियसे शमितृभिर्हिंस्यसे च । शास्त्रदृष्ट्या तु त्वं न वा उवेतान्म्रियस एतन्मरणमेव न भवति, न च रिष्यसि नापि शमितृभिर्हिंस्यसे, किंतु सुगेभिः पथिभिः सुगममार्गैर्देवानिदेषि देवानेव प्राप्नोषि । तत्र देवेषु मध्य इन्द्रत्वं प्राप्तस्य ते हरी हरिनामकावश्वौ रथे युक्तावभूतां सर्वथा भविष्यतः । *एवं तथा मरुद्रूपं प्राप्तस्य ते पृषती चित्रवर्णे अश्वस्त्रियौ युञ्जा[1]वभूतां रथे युक्तौ भविष्यतः । इदानीं रासभस्य धुरि वर्तमानस्य गर्दभवद्भारवाहिनस्तव वाज्युपास्थात्त्वां वोढुं कश्चित्मौढोऽश्वः प्राप्तो भविष्यति ॥

अथैकादशीमाह—

सुगव्यं नो वाजी स्वश्व्यं पुꣳसः पुत्राꣳ उत विश्वापुषꣳ रयिम् ।

---

* एवमित्यधिकम् ।

---

१ ख. 'ञ्जाऽभू' ।

अनागास्त्वं नो अदितिः कृणोतु क्षत्रं
नो अश्वो वनताꣳ हविष्मान् ॥, इति ॥

अयं वाजी नोऽस्माकं सुगव्यं कल्याणगोसमूहं स्वश्वियं कल्याणाश्वसमूहं पुंसः पुत्रान्पुंस्त्वलक्षणसंपन्नान्पुत्रान्, उतापि च विश्वापुषं विश्वं पोषयितुं रयिं धनं कृणोतु करोतु । अदितिरियं भूमिर्नोऽस्माकमनागास्त्वमपराधराहित्यं करोतु । हविष्मान्हविःस्वरूपेण निष्पन्नोऽयमश्वो नोऽस्माकं क्षत्रं बलं वनतां संपादयतु । तदेवमेतेषु त्रिष्वनुवाकेषु अश्वस्तोत्रप्रतिपादकत्वेनाश्वस्तोमीया मन्त्राः पञ्चत्रिंशदाम्नाताः । अवशिष्टा तु पञ्चमकाण्डे समाम्नास्यते । तथा च सूत्रकार आह—" क्रमैरत्यक्रमीदित्येतां षट्त्रिंशीम् " इति ॥

अत्र विनियोगसंग्रहः—

पञ्चत्रिंशद्यदक्रन्दोनुवाकेषु[1] त्रिषु श्रुताः ।
अश्वस्तोमीयहोमास्तै[2]रिति षष्ठः समीरितः ॥ १ ॥

अथ मीमांसा ।

नवमाध्यायस्य चतुर्थपादे द्वितीयाधिकरणे चिन्तितम्—

" न चतुस्त्रिंशदित्येष निषेधो नियतो न वा ।
गिरापदवदाद्यः स्यान्नैवकारहतत्वतः ॥
निषेधः प्राप्तिपूर्वोऽतः प्रापकोऽत्रानुमीयते ।
निषेधप्रापकाभ्यां च चतुस्त्रिंशद्विकल्प्यते[3] " ॥

अश्वमेधे त्रयः सवनीयाः पशवः श्रुताः—"अश्वस्तूपरो गोमृगस्ते प्राजापत्याः" इति । तेष्वश्वस्य चतुस्त्रिंशद्वङ्क्रयः । तथा च मन्त्रः पठ्यते—"चतुस्त्रिꣳशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति" इति । वाजी गन्धर्ववाहको जातिविशेषः । अत एवान्यत्राऽऽम्नायते—" हयो देवानवहदर्वाऽसुरान्वाजी गन्धर्वानश्वो मनुष्यान्" इति । देवबन्धुर्देवानां प्रियः । स्वधितिश्छेदनहेतुः शस्त्रमित्यर्थः । एवं सति अध्रिगुप्रैषे[4] विशेषोऽयमाम्नायते—" न चतुस्त्रिंशदिति ब्रूयात् । षड्विंशतिरित्येव ब्रूयात् " इति । सोऽयं[5] चतुस्त्रिंशद्वाजिन इत्यादिकाया ऋचः प्रतिषेधो गिरापदनिषेधवन्नित्यो नतु विकल्पितः यथा " न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम् " इत्यत्र गिरापदनिषेधपुरःसरमिरापदे विहिते सति निषिद्धस्य नित्यानिवृत्तिः । तथा चतुस्त्रिंशन्मन्त्रनिषेध

---

१ ख. च. 'क्रन्दानु' । २ ख. च. 'यमन्त्रास्तै' । ३ क. घ. ङ. 'कल्पते । ४ क. 'प्रैषशे' । ५ क. घ. ङ. नायं ।

( अवशिष्टाश्वस्तोत्रमन्त्राभिधानम् )

पुरःसरं षड्विंशतिमन्त्रे विहिते सति नित्यनिवृत्तिर्निषिद्धस्येति चेन्मैवम्। षड्विंशतिरित्येव ब्रूयादित्येवकारेण विधित्वप्रत्ययबाधात्। षड्विंशतिमन्त्रस्तावच्चोदकप्राप्तत्वान्न विधेयः। तस्य चतुस्त्रिंशन्मन्त्रेणापवादप्रसक्तौ न चतुस्त्रिंशदित्यनेनापवादकं मन्त्रं प्रतिषिध्य चोदकप्राप्तस्यानपोदितत्वेन यथापूर्वमवस्थानमनूद्यत इत्येवमर्थं सूचयितुमेवकारः प्रयुक्तः। गिरापदद्दृष्टान्तस्तु विषमः। अप्राप्तत्वादिरापदं तत्र विधीयते। तेन च विहितेन पाठप्राप्ते गिरापदे बाधिते स बाधो न गिरागिरेति निषेधेनानूद्यते। ततो दृष्टान्ते निषेधानुवादो दार्ष्टान्तिके विध्यनुवाद इति महद्वैषम्यम्। ननु विधिवाक्यस्यैवकारयुक्तस्यानुवादत्वे सति न चतुस्त्रिंशदित्यस्मिन्निषेधे कृत्स्नवाक्यतात्पर्यान्निषिद्धस्य नित्यनिवृत्तिस्तदवस्था स्यात्। मैवम्। प्रापकस्यापि सद्भावेन निषेधप्राप्तिभ्यां चतुस्त्रिंशन्मन्त्रस्य विकल्पितत्वात्। अथोच्येत—चतुस्त्रिंशद्वाजिन इत्ययं मन्त्रः केवलं स्वरूपेण पठितः, न त्वस्याध्रिगुप्रैषवत्प्रापकं किंचिदस्तीति। तन्न, प्रापकवचनस्य कल्पनीयत्वादन्यथा प्रसक्त्यभावेन प्रतिषेधानुपपत्तेः। तस्मात्प्रसङ्गकेनोपजीव्येनानुमितविधिना प्रत्यक्षनिषेधेन च समानबलतया चतुस्त्रिंशदित्ययं मन्त्रोऽश्वस्याध्रिगुप्रैषे विकल्प्यते॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके
नवमोऽनुवाकः॥ ९॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ १॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य
श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विर-
चिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
चतुर्थकाण्डे षष्ठः प्रपाठकः॥ ६॥

---

१ क. घ. ङ. 'अर्नीयेनो'।

(अथ चतुर्थाष्टके सप्तमः प्रपाठकः ।)

(तत्र प्रथमोऽनुवाकः ।)

हरिः ॐ ।

अग्नाविष्णू सजोषसेमा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरा गतम् । वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे प्राणश्च मेऽपानः (१) च मे व्यानश्च मेऽसुश्च मे चित्तं च म आधीतं च मे वाक्च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च म ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थानि च मे परूंषि च मे शरीराणि च मे (२) ॥

(अपानस्तनूश्च मेऽष्टादश च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके सप्तमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( अथ चतुर्थाष्टके सप्तमः प्रपाठकः। )

---

( तत्र प्रथमोऽनुवाकः। )

---

हरिः ॐ।

अग्नाविष्णू इत्यग्ना—विष्णू। सजोषसेति स—जोषसा। इमाः। वर्धन्तु। वाम्। गिरः। द्युम्नैः। वाजेभिः। एति। गतम्। वाजः। च। मे। प्रसव इति प्र—सवः। च। मे। प्रयतिरिति प्र—यतिः। च। मे। प्रसितिरिति प्र—सितिः। च। मे। धीतिः। च। मे। क्रतुः। च। मे। स्वरः। च। मे। श्लोकः। च। मे। श्रावः। च। मे। श्रुतिः। च। मे। ज्योतिः। च। मे। सुवः। च। मे। प्राण इति प्र—अनः। च। मे। अपान इत्यप—अनः (१)। च। मे। व्यान इति वि—अनः। च। मे। असुः। च। मे। चित्तम्। च। मे। आधीतमित्या—धीतम्। च। मे। वाक्। च। मे। मनः। च। मे। चक्षुः। च। मे। श्रोत्रम्। च। मे। दक्षः। च। मे। बलम्। च। मे। ओजः। च। मे। सहः। च। मे। आयुः। च। मे। जरा। च। मे। आत्मा। च। मे। तनूः। च।

मे । शर्म॑ । च॒ । मे॒ । वर्म॑ । च॒ । मे॒ । अङ्गा॑नि । च॒ । मे॒ । अ॒स्थानि॑ । च॒ । मे॒ । परू॑ꣳषि । च॒ । मे॒ । शरी॑राणि । च॒ । मे॒ ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके सप्तमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ चतुर्थकाण्डे सप्तमः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
परिषेचनमुख्यास्तु संस्काराः षष्ठ ईरिताः ।
वसोर्धारादयः शिष्टाः प्रोच्यन्तेऽस्मिंस्तु सप्तमे ॥ २ ॥

कल्पः—" अग्नाविष्णू सजोषसेति चतुर्गृहीतं हुत्वौदुम्बरीं स्रुचं *व्यायाममात्रीं मृदा प्रदिग्धां पश्चादासेचनवतीं घृतस्य पूरयित्वा वाजश्च मे प्रसवश्च म इति संततां वसोर्धारां जुहोत्या मन्त्रसमापनात् " इति ।

अत्र ह्येकादशभिरनुवाकैर्मन्त्रः समाप्यते ।

चतुर्गृहीतहोममन्त्रपाठस्तु—

अग्नाविष्णू सजोषसेमा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरा गतम् ।, इति ।

हेऽग्नाविष्णू युवां सजोषसा समानप्रीती भवेतम् । वां युवयोरिमा गिरः स्तुतिरूपा वाचो वर्धन्तु वृद्धिं प्राप्नुवन्तु । युवामपि द्युम्नैर्धनैर्वाजेभिरन्नैश्च युक्तावागतमिहाऽऽगच्छतम् ॥

अथैकादशानुवाकात्मको मन्त्र उच्यते । अनुवाकभेदस्त्वयज्ञसंयुक्ते कर्मणि पृथङ्मन्त्रत्वेनानुष्ठेयत्वादुपपद्यते ।

---

* व्याममात्रीमिति भवितव्यम् ।

---

१ ख. 'मात्रां मृ' । २ ख. च. भवतम् ।

(वसोर्धाराद्यभिधानम्)

तत्र प्रथमानुवाकपाठस्तु—

वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च म आधीतं च मे वाक्च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च म ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थानि च मे परूꣳषि च मे शरीराणि च मे ॥, इति ॥

वाजोऽन्नम् । चशब्दो वक्ष्यमाणद्रव्यापेक्षया समुच्चयार्थः । मे मम कल्पतामिति पदं दशमानुवाके वक्ष्यमाणं सर्वत्रानुषज्यते संपद्यतामित्यर्थः । प्रसवोऽन्नस्यानुज्ञानम् । प्रयतिः शुद्धिः । प्रसितिर्बन्धनमन्नविषयकमौत्सुक्यम् । धीतिरन्नधारणम् । क्रतुरन्नहेतुर्यज्ञः । स्वरो मन्त्रगत उदात्तादिः । श्लोकः स्तुतिः । श्रावः श्रावयितृत्वसामर्थ्यम् । श्रुतिः श्रवणसामर्थ्यम् । ज्योतिः प्रकाशः । सुवः स्वर्गः । प्राणापानव्याना वायुवृत्तिविशेषाः । असुस्तद्वृत्तिमान्वायुः । चित्तं मनोजन्यं ज्ञानम् । आधीतं तेन ज्ञानेन सर्वदा वीषयीकृतं द्रव्यम् । वागादयश्चत्वारः प्रसिद्धाः । दक्षो ज्ञानेन्द्रियगतं कौशलम् । बलं कर्मेन्द्रियगतं सामर्थ्यम् । ओजो बलहेतुरष्टमो धातुः । सहो वैरिविषयमभिभवितृत्वम् । आयुः प्रसिद्धम् । जराऽऽयुषो वलीपलितादिपर्यन्तत्वम् । आत्मा शास्त्रप्रसिद्धः परमात्मा । तनूः शोभनसंनिवेशं वपुः । शर्म सुखम् । वर्म शरीररक्षकं कवचादि । अङ्गानि संपूर्णावयवाः । अस्थानि यथास्थानं स्थितान्यस्थीनि । परूंषि अङ्गुल्यादिपर्वाणि । शरीराणि पूर्वमनुक्ताः शरीरावयवाः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठके द्वितीयोऽनुवाकः । )

---

ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धं च मे वृद्धिश्च मे सत्यं च मे श्रद्धा च मे जगच्च ( १ ) मे धनं च मे वशश्च मे त्विषिश्च मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे सुगं च मे सुपथं च म ऋद्धं च म ऋद्धिश्च मे क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे ( २ ) ॥

( जगच्चर्द्धिश्चतुर्दश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके सप्तमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठके द्वितीयोऽनुवाकः । )

---

ज्यैष्ठ्यम् । च । मे । आधिपत्यमित्याधि—पत्यम् । च । मे । मन्युः । च । मे । भामः । च । मे । अमः । च । मे । अम्भः । च । मे । जेमा । च । मे । महिमा । च । मे । वरिमा । च । मे । प्रथि-

(वसोर्धाराद्यभिधानम्)

मा । च । मे । वर्ष्मा । च । मे । द्राघुया । च । मे । वृद्धम् । च । मे । वृद्धिः । च । मे । सत्यम् । च । मे । श्रद्धेति श्रत्-धा । च । मे । जगत् । च (१) । मे । धनम् । च । मे । वशः । च । मे । त्विषिः । च । मे । क्रीडा । च । मे । मोदः । च । मे । जातम् । च । मे । जनिष्यमाणम् । च । मे । सूक्तमिति सु-उक्तम् । च । मे । सुकृतमिति सु-कृतम् । च । मे । वित्तम् । च । मे । वेद्यम् । च । मे । भूतम् । च । मे । भविष्यत् । च । मे । सुगमिति सु-गम् । च । मे । सुपथमिति सु-पथम् । च । मे । ऋद्धम् । च । मे । ऋद्धिः । च । मे । क्लृप्तम् । च । मे । क्लृप्तिः । च । मे । मतिः । च । मे । सुमतिरिति सु-मतिः । च । मे । (२) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके सप्तमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ चतुर्थकाण्डे सप्तमप्रपाठके द्वितीयोऽनुवाकः ।)

---

अथ द्वितीयमाह—

ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धं च मे

वृद्धिश्च मे सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे वशश्च मे त्विषिश्च मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे सुगं च मे सुपथं च म ऋद्धं च म ऋद्धिश्च मे क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे॥, इति ॥

ज्यैष्ठ्यं प्रशस्ततमत्वम्। आधिपत्यं स्वामित्वम्। मन्युभामशब्दौ क्रोधावान्तरविशेषवाचिनौ। एको मानसोऽपरोऽक्षमादिलिङ्गजन्यो बाह्यः। अमोऽप्रमेयत्वं विरोधिभिरियत्तया परिच्छेत्तुमशक्यत्वम्। अम्भः शैत्यमाधुर्योपेतमुदकम्। जेमा जयसामर्थ्यम्। महिमा महत्त्वं जयसंपादितधनादिसंपत्तिः। वरिमा वरणीयत्वं पूज्यत्वम्। प्रथिमा गृहक्षेत्रादिविस्तारः। वर्ष्मा पुत्रपौत्रादिशरीराणि। द्राघुया पुत्रपौत्रादिविषयं दीर्घत्वमविच्छिन्ना संततिरित्यर्थः। वृद्धं प्रभूतमन्नं धनं च। वृद्धिर्विद्यादिगुणैरुत्कर्षः। सत्यं यथार्थभाषणम्। श्रद्धा परलोकोऽस्तीति बुद्धिः। जगज्जङ्गमाजङ्गमात्मकम्। धनं सुवर्णादि। वशः सर्वस्वाधीनत्वम्। त्विषिः शरीरकान्तिः। क्रीडाऽक्षद्यूतादिः। मोदस्तज्जन्यो हर्षः। जातं पूर्वसिद्धापत्यम्। जनिष्यमाणं भविष्यदपत्यम्। सूक्तमृक्समूहः। सुकृतं तज्जन्यमपूर्वम्। वित्तं पूर्वलब्धम्। वेद्यमितः परं लब्धव्यं द्रव्यजातम्। भूतं पूर्वसिद्धं क्षेत्रादि। भविष्यत्संपत्स्यमानम्। सुगं सुष्ठु गन्तव्यं बन्धुजनयुक्तग्रामान्तरादि। सुपथं चोरादिरहितो मार्गः। ऋद्धं वर्धितं धनादिकमनुष्ठितकर्मफलं वा। ऋद्धिरनुष्ठास्यमानसत्रफलम्। क्लृप्तं समर्थं स्वकार्यक्षमद्रव्यम्। क्लृप्तिः स्वकीयसामर्थ्यम्। मतिः पदार्थमात्रनिश्चयः। सुमतिर्दुर्घटराजकार्यादिनिश्चयः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

१ क. °मात्म'।

(वसोर्धारायभिधानम्)

( अथ चतुर्थाष्टके सप्तमप्रपाठके तृतीयोऽनुवाकः । )

शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च (१) मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च म ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुगं च मे शयनं च मे सूषा च मे सुदिनं च मे (२) ॥

( विश्वं च शयनमष्टौ च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके सप्तमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( अथ चतुर्थाष्टके सप्तमप्रपाठके तृतीयोऽनुवाकः । )

शम् । च । मे । मयः । च । मे । प्रियम् । च । मे । अनुकाम इत्यनु—कामः । च । मे । कामः । च । मे । सौमनसः । च । मे । भद्रम् । च । मे । श्रेयः । च । मे । वस्यः । च । मे । यशः । च । मे ।

भगः । च । मे । द्रविणम् । च । मे । यन्ता । च । मे । धर्ता । च । मे । क्षेमः । च । मे । धृतिः । च । मे । विश्वम् । च ( १ ) । मे । महः । च । मे । संविदिति सं—वित् । च । मे । ज्ञात्रम् । च । मे । सूः । च । मे । प्रसूरिति प्र—सूः । च । मे । सीरम् । च । मे । लयः । च । मे । ऋतम् । च । मे । अमृतम् । च । मे । अयक्ष्मम् । च । मे । अनामयत् । च । मे । जीवातुः । च । मे । दीर्घायुत्वमिति दीर्घायु—त्वम् । च । मे । अनमित्रम् । च । मे । अभयम् । च । मे । सुगमिति सु—गम् । च । मे । शयनम् । च । मे । सूषेति सु—उषा । च । मे । सुदिनमिति सु—दिनम् । च । मे ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके सप्तमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ चतुर्थकाण्डे सप्तमप्रपाठके तृतीयोऽनुवाकः । )

---

तृतीयमाह—

शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे

(वसोर्धाराद्यभिधानम्)

ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे ल-
यश्च म ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽ-
नामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽन-
मित्रं च मेऽभयं च मे सुगं च मे शयनं च
मे सूषा च मे सुदिनं च मे ॥, इति ॥

शंशब्द ऐहिकसुखवाची । मयःशब्द आमुष्मिकसुखवाची । प्रियं प्रीति-कारणं वस्तु । अनुकामोऽनुकूलत्वनिमित्तेन काम्यमानः पदार्थः । एतदुभयमै-हिकमेव तारतम्योपेतम् । काम आमुष्मिकः स्वर्गादिः । सौमनसो मनः-स्वास्थ्यकरो बन्धुवर्गः । भद्रं कल्याणमिह लोके रमणीयम् । श्रेयः परलोक-हितम् । वस्यो निवासहेतुर्गृहादिः । यशः कीर्तिः । भगः सौभाग्यम् । द्रविणं धनम् । यन्ता नियामक आचार्यादिः । धर्ता पोषकः पित्रादिः । क्षेमो विद्यमा-नधनस्य रक्षणशक्तिः । धृतिर्धैर्यमापद्यपि निश्चलत्वम् । विश्वं सर्वजनानुकू-ल्यम् । महः पूजा । संविद्वेदशास्त्रादिविज्ञानम् । ज्ञात्रं ज्ञापयितृत्वसामर्थ्यम् । सूः पुत्रादिप्रेरणसामर्थ्यम् । प्रसूर्भृत्यादिप्रेरणसामर्थ्यम् । सीरं लाङ्गलादिकृ-षिसाधनसंपत्तिः । लयस्तत्प्रतिबन्धनिवृत्तिः । ऋतं यज्ञादिकर्म । अमृतं तत्फ-लम् । अयक्ष्मं राजयक्ष्मादिप्रबलव्याधिराहित्यम् । अनामयज्ज्वराद्यल्पव्या-धिराहित्यम् । जीवातुर्जीवनकारणं व्याधिपरिहारार्थमौषधम् । दीर्घायुत्वम-पमृत्युराहित्यम् । अनमित्रं वैरिराहित्यम् । अभयं भयराहित्यम् । सुगं शोभनगमनं सर्वैरङ्गीकृताचरणमित्यर्थः । शयनं शय्योपधानादिसंपत्तिः । सूषा स्नानसंध्यावन्दनादियुक्तः शोभनः प्रातःकालः । सुदिनं यज्ञदानाध्ययना-दियुक्तं कृत्स्नं दिनम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदी-
यतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके
तृतीयोऽनुवाकः ॥ ३ ॥

---

(अथ चतुर्थाष्टके सप्तमप्रपाठके चतुर्थोऽनुवाकः ।)

---

ऊर्क्च मे सूनृता च मे पयश्च मे रसश्च मे

---

१ क. घ. ङ. 'रं गोला' ।

घृतं चं मे मधुं च मे सग्धिश्च मे सपीतिश्च मे कृषिश्चं मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे रयिश्चं मे रायश्च मे पुष्टं चं मे पुष्टिश्च मे विभु चं ( १ ) मे प्रभु चं मे बहु चं मे भूयश्च मे पूर्णं चं मे पूर्णतरं च मेऽक्षितिश्च मे कूयवाश्च मेऽन्नं च मेऽक्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्चं मे खल्वाश्च मे गोधूमाश्च मे मसुराश्चमे प्रियंगवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे ( २ ) ॥

( विभु चं मसुराश्चतुर्दश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके सप्तमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठके चतुर्थोऽनुवाकः । )

---

ऊर्क् । च । मे । सूनृता । च । मे । पयः । च । मे । रसः । च । मे । घृतम् । च । मे । मधुं । च । मे । सग्धिः । च । मे । सपीतिरिति स—पीतिः । च । मे । कृषिः । च । मे । वृष्टिः । च । मे । जैत्रम् । च । मे । औद्भिद्यमित्यौत्—भिद्यम् । च । मे । रयिः । च । मे । रायः । च । मे । पुष्टम् ।

च। मे। पुष्टिः। च। मे। विभ्विति वि—भु। च (१)। मे। प्रभ्विति प्र—भु। च। मे। बहु। च। मे। भूयः। च। मे। पूर्णम्। च। मे। पूर्णतरमिति पूर्ण—तरम्। च। मे। अक्षितिः। च। मे। कूयवाः। च। मे। अन्नम्। च। मे। अक्षुत्। च। मे। व्रीहयः। च। मे। यवाः। च। मे। माषाः। च। मे। तिलाः। च। मे। मुद्गाः। च। मे। खल्वाः। च। मे। गोधूमाः। च। मे। मसुराः। च। मे। प्रियंगवः। च। मे। अणवः। च। मे। श्यामाकाः। च। मे। नीवाराः। च। मे (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके सप्तमप्रपाठके चतुर्थोऽनुवाकः॥ ४॥

---

(अथ चतुर्थकाण्डे सप्तमप्रपाठके चतुर्थोऽनुवाकः।)

---

चतुर्थमाह—

ऊर्क्क मे सूनृता च मे पयश्च मे रसश्च मे घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे विभु च मे प्रभु च मे बहु च मे भूयश्च मे पूर्णं च मे पूर्णतरं च मेऽक्षितिश्च मे कूयवाश्च मेऽन्नं च

मेऽक्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे गोधूमाश्च मे मसुराश्च मे प्रियंगवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे॥, इति॥

ऊर्गन्नसामान्यम्। सूनृता प्रियोक्तिः। पयःप्रभृतयोऽन्नविशेषाः। पयः क्षीरम्। रसस्तत्रत्यं सारम्। घृतमधुनी प्रसिद्धे। सग्धिर्बन्धुभिः सह भोजनमित्यर्थः। तथा सपीतिः सहपानम्। कृषिवृष्टी अन्नस्य हेतुत्वेन प्रसिद्धे। जैत्रं जयशीलं सुक्षेत्रमित्यर्थः। औद्भिद्यमुद्भिदां तरुगुल्मादीनामुत्पत्तिः। रयिः सुवर्णम्। रायो मणिमुक्तादिः। पुष्टं पूर्वोक्तमेव सुवर्णमतिसमृद्धम्। पुष्टिः शरीरपोषः। विभ्वादयोऽक्षित्यन्ता धान्यविषया उत्तरोत्तराभिवृद्धयः सप्तापि तारतम्येन द्रष्टव्याः। न केवलं प्रवृद्धान्येव धान्यानि किं त्वल्पान्यपीत्युच्यन्ते— कूयवाः कुत्सितयवाः। अन्नं प्रसिद्धम्। अक्षुदन्नसाध्यः क्षुत्परिहारः। व्रीहियवमाषतिलमुद्गाः प्रसिद्धाः। खल्वा मुद्गेभ्योऽपि स्थूलबीजाः। गोधूमाः प्रसिद्धाः। मसुरा मुद्गवत्सूपहेतवः। प्रियंगवः प्रसिद्धाः। अणवः सूक्ष्मशालयः। श्यामाका ग्राम्या धान्यविशेषाः। नीवारा आरण्याः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके चतुर्थोऽनुवाकः॥ ४॥

---

(अथ चतुर्थाष्टके सप्तमप्रपाठके पञ्चमोऽनुवाकः।)

---

अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे सीसं च मे त्रपुश्च मे श्यामं च मे लोहं च मेऽग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्यं च (१) मेऽकृष्टपच्यं च मे ग्राम्याश्च मे पशव

(वसोर्धाराद्यभिधानम्)

आरण्याश्चं यज्ञेनं कल्पन्तां वित्तं चं मे वित्तिश्च मे भूतं चं मे भूतिश्च मे वसुं च मे वसतिश्चं मे कर्मं च मे शक्तिश्च मेऽर्थश्च म एमंश्च म इतिंश्च मे गतिंश्च मे (२)॥

(कृष्टपच्यं चाष्टाचंत्वारिꣳशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके सप्तमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ चतुर्थाष्टके सप्तमप्रपाठके पञ्चमोऽनुवाकः।)

---

अश्मां। च। मे। मृत्तिंका। च। मे। गिरयंः। च। मे। पर्वंताः। च। मे। सिकंताः। च। मे। वनस्पतंयः। च। मे। हिरंण्यम्। च। मे। अयंः। च। मे। सीसंम्। च। मे। त्रपुंः। च। मे। श्यामम्। च। मे। लोहम्। च। मे। अग्निः। च। मे। आपंः। च। मे। वीरुधंः। च। मे। ओषंधयः। च। मे। कृष्टपच्यमितिं कृष्ट—पच्यम्। च (१)। मे। अकृष्टपच्यमित्यंकृष्ट—पच्यम्। च। मे। ग्राम्याः। च। मे। पशवंः। आरण्याः। च। यज्ञेनं। कल्पन्ताम्। वित्तम्। च। मे। वित्तिंः। च। मे। भूतम्। च। मे। भूतिंः। च। मे। वसुं। च। मे। वसतिः। च। मे। कर्मं। च। मे। शक्तिंः।

च । मे । अर्थः । च । मे । एमः । च । मे । इतिः ।
च । मे । गतिः । च । मे (२) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके
सप्तमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ चतुर्थकाण्डे सप्तमप्रपाठके पञ्चमोऽनुवाकः । )

---

पञ्चममाह—

अश्मा च मे मृत्तिका च मे गिरयश्च मे
पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे
हिरण्यं च मेऽयश्च मे सीसं च मे त्रपुश्च
मे श्यामं च मे लोहं च मेऽग्निश्च म
आपश्च मे वीरुधश्च म ओषधयश्च मे
कृष्टपच्यं च मेऽकृष्टपच्यं च मे ग्राम्याश्च
मे पशव आरण्याश्च यज्ञेन कल्पन्तां
वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च
मे वसु च मे वसतिश्च मे कर्म च
मे शक्तिश्च मेऽर्थश्च म एमश्च म
इतिश्च मे गतिश्च मे ॥ , इति ॥

अश्मादयः प्रसिद्धाः । श्यामं कृष्णायसं, लोहं, कांस्यताम्रादि अग्न्यादयः प्रसिद्धाः । ग्राम्यारण्यपशवो यज्ञेन निमित्तीभूतेन कल्पन्तां समर्था भवन्तु । वित्तं पूर्वलब्धम् । वित्तिर्भाविलाभः । भूतमैश्वर्योपेतं पुत्रादिकम् । भूतिः स्वकीयमैश्वर्यादिकम् । वसु निवाससाधनं गवादिकम् । वसतिर्निवासाधारो गृहादि । कर्माग्निहोत्रादिकम् । शक्तिस्तदनुष्ठानसामर्थ्यम् ।

---

१ ख. 'मित्तभू' ।

( वसोर्धाराद्यभिधानम् )

अर्थः प्रयोजनविशेषः । एम एतव्यं प्राप्तव्यं सुखम् । इतिरयनमिष्टप्राप्त्युपायः । गतिरिष्टप्राप्तिः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठके षष्ठोऽनुवाकः । )

---

अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे त्वष्टा च (१) म इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णुश्च म इन्द्रश्च मेऽश्विनौ च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे मूर्धा च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च मे (२) ।

( त्वष्टा च द्यौश्च म एकविंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके सप्तमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठके षष्ठोऽनुवाकः । )

---

अग्निः । च । मे । इन्द्रः । च । मे । सोमः । च । मे । इन्द्रः । च । मे । सविता । च । मे । इन्द्रः । च । मे । सरस्वती । च । मे । इन्द्रः । च । मे । पूषा । च । मे । इन्द्रः । च । मे । बृहस्पतिः । च । मे । इन्द्रः । च । मे । मित्रः । च । मे । इन्द्रः । च । मे । वरुणः । च । मे । इन्द्रः । च । मे । त्वष्टा । च । ( १ ) । मे । इन्द्रः । च । मे । धाता । च । मे । इन्द्रः । च । मे । विष्णुः । च । मे । इन्द्रः । च । मे । अश्विनौ । च । मे । इन्द्रः । च । मे । मरुतः । च । मे । इन्द्रः । च । मे । विश्वे । च । मे । देवाः । इन्द्रः । च । मे । पृथिवी । च । मे । इन्द्रः । च । मे । अन्तरिक्षम् । च । मे । इन्द्रः । च । मे । द्यौः । च । मे । इन्द्रः । च । मे । दिशः । च । मे । इन्द्रः । च । मे । मूर्धा । च । मे । इन्द्रः । च । मे । प्रजापतिरिति प्रजा—पतिः । च । मे । इन्द्रः । च । मे ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके सप्तमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

(अथ चतुर्थकाण्डे सप्तमप्रपाठके षष्ठोऽनुवाकः।)

षष्ठमाह—

अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णुश्च म इन्द्रश्च मेऽश्विनौ च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे मूर्धा च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च मे ॥ , इति ॥

अग्न्यादयः प्रसिद्धा देवताः। तैः सर्वैः सह समानभागोपेतत्वादिन्द्र एकैकया देवतया सह पठ्यते। दिक्शब्देन प्राच्याद्याश्चतस्र उच्यन्ते। मूर्धशब्देन चोर्ध्वा दिक्। सा च मुख्यत्वाभिप्रायेण पृथङ्निर्दिष्टा ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

(अथ चतुर्थाष्टके सप्तमप्रपाठके सप्तमोऽनुवाकः।)

अंशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपांशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म

आग्रयणश्चं मे वैश्वदेवश्चं मे ध्रुवश्चं मे वैश्वानरश्चं म ऋतुग्रहाश्चं ( १ ) मेऽतिग्राह्यांश्च म ऐन्द्राग्नश्चं मे वैश्वदेवश्चं मे मरुत्वतीयांश्च मे माहेन्द्रश्चं म आदित्यश्चं मे सावित्रश्चं मे सारस्वतश्चं मे पौष्णश्चं मे पात्नीवतश्चं मे हारियोजनश्चं मे ( २ ) ॥

( ऋतुग्रहाश्च चतुंस्त्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके सप्तमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठके सप्तमोऽनुवाकः । )

---

अꣳशुः । च । मे । रश्मिः । च । मे । अदांभ्यः । च । मे । अधिंपतिरित्यधिं—पतिः । च । मे । उपाꣳशुरित्युंप—अꣳशुः । च । मे । अन्तर्याम इत्यंन्तः—यामः । च । मे । ऐन्द्रवायव इत्यैन्द्र—वायवः । च । मे । मैत्रावरुण इतिं मैत्रा—वरुणः । च । मे । आश्विनः । च । मे । प्रतिप्रस्थान इतिं प्रति—प्रस्थानंः । च । मे । शुक्रः । च । मे । मन्थी । च । मे । आग्रयणः । च । मे । वैश्वदेव इतिं वैश्व—देवः । च । मे । ध्रुवः । च । मे । वैश्वानरः । च । मे । ऋतुग्रहा इत्यृंतु—ग्रहाः । च (१) ।

(वसोर्धाराद्यभिधानम्)

मे। अतिग्राह्यां इत्यंति—ग्राह्यांः। च। मे। ऐन्द्राग्न इत्यैन्द्र—अग्नः। च। मे। वैश्वदेव इतिं वैश्व—देवः। च। मे। मरुत्वतीयांः। च। मे। माहेन्द्र इतिं माहा—इन्द्रः। च। मे। आदित्यः। च। मे। सावित्रः। च। मे। सारस्वतः। च। मे। पौष्णः। च। मे। पात्नीवत इतिं पात्नी—वतः। च। मे। हारियोजन इतिं हारि—योजनः। च। मे (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके सप्तमप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

(अथ चतुर्थकाण्डे सप्तमप्रपाठके सप्तमोऽनुवाकः।)

---

सप्तममाह—

अꣳशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपाꣳशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म ऋतुग्रहाश्च मेऽतिग्राह्याश्च म ऐन्द्राग्नश्च मे वैश्वदेवश्च मे मरुत्वतीयाश्च मे माहेन्द्रश्च म आदित्यश्च मे सावित्रश्च मे सारस्वतश्च मे पौष्णश्च मे पात्नीवतश्च मे हारियोजनश्च मे॥, इति॥

अंश्वादयः सोमग्रहविशेषाः सोमप्रकरणे प्रसिद्धाः। तत्र रश्मिग्रहादर्श-

नादाभ्यस्यैव ग्रहस्य गृह्यमाणत्वदशां पृथक्कृत्य रश्मिशब्देन निर्दिश्यते। रश्मीनां तु तद्ग्रहणसाधनत्वात्। तथा च तद्ग्रहणमन्त्रः पठ्यते—"शुक्रं ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः" इति। अधिपतिशब्देन दधिग्रहो विवक्षितः। तस्य च श्रेष्ठत्वादाधिपत्यम्। अत एव श्रूयते—"ज्येष्ठो वा एष ग्रहाणाम्" इति। प्रतिप्रस्थानशब्देन द्विदेवत्यग्रहसहभावी प्रतिनिर्ग्राह्यो विवक्षितः। ध्रुवाख्यस्यैव ग्रहस्यावनयनदशायां वैश्वानरसूक्तपाठात्तदवस्थापन्नो वैश्वानरशब्देनोच्यते। आद्यो वैश्वदेवः प्रातःसवनगतः। उत्तरस्तृतीयसवनगतः। सारस्वतग्रहोऽभिषेचनीयाख्यत्रिक्रतौ द्रष्टव्यः। "सारस्वतं ग्रहं गृह्णाति" इति तत्राऽऽम्नानात्। एवं पौष्णोऽपि विकृतिगामी द्रष्टव्यः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठकेऽष्टमोऽनुवाकः। )

---

इ॒ध्मश्च॑ मे ब॒र्हिश्च॑ मे॒ वेदि॑श्च मे॒ धिष्णि॑याश्च मे॒ स्रुच॑श्च मे चमसाश्च॑ मे॒ ग्रावा॑णश्च मे॒ स्वर॑वश्च म उपर॒वाश्च॑ मेऽधि॒षव॑णे च मे द्रोणकल॒शश्च॑ मे वाय॒व्या॑नि च मे पूत॒भृच्च॑ म आधव॒नीय॑श्च म॒ आग्नी॑ध्रं च मे हवि॒र्धानं॑ च मे गृ॒हाश्च॑ मे॒ सद॑श्च मे पुरो॒डाशा॑श्च मे पच॒ताश्च॑ मेऽवभृ॒थश्च॑ मे स्वगाका॒रश्च॑ मे(१)॥

( गृ॒हाश्च॒ षोड॑श च। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके सप्तमप्रपाठकेऽष्टमोऽनुवाकः॥ ८॥

---

१ ख. च. च ज्येष्ठं। २ ख. घ. ङ. च. 'वसन्नो।

(अथ चतुर्थाष्टके सप्तमप्रपाठकेऽष्टमोऽनुवाकः।)

---

इध्मः। च। मे। बर्हिः। च। मे। वेदिः। च। मे। धिष्णियाः। च। मे। स्रुचः। च। मे। चमसाः। च। मे। ग्रावाणः। च। मे। स्वरवः। च। मे। उपरवा इत्युप—रवाः। च। मे। अधिषवणे इत्यधि—सवने। च। मे। द्रोणकलश इति द्रोण—कलशः। च। मे। वायव्यानि। च। मे। पूतभृदिति पूत—भृत्। च। मे। आधवनीय इत्या—धवनीयः। च। मे। आग्नीध्रमित्याग्नि—इध्रम्। च। मे। हविर्धानमिति हविः—धानम्। च। मे। गृहाः। च। मे। सदः। च। मे। पुरोडाशाः। च। मे। पचताः। च। मे। अवभृथ इत्यव—भृथः। च। मे। स्वगाकार इति स्वगा—कारः। च। मे (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके सप्तमप्रपाठकेऽष्टमोऽनुवाकः॥ ८॥

---

(अथ चतुर्थकाण्डे सप्तमप्रपाठके नवमोऽनुवाकः।)

---

अष्टममाह—

इध्मश्च मे बर्हिश्च मे वेदिश्च मे धिष्णियाश्च मे स्रुचश्च मे चमसाश्च मे ग्रावाणश्च मे स्वरवश्च म उपरवाश्च मेऽधिषवणे च मे द्रोणकलशश्च मे वायव्यानि च मे पूतभृच्च म आधव-

नीयश्च म आग्नीध्रं च मे हविर्धानं च मे गृहाश्च मे सदश्च मे पुरोडाशाश्च मे पचताश्च मेऽवभृथश्च मे स्वगाकारश्च मे ॥ , इति ॥

इध्मादीनि यज्ञाङ्गद्रव्याणि यज्ञप्रकरणे प्रसिद्धानि । गृहाः पत्नीशालादयः । पचताः शामित्रादयः । स्वगाकारः शंयुवाकः । तेन हि यथास्वं देवतानां हविर्गमनं क्रियते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठकेऽ-
ष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठके नवमोऽनुवाकः । )

---

अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मे शक्वरीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्तामृक्च मे साम च मे स्तोमश्च मे यजुश्च मे दीक्षा च मे तपश्च म ऋतुश्च मे व्रतं च मेऽहोरात्रयोर्वृष्ट्या बृहद्रथंतरे च मे यज्ञेन कल्पेताम् ( १ ) ।

( दीक्षाऽष्टादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके
सप्तमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठके नवमोऽनुवाकः । )

---

अग्निः । च । मे । घर्मः । च । मे । अर्कः । च ।

मे। सूर्यः। च। मे। प्राण इति प्र—अनः। च। मे। अश्वमेध इत्यश्व—मेधः। च। मे। पृथिवी। च। मे। अदितिः। च। मे। दितिः। च। मे। द्यौः। च। मे। शक्वरीः। अङ्गुलयः। दिशः। च। मे। यज्ञेन। कल्पन्ताम्। ऋक्। च। मे। साम। च। मे। स्तोमः। च। मे। यजुः। च। मे। दीक्षा। च। मे। तपः। च। मे। ऋतुः। च। मे। व्रतम्। च। मे। अहोरात्रयोरित्यहः—रात्रयोः। वृष्ट्या। बृहद्रथंतरे इति बृहत्—रथंतरे। च। मे। यज्ञेन। कल्पेताम् (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके सप्तमप्रपाठके नवमोऽनुवाकः॥ ९॥

---

(अथ चतुर्थकाण्डे सप्तमप्रपाठके नवमोऽनुवाकः।)

---

नवममाह—

अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मे शक्वरीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्तामृक्च मे साम च मे स्तोमश्च मे यजुश्च मे दीक्षा च मे तपश्च म ऋतुश्च मे व्रतं च मेऽहोरात्रयोर्वृष्ट्या बृहद्रथंतरे च मे यज्ञेन कल्पेताम्, इति॥

अग्निश्चीयमानो वह्निः। घर्मः प्रवर्ग्यः। इन्द्रायार्कवते पुरोडाशमिति विहितो यागोऽर्कः। सौर्यं चरुमिति विहितो यागः सूर्यः। प्राणाय स्वाहेति विहितो होमः प्राणः। अश्वमेधः प्रसिद्धः। पृथिव्यादयो देवताविशेषाः। शक्करीः शक्वर्यः। अङ्गुलयोऽङ्गुलिवद्विराट्पुरुषस्यावयवविशेषाः। दिशः प्राच्याद्याः। चशब्दाद्विदिशोऽपि। ताः सर्वा मे मदीयेन यज्ञेन कल्पन्तां स्वस्वव्यापारसमर्था भवन्तु। ऋगादयो मन्त्रविशेषाः। स्तोमः सामावृत्तिरूपं स्तोत्रम्। दीक्षा यजमानसंस्कारः। तपः पापक्षयार्थमनशनादि। ऋतुर्यज्ञाङ्गभूतः कालः। व्रतमेकस्तनादि। अहोरात्रयोः संबन्धिनी या वृष्टिस्तया मदीयं सस्यं कल्पतामिति शेषः। बृहद्रथंतरे सामनी, ते च मदीयेन यज्ञेन कल्पेतां स्वस्वव्यवहारसमर्थे भवेताम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके
नवमोऽनुवाकः॥ ९॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठके दशमोऽनुवाकः। )

---

गर्भाश्च मे वत्साश्च मे त्र्यविश्च मे त्र्यवी चं मे दित्यवाट्चं मे दित्यौही चं मे पञ्चाविश्च मे पञ्चावी चं मे त्रिवत्सश्च मे त्रिवत्सा चं मे तुर्यवाट्चं मे तुर्यौही चं मे पष्ठवाच्चं मे पष्ठौही चं म उक्षा चं मे वशा चं म ऋषभश्चं (१) मे वेहच्चं मेऽनड्वाञ्चं मे धेनुश्चं म आयुर्यज्ञेनं कल्पतां प्राणो यज्ञेनं कल्पतामपानो यज्ञेनं कल्पतां व्यानो यज्ञेनं कल्पतां चक्षुर्यज्ञेनं कल्पताꣳ श्रोत्रं यज्ञेनं कल्पतां

मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् (२)॥

(ऋषभश्च चत्वारिंशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके सप्तमप्रपाठके दशमोऽनुवाकः॥ १०॥

---

(अथ चतुर्थाष्टके सप्तमप्रपाठके दशमोऽनुवाकः।)

---

गर्भाः। च। मे। वत्साः। च। मे। त्र्यविरिति त्रि—अविः। च। मे। त्र्यवीति त्रि—अवी। च। मे। दित्यवाडिति दित्य—वाट्। च। मे। दित्यौही। च। मे। पञ्चाविरिति पञ्च—अविः। च। मे। पञ्चावीति पञ्च—अवी। च। मे। त्रिवत्स इति त्रि—वत्सः। च। मे। त्रिवत्सेति त्रि—वत्सा। च। मे। तुर्यवाडिति तुर्य—वाट्। च। मे। तुर्यौही। च। मे। पष्ठवादिति पष्ठ—वात्। च। मे। पष्ठौही। च। मे। उक्षा। च। मे। वशा। च। मे। ऋषभः। च (१)। मे। वेहत्। च। मे। अनड्वान्। च। मे। धेनुः। च। मे। आयुः। यज्ञेन। कल्पताम्। प्राण इति प्र—अनः। यज्ञेन। कल्पताम्। अपान इत्यप—अनः। यज्ञेन। कल्पताम्। व्यान इति वि—अनः। यज्ञेन। कल्पताम्। चक्षुः। यज्ञेन।

कल्पताम् । श्रोत्रम् । यज्ञेन । कल्पताम् । मनः । यज्ञेन । कल्पताम् । वाक् । यज्ञेन । कल्पताम् । आत्मा । यज्ञेन । कल्पताम् । यज्ञः । यज्ञेन । कल्पताम् ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके सप्तमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ चतुर्थकाण्डे सप्तमप्रपाठके दशमोऽनुवाकः । )

---

दशममाह—

गर्भाश्च मे वत्साश्च मे त्र्यविश्च मे त्र्यवी च मे दित्यवाट्च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट्च मे तुर्यौही च मे पष्ठवाच्च मे पष्ठौही च म उक्षा च मे वशा च म ऋषभश्च मे वेहच्च मेऽनड्वाञ्च मे धेनुश्च म आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् ॥, इति ॥

गर्भा वत्साश्च प्रसिद्धाः । सार्धसंवत्सरो वत्सरूपः पुंगवस्त्र्यविः । तथाविधा गौस्त्र्यवी । द्विसंवत्सर ऋषभो दित्यवाट् । तथाविधा गौर्दित्यौही । सार्धद्विसंवत्सर ऋषभः पञ्चाविः । तथाविधा गौः पञ्चावी । संवत्सरत्रयोपेत ऋषभस्त्रिवत्सः । तथाविधा गौस्त्रिवत्सा । सार्धत्रिवत्सर ऋषभस्तुर्यवाट् ।

( वसोर्धाराद्यभिधानम् )

तथाविधा गौस्तुर्यौही । चतुःसंवत्सर ऋषभः पष्ठवात् । तथाविधा गौः पष्ठौही । सेचनसमर्थ ऋषभ उक्षा । वन्ध्या गौर्वशा । उक्ष्णोऽप्यधिकवयस्क ऋषभः । गर्भघातिनी गौर्वेहत् । शकटस्य वाहकोऽनड्वान् । नवप्रसूता गौर्धेनुः । आयुरादयः प्रसिद्धाः । आत्मा शरीरम् । उक्ता आयुरादयो मदीयेन यज्ञेन कार्यक्षमा भवन्तु । यज्ञः करिष्यमाणोऽश्वमेधादिः । सोऽप्यनेनानुष्ठीयमानेन यज्ञेन स्वकार्यक्षमो भवतु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठक एकादशोऽनुवाकः । )

---

एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे नव च म एकादश च मे त्रयोदश च मे पञ्चदश च मे सप्तदश च मे नवदश च म एकविंशतिश्च मे त्रयोविंशतिश्च मे पञ्चविंशतिश्च मे सप्तविंशतिश्च मे नवविंशतिश्च म एकत्रिंशच्च मे त्रयस्त्रिंशच्च मे चतस्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे विंशतिश्च मे चतुर्विंशतिश्च मेऽष्टाविंशतिश्च मे द्वात्रिंशच्च मे षट्त्रिंशच्च मे चत्वारिंशच्च मे चतुश्चत्वारिंशच्च मेऽष्टाचत्वारिंशच्च मे वाजश्च प्रसवश्चापिजश्च

---

१ ख. च. °ज्ञः क्षिप्यमा° ।

क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चाऽऽन्त्यायन-
श्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च ( २ )॥

( त्रयस्त्रिंशच्च व्यश्निय एकादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके
सप्तमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठक एकादशोऽनुवाकः । )

---

एका । च । मे । तिस्रः । च । मे । पञ्च । च । मे । सप्त । च । मे । नव । च । मे । एकादश । च । मे । त्रयोदशेति त्रयः—दश । च । मे । पञ्चदशेति पञ्च—दश । च । मे । सप्तदशेति सप्त—दश । च । मे । नवदशेति नव—दश । च । मे । एकविंशतिरित्येक—विंशतिः । च । मे । त्रयोविंशतिरिति त्रयः—विंशतिः । च । मे । पञ्चविंशतिरिति पञ्च—विंशतिः । च । मे । सप्तविंशतिरिति सप्त—विंशतिः । च । मे । नवविंशतिरिति नव—विंशतिः । च । मे । एकत्रिंशदित्येक—त्रिंशत् । च । मे । त्रयस्त्रिंशदिति त्रयः—त्रिंशत् । च ( १ ) । मे । चतस्रः । च । मे । अष्टौ । च । मे । द्वादश । च । मे । षोडश । च । मे । विंशतिः । च । मे । चतुर्विंशतिरिति

(वसोर्धाराद्यभिधानम्)

चतुः—विंशतिः। च। मे। अष्टाविंशतिरित्यष्टा—विंशतिः। च। मे। द्वात्रिंशत्। च। मे। षट्त्रिंशदिति षट्—त्रिंशत्। च। मे। चत्वारिंशत्। च। मे। चतुश्चत्वारिंशदिति चतुः—चत्वारिंशत्। च। मे। अष्टाचत्वारिंशदित्यष्टा—चत्वारिंशत्। च। मे। वाजः। च। प्रसव इति प्र—सवः। च। अपिज इत्यपि—जः। च। क्रतुः। च। सुवः। च। मूर्धा। च। व्यश्नियं इति वि—अश्नियः। च। आन्त्यायनः। च। अन्त्यः। च। भौवनः। च। भुवनः। च। अधिपतिरित्यधि—पतिः। च (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके सप्तमप्रपाठक एकादशोऽनुवाकः॥ ११॥

---

(अथ चतुर्थकाण्डे सप्तमप्रपाठक एकादशोऽनुवाकः।)

---

एकादशमाह—

एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे नव च म एकादश च मे त्रयोदश च मे पञ्चदश च मे सप्तदश च मे नवदश च म एकविंशतिश्च मे त्रयोविंशतिश्च मे पञ्चविंशतिश्च मे सप्तविंशतिश्च मे नवविंशतिश्च म एकत्रिंशच्च मे त्रयस्त्रिंशच्च मे चत-

स्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे विꣳशतिश्च मे चतुर्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मेऽष्टाचत्वारिꣳशच्च मे वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चाऽऽन्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च ॥, इति ॥

एकादिशब्दाः संख्यापराः । वाजादयः सर्वे मम सन्त्विति शेषः । वाजोऽन्नम् । प्रसवस्तस्योत्पत्तिः । अपिजस्तस्यैव पुनः पुनरुत्पत्तिः । क्रतुः संकल्पो भोगादिविषयो यागो वा । सुवस्तस्योत्पत्तौ हेतुरादित्यः । अथवा वाजादयश्चैत्रादिमासानां नामविशेषाः । तदानीं ते सर्वे प्रीणन्त्विति वाक्यशेषः । चकाराः परस्परसमुच्चयार्था अनुक्तकालादिदेवतासमुच्चयार्था वा ॥

यथोक्तैकादशानुवाकरूपमन्त्रसाध्यं होमं विधत्ते—

" वसोर्धारां जुहोति वसोर्मे धाराऽसदिति वा एषा हूयते घृतस्य वा एनमेषा धाराऽमुष्मिँल्लोके पिन्वमानोप तिष्ठते " [ सं० का० ५ प्र० ४ अ० ८ ] इति ।

वसोर्धनस्य धारा सांतत्यं ययाऽऽहुत्या लभ्यते सेयमाहुतिर्वसोर्धारा तां जुहुयात् । तदेतदुक्तं निर्वचनं सूच्यते—यो यजमानो वसोर्धारां जुहोति स प्रथमं मम धनस्य नैरन्तर्यं भूयादित्येवं कामयते । ततस्तेनेयमाहुतिर्हूयते । तेन होमेनैनं यजमानं स्वर्गे लोके घृतस्य धारा पिन्वमाना प्रीणयति सेवते ॥

तत्र द्रव्यं विधत्ते—

" आज्येन जुहोति तेजो वा आज्यं तेजो वसोर्धारा तेजसैवास्मै तेजोऽव रुन्धे " [ सं० का० ५ प्र० ४ अ० ८ ] इति ।

सुवर्णादिधनसमृध्देरपि घृतवत्तेजोरुपत्वं प्रसिध्दम् ॥

कामप्राप्तिहेतुत्वेनापि तामाहुतिं प्रशंसति—

" अथो कामा वै वसोर्धारा कामानेवाव रुन्धे " [ सं० का० ५ प्र० ४ अ ० ८ ] इति ॥

अन्वयव्यतिरेकाभ्यां सांतत्यं विधत्ते—

---

१ ख, च. °ते—वसोर्मे धाराऽसदित्यादिना । यो । २ ख. च. °रा प्रीं° ।

(वसोर्धाराद्यभिधानम्)

" यं कामयेत प्राणानस्यान्नाद्यं वि च्छिन्द्यामिति विग्राहं तस्य जुहुयात्प्राणानेवास्यान्नाद्यं वि च्छिनत्ति यं कामयेत प्राणानस्यान्नाद्यꣳ सं तनुयामिति संततां तस्य जुहुयात्प्राणानेवास्यान्नाद्यꣳ सं तनोति " [ सं० का० ५ प्र० ४ अ० ८ ] इति।

अस्य यजमानस्य प्राणानन्नं च विच्छिन्द्यामित्येवं द्विषन्नध्वर्युरेतं मन्त्रं मध्ये विगृह्य जुहुयात्। यस्तु प्राणानामन्नस्य च सांतत्यं कामयते सोऽयं संततामाहुतिं जुहुयात्॥

अथ वाजश्च म इत्यादीन्यन्नं च मेऽक्षुच्च म इत्यतःप्राक्तनानि चतुश्चत्वारिंशदधिकशतसंख्याकानि वाक्यानि। तानि द्वादशसंघरूपेण विभज्य प्रशंसति—

" द्वादश द्वादशानि जुहोति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मा अन्नमव रुन्धे " [ सं० का० ५ प्र० ४ अ० ८ ] इति।

द्वादशानां वाक्यानां समूहो द्वादशम्। तानि च द्वादशानि पुनर्द्वादशसंख्याकानि। तथा सति चतुश्चत्वारिंशदधिकशतसंख्या संपद्यते। तदन्तर्गतद्वादशसंख्याया मासद्वारा संवत्सररूपत्वात्संवत्सरसाध्यमन्नं प्राप्नोति॥

अथ चतुर्थानुवाकगतानि वाक्यानि प्रशंसति—

" अन्नं च मेऽक्षुच्च म इत्याहैतद्वा अन्नस्य रूपꣳ रूपेणैवान्नमव रुन्धे " [ सं० का० ५ प्र० ४ अ० ८ ] इति।

अन्नमित्यादिभिर्वाक्यैर्यत्प्रतिपाद्यं तत्सर्वमन्नस्य रूपं, क्षुदभावस्यान्नसाध्यत्वादुपरितनानां च व्रीह्यादीनामन्नसाधनत्वात्॥

अथ पञ्चमानुवाकगतवाक्यानि प्रशंसति—

" अग्निश्च म आपश्च म इत्याहैषा वा अन्नस्य योनिः सयोन्येवान्नमव रुन्धे " [ सं० का० ५ प्र० ४ अ० ८ ] इति।

अग्नेः पाकहेतुत्वादन्नयोनित्वम्। अपां चौषधिजनकत्वादन्नयोनित्वम्। एतन्मन्त्रपाठेनानेकप्रकारकारणसहितमन्नं प्राप्नोति॥

अथ षष्ठानुवाकगतानि वाक्यानि प्रशंसति—

" अर्धेन्द्राणि जुहोति देवता एवाव रुन्धे यत्सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तम इन्द्रमुत्तरमाहेन्द्रियमेवास्मिन्नुपरिष्टाद्दधाति " [ सं० का० ५ प्र० ४ अ० ८ ] इति।

येषां वाक्यानामर्धेष्विन्द्रः पठ्यते तान्यर्धेन्द्राणि, तेषु वाक्येष्वग्नीषोमा[1]दीनां देवतानां पूर्वार्धेष्वाम्नातत्वाद्देवताः प्राप्नोति । यद्यस्मात्कारणात्सर्वेषां वाक्यानां प्रत्यर्धमिन्द्रः[2] पठ्यते तस्मात्कारणादयमिन्द्रो भूयिष्ठभाक्तमो भूयिष्ठं प्रभूतं हविर्भजतीति भूयिष्ठभाक्, अतिशयेन तादृशः । यस्माद्वेद इन्द्रमन्त्रोत्तरार्धगतं प्राह तस्मादस्मिन्यजमानेऽप्युपरिष्टाच्छिरोभागे चक्षुरादीन्द्रियं स्थापयति ॥

सप्तमाष्टमयोरनुवाकयोरवस्थितानिं वाक्यानि प्रशंसति—

" यज्ञायुधानि जुहोति यज्ञो वै यज्ञायुधानि यज्ञमेवाव रुन्धेऽथो एतद्वै यज्ञस्य रूप९ रूपेणैव यज्ञमव रुन्धे " [ सं० का० ५ प्र० ४ अ० ८ ] इति ।

अंश्वदाभ्यादिग्रहरूपाणि यज्ञसाधनानि साक्षाद्यज्ञनिष्पादकत्वाद्यज्ञस्वरूपाणि । इध्मबर्हिरादिभिर्यज्ञः[3] परम्परया निरूप्यते, न तु ग्रहैरिव साक्षान्निष्पाद्यते[4] । तस्मात्तानि यज्ञस्य रूपम् । एतैरन्तरङ्गैर्बहिरङ्गैश्च यज्ञायुधैर्यज्ञं प्राप्नोति ॥

अन्तिमस्य स्वगाकारवाक्यस्य तात्पर्यं दर्शयति—

" अवभृथश्च मे स्वगाकारश्च म इत्याह स्वगाकृत्यै " [ सं० का० ५ प्र० ४ अ० ८ ] इति ।

स्वाधीनत्वकरणायेत्यर्थः ॥

नवमानुवाके पूर्वार्धगतानि वाक्यानि प्रशंसति—

" अग्निश्च मे घर्मश्च म इत्याहैतद्वै ब्रह्मवर्चसस्य रूप९ रूपेणैव ब्रह्मवर्चसमव रुन्धे " [ सं० का० ५ प्र० ४ अ० ८ ] इति ।

अग्न्यादिभिर्ब्राह्मणकर्मनिष्पत्तेरेतेषां ब्रह्मवर्चसरूपत्वम् ॥

एतस्मिन्नेवानुवाक उत्तरार्धगतानि वाक्यानि प्रशंसति—

" ऋक्च मे साम च म इत्याहैतद्वै छन्दसा९ रूप९ रूपेणैव छन्दा९स्यव रुन्धे " [ सं० का० ५ प्र० ४ अ० ८ ] इति ।

ऋगादिकं छन्दसां वेदानां स्वरूपमिति प्रसिद्धम् ॥

दशमानुवाके पूर्वार्धगतवाक्यानि प्रशंसति—

" गर्भाश्च मे वत्साश्च म इत्याहैतद्वै पशूना९ रूप९ रूपेणैव पशूनव रुन्धे " [ सं० का० ५ प्र० ४ अ० ८ ] इति ।

---

१ ख. च. 'ष्वग्निसोमा॰' । २ ख. च. 'न्द्रः प्रत्येकमुत्तरार्ध इन्द्रः प॰' । ३ ख. ग. ङ. च इध्माब॰' । ४ ख. च. 'न्निष्पद्य॰' ।

(वसोर्धाराद्यभिधानम्)

गर्भवत्सादीनां पशुरूपत्वं प्रसिद्धम् ॥

एतस्मिन्नेवानुवाक उत्तरार्धगतानि वाक्यानि प्रशंसति—

" कल्पाञ्जुहोत्यक्लृप्तस्य क्लृप्त्यै " [ सं० का० ५ प्र० ४ अ० ८ ] इति।

आयुर्यज्ञेन कल्पतामित्यादयो मन्त्राः कल्पाः। पूर्वं यद्यद्वस्त्वक्लृप्तं स्वस्वकार्यसमर्थं न भवति तस्य तस्य सामर्थ्यायायं होमः ॥

एकादशानुवाके पूर्वभागगतानि वाक्यानि प्रशंसति—

" युग्मदयुजे जुहोति मिथुनत्वाय " [सं०का० ५ प्र० ४ अ० ८] इति।

चतस्रश्च मेऽष्टौ च म इत्यादिकं समसंख्यारूपं युग्मम्(त्)। एका च मे तिस्रश्च म इत्यादि विषमसंख्यारूपमयुग्मं (क्), राशिद्वयं स्त्रीपुरुषवत्परस्परविलक्षणत्वान्मिथुनत्वाय संपद्यते ॥

राशिद्वयेऽप्युत्तरोत्तराधिक्यं प्रशंसति—

" उत्तरावती भवतोऽभिक्रान्त्यै " [सं० का० ५ प्र० ४ अ० ८] इति।

एकत्वादुत्तरं त्रित्वं, तस्माच्चोत्तरं पञ्चत्वं, तथा चतुष्ट्वादुत्तरमष्टत्वम्। तस्माच्चोत्तरं द्वादशत्वम्। एवमुभयोरुत्तरावत्त्वेनाभितो व्याप्तिर्भवति ॥

युग्मायुग्मसंख्यावाचिशब्दानां तात्पर्यं दर्शयति—

" एका च मे तिस्रश्च म इत्याह देवछन्दसं वा एका च तिस्रश्च मनुष्यछन्दसं चतस्रश्चाष्टौ च देवछन्दसं चैव मनुष्यछन्दसं चाव रुन्धे " [ सं० का० ५ प्र० ४ अ० ८ ] इति।

विषमसंख्यया देवानां प्रियाणि च्छन्दांसि निष्पाद्यन्ते, समसंख्यया तु मनुष्यप्रियाणि। अतस्तदुभयं प्राप्नोति ॥

राशिद्वयेऽप्युत्तरोत्तरसंख्यावृद्धेरवधिं प्रशंसति—

" आ त्रयस्त्रिꣳशतो जुहोति त्रयस्त्रिꣳशद्वै देवता देवता एवाव रुन्ध आऽष्टाचत्वारिꣳशतो जुहोत्यष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनव रुन्धे " [ सं० का० ५ प्र० ४ अ० ८ ] इति ॥

अस्मिन्ननुवाक उत्तरभागगतानि वाक्यानि प्रशंसति—

" वाजश्च प्रसवश्चेति द्वादशं जुहोति द्वादश मासाः संवत्सरः संवत्सर एव प्रति तिष्ठति " [ सं० का० ५ प्र० ४ अ० ८ ] इति ॥

अत्र विनियोगसंग्रहः—

" अग्नाविष्णू वसोर्धारामेकादशभिरादितः।
अनुवाकैर्जुहोत्येकामाहुतिं संततां घृतात् ॥ १ ॥ " इति ॥

---

१ ख. च. 'युजं, रा'।

अथ मीमांसा ।

द्वादशाध्यायस्य तृतीयपादे चिन्तितम्—

मन्त्रादौ किं वसोर्धारा मन्त्रान्ते वाऽत्र संततेः ।
आद्यो होमेषु संतत्या द्वादशान्तेषु तद्भुतिः ॥

अग्नौ किंचित्कर्म विहितं "संततां वसोर्धारां जुहोति" इति । तत्र सांतत्यं निश्छिद्रत्वम् । तच्च मन्त्रकर्मणोः सहोपक्रमे सत्युपपद्यते । तस्मान्मन्त्रादौ कर्मसंनिपात इति प्राप्ते ब्रूमः—तस्मिन्वसोर्धाराख्ये कर्मणि द्वादश द्वादशानि जुहोतीति श्रुतम् । द्वादशभिर्मन्त्रवाक्यैः संपाद्यमेकमाहुतिस्वरूपं द्वादशम् । तद्यथा—"वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे" इत्येतैर्द्वादशभिर्मन्त्रवाक्यैरेकाऽऽहुतिर्होतव्या । एकादशोत्तराहुतयः "प्राणश्च मेऽपानश्च मे" इत्यादिभिर्निष्पाद्यन्ते । एतेषु च होमद्वादशकेषु मध्ये विलम्बाभावः सांतत्यं, न तु मन्त्रकर्मणोः सहोपक्रमः । तस्मात्पूर्वन्यायेन मन्त्रान्ते कर्मसंनिपातस्य नास्ति विघ्नः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठके द्वादशोऽनुवाकः । )

---

वाजो नः सप्त प्रदिशश्चतस्रो वा परावतः । वाजो नो विश्वैर्देवैर्धनसाताविहावतु । विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः । विश्वे नो देवा अवसाऽऽगमन्तु विश्वमस्तु द्रविणं वाजो अस्मे । वाजस्य प्रसवं देवा रथैर्याता हिरण्ययैः । अग्निरिन्द्रो बृहस्पतिर्मरुतः सोमपीतये । वाजेवाजेऽवत वाजिनो नो धनेषु ( १ ) विप्रा अमृता ऋतज्ञाः ।

अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः । वाजः पुरस्तादुत मध्यतो नो वाजो देवाꣳ ऋतुभिः कल्पयाति । वाजस्य हि प्रसवो नन्नमीति विश्वा आशा वाजपतिर्भवेयम् । पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाम् । पयस्वतीः प्रदिशः सन्तु मह्यम् । सं मा सृजामि पयसा घृतेन सं मा सृजाम्यप: ( २ ) ओषधीभिः । सोऽहं वाजꣳ सनेयमग्ने । नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची । द्यावा क्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयन्द्रविणोदाः । समुद्रोऽसि नभस्वानार्द्रदानुः शंभूर्मयोभूरभि मा वाहि स्वाहा मारुतोऽसि मरुतां गणः शंभूर्मयोभूरभि मा वाहि स्वाहाऽवस्युरसि दुवस्वाञ्छंभूर्मयोभूरभि मा वाहि स्वाहा ( ३ ) ॥

( धेनेष्वपो दुवस्वाञ्छंभूर्मयोभूरभि मा द्वे च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके सप्तमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठके द्वादशोऽनुवाकः । )

---

वाजः । नः । सप्त । प्रदिश इति प्र—दिशः ।

चतस्रः । वा । परावत इति परा—वतः । वाजः । नः । विश्वैः । देवैः । धनसाताविति धन—सातौ । इह । अवतु । विश्वे । अद्य । मरुतः । विश्वे । ऊती । विश्वे । भवन्तु । अग्नयः । समिद्धा इति सम्—इद्धाः । विश्वे । नः । देवाः । अवसा । एति । गमन्तु । विश्वम् । अस्तु । द्रविणम् । वाजः । अस्मे इति । वाजस्य । प्रसवमिति प्र—सवम् । देवाः । रथैः । यात । हिरण्ययैः । अग्निः । इन्द्रः । बृहस्पतिः । मरुतः । सोमपीतय इति सोम—पीतये । वाजेवाज इति वाजे—वाजे । अवत । वाजिनः । नः । धनेषु ( १ ) । विप्राः । अमृताः । ऋतज्ञा इत्यृत—ज्ञाः । अस्य । मध्वः । पिबत । मादयध्वम् । तृप्ताः । यात । पथिभिरिति पथि—भिः । देवयानैरिति देव—यानैः । वाजः । पुरस्तात् । उत । मध्यतः । नः । वाजः । देवान् । ऋतुभिरित्यृतु—भिः । कल्पयाति । वाजस्य । हि । प्रसव इति प्र—सवः । नन्नमीति । विश्वाः । आशाः । वाजपतिरिति वाज—पतिः । भवेयम् । पयः । पृथिव्याम् । पयः । ओषधीषु । पयः । दिवि । अन्तरिक्षे । पयः । धाम् । पयस्वतीः । प्रदिश इति प्र—दिशः । सन्तु । मह्यम् । समिति । मा ।

सृजामि। पयसा। घृतेन। समिति। मा। मृजामि। अपः (२)। ओषधीभिरित्योषधि—भिः। सः। अहम्। वाजम्। सनेयम्। अग्ने। नक्तोषासा। समनसेति स—मनसा। विरूपे इति वि—रूपे। धापयेते इति। शिशुम्। एकम्। समीची इति। द्यावा। क्षाम। रुक्मः। अन्तः। वीति। भाति। देवाः। अग्निम्। धारयन्। द्रविणोदा इति द्रविणः—दाः। समुद्रः। असि। नभस्वान्। आर्द्रदानुरित्यार्द्र—दानुः। शंभूरिति शं—भूः। मयोभूरिति मयः—भूः। अभीति। मा। वाहि। स्वाहा। मारुतः। असि। मरुताम्। गणः। शंभूरिति शं—भूः। मयोभूरिति मयः—भूः। अभीति। मा। वाहि। स्वाहा। अवस्युः। असि। दुवस्वान्। शंभूरिति शं—भूः। मयोभूरिति मय—भूः। अभीति। मा। वाहि। स्वाहा (३)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके सप्तमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

(अथ चतुर्थकाण्डे सप्तमप्रपाठके द्वादशोऽनुवाकः।)

---

एतैरेकादशभिरनुवाकैर्वसोर्धाराहोम उक्तः। अथ द्वादशे वाजप्रसवीयहोम उच्यते।

कल्पः—“वाजप्रसवीयं जुहोति सप्त ग्राम्या ओषधयः सप्ताऽऽरण्याः

पृथगन्नानि द्रवीकृत्यौदुम्बरेण स्रुवेण वाजस्येमं प्रसवः सुषुव इति ग्राम्या हुत्वाऽऽरण्याञ्जु(जु)होति" इति ।

तत्र ग्राम्याणां मन्त्राः प्रथमकाण्डे सप्तमप्रपाठके दशमानुवाके समाम्नाताः। आरण्यानां मन्त्रा अत्राऽऽम्नायन्ते ॥

तत्राऽऽरण्यस्य वेणुधान्यस्य होमाय प्रथमामृचमाह—

वाजो नः सप्त प्रदिशश्चतस्रो वा परावतः ।
वाजो नो विश्वैर्देवैर्धनसाताविहावतु ।, इति ।

प्राच्याद्याश्चतस्रो दिश ऊर्ध्वाधोमध्यमास्तिस्र एताः सप्त प्रदिशः प्रकृष्टा दिशो वाजोऽन्नस्वरूपा अन्नप्रदा भवन्त्वित्यर्थः । तथा परावतोऽत्यन्तदूरवर्तिन्यश्चतस्रो वाऽऽग्नेय्याद्याश्चतुःसंख्याका विदिशो विदूरस्था इवावभासन्ते। ताश्चास्माकमन्नप्रदा भवन्तु । स वाजोऽन्नमिहास्मिन्देशे धनसातौ धनप्रदे यज्ञे विश्वैर्देवैः प्रेरितः सन्नोऽस्मानवतु रक्षतु ॥

अथ श्यामाकधान्यस्य होमाय द्वितीयामृचमाह—

विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः । विश्वे नो देवा अवसाऽऽ गमन्तु विश्वमस्तु द्रविणं वाजो अस्मे ।, इति ।

अद्यास्मिन्दिने विश्वे सर्वेऽपि मरुतः, तथाऽन्ये विश्वे सर्वेऽपि देवा ऊती रक्षणाय भवन्तु प्रवर्तन्ताम् । तथा विश्वे सर्वेऽप्यग्नयः समिद्धाः सम्यक्प्रज्वलिता भवन्तु । तथा विश्वे सर्वेऽपि देवा नोऽस्माकमवसा रक्षणेन निमित्तभूतेनाऽऽगमन्त्वागच्छन्तु । तथा विश्वं द्रविणं सर्वमपि धनमस्मे अस्मासु अस्तु भवतु ॥

अथ नीवारहोमाय तृतीयामृचमाह—

वाजस्य प्रसवं देवा रथैर्याता हिरण्ययैः। अग्निरिन्द्रो बृहस्पतिर्मरुतः सोमपीतये ।, इति ।

[ हे देवा ] वाजस्य प्रसवमस्मदीयस्यान्नस्य प्रेरणसंपादनमुद्दिश्याग्न्यादयस्त्रयो देवाः (मरुतश्च) सोमपीतये सोमपानार्थं हिरण्ययैर्हिरण्मयैः सुवर्णनिर्मितै रथैः सह यातास्मद्यागस्थानं प्राप्नुत ॥

अथ जर्तिलहोमाय चतुर्थीमृचमाह—

वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता

ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं
तृप्ता यात पथिभिर्देवयानैः।, इति।

हे वाजिनोऽन्नसंपादका देवा वाजेवाजे तत्तदन्ननिमित्तं धनेषु धननिमित्तं च नोऽस्मानवत। विप्रा ब्राह्मणवच्छुद्धा अमृता मरणरहिता ऋतज्ञा ऋतं सत्यं यज्ञं वा जानन्तीत्यृतज्ञाः। तादृशा हे देवा अस्य मध्व इदं मधुरमन्नं पिबत पानोपलक्षितं भोजनं कुरुत। ततो मादयध्वं हृष्टा भवत। ततस्तृप्ताः सन्तो देवयानैः पथिभिर्यात स्वं स्वं स्थानं +प्राप्नुत॥

अथ गवीधुकहोमाय पञ्चमीमृचमाह—

वाजः पुरस्तादुत मध्यतो नो वाजो देवाꣳ ऋ-
तुभिः कल्पयाति। वाजस्य हि प्रसवो नन्नमी-
ति विश्वा आशा वाजपतिर्भवेयम्।, इति।

नोऽस्माकं पुरस्तात्पूर्वे वयसि उत मध्यतो मध्यमे वयसि वाजोऽन्नं भवत्विति शेषः। किंचायं वाज ऋतुभिः कालविशेषैर्देवान्कल्पयाति तत्तत्काले यष्टव्यान्देवान्संपादयति। सति ह्यन्ने यष्टुं शक्यते। हि यस्माद्वाजस्यान्नस्य प्रसवः प्रेरणं समृद्धिर्विश्वा आशाः सर्वा अपि दिशो नन्नमीत्यतिशयेनावनताः करोति, अन्नसमृद्धौ सत्यां सर्वदिग्वर्तिनः प्राणिनः स्वाधीना भवन्ति, तस्मादहं वाजपतिर्भवेयम्॥

अथ मर्कटकारण्य[1]धान्यहोमाय षष्ठीमृचमाह—

पयः पृथिव्यां पय ओषधीषु पयो
दिव्यन्तरिक्षे पयो धाम्। पयस्व-
तीः प्रदिशः सन्तु मह्यम्,। इति।

वाजसमृध्यर्थं पृथिव्यां पयो जलं धामहं स्थापयामि। तथौषधीष्वपि पयो धाम्। तथा दिवि द्युलोकेऽपि पयो धाम्। अन्तरिक्षेऽपि पयो धाम्। प्रदिशः प्रकृष्टाः सर्वा दिशः पयस्वतीः सन्तु मह्यं मदर्थं जलवत्यो भवन्तु॥

अथ गार्मुतहोमाय कुलत्थहोमाय वा सप्तमीमृचमाह—

सं मा सृजामि पयसा घृतेन सं मा सृजाम्यप
ओषधीभिः। सोऽहं वाजꣳ सनेयमग्ने।, इति।

---

+ सर्वपुस्तकेषु प्राप्नुवतेति प्रामादिकः पाठः।

---

१ ख. च. 'ण्यहो'।

हेऽग्ने त्वत्प्रसादान्मामहं पयसा क्षीरेण संसृजामि संयोजयामि। तथा मां घृतेन संसृजामि। अपश्चौषधीभिः संसृजामि। क्षीरादिभिः संसृष्टः सोऽहं वाजमन्नं त्वद्दत्तं सनेयं लभेयमन्येभ्योऽहमद्याम् ॥

एतैर्मन्त्रैः साध्यं होमं विधत्ते—

" अग्निर्देवेभ्योऽपाक्रामद्भागधेयमिच्छमानस्तं देवा अब्रुवन्नुप न आ वर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै मह्यमेव वाजप्रसवीयं जुहवन्निति तस्मादग्नये वाजप्रसवीयं जुह्वति यद्वाजप्रसवीयं जुहोत्यग्निमेव तद्भागधेयेन समर्धयत्यथो अभिषेक एवास्य सः" [ सं० का० ५ प्र० ४ अ० ९ ] इति।

पूर्वं भागरहितोऽग्निर्भागमपेक्षमाणो देवेभ्योऽपरक्तः क्वाप्यगमत्। स पुनर्देवैर्हविर्वहनायाऽऽहूतः स्वभागत्वेन वाजप्रसवीयं होमं वव्रे। तस्मात्सर्वे यजमाना अग्नये वाजप्रसवीयं होमं जुह्वति। अतोऽत्रापि तद्धोमेनाग्निमेव स्वभागेन समर्धयति। अपि च स होमोऽस्याग्नेरभिषेकस्थानीयस्तस्मात्कर्तव्यः ॥

अथ प्रथमकाण्ड आम्नातैर्वाजस्येमं प्रसव इत्यादिभिः सहात्राऽऽम्नातानां होममन्त्राणां संख्यां विधत्ते—

"चतुर्दशभिर्जुहोति सप्त ग्राम्या ओषधयः सप्ताऽऽरण्या उभयीषामवरुद्ध्यै" [ सं० का० ५ प्र० ४ अ० ९ ] इति।

तिलमाषव्रीहियवप्रियङ्ग्वणवो गोधूमा इति सप्त ग्राम्याः। वेणुश्यामाकादय उदाहृता आरण्याः। उभयविधधान्यसमृद्धये चतुर्दशभिर्होमः ॥

एकैकेन मन्त्रेणैकैकस्य होमं विधत्ते—

" अन्नस्यान्नस्य जुहोत्यन्नस्यान्नस्यावरुद्ध्यै " [ सं० का० ५ प्र० ४ अ० ९ ] इति।

असांकर्येण तत्तदन्नप्राप्त्यर्थमीदृशो होमः ॥

चोदकप्राप्तां जुहूं बाधितुं साधनान्तरं विधत्ते—

" औदुम्बरेण स्रुवेण जुहोत्यूर्ग्वा उदुम्बर ऊर्गन्नमूर्जैवास्मा ऊर्जमन्नमव रुन्धे " [ सं० का० ५ प्र० ४ अ० ९ ] इति।

ऊर्क्शब्दः स्वादुरसवाची। उदुम्बरान्नयोस्तथाविधरसोपेतत्वादूर्ग्रूपत्वम् ॥

अत्र क्रत्वङ्गतया धावनं निषेधति—

" अग्निर्वै देवानामभिषिक्तोऽग्निचिन्मनुष्याणां तस्मादग्निचिद्वर्षति न धावेत् " [ सं० का० ५ प्र० ४ अ० ९ ] इति।

देवानां मध्ये यथा चीयमानोऽग्निरभिषिक्तस्तथा यजमानानां मध्येऽग्निचिदभिषिक्तः। वृष्टिश्चाभिषेकस्वरूपा। तस्माद्वर्षसमये धावनं न कुर्यात् ॥

(वाजप्रसवीयहोमाभिधानम्)

प्रमादाद्धावने पुनरावृत्तिं विधत्ते--

"अवरुद्धꣳ ह्यस्यान्नमन्नमिव खलु वै वर्षं यद्धावेदन्नाद्याद्धावेदुपावर्तेता-न्नाद्यमेवाभ्युपावर्तते" [ सं० का० ५ प्र० ४ अ० ९ ] इति।

हि यस्मादस्याग्निचितोऽन्नं सर्वमवरुद्धं संपादितं, वृष्टिश्चान्नहेतुत्वादन्न-मेव। अतो वृष्टिमोचनपरिहाराय धावने सत्यन्नाद्यादपगच्छति। अतोऽन्न-प्राप्तये पुनरप्यावर्तेत॥

कल्पः--"नक्तोषासेति कृष्णायै श्वेतवत्सायै पयसा हुत्वा" इति।

पाठस्तु--

नक्तोषासा समनसा विरूपे धापयेते शिशुमे-कꣳ समीची। द्यावा क्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयन्द्रविणोदाः।, इति।

नक्तं चोषाश्च नक्तोषासा रात्रिदिवसावित्यर्थः। समनसा परस्परमैक-मत्ययुक्ते विरूपे रात्रिः कृष्णा दिवसः शुक्ल इत्येवं विलक्षणरूपे समीची समी-च्यावनुकूले सत्यावेकं शिशुमग्निरूपं धापयेते यजमानकर्तृकं कर्मानुष्ठानं संपादयतः। द्यावा द्युलोके क्षाम क्षितौ, अन्तस्तदुभयमध्यवर्तिन्यन्तरिक्षे विभाति रुक्मो रोचमानोऽयमग्निर्विशेषेण प्रकाशते। दीव्यन्ति व्यवहर-न्तीति देवाः प्राणाः। ते च द्रविणोदा यागद्वारेण धनरूपं फलं प्रयच्छन्ति। तादृशा यजमानस्य प्राणा अग्निमेतं धारयन्धृतवन्तः॥

एतन्मन्त्रसाध्यं होमं विधत्ते--

"नक्तोषासेति कृष्णायै श्वेतवत्सायै पयसा जुहोत्यह्नैवास्मै रात्रिं प्र दापयति रात्रियाऽहरहोरात्रे एवास्मै प्रत्ते काममन्नाद्यं दुहाते" [ सं० का० ५ प्र० ४ अ० ९ ] इति।

अयमध्वर्युरस्मै यजमानायाह्ना वत्सरूपेण रात्रिं धेनुसमां प्रदापयति पयः-समं फलं रात्र्या प्रत्तं करोति। तथैव रात्र्या वत्सरूपया धेनुसममहः प्रदा-पयति अन्योन्यदानायैव मन्त्रेऽस्मिन्रात्र्यहनी सह निर्दिश्येते। ते चान्योन्यं प्रत्ते सती अस्मै यजमानायान्नाद्यरूपं कामं संपादयतः॥

यदुक्तं सूत्रकारेण—"षड्भिः पर्यायैर्द्वादश राष्ट्रभृतो जुहोत्यृताषाडृतधा-मेति पर्यायमनुद्रुत्य तस्मै स्वाहेति प्रथमामाहुतिं जुहोति ताभ्यः स्वाहेत्युत्तरा-मेवमितरान्पर्यायान्विभजति भुवनस्य पत इति पर्यायाणां सप्तम्याहुतीनां

---

१ ख. च. 'रेणानुकूलं फ।

त्रयोदश्येतेन व्याख्याता भुवनस्य पत इति रथमुखे पञ्चाऽऽहुतीर्जुहोति दश वा " इति, तत्र ऋताषाडित्यादिमन्त्रसाध्यं होमं विधत्ते—

" राष्ट्रभृतो जुहोति राष्ट्रमेवाव रुन्धे " [सं०का०५ प्र० ४ अ०९] इति ।

राष्ट्रभृत्संज्ञका ऋताषाडित्यादिमन्त्रास्तृतीयकाण्डे चतुर्थप्रपाठके सप्तमानुवाके समाम्नाताः ॥

अथ पर्यायसंख्यां विधत्ते—

" षड्भिर्जुहोति षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठति " [ सं० का० ५ प्र० ४ अ० ९ ] इति ।

राष्ट्रभृत्स्वेवोपरितनाहुतिषु पञ्चसंख्यापक्षं विधत्ते—

" भुवनस्य पत इति रथमुखे पञ्चाऽऽहुतीर्जुहोति वज्रो वै रथो वज्रेणैव दिशोऽभि जयति " [ सं० का० ५ प्र० ४ अ० ९ ] इति ।

ईषाग्रं रथमुखम् । " स्फ्यस्तृतीयꣳ रथस्तृतीयम् " इत्यत्र रथस्य वज्रत्वं स्पष्टमाम्नातम् ॥

कल्पः—"समुद्रोऽसि नभस्वानित्यञ्जलिना त्रीणि वातनामानि जुहोति" इति ।

तेषु प्रथमामाह—

समुद्रोऽसि नभस्वानार्द्रदानुः शंभूर्मयो-
भूरभि मा वाहि स्वाहा , इति ।

हे वात देवानां त्वं समुद्रोऽसि समुद्रवद्बहुलोऽसि । नभस्वान्स्वप्रचाराय विस्तीर्णाकाशवानार्द्रं वृष्टिजलं ददातीत्यार्द्रदानुः । शमैहिकं सुखं भावयतीति शंभूः । मय आमुष्मिकं सुखं भावयतीति मयोभूः । तादृशस्त्वं मामभि मां प्रति वाहि गच्छ, एवं संचारेण शैत्यमापादयेत्यर्थः ॥

अथ द्वितीयामाह—

मारुतोऽसि मरुतां गणः शंभूर्म-
योभूरभि मा वाहि स्वाहा , इति ।

योऽयं बहूनां मरुतां वायुविशेषाणां गणो मारुतशब्दवाच्यस्तद्रूपस्त्वमसि । शेषं पूर्ववत् ॥

अथ तृतीयामाह—

वस्युरसि दुवस्वाञ्छंभूर्मयोभू-
रभि मा वाहि स्वाहा , इति ॥

(वाजप्रसवीयहोमाभिधानम्)

अवं रक्षणमिच्छतीत्यवस्युः। दुवस्वान्परिचर्योपेतः। तादृशस्त्वमसि। शेषं पूर्ववत्॥

एतैर्मन्त्रैः साध्यं होमं विधत्ते—

"अग्निचितꣳ ह वा अमुष्मिँल्लोके वातोऽभि पवते वातनामानि जुहोत्यभ्येवैनममुष्मिँल्लोके वातः पवते" [सं० का० ५ प्र० ४ अ० ९] इति।

स्वर्गे लोक एतमग्निचितमभिलक्ष्य शैत्यमान्द्यसौगन्ध्ययुक्तो वायुर्वाति। अतस्तत्सिद्धये समुद्रोऽसीत्यादिवातनामानि जुहुयात्। तेन होमेन वायुस्तथा पवत एव॥

पाठप्राप्तं त्रित्वं प्रशंसति—

"त्रीणि जुहोति त्रय इमे लोका एभ्य एव लोकेभ्यो वातमव रुन्धे" [सं० का० ५ प्र० ४ अ० ९] इति॥

मन्त्रगतेन समुद्रशब्देन बाहुल्यसाम्यमुपजीव्य वातो लक्ष्यत इत्येतत्सर्वं दर्शयति—

"समुद्रोऽसि नभस्वानित्याहैतद्वै वातस्य रूपꣳ रूपेणैव वातमव रुन्धे" [सं० का० ५ प्र० ४ अ० ९] इति॥

अत्र वातस्यैव होतव्यद्रव्यत्वात्तद्योग्यं साधनं विधत्ते—

"अञ्जलिना जुहोति न ह्येतेषामन्यथाऽऽहुतिरवकल्पते" [सं० का० ५ प्र० ४ अ० ९] इति।

अस्य हस्तद्वयमेलनरूपेणाञ्जलिना वह्नौ वायोरुत्पादनमेवात्र होमः। यस्मादेषां वातरूपाणां होमद्रव्याणामञ्जलिव्यतिरेकेणाऽऽहुतिर्न संभवति, न खलु वातो जुह्वामवदातुं शक्यते, अत एव सूत्रकारो ब्राह्मणान्तरमुदाजहार—"नह्येतस्यावदानमस्तीति विज्ञायते" इति, तस्माद्व्यजनेनेवाञ्जलिना वह्नौ वायुं संचारयेत्॥

अत्र विनियोगसंग्रहः—

"वाजो नः सप्तभिर्वाजप्रसवीयं जुहोति हि।
नक्तेति पयसा होमः समुद्रो वातनामभिः॥
त्रिभिर्जुहोत्यत्र मन्त्रा एकादश समीरिताः॥ १॥" इति।

अथ मीमांसा।

पञ्चमाध्यायस्य तृतीयपादे दशमाधिकरणे चिन्तितम्—

न धावेद्वर्षतीत्यादि चितौ सत्यां क्रतावुत।
आद्यश्चितेर्निमित्तत्वान्न क्रतावग्निचित्त्वतः॥

इदमाम्नायते—“ अग्निचिद्वर्षति न धावेन्न स्त्रियमुपेयात् ” इति । तान्येतान्यग्निचिद्व्रतानि चितौ निष्पन्नायां सत्यां तदा प्रभृति प्रवर्तन्ते, न तु चितेऽग्नौ क्रत्वनुष्ठानं प्रतीक्षन्ते । कुतः । अग्निचित्पदे चयनस्य निमित्तत्वेनोपन्यासात् । न हि सति निमित्ते नैमित्तिकस्य विलम्बो युक्त इति प्राप्ते ब्रूमः— क्रतावुपयोक्तुमग्निश्चयनेन संस्क्रियते । न चानिष्पन्ने क्रतौ चयनसंस्कारः सफलो भवति । तस्मात्क्रतौ निष्पन्ने सति पश्चाच्चयनसाफल्यादयं पुरुषोऽग्निं चितवानित्यमुमर्थमर्हतीति क्रत्वन्ते तानि व्रतानि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठके त्रयोदशोऽनुवाकः । )

---

अ॒ग्निं यु॑नज्मि॒ शव॑सा घृ॒तेन॑ दि॒व्यꣳ सु॑प॒र्णं वय॑सा बृ॒हन्त॑म् । तेन॑ व॒यं प॑तेम ब्र॒ध्नस्य॑ वि॒ष्टप॒ꣳ सुवो॒ रुहा॑णा॒ अधि॒ नाक॑ उत्त॒मे । इ॒मौ ते॑ प॒क्षाव॒जरौ॑ पत॒त्रिणौ॒ याभ्या॒ꣳ रक्षा॑ꣳस्यप॒हꣳस्य॑ग्ने । ताभ्यां॑ पतेम सु॒कृता॑मु लो॒कं यत्र॒र्षय॑ः प्रथम॒जा ये पु॑रा॒णाः । चिद॑सि समु॒द्रयो॑नि॒रिन्दु॒र्दक्ष॑ः श्ये॒न ऋ॒ताव॑ । हिर॑ण्यपक्षः शकु॒नो भु॑र॒ण्युर्म॒हान्त्स॒धस्थे॑ ध्रु॒वः ( १ ) आ निष॑त्तः । नम॑स्ते अस्तु॒ मा मा॑ हिꣳसी॒र्विश्व॑स्य मू॒र्द्धन्नधि॑ तिष्ठसि श्रि॒तः । स॒मु॒द्रे ते॒ हृद॑यम॒न्तरायु॒र्द्यावा॑पृथि॒वी भुव॑ने॒ष्वर्पि॑ते ।

---

१ ख. च. ततः ।

उद्नो दत्तोदधिं भिन्त दिवः पर्जन्यादन्तरिक्षा-
त्पृथिव्यास्ततो नो वृष्ट्याऽवत । दिवो
मूर्धाऽसि पृथिव्या नाभिरूर्गपामोषधीनाम् ।
विश्वायुः शर्म सप्रथा नमस्पथे । येनर्षयस्त-
पसा सत्रम् ( २ ) आसतेन्धाना अग्निं सुव-
राभरन्तः । तस्मिन्नहं नि दधे नाके अग्निमेतं
यमाहुर्मनवः स्तीर्णबर्हिषम् । तं पत्नीभिरनु
गच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः ।
नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे
अधि रोचने दिवः । आ वाचो मध्यमरुहद्भु-
रण्युरयमग्निः सत्पतिश्चेकितानः । पृष्ठे पृथिव्या
निहितो दविद्युतदधस्पदं कृणुते ( ३ ) ये
पृतन्यवः । अयमग्निर्वीरतमो वयोधाः सह-
स्रियो दीप्यतामप्रयुच्छन् । विभ्राजमानः
सरिरस्य मध्य उप प्र यात दिव्यानि धाम ।
सं प्र च्यवध्वमनु सं प्र यातान्ने पथो देवया-
नान्कृणुध्वम् । अस्मिन्त्सधस्थे अध्युत्तरस्मि-
न्विश्वे देवा यजमानश्च सीदत । येना सहस्रं
वहसि येनाग्ने सर्ववेदसम् । तेनेमं यज्ञं नो
वह देवयानो यः ( ४ ) उत्तमः । उद्बुध्य-

स्वाग्ने प्रति जागृह्येनमिष्टापूर्ते सꣳ सृजेथा-मयं च । पुनः कृण्वꣳस्त्वा पितरं युवानम-न्वाताꣳसीत्त्वयि तन्तुमेतम् । अयं ते योनि-र्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आ रोहाथा नो वर्धया रयिम् ( ५ ) ॥

( ध्रुवः सत्रं कृणुते यः सप्तत्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके सप्तमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठके त्रयोदशोऽनुवाकः । )

---

अग्निम् । युनज्मि । शवसा । घृतेन । दिव्यम् । सुपर्णमिति सु—पर्णम् । वयसा । बृहन्तम् । तेन । वयम् । पतेम । ब्रध्नस्य । विष्टपम् । सुवः । रुहा-णाः । अधीति । नाके । उत्तम इत्युत्—तमे । इमौ । ते । पक्षौ । अजरौ । पतत्रिणः । याभ्याम् । रक्षाꣳ-सि । अपहꣳसीत्यप—हꣳसि । अग्ने । ताभ्याम् । पतेम । सुकृतामिति सु—कृताम् । उ । लोकम् । यत्र । ऋषयः । प्रथमजा इति प्रथम—जाः । ये । पुराणाः । चित् । असि । समुद्रयोनिरिति समुद्र—योनिः । इन्दुः । दक्षः । श्येनः । ऋतावेत्यृत—वा । हिरण्यपक्ष इति हिरण्य—पक्षः । शकुनः । भुरण्युः ।

महान्। सधस्थ इति सध—स्थे। ध्रुवः (१)। एति। निषत्त इति नि—सत्तः। नमः। ते। अस्तु। मा। मा। हिंसीः। विश्वस्य। मूर्धन्। अधीति। तिष्ठसि। श्रितः। समुद्रे। ते। हृदयम्। अन्तः। आयुः। द्यावापृथिवी इति द्यावा—पृथिवी। भुवने-षु। अर्पिते इति। उद्नः। दत्त। उदधिमित्युद—धि-म्। भिन्त। दिवः। पर्जन्यात्। अन्तरिक्षात्। पृथिव्याः। ततः। नः। वृष्ट्या। अवत। दिवः। मूर्धा। असि। पृथिव्याः। नाभिः। ऊर्क्। अपाम्। ओषधीनाम्। विश्वायुरिति विश्व—आयुः। शर्म। सप्रथा इति स—प्रथाः। नमः। पथे। येन। ऋष-यः। तपसा। सत्रम् (२)। आसत। इन्धानाः। अग्निम्। सुवः। आभरन्त इत्या—भरन्तः। तस्मि-न्। अहम्। नीति। दधे। नाके। अग्निम्। एत-म्। यम्। आहुः। मनवः। स्तीर्णबर्हिषमिति स्ती-र्ण—बर्हिषम्। तम्। पत्नीभिः। अन्विति। गच्छे-म। देवाः। पुत्रैः। भ्रातृभिरिति भ्रातृ—भिः। उत। वा। हिरण्यैः। नाकम्। गृह्णानाः। सुकृतस्येति सु—कृतस्य। लोके। तृतीये। पृष्ठे। अधीति। रो-चने। दिवः। एति। वाचः। मध्यम्। अरुहत्।

भुरण्युः । अयम् । अग्निः । सत्पतिरिति सत्—पतिः ।
चेकितानः । पृष्ठे । पृथिव्याः । निहित इति नि—
हितः । दविद्युतत् । अधस्पदमित्यधः—पदम् । कृ-
णुते ( ३ ) । ये । पृतन्यवः । अयम् । अग्निः ।
वीरतम इति वीर—तमः । वयोधा इति वयः—धाः ।
सहस्रियः । दीप्यताम् । अप्रयुच्छन्नित्यप्र—युच्छन् ।
विभ्राजमान इति वि—भ्राजमानः । सरिरस्य ।
मध्ये । उप । प्रेति । यात । दिव्यानि । धाम ।
सम् । प्रेति । च्यवध्वम् । अन्विति । सम् । प्रेति ।
यात । अग्ने । पथः । देवयानानिति देव—यानान् ।
कृणुध्वम् । अस्मिन् । सधस्थ इति सध—स्थे ।
अधीति । उत्तरस्मिन्नित्युत्—तरस्मिन् । विश्वे ।
देवाः । यजमानः । च । सीदत । येन । सहस्रम् ।
वहसि । येन । अग्ने । सर्ववेदसमिति सर्व—वेदसम् ।
तेन । इमम् । यज्ञम् । नः । वह । देवयान इति
देव—यानः । यः ( ४ ) । उत्तम इत्युत्—तमः ।
उदिति । बुध्यस्व । अग्ने । प्रतीति । जागृहि ।
एनम् । इष्टापूर्ते इतीष्टा—पूर्ते । समिति । सृजेथा-
म् । अयम् । च । पुनः । कृण्वन् । त्वा । पितरम् ।
युवानम् । अन्वाताꣳसीदित्यनु—आताꣳसीत् ।

त्वयि। तन्तुम्। एतम्। अयम्। ते। योनिः। ऋत्वियः। यतः। जातः। अरोचथाः। तम्। जानन्। अग्ने। एति। रोह। अथ। नः। वर्धय। रयिम् (५)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके सप्तमप्रपाठके त्रयोदशोऽनुवाकः॥ १३॥

---

(अथ चतुर्थकाण्डे सप्तमप्रपाठके त्रयोदशोऽनुवाकः।)

---

द्वादशे वाजप्रसवीयहोमोऽभिहितः। अथ त्रयोदशेऽग्नियोगोऽभिधीयते। कल्पः—"पुरस्तात्प्रातरनुवाकादग्निं युनज्मीति तिसृभिरभिमृशन्नग्निं युनक्ति" इति।

तत्र प्रथमामाह—

अग्निं युनज्मि शवसा घृतेन दिव्यꣳ सुपर्णं वयसा बृहन्तम्। तेन वयं पतेम ब्रध्नस्य विष्टपꣳ सुवो रुहाणा अधि नाक उत्तमे।, इति।

अग्निं चितमेतं वह्निं शवसा बलेन घृतेन घृतादिद्रव्ययुक्तेन कर्मणा युनज्मि रथेनाश्वमिवाहं योजयामि। कीदृशमग्निं, दिव्यं द्योतनात्मकं सुपर्णं पक्ष्याकारं वयसा बृहन्तं चिरकालभाविनम्। तेनाग्निना वयं यजमाना ब्रध्नस्याऽऽदित्यस्य विष्टपं तापरहितं स्थानं पतेम प्राप्नुयाम। कीदृशा वयम्, उत्तमे नाकेऽत्युत्कृष्टे स्वर्गलोके सुवोऽधिरुहाणाः सुखप्रापकप्रदेशमधिरोढुकामाः॥

अथ द्वितीयामाह—

इमौ ते पक्षावजरौ पतत्रिणो याभ्याꣳ रक्षाꣳस्यपहꣳस्यग्ने। ताभ्यां पतेम सुकृतामु लोकं यत्रर्षयः प्रथमजा ये पुराणाः।, इति।

पतत्रिणः पक्ष्याकारस्य ते तवाग्नेरिमौ पक्षावजरौ कदाचिदपि जीर्णौ न भवतः। हेऽग्ने याभ्यां पक्षाभ्यां त्वं रक्षांस्यपहंसि मारयसि ताभ्यां वयं

सुकृतामु पुण्यकृतामेव पुरुषाणां योग्यं लोकं पतेम प्राप्नुयाम। ये पुराणा अनादिसिद्धा ऋषयो महर्षयः सन्ति ये च प्रथमजाः सृष्ट्यादावेवोत्पन्ना-स्तादृशा यत्र लोके निवसन्ति तं लोकं पतेम।

अथ तृतीयामाह—

चिदसि समुद्रयोनिरिन्दुर्दक्षः श्येन ऋता-
वा। हिरण्यपक्षः शकुनो भुरण्युर्महा-
न्त्सधस्थे ध्रुव आ निषत्तः।, इति।

हेऽग्ने त्वं चिदादिविशेषणैर्विशेषितोऽसि। चिज्जगतश्चेतयिता यजमानैश्चितो वा। समुद्रयोनिर्यथा समुद्रः सर्वेषां जलग्रहाणां स्थानं तथा त्वं सर्वेषां क्रतूनां स्थानम्। इन्दुः परमैश्वर्ययुक्तः। दक्षः कर्मनिष्पादनकुशलः। श्येनः पक्षिविशेषाकारः। ऋतावा सत्यवान्। हिरण्यपक्षः सुवर्णमयाभ्यां पक्षाभ्या-मुपेतः। शकुनः कामनादिभेदेन कङ्कादिपक्ष्याकारः। भुरण्युः सर्वं भरितुं क्षमः। महान्वह्वीभिरिष्टकाभिश्चितत्वात्प्रौढः। सधस्थ आदित्येन सहैकत्र स्थितियोग्ये मण्डले [ध्रुवः स्थिरः] आनिषत्तः समन्तत उपविष्टः॥

कल्पः—"यज्ञायज्ञियस्य स्तोत्र एकयाऽप्रस्तुतं भवत्यथ नमस्ते अस्तु मा मा हिंꣳसीरिति द्वाभ्यामग्निमभिमृशति" इति।

तत्र प्रथमामाह—

नमस्ते अस्तु मा मा हिꣳसीर्विश्वस्य मूर्ध-
न्नधि तिष्ठसि श्रितः। समुद्रे ते हृदय-
मन्तरायुर्द्यावापृथिवी भुवनेष्वर्पिते।, इति।

हेऽग्ने ते नमोऽस्तु त्वं कर्मणि त्वद्यागकारिणं मा मां मा हिंसीर्मा विनाशय। त्वं विश्वस्य सर्वस्य जगतो मूर्धञ्छिरोवदुत्तमे चितिप्रदेशे श्रित आश्रितः सन्नधितिष्ठसि अधिको भूत्वा वर्तसे। ते हृदयं त्वदीयं चित्तं समुद्रे वर्तते। यद्वृष्टिद्वारेण समुद्रसमानं जलं संपादयिष्यामीत्येवं सर्वदा तवानुग्रहः। तथाऽन्तरायुस्त्वदीयचित्तस्य मध्ये सर्वेषां प्राणिनामायुस्तिष्ठति चिरं जीवन्त्वेते प्राणिन इति यदा स्मरसि तदानीं तेषामायुर्भवत्येव। किंच भुवनेषु सर्वेषु लोकेषु निमित्तभूतेषु द्यावापृथिवी अर्पिते उपरि द्यौरधो भूमिश्च त्वया स्थापिते। एतयोर्मध्ये सर्वे लोकास्तिष्ठन्त्वित्येवं तवानुग्रहः॥

अथ द्वितीयामाह—

---

१ ख. ङ. च. ते। २ ख. घ. ङ. च. °ते। यावद्वृ°।

(अग्नियोगाभिधानम्)

उद्रो दत्तोदधिं भिन्त दिवः पर्जन्यादन्तरि-
क्षात्पृथिव्यास्ततो नो वृष्ट्याऽवत । दिवो
मूर्धाऽसि पृथिव्या नाभिरूर्गपामोषधीनाम् ।
विश्वायुः शर्म सप्रथा नमस्पथे ।, इति।

अत्र पूजार्थमेकस्मिन्नेवाग्नौ बहुत्वमारोप्य निर्दिश्यते । हेऽग्नयो यूयमुद्रो दत्तोदकानि प्रयच्छत। उदकदाने क उपाय इति तदुच्यते—उदधिं भिन्त, उदकं धीयतेऽस्मिन्नित्युदधिर्मेघस्तं विदारयत। केभ्यो निमित्तेभ्यः, दिवोऽन्तरिक्षात्पृथिव्या लोकत्रयं निमित्तीकृत्येत्यर्थः । ततो मेघविदारणादूर्ध्वं पर्जन्यादागतया वृष्ट्या नोऽस्मानवत रक्षत। पुनरप्येकत्वेनैव संबोध्योच्यते—हेऽग्ने त्वं दिवो मूर्धाऽसि द्युलोकस्य मूर्धस्थानीय आदित्यरूपोऽसि। पृथिव्या नाभिरसि नाभिवन्मध्यदेशे वर्तसे । अपामोषधीनां चोर्ग्रसोऽसि, त्वया हि पाके क्रियमाणे सति तत्र रसो जायते। तथा विश्वायुरसि सर्वस्य जगत आयुष्प्रदोऽसि। शर्म शरणभूतोऽसि। सप्रथाः सविस्तारोऽसि। पथे पुण्यलोकमार्गरूपाय तुभ्यं नमोऽस्तु ॥

अग्नियोगमन्त्रं व्याख्यातुं प्रस्तौति—

"सुवर्गाय वै लोकाय देवरथो युज्यते यत्राऽऽकूताय मनुष्यरथ एष खलु वै देवरथो यदग्निः" [सं० का० ५ प्र० ४ अ० १०] इति।

द्विविधो हि रथो देवरथो मनुष्यरथश्चेति। तत्र स्वर्गप्राप्तये देवरथः सज्जी क्रियते। यत्र क्वापि ग्रामविशेषे गन्तुमाकूतमभिप्रायो भवति तदर्थं मनुष्यरथः सज्जी क्रियते। योऽयमत्र चीयमानोऽग्निः स एष देवरथो न तु मनुष्यरथः ॥

इत्थं प्रस्तुत्य मन्त्रस्य तात्पर्यं दर्शयति—

"अग्निं युनज्मि शवसा घृतेनेत्याह युनक्त्येवैनꣳ स एनं युक्तः सुवर्गं लोकमभि वहति" [सं० का० ५ प्र० ४ अ० १०] इति ॥

एनं देवरथरूपमग्निमनेन मन्त्रेण युनक्त्येव। स च युक्तोऽग्निरेनं यजमानं स्वर्गं प्रापयति ॥

उक्तमन्त्रपञ्चके मन्त्रत्रयं विभज्य विनियुङ्क्ते—

"यत्सर्वाभिः पञ्चभिर्युञ्ज्याद्युक्तोऽस्याग्निः प्रच्युतः स्यादप्रतिष्ठिता आहुतयः स्युरप्रतिष्ठिताः स्तोमा अप्रतिष्ठितान्युक्थानि तिसृभिः प्रातःसवनेऽभि-

१ क. 'ण्यश्लोक'।

मृशति त्रिवृद्वा अग्निर्यावानेवाग्निस्तं युनक्ति यथाऽनासि युक्त आधीयत एवमेव तत्प्रत्याहुतयस्तिष्ठन्ति प्रति स्तोमाः प्रत्युक्थानि " [ सं० का० ५ प्र० ४ अ० १० ] इति ।

आदावेव मन्त्रपञ्चकेन योजने सति कालान्तरे योजयितुं मन्त्राभावादयं युक्तोऽग्निः प्रच्युतो भवेत् । प्रच्युतेऽग्नावाहुतीनां स्तोत्रशस्त्रयोश्च प्रतिष्ठा न भवेत् । अतः पश्चाद्योक्तुं मन्त्रद्वयमवशेष्य प्रातःसवने तिसृभिरभिमृशेत् । तथा सति त्रिगुणमग्निं सर्वमप्यभिमृशति । ततो यथा लोके बलीवर्दैर्युक्ते शकटे सर्वं ग्रामान्तरे नेतव्यं वस्तुजातमभिनिधीयत एवमेतस्मिन्नग्नावाहुतयः स्तोत्राणि [ शस्त्राणि ] च प्रतितिष्ठन्ति ॥

अथावशिष्टं मन्त्रद्वयं विनियुङ्क्ते—

" यज्ञायज्ञियस्य स्तोत्रे द्वाभ्यामभि मृशत्येतावान्वै यज्ञो यावानग्निष्टोमो भूमा त्वा अस्यात ऊर्ध्वः क्रियते यावानेव यज्ञस्तमन्ततोऽन्वारोहति " [ सं० का० ५ प्र० ४ अ० १० ] इति ।

यज्ञायज्ञा वो अग्नय इत्यस्यामृच्युत्पन्नं साम यज्ञायज्ञियं, तस्य साम्नः संबन्धि स्तोत्रं तृतीयसवने प्रवर्तते । तस्मिन्प्रवर्तमाने सति शिष्टाभ्यां द्वाभ्यां मन्त्राभ्यामग्निमभिमृशेत् । यज्ञायज्ञियस्तोत्रान्तो हि प्रकृतिभूतोऽग्निष्टोमः । स च यावांस्तावानेवोक्थ्यातिरात्रादिः सर्वोऽपि यज्ञः । एतावदेव हि सर्वस्यापि यज्ञस्य मुख्यं[1] शरीरम् । अस्योक्थ्यादिक्रतोर्यज्ञायज्ञियस्तोत्रादूर्ध्व-स्तु स्तोत्रसमूहो यः क्रियते स तु मैव क्रियते, तेनातिरिक्तेन पूर्वं विद्यमानस्य यज्ञशरीरस्य बाहुल्यमेव भवति न तु किंचिन्नूतनं शरी-रम् । एवं सति यज्ञायज्ञियस्तोत्रकालीनाभिमर्शनेनातिरिक्तेनाग्निष्टोमोक्थ्या-तिरात्रादिरूपो यज्ञो यावानस्ति तं सर्वमप्यन्तेकालेऽन्वारोहति[2] कृत्स्नमपि यज्ञजातं प्राप्नोतीत्यर्थः ॥

मन्त्रद्वित्वं प्रशंसति—

" द्वाभ्यां प्रतिष्ठित्यै " [ सं० का० ५ प्र० ४ अ० १० ] इति ॥

स्तोत्रमध्य एवावान्तरकालविशेषं[3] विधत्ते—

" एकयाऽप्रस्तुतं भवत्यथाभि मृशत्युपैनमुत्तरो यज्ञो नमत्यथो संतत्यै " [ सं० का० ५ प्र० ४ अ० १० ] इति ।

यज्ञायज्ञियस्य स्तोत्रे ह्येकविंशः स्तोमो विहितः । तिस्रो हि ऋच एक-विंशतिसंख्यापूरणायाऽऽवर्तनीयाः । तत्र हि विंशतिस्तोत्रीयासूक्तासु याऽन्ता

---

१ ख. घ. ङ. च. मुखं । २ ख. च. 'न्तराले' । ३ ख. च. 'कालं वि' ।

(न्त्या) स्तोत्रीया तया स्तोत्रमप्रस्तुतमनुपक्रान्तं यदा भवति तदानीं मन्त्राभ्यामभिमृशेत्। एवं सत्युत्तरकालभावी यज्ञः सर्वोऽप्येनं यजमानमुपनमति। अपि च तदभिमर्शनं यज्ञनैरन्तर्याय संपद्यते ॥

कल्पः—"पुनश्चितिस्त्रिष्वर्थेषु श्रूयतेऽस्त्रवणार्थे समृद्ध्यर्थे संतानार्थे चास्त्रवणार्थां व्याख्यास्यामो यदीष्ट्या यदि पशुना यदि सोमेन यजेत योऽप्यस्य पुरोऽग्निस्तमन्ववसाय यजेतापि वा येनर्षय इत्यष्टौ नाना मन्त्रा उत्तरवेद्यामुपदध्यात्" इति।

तत्र प्रथमामाह—

येनर्षयस्तपसा सत्रमासतेन्धाना अग्निꣳ सुवराभरन्तः। तस्मिन्नहं नि दधे नाके अग्निमेतं यमाहुर्मनवः स्तीर्णबर्हिषम्।, इति।

येन स्वर्गेण निमित्तभूतेन पूर्वे महर्षयस्तपसा संतापयुक्तेनाग्निना सत्रमासतानुष्ठितवन्तः। कीदृशा महर्षयः, अग्निमिन्धानाः प्रज्वलयन्तः सुवराभरन्तः स्वर्गमाहर्तुं समुद्यताः। अहमपि तस्मिन्नाके निमित्तभूते सति एतमग्निं निदधे स्थापयामि। यमग्निं मनवः पूर्वे मनुष्याः स्तीर्णबर्हिषं प्रसारितयज्ञमाहुस्तमग्निं निदध इत्यन्वयः ॥

अथ द्वितीयामाह—

तं पत्नीभिरनु गच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः। नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः।, इति।

हे देवा ऋत्विजः सर्वे वयं पत्न्यादिभिः सर्वैर्मनुष्यैरुत वा हिरण्यैर्हिरण्यादिभिः सर्वैः साधनद्रव्यैश्च सहितास्तमग्निमनुगच्छेमानुगताः सन्तः फलं प्राप्स्याम इत्याशयः। स एव स्पष्टी क्रियते—दिवः पृष्ठे स्वर्गस्योपरि नाकं दुःखरहितं स्थानं गृह्णाना ग्रहीतुकामा वयमित्यर्थः। कीदृशे दिवः पृष्ठे, सुकृतस्य लोके सम्यगनुष्ठितस्य कर्मणः फलभूते, तृतीये पृथिवीमारभ्य गणनायां त्रिसंख्यापूरके, अधिरोचनेऽधिकत्वेन दीप्यमाने ॥

अथ तृतीयामाह—

आ वाचो मध्यमरुहद्भुरण्युरयमग्निः सत्प-

तिश्चेकितानः । पृष्ठे पृथिव्या निहितो
दविद्युतदधस्पदं कृणुते ये पृतन्यवः।, इति।

अयमग्निर्वाचो मध्यमारुहत्स्तोत्ररूपाया वाचः प्रतिपाद्यमर्थमारूढः स्तोत्रगतसर्वगुणयुक्त इत्यर्थः । कीदृशोऽग्निः, भुरण्युर्जगद्भरणशीलः । सत्पतिः सतां पालकः । चेकितानोऽभिज्ञानवान् । स च पृथिव्याः पृष्ठे भूमेरुपरि निहितः स्थापितो दविद्युतदतिशयेन द्योतते । ये तु विरोधिनः पृतन्यवोऽस्माभिः सह कलहं कर्तुमिच्छन्ति तानधस्पदं कृणुतेऽस्माकं पादस्याधस्तादवस्थितान्करोति ॥

अथ चतुर्थीमाह—

अयमग्निर्वीरतमो वयोधाः सहस्रियो दी-
प्यतामप्रयुच्छन् । विभ्राजमानः सरिरस्य
मध्य उप प्र यात दिव्यानि धाम।, इति।

अयमग्निर्दीप्यतामस्मिन्कर्मणि प्रकाशताम् । कीदृशः, वीरतमोऽतिशयेन शूरः। वयोधा वयस आयुषः स्थापयिता । सहस्रिय इष्टकासहस्रेण संपादितः। अप्रयुच्छन्नस्मिन्कर्मणि प्रमादरहितः। सरिरस्य जलस्य मध्ये विभ्राजमान और्वविद्युदादिरूपेण विशेषतः प्रकाशमानः। हे ऋत्विग्यजमानास्तस्य प्रसादाद्दिव्यानि धाम स्थानानि उप प्रयात प्राप्नुत ॥

अथ पञ्चमीमाह—

सं प्र च्यवध्वमनु सं प्र यातागे पथो देवया-
नान्कृणुध्वम् । अस्मिन्त्सधस्थे अध्युत्तर-
स्मिन्विश्वे देवा यजमानश्च सीदत।, इति।

हेऽग्ने त्वं विश्वे देवा यजमानश्च सर्वे यूयं संप्रच्यवध्वं सम्यक्प्रच्यावयत, अस्य कर्मणो विघ्नं विनाशयतेत्यर्थः। अनुसंप्रयातानुक्रमेण कर्मसिद्धिं प्राप्नुत। ततो देवयानान्देवलोकप्राप्तिहेतून्पथो मार्गान्कृणुध्वं कुरुत । सधस्थे सहस्थितियोग्येऽस्मिन्कर्मणि सीदतोत्तरस्मिँल्लोकेऽधिकत्वेन सीदत ॥

अथ षष्ठीमाह—

येना सहस्रं वहसि येनाग्ने सर्व-
वेदसम् । तेनेमं यज्ञं नो वह
देवयानो य उत्तमः।, इति।

(अग्नियोगाभिधानम्)

हेऽग्ने देवयानो देवप्रापको यस्त्वमुत्तमः स त्वं येन व्यापारेण सहस्रं वहसि सहस्रदक्षिणाकं यज्ञं निर्वहसि, तथा येन व्यापारेण सर्ववेदसं सर्वस्वदक्षिणाकं यज्ञं वहसि, तेन व्यापारेण नोऽस्मदीयमिमं यज्ञं वह देवान्प्रापय। देवयान इत्यादिकं यज्ञविशेषणं वाऽस्तु यो यज्ञो देवान्प्राप्त उत्तमो भवति तमिमं यज्ञं वहेत्यर्थः ॥

अथ सप्तमीमाह—

उद्बुध्यस्वाग्ने प्रति जागृह्येनमिष्टापूर्ते सꣳ
सृजेथामयं च। पुनः कृण्वꣳस्त्वा पितरं
युवानमन्वाताꣳसीत्त्वयि तन्तुमेतम्॥, इति।

हेऽग्ने त्वमुद्बुध्यस्वास्मद्विषये सावधानो भव। एनं यजमानं प्रति जागृहि प्रतिदिनं जागरूकं सावधानं कुरु। अयं च त्वं च मिलित्वेष्टापूर्ते श्रौतस्मार्ते कर्मणी संसृजेथां संपादयतम्। हे यजमान त्वां पितरं पालकं युवानं यौवनोपेतं पुनः कृण्वन्भूयो भूयः कुर्वन्नयमग्निस्त्वयि निमित्तभूते सत्येतं तन्तुं यज्ञप्रवाहमन्वातांसीदनुक्रमेण तनोतु संपादयतु ॥

अथाष्टमीमाह—

अयं ते योनिर्ऋत्वियो यतो जातो
अरोचथाः। तं जानन्नग्न आ
रोहाथा नो वर्धया रयिम्॥, इति॥

हेऽग्ने योऽयमिष्टकाचितिरूपप्रदेशस्ते तव योनिः स्थानं, यतो यस्या इष्टकाचितेर्जात उत्पन्नस्त्वमरोचथा दीप्तो भवसि, तं योनिं जानन्स्वकीयत्वेनावगच्छन्नारोह। अथानन्तरं नोऽस्माकं रयिं धनं वर्धय ॥

एतैर्मन्त्रैः साध्यां पुनश्चितिं विधत्ते—

"प्र वा एषोऽस्माल्लोकाच्च्यवते योऽग्निं चिनुते न वा एतस्यानिष्टक आहुतिरव कल्पते यां वा एषोऽनिष्टक आहुतिं जुहोति स्रवति वै सा ताꣳस्रवन्तीं यज्ञोऽनुपरा भवति यज्ञं यजमानो यत्पुनश्चितिं चिनुत आहुतीनां प्रतिष्ठित्यै प्रत्याहुतयस्तिष्ठन्ति न यज्ञः पराभवति न यजमानः" [सं० का० ५ प्र० ४ अ० १०] इति।

अग्निं चिन्वानः पुरुषः स्वर्गाभिमुखत्वादस्माल्लोकात्प्रच्युतो भवति। एतस्य पुरुषस्येष्टकारहिते देश आहुतिर्न संभवति, भूप्रदेशस्य स्वकीयत्वाभावात्। एवं सतीष्टकारहिते प्रदेशे यामाहुतिं जुहोति सा स्रवति, यथा भिन्न-

भाण्डे जलं गलति तद्वत् । स्रवन्तीं तामाहुतिमनु यज्ञो नश्यति, यज्ञमनु यजमानोऽपि नश्यति । अत आहुतिप्रतिष्ठार्थं पुनश्चितिं कुर्यात् । तत आहुतियज्ञयजमानाः प्रतितिष्ठन्ति ॥

अस्यां चिताविष्टकासंख्यां विधत्ते—

" अष्टावुप दधात्यष्टाक्षरा गायत्री गायत्रेणैवैनं छन्दसा चिनुते " [ सं० का० ५ प्र० ४ अ० १० ] इति ॥

एतच्छाखाम्नातमन्त्रानुसारेण संख्यां विधाय शाखान्तरानुसारेणान्यौ द्वौ पक्षौ विधत्ते—

" यदेकादश त्रैष्टुभेन यद्द्वादश जागतेन छन्दोभिरेवैनं चिनुते " [ सं० का० ५ प्र० ४ अ० १० ] इति ॥

प्रकारान्तरेण पुनश्चितिं प्रशंसति—

" नपात्को वै नामैषोऽग्निर्यत्पुनश्चितिर्य एवं विद्वान्पुनश्चितिं चिनुत आ तृतीयात्पुरुषादन्नमत्ति " [ सं० का० ५ प्र० ४ अ० १० ] इति ।

न पातयति न विनाशयत्याहुतिं न स्रावयतीति पुनश्चितिरूपस्याग्नेर्नपात्क इति नामधेयम् । एवं ज्ञात्वा चितवान्पुरुषः पुत्रपौत्रपर्यन्तमन्नसमृद्धो भवति ॥

पुनःशब्दतात्पर्यं दृष्टान्तेन दर्शयति—

" यथा वै पुनराधेय एवं पुनश्चितिर्योऽग्न्याधेयेन नर्ध्नोति स पुनराधेयमाधत्ते योऽग्निं चित्वा नर्ध्नोति स पुनश्चितिं चिनुते यत्पुनश्चितिं चिनुत ऋद्ध्यै " [ सं० का० ५ प्र० ४ अ० १० ] इति ।

पुनराधेयपुनश्चित्योः पूर्वमृद्ध्यभावेन पश्चादृद्धिसद्भावेन च सादृश्यम् ॥

अत्र पूर्वपक्षत्वेन शाखान्तरमतमुपन्यस्यति—

" अथो खल्वाहुर्न चेतव्येति रुद्रो वा एष यदग्निर्यथा व्याघ्रꣳ सुप्तं बोधयति तादृगेव तत् " [ सं० का० ५ प्र० ४ अ० १० ] इति ।

यथा लोके सुप्तो व्याघ्रः केनचिन्मार्गे गच्छता पुरुषेण बोधितस्तमेव बोधयितारं मारयति, एवमयं क्रूरोऽग्निः पूर्वं चितः कथंचित्पुण्यवशात्सुप्तवच्छान्तो वर्तते । स चेत्पुनश्चीयेत प्रबोधितव्याघ्रवन्मारयेत् । तस्मान्न चेतव्येयं पुनश्चितिरिति पूर्वः पक्षः ॥

तमिमं पक्षमनादृत्य स्वपक्षमेव स्थापयति—

" अथो खल्वाहुश्चेतव्येति यथा वसीयाꣳसं भागधेयेन बोधयति तादृगेव तत् " [ सं० का० ५ प्र० ४ अ० १० ] इति ।

लोके धनाढ्यं प्रभुं चिरकालव्यवधानेन विस्मृतवन्तं भृत्यः पुनरप्युपाय-

(विहव्याख्येष्टकाभिधानम्)

नमानीय यथा बोधयति, स च बोधित एवाभीष्टसिद्धिं करोति, एवमयं प्रभुरग्निः पुनश्चितः सन्नभीष्टं साधयतीति चेतव्येयं पुनश्चितिः ॥

तस्याः पुनश्चितेः समृद्धिहेतुत्वमुदाहरणमुखेन स्पष्टयति—

"मनुरग्निमचिनुत तेन नाऽऽर्ध्नोत्स एतां पुनश्चितिमपश्यत्तामचिनुत तया वै स आर्ध्नोद्यत्पुनश्चितिं चिनुत ऋद्ध्यै" [सं० का० ५ प्र० ४ अ० १०] इति ॥

अत्र विनियोगसंग्रहः—

अग्नित्रयं पुरा प्रातरनुवाकात्स्पृशेदिह[1](?)।
नमोद्वाभ्यां वह्निमर्शो येनाष्टाविष्टकाष्टकम् ॥
पुनश्चितिरिति प्रोक्ता मन्त्रा अत्र त्रयोदश ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

(अथ चतुर्थाष्टके सप्तमप्रपाठके चतुर्दशोऽनुवाकः।)

---

ममा॑ग्ने॒ वर्चो॑ विह॒वेष्व॑स्तु व॒यं त्वेन्धा॑नास्त॒नुवं॑ पुषेम । मह्यं॑ नमन्तां प्र॒दिश॒श्चत॑स्र॒स्त्वयाऽध्य॑क्षे॒ण पृत॑ना जयेम । मम॑ दे॒वा वि॑ह॒वे स॑न्तु॒ सर्व॒ इन्द्रा॑वन्तो म॒रुतो॒ विष्णु॑र॒ग्निः । मम॒ान्तरि॑क्षमु॒रु गो॒पम॑स्तु॒ मह्यं॒ वातः॑ पवतां॒ कामे॒ अ॒स्मिन्न् । मयि॑ दे॒वा द्रवि॑ण॒मा य॑जन्तां॒ मय्या॒शीर॑स्तु॒ मयि॑ दे॒वहू॑तिः । दैव्या॒ होता॑रा वनिषन्त (१) पूर्वेऽरि॑ष्टाः स्याम त॒नुवा॑ सु॒वीराः॑ । मह्यं॑ यजन्तु॒ मम॒ यानि॑

---

[1] ख. घ. ङ. च. 'दिदम्। न'।

हव्याऽऽकूतिः सत्या मनसो मे अस्तु । एनो मा नि गां कतमच्चनाहं विश्वे देवासो अधि वोचता मे । देवीः षडुर्वीरुरु णः कृणोत विश्वे देवास इह वीरयध्वम् । मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् । अग्निर्मन्युं प्रतिनुदन्पुरस्तात् ( २ ) अदब्धो गोपाः परि पाहि नस्त्वम् । प्रत्यञ्चो यन्तु निगुतः पुनस्तेऽमैषां चित्तं प्रबुधा वि नेशत् । धाता धातृणां भुवनस्य यस्पतिर्देवꣳ सवितारमभिमातिषाहम् । इमं यज्ञमश्विनोभा बृहस्पतिर्देवाः पान्तु यजमानं न्यर्थात् । उरुव्यचा नो महिषः शर्म यꣳसदस्मिन्हवे पुरुहूतः पुरुक्षु । स नः प्रजायै हर्यश्व मृडयेन्द्र मा ( ३ ) नो रीरिषो मा परा दाः । ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान् । वसवो रुद्रा आदित्या उपरिस्पृशं मोग्रं चेत्तारमधिराजमक्रन् । अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धनजिदश्वजिद्यः । इमं नो यज्ञं विहवे जुषस्वास्य कुर्मो हरिवो मेदिनं त्वा ( ४ ) ॥

(विहव्याख्येष्टकाभिधानम्)

(वनिषन्त पुरस्तान्मा त्रिचत्वारिंशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके सप्तमप्रपाठके चतुर्दशोऽनुवाकः॥ १४॥

---

(अथ चतुर्थाष्टके सप्तमप्रपाठके चतुर्दशोऽनुवाकः।)

---

ममं। अग्ने। वर्चः। विहवेष्विति वि—हवेषु। अस्तु। वयम्। त्वा। इन्धानाः। तनुवम्। पुषेम। मह्यम्। नमन्ताम्। प्रदिश इति प्र—दिशः। चतस्रः। त्वया। अध्यक्षेणेत्यधि—अक्षेण। पृतनाः। जयेम। ममं। देवाः। विहव इति वि—हवे। सन्तु। सर्वे। इन्द्रावन्त इतीन्द्र—वन्तः। मरुतः। विष्णुः। अग्निः। ममं। अन्तरिक्षम्। उरु। गोपम्। अस्तु। मह्यम्। वातः। पवताम्। कामे। अस्मिन्। मयि। देवाः। द्रविणम्। एति। यजन्ताम्। मयि। आशीरित्या—शीः। अस्तु। मयि। देवहूतिरिति देव—हूतिः। दैव्या। होतारा। वनिषन्त (१)। पूर्वे। अरिष्टाः। स्याम। तनुवा। सुवीरा इति सु—वीराः। मह्यम्। यजन्तु। ममं। यानि। हव्या। आकूतिरित्या—कूतिः। सत्या। मनसः। मे। अस्तु। एनः। मा। नीति। गाम्। कतमत्। चन। अहम्। विश्वे। देवासः। अधीति। वोचत। मे। देवीः।

षडुर्वीरिति षट्—उर्वीः । उरु । नः । कृणोत । विश्वे । देवासः । इह । वीरयध्वम् । मा । हास्महि । प्रजयेति प्र—जया । मा । तनूभिः । मा । रधाम । द्विषते । सोम । राजन् । अग्निः । मन्युम् । प्रतिनुदन्निति प्रति—नुदन् । पुरस्तात् ( २ )। अदब्धः । गोपा इति गो—पाः । परीति । पाहि । नः । त्वम् । प्रत्यञ्चः । यन्तु । निगुत इति नि—गुतः । पुनः । ते । अमा । एषाम् । चित्तम् । प्रबुधेति प्र—बुधा । वीति । नेशत् । धाता । धातॄणाम् । भुवनस्य । यः । पतिः । देवम् । सवितारम् । अभिमातिषाहमित्यभिमाति—साहम् । इमम् । यज्ञम् । अश्विना । उभा । बृहस्पतिः । देवाः । पान्तु । यजमानम् । न्यर्थादिति नि—अर्थात् । उरुव्यचा इत्युरु—व्यचाः । नः । महिषः । शर्म । यंसत् । अस्मिन् । हवे । पुरुहूत इति पुरु—हूतः । पुरुक्षु । सः । नः । प्रजाया इति प्र—जायै । हर्यश्वेति हरि—अश्व । मृडय । इन्द्र । मा ( ३ )। नः । रीरिषः । मा । परेति । दाः । ये । नः । सपत्नाः । अपेति । ते । भवन्तु । इन्द्राग्निभ्यामितीन्द्राग्नि—भ्याम् । अवेति । बाधामहे । तान् । वसवः । रुद्राः । आदित्याः ।

( विहव्याख्येष्टकाभिधानम् )

उपरिस्पृशमित्युपरि—स्पृशम्। मा। उग्रम्। चेत्तारम्। अधिराजमित्यधि—राजम्। अक्रन्। अर्वाञ्चम्। इन्द्रम्। अमुतः। हवामहे। यः। गोजिदिति गो—जित्। धनजिदिति धन—जित्। अश्वजिदित्यश्व—जित्। यः। इमम्। नः। यज्ञम्। विहव इति वि—हवे। जुषस्व। अस्य। कुर्मः। हरिव इति हरि—वः। मेदिनम्। त्वा (४) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके सप्तमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

( अथ चतुर्थकाण्डे सप्तमप्रपाठके चतुर्दशोऽनुवाकः । )

---

त्रयोदशे पुनश्चितिरुक्ता। अथ चतुर्दशे विहव्याख्या इष्टका उच्यन्ते।
कल्पः—"ममाग्ने वर्चो विहवेष्वित्यनुवाकेन प्रतिमन्त्रमिष्टकाभिर्धिष्णियाश्चिनोत्यश्मनवमा आग्नीध्रीय उपदधाति द्वादश षोडशैकविंशतिं चतुर्विंशतिं वा होत्रीय एकादश ब्राह्मणाच्छंसीये षण्मार्जालीयेऽष्टावष्टावन्येषु धिष्णियेषूपदधातीति विज्ञायते" इति।

तत्र प्रथमामाह—

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तनुवं पुषेम। मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाऽध्यक्षेण पृतना जयेम। , इति।

हेऽग्ने विहवेषु यज्ञेषु यद्वर्चः फलं तन्ममास्तु। वयमृत्विग्यजमानास्त्वामग्निमिन्धानाः प्रज्वलयन्तस्तनुवं त्वदीयं शरीरं पुषेम पुष्टं कुर्मः। मह्यं यजमानाय प्राच्याद्याश्चतस्रः प्रदिशो नमन्तां वश्या भवन्तु, तत्रत्या जना मदधीना भवन्तु। अध्यक्षेण स्वामिना त्वया सहिता वयं पृतना विरोधिसेना जयेम॥

अथ द्वितीयामाह—

मम देवा विहवे सन्तु सर्व इन्द्रावन्तो मरुतो विष्णुरग्निः । ममान्तरिक्षमुरु गोपमस्तु मह्यं वातः पवतां कामे अस्मिन् । , इति ।

सर्वे देवा मम विहवे मदीययज्ञे सन्तु तिष्ठन्तु । देवा एव विशेष्यन्ते— इन्द्रावन्त इन्द्रयुक्ता मरुतो मरुद्गणा विष्णुरग्निश्चेत्येवमाद्याः । इदमुरु विस्तीर्णमन्तरिक्षं मम गोपं रक्षकमस्तु । अयं वातो वायुर्मह्यं मदर्थमस्मिन्कामे यज्ञफले निमित्तभूते सति पवतां संचरतु मदीयकामं साधयत्वित्यर्थः ॥

अथ तृतीयामाह—

मयि देवा द्रविणमा यजन्तां मय्याशीरस्तु मयि देवहूतिः । दैव्या होतारा वनिषन्त पूर्वेऽरिष्टाः स्याम तनुवा सुवीराः । , इति ।

एते देवा मयि यजमाने द्रविणं धनमायजन्तां सर्वतः संपादयन्तु । आशीराशास्यमानं फलं मय्यस्तु यजमाने सिद्धं भवतु । तथा देवहूतिर्देवानामाह्वानं च मयि भवतु । दैव्या होतारा देवसंबन्धिन ऋत्विजः पूर्वे त्वनादिसिद्धा वनिषन्तास्मद्यज्ञं संभजन्तु । वयं च तनुवा शरीरेणारिष्टा हिंसारहिताः सुवीराः शोभनपुत्रयुक्ताः स्याम भवाम ॥

अथ चतुर्थीमाह—

मह्यं यजन्तु मम यानि हव्याऽऽकूतिः सत्या मनसो मे अस्तु । एनो मा नि गां कतमच्चनाहं विश्वे देवासो अधि वोचता मे । , इति ।

यानि मम हव्या मदीयानि हवींषि सन्ति तानि सर्वाणि मह्यं मदर्थं दैव्या ऋत्विजो यजन्तु । मे मम मनस आकूतिर्मदीयस्य मनसः संबन्धी योऽयं संकल्पः साऽऽकूतिः सत्याऽस्तु संकल्पितार्थः सिध्यत्वित्यर्थः । अहं कतमच्चनैनः किमपि पापं मा निगां नितरां मा प्राप्नवानि । विश्वे देवासो हे विश्वे देवा मे मदर्थमधिवोचताऽऽधिक्यं ब्रूत यजमानानां मध्येऽयमधिक इति देवानामग्रे कथयत ॥

अथ पञ्चमीमाह—

( विहव्याख्येष्टकाभिधानम् )

देवीः षडुर्वीरुरु णः कृणोत विश्वे देवास इह वीरयध्वम्। मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन्।, इति।

देवीः षडुर्वीरुर्वीनामिकाः षट्संख्याका हे देव्यः। अत एव शाखान्तरेऽग्न्युपस्थाने समाम्नातम्—" षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चाऽऽपश्चौषधयश्चोक्‌र्च सूनृता च " इति। तादृश्यो हे देव्यो नोऽस्मदीयमिदं कर्मोरु कृणोत विस्तीर्णं कुरुत। विश्वे देवासो हे विश्वे देवा इह कर्मणि वीरयध्वं वीरा भवत विघ्नं परिहरतेत्यर्थः। वयं प्रजया पुत्रादिरूपया मा हास्महि परित्यक्ता मा भूम। तथा तनूभिः पुष्टशरीरैर्मा हास्महि। हे सोम राजन्द्विपते वैरिणे मा रधाम कार्यसिद्धिं मा करवाम॥

अथ षष्ठीमाह—

अग्निर्मन्युं प्रतिनुदन्पुरस्तादद॑ब्धो गोपाः परि पाहि नस्त्वम्। प्रत्यञ्चो यन्तु निगुतः पुनस्तेऽमैषां चित्तं प्रबुधा वि नेशत्।, इति।

अयमग्निर्मन्युं वैरिणां[1] कोपं प्रतिनुदन्निराकुर्वन्पुरस्तादस्माकं पुरतो गच्छत्विति शेषः। हेऽग्ने त्वमदब्धः केनाप्यहिंसितो गोपा रक्षणसमर्थः सन्नोऽस्मान्परिपाहि सर्वतः पालय। तव पालने सति ते वैरिणः प्रत्यञ्चः प्रतिमुखा विमुखाः सन्तो निगुतो नितरां गमनशीलाः पलायनपराः पुनर्यन्तु भूयो भूयो यत्र क्वापि गच्छन्तु। एषां वैरिणां चित्तमन्तःकरणं प्रबुधाऽमा विनेशत्प्रबोधेन सह विनश्यतु॥

अथ सप्तमीमाह—

धाता धातॄणां भुवनस्य यस्पतिर्देवꣳ सवितारमभिमातिषाहम्। इमं यज्ञमश्विनोभा बृहस्पतिर्देवाः पान्तु यजमानं न्यर्थात्।, इति।

धातॄणां जगत्कर्तॄणां दक्षप्रजापत्यादीनामपि धाता यः स्रष्टा भुवनस्य लोकस्य पतिः पालकश्च। तथाऽश्विनोभोभावश्विनौ बृहस्पतिश्चेत्येते देवा नोऽस्मदीयमिमं यज्ञं यजमानं च न्यर्थात्फलवैगुण्यलक्षणाद्वैयर्थ्यात्पान्तु

---

१ क. घ. ङ. वैरिणं।

रक्षन्तु। कीदृशं यज्ञम्, देवं तत्तन्मन्त्रव्यवहारयुक्तं सवितारं महाफलजनक-मभिमातिषाहं पापलक्षणस्याभिमातेररेरभिभवितारम् ॥

अथाष्टमीमाह—

उरुव्यचा नो महिषः शर्म यꣳसदस्मिन्हवे पुरुहूतः पुरुक्षु। स नः प्रजायै हर्यश्व मृडयेन्द्र मा नो रीरिषो मा परा दाः।, इति।

पुरुभिर्बहुभिर्यजमानैर्हूत आहूतः पुरुहूत इन्द्रः। हूयतेऽस्मिन्निति हवो यज्ञस्तस्मिन्यज्ञे स इन्द्रो नोऽस्माकं शर्म सुखं यंसद्यच्छतु। कीदृश इन्द्रः, उरुव्यचा अत्यन्तं व्याप्तो बहुदेशाधिपतिरित्यर्थः। महिषो महाञ्शौर्यादि-गुणसंपन्नः। पुरुक्षु पुरुषु बहुमन्त्रेषु क्षूयते शब्द्यते प्रतिपाद्यत इति पुरुक्षुः पुरुक्षुरेव पुरुक्षु। हरिनामानावश्वौ यस्यासौ हर्यश्वः। तादृश हे इन्द्र प्रजायै पुत्रादिप्रजासिद्ध्यर्थं स त्वं नोऽस्मान्मृडय सुखय, नोऽस्मान्मा रीरिषो मा हिंसीर्मा परादा मा च तिरस्कुरु ॥

अथ नवमीमाह—

ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान्। वसवो रुद्रा आदित्या उप-रिस्पृशं मोग्रं चेत्तारमधिराजमक्रन्।, इति।

ये केचिन्नोऽस्माकं सपत्नाः शत्रवः सन्ति तेऽपभवन्त्वपनययुक्ता भवन्तु। वयं तान्सपत्नानिन्द्राग्निभ्यामनुग्रहयुक्ताभ्यां सहिता अवबाधामहे सर्वथा बाधितान्कुर्मः। वसुरुद्रादित्या देवता मामेतादृशमक्रन्कुर्वन्तु। कीदृशमिति, तदुच्यते—उपरितनं स्वर्गं स्पृशतीत्युपरिस्पृक्तम्, उग्रं शत्रुतिरस्कारक्षमं, चेत्तारमभिज्ञातारम्, अधिराजमन्येषां सर्वेषामधिपतिम् ॥

अथ दशमीमाह—

अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धन-जिदश्वजिद्यः। इमं नो यज्ञं विहवे जुष-स्वास्य कुर्मो हरिवो मेदिनं त्वा ॥, इति ॥

य इन्द्रो गोजित्परकीयगवां जेता, तथा यो धनजित्परकीयधनस्य जेता, योऽश्वजित्परकीयाश्वानां जेताऽस्ति, अर्वाञ्चमस्मदभिमुखं तमिन्द्रममुतोऽमुं यज्ञं निमित्तीकृत्य हवामह आह्वयामः। हे इन्द्र विहवे विविधाह्वाने सति

( विहव्याख्येष्टकाभिधानम् )

नोऽस्मदीयमिमं यज्ञं जुषस्व सेवस्व। हरिनामकावश्वौ यस्य स हरिवान्। हे हरिव इन्द्र त्वामस्य यजमानस्य मेदिनं स्नेहवन्तं कुर्मः॥

एतैर्मन्त्रैः साध्यमुपधानं विधित्सुरादौ कानिचित्काम्यचयनानि दर्शयति।

यदुक्तं सूत्रकारेण—"छन्दश्चितं चिन्वीत पशुकाम इति विज्ञायते सर्वैश्छन्दोभिश्चिनुयादित्येकं प्राकृतैरित्यपरम्" इति, तदिदं विधत्ते—

"छन्दश्चितं चिन्वीत पशुकामः पशवो वै छन्दाꣳसि पशुमानेव भवति" [ सं० का० ५ प्र० ४ अ० ११ ] इति।

अग्निर्मूर्धा दिवः ककुदित्यनुवाकोक्ता नानाछन्दोयुक्तमन्त्रास्तैरेव चितो न तु यजुर्भिरिति च्छन्दश्चितस्तादृशमग्निं पशुकामश्चिनुयात्॥

यच्च सूत्रकारेणोक्तं "श्येनचितं चिन्वीत सुवर्गकाम इति विज्ञायते वक्रपक्षो व्यस्तपुच्छो भवति पश्चात्प्राङुदूहति पुरस्तात्प्रत्यङुदूहत्येवमिव हि वयसां मध्ये पक्षनिर्णामो भवतीति विज्ञायते" इति, तदिदं विधत्ते—

"श्येनचितं चिन्वीत सुवर्गकामः श्येनो वै वयसां पतिष्ठः श्येन एव भूत्वा सुवर्गं लोकं पतति" [ सं० का० ५ प्र० ४ अ० ११ ] इति।

वयसां मध्ये श्येनोऽतिशीघ्रं पतितुं समर्थः। श्येन एव श्येनवच्छीघ्रगाम्येव॥

यदुक्तं सूत्रकारेण—"कङ्कचिदलजचिदिति श्येनचिता व्याख्यातौ" इति, तदिदमुभयं क्रमेण विधत्ते—

"कङ्कचितं चिन्वीत यः कामयेत शीर्षण्वानमुष्मिँल्लोके स्यामिति शीर्षण्वानेवामुष्मिँल्लोके भवत्यलजचितं चिन्वीत चतुःसीतं प्रतिष्ठाकामश्चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठति" [ सं० का० ५ प्र० ४ अ० ११ ] इति।

कङ्कालजौ श्येनस्यैवावान्तरजातिभेदौ। तत्र कङ्कस्य शिरो मण्डलाकारम्। अलजस्य तु पादयोर्विशेषः। अत एव पादस्थानीयासु सीतासु द्वादशसंख्यामपोह्य चतुःसंख्यां ब्रूते। तत्र कङ्कचिता स्वर्गलोके शीर्षण्वान्सर्वेषां मध्य उन्नतशिरस्कः प्रभुर्भवतीत्यर्थः। अथालजचिता सीताचतुष्टयदिग्द्वारा प्रतिष्ठां प्राप्नोति॥

यदप्युक्तं सूत्रकारेण—"प्रउगचितं चिन्वीत भ्रातृव्यवानिति विज्ञायते यावानग्निः सारत्निप्रादेशो द्विस्तावतीं भूमिं चतुरश्रां कृत्वा पूर्वस्याः करण्या अर्धाच्छ्रोणी प्रत्यालिखेत्" इति, तदिदं विधत्ते—

---

१ घ ङ. °का अश्वा य°।

" प्रउगचितं चिन्वीत भ्रातृव्यवान्प्रैव भ्रातृव्यान्नुदते " [ सं० का० ५ प्र० ४ अ० ११ ] इति ।

प्रउगमनोमुखं, यथा शकटस्य पश्चाद्भागो विस्तृतः पूर्वभागः संकुचितस्तद्वत् । एतेन भ्रातृव्यान्प्रणुदते ॥

यदप्युक्तं सूत्रकारेण—" उभयतःप्रउगं चिन्वीत यः कामयेत प्रजातान्भ्रातृव्यान्नुदेय प्रति जनिष्यमाणानिति विज्ञायते यथा विमुखे शकटे " इति, तदिदं विधत्ते—

" उभयतःप्रउगं चिन्वीत यः कामयेत प्रजातान्भ्रातृव्यान्नुदेय प्रति जनिष्यमाणानिति प्रैव जातान्भ्रातृव्यान्नुदते प्रति जनिष्यमाणान् " [ सं० का० ५ प्र० ४ अ० ११ ] इति ।

प्राक्पश्चाच्च शकटमुखसदृशमुभयतःप्रउगं तेनोत्पन्नान्भ्रातृव्यान्विनाशयति । उत्पत्स्यमानानामुत्पत्तिं प्रतिबध्नाति ॥

यदप्युक्तं सूत्रकारेण—" रथचक्रचितं चिन्वीत भ्रातृव्यवानिति विज्ञायते यावानग्निः सारत्निप्रादेशस्तावतीं भूमिं परिमण्डलां कृत्वा " इति, तदिदं विधत्ते—

" रथचक्रचितं चिन्वीत भ्रातृव्यवान्वज्रो वै रथो वज्रमेव भ्रातृव्येभ्यः प्र हरति " [ सं० का० ५ प्र०४ अ० ११ ] इति ।

रथचक्रवद्वर्तुलत्वेन चीयत इति रथचक्रचित् ॥

यदप्युक्तं सूत्रकारेण—" द्रोणचितं चिन्वीतान्नकाम इति विज्ञायते द्वयानि तु खलु द्रोणानि चतुरश्राणि परिमडण्लानि च तत्र[1] याथाकामी " इति, तदेतद्विधत्ते—

" द्रोणचितं चिन्वीतान्नकामो द्रोणे वा अन्नं भ्रियते सयोन्येवान्नमव रुन्धे " [ सं० का० ५ प्र० ४ अ० ११ ] इति ।

द्रोणे हि धान्यं भरन्त्यतो धान्यस्थानसहितमन्नं प्राप्नोति ॥

यदप्युक्तं सूत्रकारेण—" समूह्यं चिन्वीत पशुकाम इति विज्ञायते समूहन्निवेष्टका उपदधाति " इति, तदिदं विधत्ते—

" समूह्यं चिन्वीत पशुकामः पशुमानेव भवति " [ सं० का० ५ प्र० ४ अ० ११ ] इति ।

समूहमर्हतीति समूह्यः ॥

---

१ क. ख. °त्र यथा° ।

(विहव्याख्येष्टकाभिधानम्)

यदप्युक्तं सूत्रकारेण—"परिचाय्यं चिन्वीत ग्रामकाम इति विज्ञायते मध्यमां स्वयमातृण्णां प्रदक्षिणमिष्टकागणैः परिचिनोति स परिचाय्यः" इति, तदिदं विधत्ते—

"परिचाय्यं चिन्वीत ग्रामकामो ग्राम्येव भवति" [सं० का० ५ प्र० ४ अ० ११] इति॥

यदप्युक्तं सूत्रकारेण—"श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति विज्ञायते द्वयानि तु खलु श्मशानानि चतुरश्राणि परिमण्डलानि च तत्र याथाकामी" इति, तदेतद्विधत्ते—

"श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति पितृलोक एवर्ध्नोति" [सं० का० ५ प्र० ४ अ० ११] इति॥

तदेवं काम्यचयनानि समापितानि। अथ प्रकृतैर्ममाग्ने वर्च इत्यादिभिर्मन्त्रैः साध्यमुपधानं विधत्ते—

"विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धेताꣳ स एता जमदग्निर्विहव्या अपश्यत्ता उपाधत्त ताभिर्वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्त यद्विहव्या उपदधातीन्द्रियमेव ताभिर्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते" [सं० का० ५ प्र० ४ अ० ११] इति॥

विहवशब्दोपेतैर्मन्त्रैरुपधेया इष्टका विहव्याः॥

उपधानदेशं विधत्ते—

"होतुर्धिष्णिय उप दधाति यजमानायतनं वै होता स्व एवास्मा आयतन इन्द्रियं वीर्यमव रुन्धे" [सं० का० ५ प्र० ४ अ० ११] इति।

देवाह्वानादिकस्य यजमानकार्यस्य होत्रा निष्पाद्यत्वाद्धोता यजमानस्याऽऽयतनम्॥

तत्र संख्यां विधत्ते—

"द्वादशोप दधाति द्वादशाक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनव रुन्धे" [सं० का० ५ प्र० ४ अ० ११] इति।

यद्यप्यत्र मन्त्राणां दशत्वान्मन्त्रकर्मणोः समसंख्या नास्ति तथाऽपि मन्त्रावृत्त्या कर्मसंख्या पूरणीया। तत्प्रकारश्च सूत्रकारेण दर्शितः—"अल्पीयांसो मन्त्रा भूयांसि कर्माणि तत्र समशः प्रतिविभज्य पूर्वैः पूर्वाणि कारयेदुत्तरैरुत्तराण्यल्पीयांसि कर्माणि भूयांसो मन्त्रास्तत्र प्रतिमन्त्रं कुर्यादवशिष्टा विकल्पार्था यथायूपद्रव्याणीत्यन्ताल्लोपो विवृद्धिर्वा" इति। अतोऽत्र पूर्वभाग-

---

१ ख. च. °कामम्' इ°।

स्यान्तिमं पञ्चममुत्तरभागस्यान्तिमं दशमं चाऽऽवृत्त्या वर्धयित्वा संख्या पूरणीया ॥

स्थानान्तरेषु संख्यां विधत्ते—

“ अष्टावष्टावन्येषु धिष्णियेषूप दधात्यष्टाशफाः पशवः पशूनेवाव रुन्धे ” [ सं० का० ५ प्र० ४ अ० ११ ] इति ।

प्रशास्त्रीयपोत्रीयनेष्ट्रीयाच्छावाकीयादीन्यन्यानि धिष्णियानि । तत्र नवमदशममन्त्रयोर्लोपेनाष्टसंख्याऽवगन्तव्या ॥

क्वचित्संख्यान्तरं विधत्ते—

“ षण्मार्जालीये षड्वा ऋतव ऋतवः खलु वै देवाः पितर ऋतूनेव देवान्पितॄन्प्रीणाति ” [ सं० का० ५ प्र० ४ अ० ११ ] इति ।

दैविकस्य पैतृकस्य च कस्मिंश्चिद्दतौ कर्तव्यत्वाहतूनां देवत्वं पितृत्वं च । अत्र सप्तमादीनां चतुर्णां मन्त्राणां लोपः ॥

अत्र विनियोगसंग्रहः—

ममाग्ने दशभिर्मन्त्रैर्धिष्णियेषु यथायथम् ।
इष्टका उपधत्तेऽत्र वह्निकाण्डः समापितः ॥ १ ॥

अथ मीमांसा ।

तृतीयाध्यायस्याष्टमपादे चतुर्दशाधिकरणे चिन्तितम्—

ममाग्न इति कस्यात्र फलं लिङ्गेन वक्तृगम् ।
श्रुत्या स्वामिनि न क्रीते लिङ्गं तत्रोपचर्यताम् ॥

ममाग्ने वर्चो विहवेष्वित्ययं* मन्त्र इष्टकाचयनाङ्गभूतोऽध्वर्युणा पठ्यते । विशिष्टं हवनं येषां यज्ञानां ते विहवास्तेषु वर्चस्तेजसोपलक्षितं यत्फलं तन्ममास्त्वित्यनेन लिङ्गेन मन्त्रमुच्चारयितुरध्वर्योस्तत्फलमिति चेन्मैवम् । ×अधिचिनुत इत्यात्मनेपदश्रुत्या साङ्गप्रधानफलस्य यजमानगामित्वं प्रतीयते । न च परिक्रीतस्याध्वर्योर्दक्षिणातिरिक्तफलसंबन्धो न्याय्यः । तस्माच्छ्रुतिन्यायाभ्यां विरुद्धं तल्लिङ्गं यजमानपरत्वेनोपचरणीयम् । मदीययजमानस्य तद्वर्चोऽस्त्विति ह्युपचारः । तस्माद्यजमानेन पाठ्येष्वायुर्दा अग्नेऽस्यायुर्मे देहीत्या-

---

* न्यायमालायां ‘ त्वयमाहवनीयस्यान्वाधाने करणभूतो मन्त्रोऽध्व ’ इति पाठः ।

× ‘ दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ’ इति न्यायमालापाठः ।

(अश्वमेधसंबन्धियाज्यानुवाक्याभिधानम्)

दिषु क्रियमाणानुवादिषु प्रत्यगाशीर्मन्त्रेषु श्रुतं फलं यथा याजमानं तथैवाध्वर्युणा पाठ्येषु करणमन्त्रेषु श्रुतमपि फलं याजमानमेव ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

(अथ चतुर्थाष्टके सप्तमप्रपाठके पञ्चदशोऽनुवाकः ।)

---

अ॒ग्नेर्म॑न्वे प्रथ॒मस्य॒ प्रचे॑तसो॒ यं पाञ्च॑जन्यं ब॒हव॑: समि॒न्धते॑ । विश्व॑स्यां वि॒शि प्र॑विविशि॒वाꣳस॑मीमहे॒ स नो॑ मुञ्च॒त्वꣳह॑सः । यस्ये॒दं प्रा॒णन्नि॑मि॒षद्यदेज॑ति॒ यस्य॑ जा॒तं जन॑मानं च॒ केव॑लम् । स्तौम्य॒ग्निं ना॑थि॒तो जो॑हवीमि॒ स नो॑ मुञ्च॒त्वꣳह॑सः । इन्द्र॑स्य मन्ये प्रथ॒मस्य॒ प्रचे॑तसो वृत्र॒घ्नः स्तोमा॒ उप॒ मामु॒पागु॑: । यो दा॒शुष॑: सु॒कृतो॒ हव॒मुप॒ गन्ता॑ (१) स नो॑ मुञ्च॒त्वꣳह॑सः । यः स॑ङ्ग्रा॒मं नय॑ति॒ सं व॒शी यु॒धे यः पु॒ष्टानि॑ सꣳसृ॒जति॑ त्र॒याणि॑ । स्तौमीन्द्रं॑ ना॒थि॒तो जो॑हवीमि॒ स नो॑ मुञ्च॒त्वꣳह॑सः । मन्वे॒ वां॑ मित्रावरुणा॒ तस्य॑ वित्त॒ꣳ सत्यौ॑जसा दृꣳहणा॒ यं नु॒देथे॑ । या राजा॑नꣳ स॒रथं॑ या॒थ उ॑ग्रा॒ ता नो॑ मुञ्चत॒मागस॑: । यो वा॒ꣳ रथ॑ऋजु॒र॑श्मिः स॒त्यध॑र्मा॒ मिथु॒श्चर॑न्तमु॒पयाति॑ दू॒षय॑न् ।

स्तौमि ( २ ) मित्रावरुणा नाथितो जोहवीमि तौ नो मुञ्चतमागसः । वायोः सवितुर्विदथानि मन्महे यावात्मन्वद्बिभृतो यौ च रक्षतः । यौ विश्वस्य परिभू बभूवतुस्तौ नो मुञ्चतमागसः । उप श्रेष्ठा न आशिषो देवयोर्धर्मे अस्थिरन् । स्तौमि वायुꣳ सवितारं नाथितो जोहवीमि तौ नो मुञ्चतमागसः । रथीतमौ रथीनामह्व ऊतये शुभं गमिष्ठौ सुयमेभिरश्वैः । ययोः ( ३ ) वां देवौ देवेष्वनिशितमोजस्तौ नो मुञ्चतमागसः । यदयातं वहतुꣳ सूर्यायास्त्रिचक्रेण सꣳसदमिच्छमानौ । स्तौमि देवावश्विनौ नाथितो जोहवीमि तौ नो मुञ्चतमागसः । मरुतां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे । आशून्हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः । तिग्ममायुधं वीडितꣳ सहस्वद्दिव्यꣳ शर्धः ( ४ ) पृतनासु जिष्णु । स्तौमि देवान्मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः । देवानां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे । आशून्हुवे सुयमा-

नूतये ते नो मुञ्चन्त्वेनसः । यदिदं माऽभिशो-
चति पौरुषेयेण दैव्येन । स्तौमि विश्वान्देवा-
न्नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः । अनु
नोऽद्यानुमतिरनु (५) इदनुमते त्वं वैश्वा-
नरो न ऊत्या पृष्टो दिवि । ये अप्रथेताममि-
तेभिरोजोभिर्ये प्रतिष्ठे अभवतां वसूनाम् ।
स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते
नो मुञ्चतमꣳहसः । उर्वी रोदसी वरिवः कृणोतं
क्षेत्रस्य पत्नी अधि नो ब्रूयातम् । स्तौमि
द्यावापृथिवी नाथितो जोहवीमि ते नो
मुञ्चतमꣳहसः । यत्ते वयं पुरुषत्रा यविष्ठा-
विद्वाꣳसश्चकृमा कच्चन (६) आगः । कृधी
स्वस्माꣳ अदितेरनागा व्येनाꣳसि शिश्रथो
विष्वगग्ने । यथा ह तद्वसवो गौर्यं चित्पदि
षिताममुञ्चता यजत्राः । एवा त्वमस्मत्प्र मुञ्चा
व्यꣳहः प्रातार्यग्ने प्रतरां न आयुः (७) ॥

(गन्ता दूषयन्त्स्तौमि ययोः शर्धोऽनु मतिरनु चन चतुस्त्रिꣳशच्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके
सप्तमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

( अश्वमेधसंबन्धियाज्यानुवाक्याभिधानम् )

अग्नाविष्णू ज्यैष्ठ्यꣳ शं चोर्क्चाश्मा चाग्निश्चाꣳशुश्चेध्मश्चाग्निश्च घर्म गर्भा-

श्चैका च वाजो नोऽग्निं युनज्मि ममाग्नेऽग्नेर्मन्वे पञ्चदश ॥ १९ ॥

अग्नाविष्णू अग्निश्च वाजो नो अदब्धो गोपा एकान्नचत्वा-

रिꣳशत् ॥ ३९ ॥

हरिः ॐ ।

## इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टके सप्तमः प्रपाठकः ॥ ७ ॥

---

## इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थाष्टकः ॥ ४ ॥

---

( अथ चतुर्थाष्टके सप्तमप्रपाठके पञ्चदशोऽनुवाकः । )

---

अग्नेः । मन्वे । प्रथमस्य । प्रचेतस इति प्र—चेतसः । यम् । पाञ्चजन्यमिति पाञ्च—जन्यम् । बहवः । समिन्धत इति सम्—इन्धते । विश्वस्याम् । विशि । प्रविविशिवाꣳसमिति प्र—विविशिवाꣳसम् । ईमहे । सः । नः । मुञ्चतु । अꣳहसः । यस्य । इदम् । प्राणदिति प्र—अनत् । निमिषदिति नि—मिषत् । यत् । एजति । यस्य । जातम् । जनमानम् । च । केवलम् । स्तौमि । अग्निम् । नाथितः । जोहवीमि । सः । नः । मुञ्चतु । अꣳहसः । इन्द्रस्य । मन्ये । प्रथमस्य । प्रचेतस इति प्र—चेतसः । वृत्रघ्न

(अश्वमेधसंबन्धियाज्यानुवाक्याभिधानम्)

इति वृत्र—घ्नः । स्तोमाः । उपेति । माम् । उपागु-
रित्युप—आगुः । यः । दाशुषः । सुकृत इति सु—
कृतः । हवम् । उपेति । गन्ता ( १ ) । सः । नः ।
मुञ्चतु । अꣳहसः । यः । सङ्ग्राममिति सं—ग्रामम् ।
नयति । समिति । वशी । युधे । यः । पुष्टानि ।
सꣳसृजतीति सं—सृजति । त्रयाणि । स्तौमि ।
इन्द्रम् । नाथितः । जोहवीमि । सः । नः । मुञ्चतु ।
अꣳहसः । मन्वे । वाम् । मित्रावरुणेति मित्रा—
वरुणा । तस्य । वित्तम् । सत्यौजसेति सत्य—
ओजसा । दृꣳहणा । यम् । नुदेथे इति । या ।
राजानम् । सरथमिति स—रथम् । याथः । उग्रा ।
ता । नः । मुञ्चतम् । आगसः । यः । वाम् । रथः ।
ऋजुरश्मिरित्यृजु—रश्मिः । सत्यधर्मेति सत्य—
धर्मा । मिथु । चरन्तम् । उपयातीत्युप—याति ।
दूषयन् । स्तौमि ( २ ) । मित्रावरुणेति मित्रा—
वरुणा । नाथितः । जोहवीमि । तौ । नः । मुञ्चतम् ।
आगसः । वायोः । सवितुः । विदथानि । मन्महे ।
यौ । आत्मन्वदित्यात्मन्—वत् । बिभृतः । यौ ।
च । रक्षतः । यौ । विश्वस्य । परिभू इति परि—
भू । बभूवतुः । तौ । नः । मुञ्चतम् । आगसः ।

उपेति । श्रेष्ठाः । नः । आशिष इत्या—शिषः । देवयोः । धर्मे । अस्थिरन् । स्तौमि । वायुम् । सवितारम् । नाथितः । जोहवीमि । तौ । नः । मुञ्चतम् । आगसः । रथीतमाविति रथी—तमौ । रथीनाम् । अह्वे । ऊतये । शुभम् । गमिष्ठौ । सुयमेभिरिति सु—यमेभिः । अश्वैः । ययोः (३) । वाम् । देवौ । देवेषु । अनिशितमित्यनि—शितम् । ओजः । तौ । नः । मुञ्चतम् । आगसः । यत् । अयातम् । वहतुम् । सूर्यायाः । त्रिचक्रेणेति त्रि—चक्रेण । सꣳसदमिति सं—सदम् । इच्छमानौ । स्तौमि । देवौ । अश्विनौ । नाथितः । जोहवीमि । तौ । नः । मुञ्चतम् । आगसः । मरुताम् । मन्वे । अधीति । नः । ब्रुवन्तु । प्रेति । इमाम् । वाचम् । विश्वाम् । अवन्तु । विश्वे । आशून् । हुवे । सुयमानिति सु—यमान् । ऊतये । ते । नः । मुञ्चन्तु । एनसः । तिग्मम् । आयुधम् । वीडितम् । सहस्वत् । दिव्यम् । शर्धः (४) । पृतनासु । जिष्णु । स्तौमि । देवान् । मरुतः । नाथितः । जोहवीमि । ते । नः । मुञ्चन्तु । एनसः । देवानाम् । मन्वे । अधीति । नः । ब्रुवन्तु । प्रेति । इमाम् । वाचम् । विश्वाम् । अवन्तु । विश्वे । आ-

शून् । हुवे । सुयमानिति सु—यमान् । उतये । ते । नः । मुञ्चन्तु । एनसः । यत् । इदम् । मा । अभिशोचतीत्यभि—शोचति । पौरुषेयेण । दैव्येन । स्तौमि । विश्वान् । देवान् । नाथितः । जोहवीमि । ते । नः । मुञ्चन्तु । एनसः । अन्विति । नः । अद्य । अनुमतिरित्यनु—मतिः । अन्विति (५)। इत् । अनुमत इत्यनु—मते । त्वम् । वैश्वानरः । नः । उत्या । पृष्टः । दिवि । ये इति । अप्रथेताम् । अमितेभिः । ओजोभिरित्योजः—भिः । ये इति । प्रतिष्ठे इति प्रति—स्थे । अभवताम् । वसूनाम् । स्तौमि । द्यावापृथिवी इति द्यावा—पृथिवी । नाथितः । जोहवीमि । ते इति । नः । मुञ्चतम् । अꣳहसः । उर्वी इति । रोदसी इति । वरिवः । कृणोतम् । क्षेत्रस्य । पत्नी इति । अधीति । नः । ब्रूयातम् । स्तौमि । द्यावापृथिवी इति द्यावा—पृथिवी । नाथितः । जोहवीमि । ते इति । नः । मुञ्चतम् । अꣳहसः । यत् । ते । वयम् । पुरुषत्रेति पुरुष—त्रा । यविष्ठ । अविद्वाꣳसः । चकृम । कत् । चन (६)। आगः । कृधि । स्विति । अस्मान् । अदितेः । अनागाः । वीति । एनाꣳसि । शिश्रथः ।

विष्वँङ् । अग्ने । यथा । ह । तत् । वसवः । गौर्यम् । चित् । पदि । सिताम् । अमुञ्चत । यजत्राः । एव । त्वम् । अस्मत् । प्रेति । मुञ्च । वीति । अँहः । प्रेति । अतारि । अग्ने । प्रतरामिति प्र—तराम् । नः । आयुः ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके सप्तमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके सप्तमः प्रपाठकः ॥ ७ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टकः ॥ ४ ॥

( अथ चतुर्थकाण्डे सप्तमप्रपाठके पञ्चदशोऽनुवाकः । )

चतुर्दशानुवाके विहव्याख्या इष्टका उक्ताः । तावतेष्टकाचयनमन्त्राः समाप्ताः । अथ पञ्चदशेऽश्वमेधसंबन्धिन्यो याज्यानुवाक्या उच्यन्ते । अयं चानुवाकोऽस्मात्काण्डादुत्क्रष्टव्यः ।

कल्पः—“ अग्नयेऽँहोमुचेऽष्टाकपाल इति दशहविषं मृगारेष्टिमनुनिर्वपति समानं तु स्विष्टकृदिडमग्नेर्मन्वे प्रथमस्य प्रचेतस इति यथालिङ्गं याज्यानुवाक्याः ” इति ।

तत्रोदाहृतस्य प्रथमहविषः पुरोनुवाक्यामाह—

अग्नेर्मन्वे प्रथमस्य प्रचेतसो यं पाञ्चजन्यं बहवः समिन्धते । विश्वस्यां विशि प्रविविशिवाँसमीमहे स नो मुञ्चत्वँहसः । ’ इति ।

( अश्वमेधसंवन्धियाज्यानुवाक्याभिधानम् )

पञ्चजना निषादपञ्चमा वर्णास्तेभ्यो हितः पाञ्चजन्यस्तादृशं यमाग्निं बहवो यजमानाः समिन्धते प्रदीपयन्ति, प्रथमस्य सृष्ट्यादावुत्पन्नस्य प्रचेतसः प्रकृष्टज्ञानवतस्तस्याग्नेर्मूर्तिं मन्वे मनसा चिन्तयामि। विश्वस्यां विशि सर्वस्यां प्रजायां प्रविविशिवांसं जाठराग्निरूपेण प्रविष्टवन्तं तमग्निमीमहे वयं प्राप्नुमः। सोऽग्निर्नोऽस्मानंहसः पापान्मुञ्चतु मुक्तान्करोतु ॥

तत्रैव याज्यामाह—

यस्येदं प्राणन्निमिषद्यदेजति यस्य जातं जन-
मानं च केवलम्। स्तौम्यग्निं नाथितो
जोहवीमि स नो मुञ्चत्वꣳहसः।, इति।

प्राणदुच्छ्वासोपेतं निमिषन्निमेषोपेतं यदिदं जगदेजति कम्पते चेष्टत इत्यर्थः। तत्सर्वं यस्याग्नेरधीनं जातं पूर्वमुत्पन्नं जनमानमितः परं जनिष्यमाणं च जगत्सर्वं केवलं परनिरपेक्षं सद्यस्याधीनं तमग्निं स्तौमि। नाथितः फलयाच्ञायुक्तोऽहं जोहवीमि पुनः पुनर्जुहोमि। शेषं पूर्ववत्।

अथेन्द्रायाꣳहोमुच एकादशकपाल इत्यस्य पुरोनुवाक्यामाह—

इन्द्रस्य मन्ये प्रथमस्य प्रचेतसो वृत्रघ्नः
स्तोमा उप मामुपागुः। यो दाशुषः सुकृतो
हवमुप गन्ता स नो मुञ्चत्वꣳहसः।, इति।

प्रथमस्य सृष्ट्यादावुत्पन्नस्य प्रचेतसः प्रकृष्टज्ञानवत इन्द्रस्य मूर्तिं मन्येऽहं मनसा चिन्तयामि। वृत्रघ्नः शत्रुघातिन इन्द्रस्योप समीपं प्राप्ताः स्तोमाः स्तोत्राणि मां यजमानमुपागुः प्राप्ताः। इन्द्रगुणकथनपराणि स्तोत्राणि मज्जिह्वायामवस्थितानीत्यर्थः। य इन्द्रो दाशुषो हविर्दत्तवतः सुकृतः सुष्ठु कर्मानुतिष्ठतो यजमानस्य हवमाह्वानं यज्ञं वोपगन्ता प्राप्स्यति ॥

तत्रैव याज्यामाह—

यः संङ्ग्रामं नयति सं वशी युधे यः पुष्टानि
सꣳसृजति त्रयाणि। स्तौमीन्द्रं नाथितो
जोहवीमि स नो मुञ्चत्वꣳहसः।, इति।

य इन्द्रो युधे योद्धुं वशी स्वाधीनपरिवारोपेतः सङ्ग्रामं युद्धदेशं प्रति संनयति स्वकीयां सेनां सम्यक्प्रापयति। यश्चेन्द्रः पुष्टानि संपूर्णानि त्रयाणि गवाश्वपुरुषरूपाणि संसृजति यजमानेन योजयति। शेषं पूर्ववत् ॥

अथ मित्रावरुणाभ्यामागोमुग्भ्यां पयस्येत्यस्य पुरोनुवाक्यामाह—

मन्वे वां मित्रावरुणा तस्य वित्तꣳ सत्यौजसा
दृꣳहणा यं नुदेथे । या राजानꣳ सरथं
याथ उग्रा ता नो मुञ्चतमागसः ।, इति ।

मित्रावरुणा हे मित्रावरुणौ वां युवयोर्मूर्ति मन्वे मनसा ध्यायामि। सत्यौजसाऽकृत्रिमबलौ दृंहणा स्तम्भयन्तौ युवां यमस्मद्वैरिणं नुदेथे निराकुरुत (थ) स्तस्य वैरिणो वित्तं दुष्टबुद्धिं जानीतम् । या युवां यावुभौ राजानं दीप्तिमन्तं सरथं रथसहितमादित्यं याथो लोकोपकाराय वृष्टिमुत्पादयितुं प्राप्नुथः, उग्राऽनिष्टनिवारणेऽत्यन्तं तीक्ष्णौ ता तौ युवां नोऽस्मानागसः पापान्मुञ्चतं मुक्तं कुरुतम् ॥

तत्रैव याज्यामाह—

यो वाꣳ रथ ऋजुरश्मिः सत्यधर्मा मिथु श्चरन्त-
मुपयाति दूषयन् । स्तौमि मित्रावरुणा
नाथितो जोहवीमि तौ नो मुञ्चतमागसः।,इति ।

हे मित्रावरुणौ वां युवयोर्यो रथ ऋजुरश्मिरकुटिलप्रग्रहः सत्यधर्माऽवितथधारणश्च भवति स रथो मिथुश्चरन्तं मिथ्याचारिणमन्यायकारिणं शत्रुं दूषयन्नुपयाति बाधमानः प्राप्नोति । स्तौमीत्यादि पूर्ववत् ॥

अथ वायोसावित्र आगोमुग्भ्यां चरुरित्यस्य पुरोनुवाक्यामाह—

वायोः सवितुर्विदथानि मन्महे यावात्मन्व-
द्बिभृतो यौ च रक्षतः । यौ विश्वस्य
परिभू बभूवतुस्तौ नो मुञ्चतमागसः।, इति ।

यो वायुर्यश्च सविता तयोरुभयोर्विदथानि वेदनान्यभिप्रायविशेषान्मन्महे जानीमः । यौ वायुसवितारावात्मन्वत्स्वशरीरमिव बिभृतः सर्वं जगद्धारयतः । किंच यौ वायुसवितारौ रक्षतो जगत्पालयतः । किंच यौ वायुसवितारौ विश्वस्य कृत्स्नस्य जगतः परिभू परितो व्यापकौ बभूवतुस्ताविल्यादि पूर्ववत्॥

तत्रैव याज्यामाह—

उप श्रेष्ठा न आशिषो देवयोर्धर्मे अस्थि-

(अश्वमेधसंबन्धियाज्यानुवाक्याभिधानम्)

रन्‌ । स्तौमि वायुꣳ सवितारं नाथितो जोहवीमि तौ नो मुञ्चतमागसः ।, इति ।

श्रेष्ठाः प्रशस्ता नोऽस्मदीया आशिषः फलविशेषा देवयोर्वायुसवित्रोः संबन्धिनि धर्मे कर्मण्युपास्थिरन्नुपास्थितास्तदधीना इत्यर्थः । स्तौमीत्यादि पूर्ववत्‌ ॥

अथाश्विभ्यामागोमुग्भ्यां धाना इत्यस्य पुरोनुवाक्यामाह—

रथीतमौ रथीनामह्व ऊतये शुभं गमिष्ठौ सुयमेभिरश्वैः । ययोर्वां देवौ देवेष्वनिशितमोजस्तौ नो मुञ्चतमागसः।, इति ।

रथीनां रथीतमौ ये रथिनो देवाः सन्ति तेषां मध्येऽतिशयेन रथिनौ, सुयमेभिः सुष्ठु नियन्तुं शक्यैरश्वैः शुभं समीचीनं देशं गमिष्ठावतिशयेन गच्छन्तावश्विनौ । +अह्वेऽहमाह्वयामि । [हे] देवावश्विनौ देवेषु सर्वेषु मध्ये ययोर्वां युवयोरोजो बलमनिशितमन्येन केनापि न तीक्ष्णीकृतं किं तु स्वभावत एव तीक्ष्णमित्यर्थः । तावित्यादि पूर्ववत्‌ ॥

तत्रैव याज्यामाह—

यदयातं वहतुꣳ सूर्यायास्त्रिचक्रेण सꣳसदमिच्छमानौ । स्तौमि देवावश्विनौ नाथितो जोहवीमि तौ नो मुञ्चतमागसः ।, इति ।

यद्यस्मात्कारणात्सूर्यायाः सूर्यपत्न्याः स्वमातुः संसदमिच्छमानौ । सद्भावस्थानमिच्छन्तावश्विनौ युवां त्रिचक्रेण चक्रत्रययुक्तेन रथेन वहतुं वाहयितुमयातं रथस्योपरि गतवन्तौ तस्मात्कारणात्तथाविधौ देवौ स्तौमीत्यादि पूर्ववत्‌ ॥

अथ मरुद्भ्य एनोमुग्भ्यः सप्तकपाल इत्यस्य पुरोनुवाक्यामाह—

मरुतां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे । आशून्हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः ।, इति ।

मरुतां मरुत्संज्ञकानां देवानां मूर्तिं मन्वेऽहं मनसा ध्यायामि । तेन च

---

+ 'ऊतये' इति पदस्य व्याख्यानं स्खलितम्‌ ।

मरुतो नोऽस्मानधि ब्रुवन्तु अधिकान्ब्रुवन्तु । ते च विश्वे सर्वेऽपीमां वाचं मदीयां प्रार्थनां विश्वां सर्वामपि प्रावन्तु प्रकर्षेण रक्षन्तु । आशून्शीघ्रगामिनः (णः) सुयमान्सुष्ठु नियामकान्मरुदाख्यान्देवानूतये रक्षणाय हुव आह्वयामि । ते न इत्यादि पूर्ववत् ॥

तत्रैव याज्यामाह—

तिग्ममायुधं वीडितꣳ सहस्वद्दिव्यꣳ शर्धः पृतनासु जिष्णु । स्तौमि देवान्मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः ।, इति ।

मरुदाख्यानां देवानामायुधं तिग्मादिविशेषणविशिष्टं तिग्मं तीक्ष्णं वीडितं दृढम् । किंच, मरुतां शर्धो बलं सहस्वत्परेषामभिभवितृ दिव्यं यथोचितव्यवहारयोग्यम् । अत एव पृतनासु परकीयसेनासु जिष्णु जयशीलं, स्तौमीत्यादि पूर्ववत् ॥

अथ विश्वेभ्यो देवेभ्य एनोमुग्भ्यो द्वादशकपाल इत्यस्य पुरोनुवाक्यामाह—

देवानां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे । आशून्हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः ।, इति ।

पूर्वोक्ता मरुतां पुरोनुवाक्या, तथेयं विश्वेषां देवानां पुरोनुवाक्या योजनीया ॥

तत्रैव याज्यामाह—

यदिदं माऽभिशोचति पौरुषेयेण दैव्येन । स्तौमि विश्वान्देवान्नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः ।, इति ।

पौरुषेयेण मनुष्यव्यापारेण दैव्येन देवव्यापारेण च संपादितं यदिदं दुःखं माऽभिशोचति । अभितो मां क्लेशयति तस्य दुःखस्यापनोदनार्थं स्तौमीत्यादि पूर्ववत् ॥

अथानुमत्यै चरुरित्यस्य याज्यापुरोनुवाक्ययोः प्रतीके दर्शयति—

अनु नोऽद्यानुमतिरन्विदनुमते त्वम्—, इति ।

(अश्वमेधसंबन्धियाज्यानुवाक्याभिधानम्)

अनु नोऽद्यानुमतिर्यज्ञमिति पुरोनुवाक्या। अन्विदनुमते त्वं मन्यासा इति याज्या। एतच्चोभयमिदं वामास्ये हविरित्यनुवाके व्याख्यातम्॥

अथाग्नये वैश्वानराय द्वादशकपाल इत्यस्य याज्यापुरोनुवाक्ययोः प्रतीके दर्शयति—

वैश्वानरो न ऊत्या पृष्टो दिवि।, इति।

वैश्वानरो न ऊत्या प्र यात्विति पुरोनुवाक्या। पृष्टो दिवि पृष्टो अग्नि-रिति याज्या। एतच्चोभयं वैश्वानरो न ऊत्येत्यस्मिन्ननुवाके व्याख्यातम्॥

अथ द्यावापृथिवीभ्यामꣳहोमुग्भ्यां द्विकपाल इत्यस्य पुरोनुवाक्यामाह—

ये अप्रथेताममितेभिरोजोभिर्ये प्रतिष्ठे अभ-
वतां वसूनाम्। स्तौमि द्यावापृथिवी नाथितो
जोहवीमि ते नो मुञ्चतमꣳहसः।, इति।

ये द्यावापृथिव्यावमितेभिरोजोभिः परिच्छेत्तुमशक्यैर्बलैरप्रथेतां प्रख्याते अभूताम्। किंच, ये द्यावापृथिव्यौ वसूनां धनानां प्रतिष्ठे आश्रयभूते अभ-वतां ते द्यावापृथिव्यौ स्तौमीत्यादि पूर्ववत्॥

तत्रैव याज्यामाह—

उर्वी रोदसी वरिवः कृणोतं क्षेत्रस्य पत्नी
अधि नो ब्रूयातम्। स्तौमि द्यावापृथिवी ना-
थितो जोहवीमि ते नो मुञ्चतमꣳहसः।, इति।

उर्वी उर्व्यावत्यन्तं विस्तृते रोदसी रोदस्यौ हे द्यावापृथिव्यौ वरिवो धनं पूजां वा कृणोतं कुरुतम्। क्षेत्रस्य पत्नी पत्न्यौ हे द्यावापृथिव्यौ नोऽस्मान-धिब्रूयातमधिकान्कथयतम्। स्तौमीत्यादि पूर्ववत्॥

अथ स्विष्टकृतः पुरोनुवाक्यामाह—

यत्ते वयं पुरुषत्रा यविष्ठाविद्वाꣳसश्चकृमा
कच्चनाऽऽगः। कृधी स्वस्माꣳ अदितेरनागा
व्येनाꣳसि शिश्रथो विष्वगग्ने।, इति।

हे यविष्ठ युवतमाग्ने वयमविद्वांसो ज्ञानरहिताः सन्तस्ते त्वदीयेषु पुरुत्रा

पुरुषेषु यत्कञ्चनाऽऽगो यं कमप्यपराधं चकृम कृतवन्तः । अदितेरखण्डनीयस्य तवास्माननागा अपराधरहितान्सुकृधि सुष्ठु कुरु । हेऽग्न एनांस्यस्मदीयानि पापानि विष्वक्सर्वथा विशिश्रथो विशेषेण श्रथितानि कुरु ॥

तत्रैव याज्यामाह—

यथा ह तद्वसवो गौर्यं चित्पदि षिताममुञ्चता यजत्राः । एवा त्वमस्मत्प्र मुञ्चा व्यꣳहः प्रातार्यग्ने प्रतरां न आयुः ॥, इति ॥

यजत्रा यष्टव्या वसवो जगन्निवासहेतवोऽग्निना सहिता हे देवाः पदि सितां बन्धनस्थाने स्वकीयस्य पाशस्याऽऽक्रमणेन पादे बद्धां गौर्यंचिद्गौरीमपि यां कांचिद्गौरवर्णां गाममुञ्चत बन्धान्मुक्तां कृतवन्तः । हेऽग्ने तद्यथा ह येनैव प्रकारेण तद्बन्धमोचनं कृतमेवा त्वमेवमेव त्वमपि अस्मदस्मत्सकाशाद्व्यंहो विविधं पापं प्रमुञ्च प्रकर्षेण मुक्तं कुरु । नोऽस्मदीयमायुः प्रतरामत्यधिकं यथा भवति तथा प्रातारि प्रतर संपादय ॥

अत्र विनियोगसंग्रहः—

अग्नयेऽꣳहोमुचेऽष्टाकपाल इत्यादिनेरिताः ।
इष्टयोऽग्नेर्मन्वयुक्ता याज्यास्तासु क्रमादिमाः ॥ १ ॥
अग्नेराग्नेयके द्वी(ही)न्द्रस्यैन्द्रे मन्वे ह्यनन्तरे ।
मैत्रावरुणके वायोर्वायोसावित्रके रथी ॥ २ ॥
आश्विने मरुतां मारुते देवा वैश्वदेविके ।
अनुद्वयोश्चाऽऽ(यं चाऽऽ)नुमते वैश्वा वैश्वानरे तथा ॥ ३ ॥
द्यावापृथिव्यके ये तु यत्ते स्विष्टकृतीर्यते ।
अनुवाके पञ्चदशे मन्त्रा द्वाविंशतिर्मताः ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

———

(अश्वमेधसंबन्धियाज्यानुवाक्याभिधानम्)

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थकाण्डे सप्तमः प्रपाठकः ॥ ७ ॥

---

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराज-परमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपाल-केन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थः काण्डः समाप्तः ॥ ४ ॥

---

मूलक्रमेण चतुर्थाष्टके....प्र० ७ अनु० ७२
भाष्यक्रमेण चतुर्थकाण्डे—प्र० ७ अनु० ७२
मूलक्रमेणाऽऽदितः समष्ट्यङ्काः....अष्ट० ४ प्र० २६ अ० ३४८
भाष्यक्रमेणाऽऽदितः समष्ट्यङ्काः—का० ४ प्र० २६ अ० ३४३

समाप्तोऽयं श्रीमत्सायणाचार्यविरचितभाष्यसमेत
सपदपाठायाः कृष्णयजुर्वेदीयतैत्तिरीयसंहिता
याश्चतुर्थः काण्डः ।